यत् । नूनम् । धीभिः । अश्विना । पितुः । योना । निऽसीदथः ।

यत् । वा । सुम्नेभिः । उक्थ्या ॥२१

हे अश्विनौ "पितुः पालयितुर्द्युलोकस्य संबन्धिनि “योना योनौ स्थाने “यत् यदि “धीभिः कर्मभिः सह “निषीदथः निवसथः । “यद्वा यदि वा हे “उक्थ्या उक्थ्यौ प्रशस्यौ “सुम्नेभिः सुम्नैः सुखैः सह निवसथः । तदास्माभिः स्तुतौ सन्तावागच्छतमिति शेषः । अथवा । पितुः पालयितुर्यजमानस्य संबन्धिनि योनौ यज्ञगृहे धीभिः स्तुतिभिः सार्धं यदि निवसथः यदि च सुम्नैः सुखकरैर्हविर्भिश्च सह निवसथः तर्ह्यागच्छतम् । “नूनम् इति पदपूरणः । उक्तं च यास्केन- अथापि पदपूरणः । नूनं सा ते प्रति वरं जरित्रे' ( निरु. १. ७) इति ॥ ॥ ३३ ॥

# ऋग्वेदः सूक्तं ८.१०

ऋग्वेदः - मण्डल ८
← सूक्तं ८.९ सूक्तं ८.१० सूक्तं ८.११ →
प्रगाथो (घौरः) काण्वः।

दे. अश्विनौ । १ बृहती, २ मध्येज्योतिः (पिंगलमतेन – शंकुमती), ४ आस्तारपङ्क्तिः, ५-६ प्रगाथः (५ बृहती, ६ सतोबृहती)

यत्स्थो दीर्घप्रसद्मनि यद्वादो रोचने दिवः ।

यद्वा समुद्रे अध्याकृते गृहेऽत आ यातमश्विना ॥१॥

यद्वा यज्ञं मनवे सम्मिमिक्षथुरेवेत्काण्वस्य बोधतम् ।

बृहस्पतिं विश्वान्देवाँ अहं हुव इन्द्राविष्णू अश्विनावाशुहेषसा ॥२॥

त्या न्वश्विना हुवे सुदंससा गृभे कृता ।

ययोरस्ति प्र णः सख्यं देवेष्वध्याप्यम् ॥३॥

ययोरधि प्र यज्ञा असूरे सन्ति सूरयः ।

ता यज्ञस्याध्वरस्य प्रचेतसा स्वधाभिर्या पिबतः सोम्यं मधु ॥४॥

यदद्याश्विनावपाग्यत्प्राक्स्थो वाजिनीवसू ।

यद्द्रुह्यव्यनवि तुर्वशे यदौ हुवे वामथ मा गतम् ॥५॥

यदन्तरिक्षे पतथः पुरुभुजा यद्वेमे रोदसी अनु ।

यद्वा स्वधाभिरधितिष्ठथो रथमत आ यातमश्विना ॥६॥

**सायणभाष्यम्**

'यत्स्थः' इति षड्टचं पञ्चमं सूक्तं कण्वपुत्रस्य प्रगाथस्यार्षमाश्विनम् । आद्या बृहती । द्वितीया मध्येज्योतिस्त्रिष्टुप् 'यतोऽष्टकस्ततो ज्योतिः' (अनु. ९. ८) इत्युक्तलक्षणसद्भावात् । तृतीयानुष्टुप चतुर्थी आस्तारपङ्क्तिः । 'अन्त्यौ चेदास्तारपङ्क्तिः ' (अनु. ८. ७) इति हि तल्लक्षणम् । पञ्चमी बृहती षष्ठी सतोबृहती। तथा चानुक्रान्तं यत्स्थः षट् प्रगाथोऽपश्यद्बृहती मध्येज्योतिरनुष्टुबास्तारपङ्क्तिः प्रगाथः' इति । प्रातरनुवाकाश्विने क्रतो बार्हते छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्र्यते हि- द्युम्नी वां यत्स्थ इति बार्हतम्' (आश्व. श्रौ. ४. १५) इति ॥

यत्स्थो दी॒र्घप्र॑सद्मनि॒ यद्वा॒दो रो॑च॒ने दि॒वः ।

यद्वा॑ समु॒द्रे अध्याकृ॑ते गृ॒हेऽत॒ आ या॑तमश्विना ॥१

यत् । स्थः । दी॒र्घऽप्र॑सद्मनि । यत् । वा॒ । अ॒दः । रो॒च॒ने । दि॒वः ।

यत् । वा॒ । स॒मु॒द्रे । अधि॑ । आऽकृ॑ते । गृ॒हे । अतः॑ । आ । या॒त॒म् । अ॒श्वि॒ना॒ ॥१

यत् । स्थः । दीर्घऽप्रसद्मनि । यत् । वा । अदः । रोचने । दिवः ।

यत् । वा । समुद्रे । अधि । आऽकृते । गृहे । अतः । आ । यातम् । अश्विना ॥१

हे अश्विनौ "दीर्घप्रसद्मनि । प्रसीदन्ति एषु देवा इति प्रसद्मानो यज्ञगृहाः। दीर्घा आयताः प्रसद्मानो यस्मिन् तस्मिँल्लोके “यत् यदि “स्थः भवथः वर्तेथे । “यद्वा यदि वा "अदः अमुष्मिन् “दिवः द्युलोकस्य संबन्धिनि “रोचने रोचमाने स्थाने भवथः । “यद्वा यदि वा समुद्रे अन्तरिक्षे । समुद्द्रवन्त्यस्मादाप इति समुद्रमन्तरिक्षम् । तस्मिन् । “आकृते निर्मिते “गृहे अधिवसथः । “अतः त्रितयादपि स्थानात् हे अश्विनौ “आ "यातम् आगच्छतम् ॥

यद्वा॑ य॒ज्ञं मन॑वे सम्मिमि॒क्षथु॑रे॒वेत्का॒ण्वस्य॑ बोधतं ।

बृह॒स्पतिं॒ विश्वा॑न्दे॒वाँ अ॒हं हु॑व॒ इंद्रा॒विष्णू॑ अ॒श्विना॑वाशु॒हेष॑सा ॥२

यत् । वा॒ । य॒ज्ञम् । मन॑वे । स॒म्ऽमि॒मि॒क्षथुः॑ । ए॒व । इत् । का॒ण्वस्य॑ । बो॒ध॒त॒म् ।

बृह॒स्पति॑म् । विश्वा॑न् । दे॒वान् । अ॒हम् । हु॒वे॒ । इन्द्रा॒विष्णू॒ इति॑ । अ॒श्विनौ॑ । आ॒शु॒ऽहेष॑सा ॥२

यत् । वा । यज्ञम् । मनवे । सम्ऽमिमिक्षथुः । एव । इत् । काण्वस्य । बोधतम् ।

बृहस्पतिम् । विश्वान् । देवान् । अहम् । हुवे । इन्द्राविष्णू इति । अश्विनौ । आशुऽहेषसा ॥२

हे अश्विनौ “यद्वा यथा वा येन वा प्रकारेण "मनवे प्रजापतये यजमानाय "यज्ञं "संमिमिक्षथुः संसिक्तवन्तौ युवां कृतवन्तौ "एवेत् एवमेव “काण्वस्य कण्वगोत्रस्य मम यज्ञं कर्तुं “बोधतम् अवगच्छतम् । अपि च "बृहस्पतिं बृहतां देवानां पतिं देवपुरोहितं “विश्वान् सर्वान् मित्रादीन् “देवान् च “इन्द्राविष्णू च "आशुहेषसा शीघ्राश्वौ । यद्वा । 'हेषृ शब्दे'। शीघ्रं सर्वत्र शब्द्यमानौ स्तूयमानौ “अश्विनौ च "अहं “हुवे आह्वये ॥

त्या न्व१॒श्विना॑ हुवे सु॒दंस॑सा गृ॒भे कृ॒ता ।

ययो॒रस्ति॒ प्र णः॑ स॒ख्यं दे॒वेष्वध्याप्य॑म् ॥३

त्या । नु । अ॒श्विना॑ । हु॒वे॒ । सु॒ऽदंस॑सा । गृ॒भे । कृ॒ता ।

ययोः॑ । अस्ति॑ । प्र । न॒ः । स॒ख्यम् । दे॒वेषु॑ । अधि॑ । आप्य॑म् ॥३

त्या । नु । अश्विना । हुवे । सुऽदंससा । गृभे । कृता ।

ययोः । अस्ति । प्र । नः । सख्यम् । देवेषु । अधि । आप्यम् ॥३

"त्या त्यौ पूर्वोक्तगुणावश्विनौ “नु क्षिप्रम् अहम् “हुवे आह्वयामि । कीदृशौ । “सुदंससा शोभनकर्माणौ “गृभे ग्रहे ग्रहणायास्माभिर्दत्तानां हविषां स्वीकरणायास्मभ्यं धनदानाय वा “कृता कृतौ प्रादुर्भूतौ “देवेषु मध्ये । अधिः सप्तम्यर्थानुवादी । "ययोः अश्विनोः "आप्यम् आप्तव्यं “नः अस्माकं “सख्यं सखित्वं “प्र “अस्ति प्रभवति उत्कर्षेण वर्तते तौ हुव इत्यन्वयः ।।

ययो॒रधि॒ प्र य॒ज्ञा अ॑सू॒रे संति॑ सू॒रयः॑ ।

ता य॒ज्ञस्या॑ध्व॒रस्य॒ प्रचे॑तसा स्व॒धाभि॒र्या पिब॑तः सो॒म्यं मधु॑ ॥४

ययोः॑ । अधि॑ । प्र । य॒ज्ञाः । अ॒सू॒रे । सन्ति॑ । सू॒रयः॑ ।

ता । य॒ज्ञस्य॑ । अ॒ध्व॒रस्य॑ । प्रऽचे॑तसा । स्व॒धाभिः॑ । या । पिब॑तः । सो॒म्यम् । मधु॑ ॥४

ययोः । अधि । प्र । यज्ञाः । असूरे । सन्ति । सूरयः ।

ता । यज्ञस्य । अध्वरस्य । प्रऽचेतसा । स्वधाभिः । या । पिबतः । सोम्यम् । मधु ॥४

"ययोः अश्विनोः “अधि उपरि "यज्ञाः ज्योतिष्टोमादयः सर्वे यागाः “प्र “सन्ति प्रभवन्ति । छिन्नस्य यज्ञशिरसोऽश्विभ्यां संधानात् । तथा च यज्ञस्य शिरोऽच्छिद्यत' इत्युपक्रम्य तैत्तिरीयकं -- 'तावेतद्यज्ञशिरः प्रत्यधत्तां यदाश्विनो गृह्यते यज्ञस्य निष्कृत्यै ' ( तै. सं. ६. ४. ९. १ ) इति । “असूरे स्तोतृरहितेऽपि देशे ययोश्च “सूरयः स्तोतारः सन्ति तावश्विनौ “अध्वरस्य हिंसाप्रत्यवायरहितस्य “यज्ञस्य ज्योतिष्टोमादेः “प्रचेतसा प्रकृष्टं ज्ञातारौ “स्वधाभिः बलहेतुभिः स्तुतिभिराह्वयामीति शेषः । “या यावश्विनौ “सोम्यं सोममयं “मधु मधुरं सोमरसं “पिबतः ।।

यद॒द्याश्वि॑ना॒वपा॒ग्यत्प्राक्स्थो वा॑जिनीवसू ।

यद्द्रु॒ह्यव्यन॑वि तु॒र्वशे॒ यदौ॑ हु॒वे वा॒मथ॒ मा ग॑तं ॥५

यत् । अ॒द्य । अ॒श्वि॒नौ॒ । अपा॑क् । यत् । प्राक् । स्थः । वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनीऽवसू ।

यत् । द्रु॒ह्यवि॑ । अन॑वि । तु॒र्वशे॑ । यदौ॑ । हु॒वे । वा॒म् । अथ॑ । मा॒ । आ । ग॒त॒म् ॥५

यत् । अद्य । अश्विनौ । अपाक् । यत् । प्राक् । स्थः । वाजिनीवसू इति वाजिनीऽवसू ।

यत् । द्रुह्यवि । अनवि । तुर्वशे । यदौ । हुवे । वाम् । अथ । मा । आ । गतम् ॥५

हे “अश्विनौ “अद्य इदानीं “यत् यदि “अपाक् प्रतीच्यां दिशि “स्थः भवथः वर्तेथे । हे “वाजिनीवसू अन्नवद्धनौ “यत् यदि “प्राक् प्राच्यां दिशि स्थः भवथः। “यत् यदि वा द्रुह्युप्रभृतिषु चतुर्षु स्तोतृषु संनिहितौ भवथः । एवं सर्वत्र संनिहितौ “वां युवां “हुवे अहमाह्वयामि । “अथ अनन्तरमेव “मा माम् “आ “गतम् आगच्छतम् ॥

यद॒ंतरि॑क्षे॒ पत॑थः पुरुभुजा॒ यद्वे॒मे रोद॑सी॒ अनु॑ ।

यद्वा॑ स्व॒धाभि॑रधि॒तिष्ठ॑थो॒ रथ॒मत॒ आ या॑तमश्विना ॥६

यत् । अ॒न्तरि॑क्षे । पत॑थः । पु॒रु॒ऽभु॒जा॒ । यत् । वा॒ । इ॒मे इति॑ । रोद॑सी॒ इति॑ । अनु॑ ।

यत् । वा॒ । स्व॒धाभिः॑ । अ॒धि॒ऽतिष्ठ॑थः । रथ॑म् । अतः॑ । आ । या॒त॒म् । अ॒श्वि॒ना॒ ॥६

यत् । अन्तरिक्षे । पतथः । पुरुऽभुजा । यत् । वा । इमे इति । रोदसी इति । अनु ।

यत् । वा । स्वधाभिः । अधिऽतिष्ठथः । रथम् । अतः । आ । यातम् । अश्विना ॥६

हे पुरुभुजा बहूनां पालयितारौ बहुलहविषो भोक्तारौ वा "यत् यदि “अन्तरिक्षे “पतथः गच्छथः । “यद्वा यदि वा “इमे “रोदसी द्यावापृथिव्यौ अनुलक्ष्य गच्छथः । “यद्वा यदि वा “स्वधाभिः आत्मीयैस्तेजोभिर्बलैर्वा सार्धं “रथम् “अधितिष्ठथः रथे उपविशथः। ‘अधिशीङ्स्थासाम्' इत्याधारस्य कर्मसंज्ञा । “अतः सर्वस्मात् स्थानात् हे अश्विनौ “आ "यातम् आगच्छतम् ॥ ॥३४॥

# ऋग्वेदः सूक्तं ८.११

**ऋग्वेदः - मण्डल ८**

← सूक्तं ८.१०

सूक्तं ८.११

सूक्तं ८.१२ →

वत्सः काण्वः।

दे. अग्निः । गायत्री, १ प्रतिष्ठा, २ वर्धमाना, १० त्रिष्टुप् ।

---

त्वमग्ने व्रतपा असि देव आ मर्त्येष्वा ।

त्वं यज्ञेष्वीड्यः ॥१॥

त्वमसि प्रशस्यो विदथेषु सहन्त्य ।

अग्ने रथीरध्वराणाम् ॥२॥

स त्वमस्मदप द्विषो युयोधि जातवेदः ।

अदेवीरग्ने अरातीः ॥३॥

अन्ति चित्सन्तमह यज्ञं मर्तस्य रिपोः ।

नोप वेषि जातवेदः ॥४॥

मर्ता अमर्त्यस्य ते भूरि नाम मनामहे ।

विप्रासो जातवेदसः ॥५॥

विप्रं विप्रासोऽवसे देवं मर्तास ऊतये ।

अग्निं गीर्भिर्हवामहे ॥६॥

आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् ।

अग्ने त्वांकामया गिरा ॥७॥

पुरुत्रा हि सदृङ्ङसि विशो विश्वा अनु प्रभुः ।

समत्सु त्वा हवामहे ॥८॥

समत्स्वग्निमवसे वाजयन्तो हवामहे ।

वाजेषु चित्रराधसम् ॥९॥

प्रत्नो हि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि ।

स्वां चाग्ने तन्वं पिप्रयस्वास्मभ्यं च सौभगमा यजस्व ॥१०॥

**सायणभाष्यम्**

‘ त्वमग्ने ' इति दशर्चं षष्ठं सूक्तं कण्वगोत्रस्य वत्सस्यार्षमाग्नेयम् । आद्या प्रतिष्ठागायत्री अष्टकसप्तकषट्कोपेतत्वात् । द्वितीया वर्धमाना षट्कसप्तकाष्टकोपेतत्वात् । तथा चोक्तं-’ षट्कसप्तकाष्टकैर्वर्धमाना विपरीता प्रतिष्ठा ' (पि. सू. ३. १४-१५) इति। दशमी त्रिष्टुप् शिष्टा गायत्र्यः। तथा चानुक्रान्तं-- त्वमग्ने दश वत्स आग्नेये गायत्रेऽन्त्या त्रिष्टुबाद्या प्रतिष्ठोपाद्या वर्धमाना ' इति । प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चोत्तमावर्जमेतत्सूक्तम् । सूत्र्यते हि- त्वमग्ने व्रतपा इत्युत्तमामुद्धरेत् ' ( आश्व. श्रौ. ४. १३ ) इति । व्रातपत्यामाद्यानुवाक्या। सूत्रितं च--- ‘ त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानि ' ( आश्व. श्रौ. ३. १३ ) इति ।

त्वमंग्ने व्रत॒पा अंसि दे॒व आ मर्त्ये॒ष्वा ।

त्वं य॒ज्ञेष्वीड्यः॑ ॥१

त्वम् । अ॒ग्ने॒ । व्र॒त॒ऽपाः । अ॒सि॒ । दे॒वः । आ । मर्त्ये॑षु । आ ।

त्वम् । य॒ज्ञेषु॑ । ईड्यः॑ ॥१

त्वम् । अग्ने । व्रतऽपाः । असि । देवः । आ । मर्त्येषु । आ ।

त्वम् । यज्ञेषु । ईड्यः ॥१

हे “अग्ने “देवः द्योतमानः “त्वं “मर्त्येष्वा मनुष्येषु च देवेषु च मध्ये "व्रतपाः “असि । व्रतानां कर्मणां रक्षिता भवसि । अतः कारणात् "यज्ञेषु “त्वम् "ईड्यः स्तुत्योऽसि ॥

त्वम॑सि प्र॒शस्यो॑ वि॒दथे॑षु सहंत्य ।

अग्ने॑ र॒थीर॑ध्व॒राणा॑ं ॥२

त्वम् । अ॒सि॒ । प्र॒ऽशस्यः॑ । वि॒दथे॑षु । स॒ह॒न्त्य॒ ।

अग्ने॑ । र॒थीः । अ॒ध्व॒राणा॑म् ॥२

त्वम् । असि । प्रऽशस्यः । विदथेषु । सहन्त्य ।

अग्ने । रथीः । अध्वराणाम् ॥२

हे “सहन्त्य शत्रूणामभिभवितः “अग्ने “विदथेषु यज्ञेषु “त्वं प्रशस्यः स्तुत्यः “असि । “अध्वराणां यागानां “रथीः नेता च भवसि ॥

स त्वम॒स्मदप॒ द्विषो॑ युयो॒धि जा॑तवेदः ।

अदे॑वीरग्ने॒ अरा॑तीः ॥३

सः । त्वम् । अ॒स्मत् । अप॑ । द्विषः॑ । यु॒यो॒धि । जा॒त॒ऽवे॒दः॒ ।

अदे॑वीः । अ॒ग्ने॒ । अरा॑तीः ॥३

सः । त्वम् । अस्मत् । अप । द्विषः । युयोधि । जातऽवेदः ।

अदेवीः । अग्ने । अरातीः ॥३

हे “जातवेदः जातानां वेदितः “अग्ने “सः पूर्वोक्तगुणः “त्वम् “अस्मत् अस्मत्तः “द्विषः द्वेष्टॄञ्छत्रून् “अप “युयोधि पृथक्कुरु । “अदेवीः आसुरीः "अरातीः शत्रुसेनाश्च पृथक्कुरु ॥

अंति॑ चि॒त्संत॒मह॑ य॒ज्ञं मर्त॑स्य रि॒पोः ।

नोप॑ वेषि जातवेदः ॥४

अन्ति॑ । चि॒त् । सन्त॑म् । अह॑ । य॒ज्ञम् । मर्त॑स्य । रि॒पोः ।

न । उप॑ । वे॒षि॒ । जा॒त॒ऽवे॒दः॒ ॥४

अन्ति । चित् । सन्तम् । अह । यज्ञम् । मर्तस्य । रिपोः ।

न । उप । वेषि । जातऽवेदः ॥४

हे "जातवेदः “अन्ति “चित् अन्तिकेऽपि “सन्तं भवन्तं समीपे विद्यमानमपि “रिपोः अस्मच्छत्रोः “मर्तस्य मनुष्यस्य “यज्ञं “नोप "वेषि । अहशब्दोऽवधारणे । नैव कामयसे ।

मर्ता॒ अम॑र्त्यस्य ते॒ भूरि॒ नाम॑ मनामहे ।

विप्रा॑सो जा॒तवे॑दसः ॥५

मर्ताः॑ । अम॑र्त्यस्य । ते॒ । भूरि॑ । नाम॑ । म॒ना॒म॒हे॒ ।

विप्रा॑सः । जा॒तऽवे॑दसः ॥५

मर्ताः । अमर्त्यस्य । ते । भूरि । नाम । मनामहे ।

विप्रासः । जातऽवेदसः ॥५

“मर्ताः मनुष्याः “विप्रासः मेधाविनो वयं हे अग्ने “जातवेदसः जातानां वेदितुः “अमर्त्यस्य मरणरहितस्य देवस्य “भूरि विस्तृतं "नाम स्तोत्रं “मनामहे जानीमः । कुर्म इति यावत् ॥ ॥ ३५ ॥

विप्रं॒ विप्रा॒सोऽव॑से दे॒वं मर्ता॑स ऊ॒तये॑ ।

अ॒ग्निं गी॒र्भिर्ह॑वामहे ॥६

विप्र॑म् । विप्रा॑सः । अव॑से । दे॒वम् । मर्ता॑सः । ऊ॒तये॑ ।

अ॒ग्निम् । गीः॒ऽभिः । ह॒वा॒म॒हे॒ ॥६

विप्रम् । विप्रासः । अवसे । देवम् । मर्तासः । ऊतये ।

अग्निम् । गीःऽभिः । हवामहे ॥६

“विप्रासः मेधाविनः “मर्तासः मर्ता मनुष्या वयं “विप्रं मेधाविनं “देवं दानादिगुणयुक्तम् “अग्निम् “अवसे हविर्भिस्तर्पयितुम् “ऊतये अस्माकं रक्षणार्थं च “गीर्भिः स्तुतिभिः "हवामहे आह्वयामहे ।। ।

आ ते॑ व॒त्सो मनो॑ यमत्पर॒माच्चि॑त्स॒धस्था॑त् ।

अग्ने॒ त्वांका॑मया गि॒रा ॥७

आ । ते॒ । व॒त्सः । मनः॑ । य॒म॒त् । प॒र॒मात् । चि॒त् । स॒धऽस्थां॑त् ।

अग्नें॑ । त्वाम्ऽकां॑मया । गि॒रा ॥७

आ । ते । वत्सः । मनः । यमत् । परमात् । चित् । सधऽस्थात् ।

अग्ने । त्वाम्ऽकामया । गिरा ॥७

हे "अग्ने "वत्सः ऋषिः "ते तव "मनः "परमाच्चित् उत्कृष्टादपि "सधस्थात् सहस्थानात् द्युलोकात् "आ "यमत् आयमयति । केन साधनेन । "त्वांकामया त्वामभिलषन्त्या "गिरा स्तुत्या ॥

पु॒रु॒त्रा हि स॒दृङ्ङसि॒ विशो॒ विश्वा॒ अनुं॑ प्र॒भुः ।

स॒मत्सुं॑ त्वा हवामहे ॥८

पु॒रु॒ऽत्रा । हि । स॒ऽदृङ् । असिं॑ । विशः॑ । विश्वाः॑ । अनुं॑ । प्र॒ऽभुः ।

स॒मत्ऽसुं॑ । त्वा॒ । ह॒वा॒म॒हे॒ ॥८

पुरुऽत्रा । हि । सऽदृङ् । असि । विशः । विश्वाः । अनु । प्रऽभुः ।

समत्ऽसु । त्वा । हवामहे ॥८

हे अग्ने "पुरुत्रा "हि बहुषु देशेषु त्वं "सदृङ्ङसि समानं द्रष्टा भवसि । अत एव "विश्वाः सर्वाः "विशः प्रजा अनुलक्ष्य "प्रभुः ईश्वरो भवसि । ईदृशं त्वां "समत्सु संग्रामेषु रक्षणार्थं हवामहे आह्वयामहे ॥

स॒मत्स्व॒ग्निमवं॑से वाज॒यन्तों॑ हवामहे ।

वाजें॑षु चि॒त्ररां॑धसं ॥९

स॒मत्ऽसुं॑ । अ॒ग्निम् । अवं॑से । वा॒ज॒ऽयन्तः॑ । ह॒वा॒म॒हे॒ ।

वाजें॑षु । चि॒त्रऽरां॑धसम् ॥९

समत्ऽसु । अग्निम् । अवसे । वाजऽयन्तः । हवामहे ।

वाजेषु । चित्रऽराधसम् ॥९

"समत्सु सहमदनेषु संग्रामेषु "वाजयन्तः बलमिच्छन्तो वयम् "अवसे रक्षणार्थम् "अग्नि हवामहे । कीदृशम् । "वाजेषु संग्रामेषु "चित्रराधसं चायनीयधनम् ॥

प्र॒त्नो हि क॒मीड्यो॑ अध्व॒रेषु॑ स॒नाच्च॒ होता॒ नव्य॑श्च॒ सत्सि॑ ।

स्वां चा॑ग्ने त॒न्वं॑ पि॒प्रय॑स्वा॒स्मभ्यं॑ च॒ सौभ॑ग॒मा य॑जस्व ॥१०

प्र॒त्नः । हि । क॒म् । ईड्यः॑ । अ॒ध्व॒रेषु॑ । स॒नात् । च॒ । होता॑ । नव्यः॑ । च॒ । सत्सि॑ ।

स्वाम् । च॒ । अ॒ग्ने॒ । त॒न्व॑म् । पि॒प्रय॑स्व । अ॒स्मभ्य॑म् । च॒ । सौभ॑गम् । आ । य॒ज॒स्व॒ ॥१०

प्रत्नः । हि । कम् । ईड्यः । अध्वरेषु । सनात् । च । होता । नव्यः । च । सत्सि ।

स्वाम् । च । अग्ने । तन्वम् । पिप्रयस्व । अस्मभ्यम् । च । सौभगम् । आ । यजस्व ॥१०

हे अग्ने “अध्वरेषु यज्ञेषु “ईड्यः स्तुत्यस्त्वं “प्रत्नो “हि चिरंतनः खलु भवसि। “कम् इति पूरकः । तथा “सनात् चिरकालादारभ्य “होता देवानामाह्वाता “च सन् “नव्यः स्तुत्यः “च सन् “सत्सि यज्ञेषु निषीदसि । हे “अग्ने देवानां हविर्वहंस्त्वं “स्वां “च “तन्वम् आत्मीयं च शरीर “पिप्रयस्व त्वदीयेन हविर्भागेन तर्पय । “अस्मभ्यं स्तोतृभ्यश्च “सौभगं सुभगत्वं “च “आ “यजस्व प्रदेहि । सुभगशब्दाद्भावार्थे ‘सुभगान्मन्त्रे' इति उद्गात्रादिषु पाठात् अञ्प्रत्ययः ॥ ॥ ३६ ।।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थाश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये पञ्चमाष्टकेऽष्टमोऽध्यायः समाप्तः ॥

---

**टिप्पणी**

वत्सोपरि टिप्पणी (http://puranastudy.byethost14.com/pur_index26/vatsa.htm)

वात्सम् (https://sa.wikisource.org/s/2exz)

वात्से द्वे (https://sa.wikisource.org/s/2ey0)

८.११.७ आ ते वत्सो मनो यमत् इति

आ ते वत्सो मनो यमदाग्निरगामीति स्तोत्रियानुरूपौ प्रथमे छन्दोमे शांश्रौसू १२.११.१६ (https://sa.wikisource.org/s/149f)

**मण्डल ८**

| | | | | | |
|---|---|---|---|---|---|
| सूक्तं ८.१ | सूक्तं ८.२१ | सूक्तं ८.४१ | सूक्तं ८.६१ | सूक्तं ८.८१ | |
| सूक्तं ८.२ | सूक्तं ८.२२ | सूक्तं ८.४२ | सूक्तं ८.६२ | सूक्तं ८.८२ | |
| सूक्तं ८.३ | सूक्तं ८.२३ | सूक्तं ८.४३ | सूक्तं ८.६३ | सूक्तं ८.८३ | |
| सूक्तं ८.४ | सूक्तं ८.२४ | सूक्तं ८.४४ | सूक्तं ८.६४ | सूक्तं ८.८४ | |
| सूक्तं ८.५ | सूक्तं ८.२५ | सूक्तं ८.४५ | सूक्तं ८.६५ | सूक्तं ८.८५ | |
| सूक्तं ८.६ | सूक्तं ८.२६ | सूक्तं ८.४६ | सूक्तं ८.६६ | सूक्तं ८.८६ | |
| सूक्तं ८.७ | सूक्तं ८.२७ | सूक्तं ८.४७ | सूक्तं ८.६७ | सूक्तं ८.८७ | |
| सूक्तं ८.८ | सूक्तं ८.२८ | सूक्तं ८.४८ | सूक्तं ८.६८ | सूक्तं ८.८८ | |
| सूक्तं ८.९ | सूक्तं ८.२९ | सूक्तं ८.४९ | सूक्तं ८.६९ | सूक्तं ८.८९ | |
| सूक्तं ८.१० | सूक्तं ८.३० | सूक्तं ८.५० | सूक्तं ८.७० | सूक्तं ८.९० | सूक्तं ८.१०१ |
| सूक्तं ८.११ | सूक्तं ८.३१ | सूक्तं ८.५१ | सूक्तं ८.७१ | सूक्तं ८.९१ | सूक्तं ८.१०२ |
| सूक्तं ८.१२ | सूक्तं ८.३२ | सूक्तं ८.५२ | सूक्तं ८.७२ | सूक्तं ८.९२ | सूक्तं ८.१०३ |
| सूक्तं ८.१३ | सूक्तं ८.३३ | सूक्तं ८.५३ | सूक्तं ८.७३ | सूक्तं ८.९३ | |
| सूक्तं ८.१४ | सूक्तं ८.३४ | सूक्तं ८.५४ | सूक्तं ८.७४ | सूक्तं ८.९४ | |
| सूक्तं ८.१५ | सूक्तं ८.३५ | सूक्तं ८.५५ | सूक्तं ८.७५ | सूक्तं ८.९५ | |
| सूक्तं ८.१६ | सूक्तं ८.३६ | सूक्तं ८.५६ | सूक्तं ८.७६ | सूक्तं ८.९६ | |
| सूक्तं ८.१७ | सूक्तं ८.३७ | सूक्तं ८.५७ | सूक्तं ८.७७ | सूक्तं ८.९७ | |
| सूक्तं ८.१८ | सूक्तं ८.३८ | सूक्तं ८.५८ | सूक्तं ८.७८ | सूक्तं ८.९८ | |
| सूक्तं ८.१९ | सूक्तं ८.३९ | सूक्तं ८.५९ | सूक्तं ८.७९ | सूक्तं ८.९९ | |
| सूक्तं ८.२० | सूक्तं ८.४० | सूक्तं ८.६० | सूक्तं ८.८० | सूक्तं ८.१०० | |

# ऋग्वेदः सूक्तं ८.१२



दे. इन्द्रः । उष्णिक्, ३३ शंकुमती (पिंगलमतेन )

---

य इन्द्र सोमपातमो मदः शविष्ठ चेतति ।

येना हंसि न्यत्रिणं तमीमहे ॥१॥

येना दशग्वमध्रिगुं वेपयन्तं स्वर्णरम् ।

येना समुद्रमाविथा तमीमहे ॥२॥

येन सिन्धुं महीरपो रथाँ इव प्रचोदयः ।

पन्थामृतस्य यातवे तमीमहे ॥३॥

इमं स्तोममभिष्टये घृतं न पूतमद्रिवः ।

येना नु सद्य ओजसा ववक्षिथ ॥४॥

इमं जुषस्व गिर्वणः समुद्र इव पिन्वते ।

इन्द्र विश्वाभिरूतिभिर्ववक्षिथ ॥५॥

यो नो देवः परावतः सखित्वनाय मामहे ।

दिवो न वृष्टिं प्रथयन्ववक्षिथ ॥६॥

ववक्षुरस्य केतवो उत वज्रो गभस्त्योः ।

यत्सूर्यो न रोदसी अवर्धयत् ॥७॥

यदि प्रवृद्ध सत्पते सहस्रं महिषाँ अघः ।

आदित्त इन्द्रियं महि प्र वावृधे ॥८॥

इन्द्रः सूर्यस्य रश्मिभिर्न्यर्शसानमोषति ।

अग्निर्वनेव सासहिः प्र वावृधे ॥९॥

इयं त ऋत्वियावती धीतिरेति नवीयसी ।

सपर्यन्ती पुरुप्रिया मिमीत इत् ॥१०॥

गर्भो यज्ञस्य देवयुः क्रतुं पुनीत आनुषक् ।

स्तोमैरिन्द्रस्य वावृधे मिमीत इत् ॥११॥

सनिर्मित्रस्य पप्रथ इन्द्रः सोमस्य पीतये ।

प्राची वाशीव सुन्वते मिमीत इत् ॥१२॥

यं विप्रा उक्थवाहसोऽभिप्रमन्दुरायवः ।

घृतं न पिप्य आसन्यृतस्य यत् ॥१३॥

उत स्वराजे अदिति स्तोममिन्द्राय जीजनत् ।

पुरुप्रशस्तमूतय ऋतस्य यत् ॥१४॥

अभि वह्नय ऊतयेऽनूषत प्रशस्तये ।

न देव विव्रता हरी ऋतस्य यत् ॥१५॥

यत्सोममिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये ।

यद्वा मरुत्सु मन्दसे समिन्दुभिः ॥१६॥

यद्वा शक्र परावति समुद्रे अधि मन्दसे ।

अस्माकमित्सुते रणा समिन्दुभिः ॥१७॥

यद्वासि सुन्वतो वृधो यजमानस्य सत्पते ।

उक्थे वा यस्य रण्यसि समिन्दुभिः ॥१८॥

देवंदेवं वोऽवस इन्द्रमिन्द्रं गृणीषणि ।

अधा यज्ञाय तुर्वणे व्यानशुः ॥१९॥

यज्ञेभिर्यज्ञवाहसं सोमेभिः सोमपातमम् ।

होत्राभिरिन्द्रं वावृधुर्व्यानशुः ॥२०॥

महीरस्य प्रणीतयः पूर्वीरुत प्रशस्तयः ।

विश्वा वसूनि दाशुषे व्यानशुः ॥२१॥

इन्द्रं वृत्राय हन्तवे देवासो दधिरे पुरः ।

इन्द्रं वाणीरनूषता समोजसे ॥२२॥

महान्तं महिना वयं स्तोमेभिर्हवनश्रुतम् ।

अर्कैरभि प्र णोनुमः समोजसे ॥२३॥

न यं विविक्तो रोदसी नान्तरिक्षाणि वज्रिणम् ।

अमादिदस्य तित्विषे समोजसः ॥२४॥

यदिन्द्र पृतनाज्ये देवास्त्वा दधिरे पुरः ।

आदित्ते हर्यता हरी ववक्षतुः ॥२५॥

यदा वृत्रं नदीवृतं शवसा वज्रिन्नवधीः ।

आदित्ते हर्यता हरी ववक्षतुः ॥२६॥

यदा ते विष्णुरोजसा त्रीणि पदा विचक्रमे ।

आदित्ते हर्यता हरी ववक्षतुः ॥२७॥

यदा ते हर्यता हरी वावृधाते दिवेदिवे ।

आदित्ते विश्वा भुवनानि येमिरे ॥२८॥

यदा ते मारुतीर्विशस्तुभ्यमिन्द्र नियेमिरे ।

आदित्ते विश्वा भुवनानि येमिरे ॥२९॥

यदा सूर्यममुं दिवि शुक्रं ज्योतिरधारयः ।

आदित्ते विश्वा भुवनानि येमिरे ॥३०॥

इमां त इन्द्र सुष्टुतिं विप्र इयर्ति धीतिभिः ।

जामिं पदेव पिप्रतीं प्राध्वरे ॥३१॥

यदस्य धामनि प्रिये समीचीनासो अस्वरन् ।

नाभा यज्ञस्य दोहना प्राध्वरे ॥३२॥

सुवीर्यं स्वश्व्यं सुगव्यमिन्द्र दद्धि नः ।

होतेव पूर्वचित्तये प्राध्वरे ॥३३॥

**सायणभाष्यम्**

॥ श्रीगणेशाय नमः ।।

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे।

यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

इत्थं पञ्चमाष्टकं व्याख्यायेदानीमृषिच्छन्दोदेवताविनियोगप्रदर्शनपुरःसरं षष्ठस्य प्रथमोऽध्यायो व्याख्यातुमारभ्यते । अष्टममण्डलस्य द्वितीयेऽनुवाके षट् सूक्तानि जातानि । “य इन्द्र' इति त्रयस्त्रिंशदृचं सप्तमं सूक्तं कृण्वगोत्रस्य पर्वताख्यस्यार्षमौष्णिहमैन्द्रम् । तथा चानुक्रान्तं- य इन्द्र त्रयस्त्रिंशत्पर्वत औष्णिहं तु' इति । महाव्रते निष्केवल्य औष्णिहतृचाशीताविदमादिके द्वे सूक्ते । तथैव पञ्चमारण्यके सूत्र्यते –' औष्णिही तृचाशीतिर्य इन्द्र सोमपातम इति सूक्ते ' (ऐ. आ. ५. २. ५) इति । दशमेऽहनि निष्केवल्य आदितः पङ्चः शंसनीयाः । सूत्र्यते हि -- य इन्द्र सोमपातम इति षळुष्णिहः' (आश्व. श्रौ. ८. १२) इति । आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्रह्मशस्त्र आद्यस्तृचो वैकल्पिकोऽनुरूपः । सूत्रितं च – य इन्द्र सोमपातम एन्द्र नो गधि ' ( आश्व. श्रौ. ७. ८) इति । तृतीये पर्यायेऽच्छावाकशस्त्रेऽप्ययमेव तृचोऽनुरूपः । सूत्रितं च– इन्द्रः सुतेषु सोमेषु य इन्द्र सोमपातमः' (आश्व. श्रौ. ६. ४) इति ॥

य इ॑न्द्र सोम॒पात॑मो॒ मद॑ः शविष्ठ॒ चेत॑ति ।

येना॒ हंसि॒ न्य१॒॑त्रिणं॒ तमी॑महे ॥१

यः । इ॒न्द्र॒ । सो॒म॒ऽपात॑मः । मदः॑ । श॒वि॒ष्ठ॒ । चेत॑ति ।

येन॑ । हंसि॑ । नि । अ॒त्रिण॑म् । तम् । ई॒म॒हे॒ ॥१

यः । इन्द्र । सोमऽपातमः । मदः । शविष्ठ । चेतति ।

येन । हंसि । नि । अत्रिणम् । तम् । ईमहे ॥१

हे “इन्द्र “यः त्वं “सोमपातमः अतिशयेन सोमस्य पाता । हे “शविष्ठ बलवत्तम । शव इति बलनाम । तस्माद्विनन्तादातिशायनिक इष्ठन् । ' विन्मतोलुक् ' । टिलोपः। हे ईदृशेन्द्र तस्य तव सोमपानजनितो यः “मदः “चेतति सम्यग्जानाति वृत्रवधादीनि कार्याणि कर्तुम् । य इत्यस्य चेततीत्यनेनापि संबन्धात् यद्वृत्तान्नित्यम् ' इति तिङ् न निहन्यते । अथवैतदेवं वाक्यम् । हे बलवत्तमेन्द्र सोमपातमः सोमस्य पातृतमो यस्त्वं मदः सोमैर्मादयितव्यस्तर्पणीयः संश्चेतति । पुरुषव्यत्ययः । चेतसि सम्यग्जानासि ।' मदोऽनुपसर्गे ' इति मदेः कर्मण्यप् । “येन सोमपानजनितेन मदेन “अत्रिणम् अत्तारं राक्षसादिकं “नि "हंसि निहिनस्सि निकृष्टां हिंसां प्रापयसि “तं मदं तादृङ्गदोपेतं त्वां वा “ईमहे । याञ्चाकर्मायम् । याचामहे । यद्वा । ई गतौ । देवादिकः । छान्दसो विकरणस्य लुक् । ईयामहे उपगच्छामः । स्तुतिभिः संभजामह इत्यर्थः ॥

येना॒ दश॑ग्व॒मध्रि॑गुं वे॒पय॑न्तं॒ स्व॑र्णरम् ।

येना॑ समु॒द्रमावि॑था॒ तमी॑महे ॥२

यः । इ॒न्द्र॒ । सो॒म॒ऽपात॑मः । मदः॑ । श॒वि॒ष्ठ॒ । चेत॑ति ।

येन॑ । हंसि॑ । नि । अ॒त्रिण॑म् । तम् । ई॒म॒हे॒ ॥२

यः । इन्द्र । सोमऽपातमः । मदः । शविष्ठ । चेतति ।

येन । हंसि । नि । अत्रिणम् । तम् । ईमहे ॥२

हे इन्द्र “येन सोमपानजनितेन मदेन “दशग्वम् । ये दशभिर्मासैः सत्त्रासनं परिसमाप्य निरगमन् ते दशग्वा अङ्गिरसः। तेषामन्यतमम् “अधिगुम् अधृतगमनमनिवारितगतिमेतत्संज्ञं चर्षिं “वेपयन्तं तमांसि वर्जयन्तं “स्वर्णरं सर्वस्य नेतारं सूर्यं च "आविथ वृत्रादेर्दस्योरपनयनेन ररक्षिथ । "येन च मदेन “समुद्रम् उदधिमन्तरिक्षं वा आविथ ररक्षिथ। "तं त्वदीयं मदं तद्वन्तं त्वां वा "ईमहे थाचामहे । मदे हि सति हृष्टः सन्निन्द्रो बहु धनं प्रयच्छति । अतस्तत्कारणस्य मदस्य याञ्चोपपन्ना ॥

येन॒ सिन्धुं॑ म॒हीर॒पो रथाँ॑ इव प्रचो॒दय॑ः ।

पन्था॑मृ॒तस्य॒ यात॑वे॒ तमी॑महे ॥३

येन॑ । सिन्धु॑म् । म॒हीः । अ॒पः । रथा॑न्ऽइव । प्र॒ऽचो॒दयः॑ ।

पन्था॑म् । ऋ॒तस्य॑ । यात॑वे । तम् । ई॒म॒हे॒ ॥३

येन । सिन्धुम् । महीः । अपः । रथान्ऽइव । प्रऽचोदयः ।

पन्थाम् । ऋतस्य । यातवे । तम् । ईमहे ॥३

हे इन्द्र “महीः महतीः “अपः वृष्ट्युदकानि “सिन्धुं स्यन्दनशीलां नदीं समुद्रं वा प्रति “येन सोमपानजन्येन मदेन “प्रचोदयः प्रेरयसि । तत्र दृष्टान्तः । “रथानिव । यथा रथिनो रथान् स्वाभिलषितदेशगमनाय प्रेरयन्ति तद्वत् । “ऋतस्य यज्ञस्य “पन्थां पन्थानं मार्गं "यातवे यातुं प्राप्तुं “तं मदम् “ईमहे याचामहे ॥

इ॒मं स्तोम॑म॒भिष्ट॑ये घृ॒तं न पू॒तम॑द्रिवः ।

येना॒ नु स॒द्य ओज॑सा व॒वक्षि॑थ ॥४

इ॒मम् । स्तोम॑म् । अ॒भिष्ट॑ये । घृ॒तम् । न । पू॒तम् । अ॒द्रि॒ऽव॒ः ।

येन॑ । नु । स॒द्यः । ओज॑सा । व॒वक्षि॑थ ॥४

इमम् । स्तोमम् । अभिष्टये । घृतम् । न । पूतम् । अद्रिऽवः ।

येन । नु । सद्यः । ओजसा । ववक्षिथ ॥४

हे “अद्रिवः वज्रवन्निन्द्र “घृतं “न घृतमिव मन्त्रपूतमाज्यमिव “पूतं शुद्धम् “इमम् अस्मदीयं “स्तोमं स्तोत्रं बुध्यस्वेति शेषः । किमर्थम् । “अभिष्टये अभिप्राप्त्यै । इष्टस्य धनादेरस्माकं लाभायेत्यर्थः । “येन स्तोत्रेण स्तूयमानः सन् “ओजसा आत्मीयेन बलेन “सद्यः तदानीमेव स्तुतिसमय एव “नु क्षिप्रं “ववक्षिथ अस्मान् वहसि अभिलषितं प्रापयसि इमं स्तोममित्यन्वयः ॥

इ॒मं जु॑षस्व गिर्वणः समु॒द्र इ॑व पिन्वते ।

इन्द्र॒ विश्वा॑भिरू॒तिभि॑र्व॒वक्षि॑थ ॥५

इ॒मम् । जु॒ष॒स्व॒ । गि॒र्व॒ण॒ः । स॒मु॒द्रःऽइ॑व । पि॒न्व॒ते॒ ।

इन्द्र॑ । विश्वा॑भिः । ऊ॒तिऽभिः॑ । व॒वक्षि॑थ ॥५

इमम् । जुषस्व । गिर्वणः । समुद्रःऽइव । पिन्वते ।

इन्द्र । विश्वाभिः । ऊतिऽभिः । ववक्षिथ ॥५

हे “गिर्वणः गिरां स्तुतीनां संभक्तः यद्वा स्तुतिभिः संभजनीयेन्द्र “इमं स्तोमं मया क्रियमाणं “जुषस्व सेवस्व । स च स्तोमः “समुद्रइव समुद्रो यथा चन्द्रोदयं प्राप्य “पिन्वते वर्धते। अभिधेयस्येन्द्रगुणगणस्याधिक्येन तत्प्रतिपादिका स्तुतिरपि विस्तृता भवतीत्यर्थः ॥ पूर्वस्यामृचि ववक्षिथेत्यनेन युक्तो येनेति शब्दोऽत्रापि सामर्थ्यात्तेन संबध्यते । अत एवास्य ‘तिङ्ङतिङः' इति निघाताभावः ।। हे “इन्द्र येन स्तोमेन हेतुना “विश्वाभिः व्याप्ताभिः “ऊतिभिः रक्षाभिः “ववक्षिथ वहसि श्रेयांस्यस्मान् प्रापयसि ॥ वहेः सनन्ताल्लिटि ‘ °अमन्त्रे ' इति निषेधादामभावे थलि लिटि रूपमेतत् ॥ ॥ १ ॥

यो नो॑ दे॒वः प॑रा॒वत॑ः सखित्व॒नाय॑ माम॒हे ।

दि॒वो न वृ॒ष्टिं प्र॒थय॑न्व॒वक्षि॑थ ॥६

यः । न॒: । दे॒वः । प॒रा॒ऽवतः॑ । स॒खि॒ऽत्व॒नाय॑ । म॒म॒हे ।

दि॒वः । न । वृ॒ष्टिम् । प्र॒थय॑न् । व॒वक्षि॑थ ॥६

यः । नः । देवः । पराऽवतः । सखिऽत्वनाय । ममहे ।

दिवः । न । वृष्टिम् । प्रथयन् । ववक्षिथ ॥६

“यः "देवः दानादिगुणयुक्त इन्द्रः “परावतः परावताद्दूरात् द्युलोकादागत्य “नः अस्माकं “सखित्वनाय सखित्वाय “मामहे धनानि प्रददौ । मंहतेर्दानकर्मण एतद्रूपम् । यद्वा । अस्माभिः पूज्यते । ‘मह पूजायाम्' । अस्माच्छान्दसः कर्मणि लिट् । उत्तरार्धर्चः प्रत्यक्षकृतः । हे इन्द्र “दिवो “न “वृष्टिं दिवः सकाशाद्वृष्टिमिव “प्रथयन् अस्मदीयानि धनानि विस्तारयन् यस्त्वं “ववक्षिथ अस्मान् वोढुमिच्छसि तादृशं त्वां स्तौमीति शेषः ।।

व॒व॒क्षुर॑स्य के॒तवो॑ उ॒त वज्रो॒ गभ॑स्त्योः ।

यत्सूर्यो॒ न रोद॑सी॒ अव॑र्धयत् ॥७

व॒व॒क्षुः । अ॒स्य॒ । के॒तवः॑ । उ॒त । वज्रः॑ । गभ॑स्त्योः ।

यत् । सूर्यः॑ । न । रोद॑सी॒ इति॑ । अव॑र्धयत् ॥७

ववक्षुः । अस्य । केतवः । उत । वज्रः । गभस्त्योः ।

यत् । सूर्यः । न । रोदसी इति । अवर्धयत् ॥७

“अस्य इन्द्रस्य “केतवः प्रज्ञानान्यस्मत्स्तुतिविषयाणि । यद्वा । रथे उत्क्षिप्ताः पताकाः केतवः । “ववक्षुः अवहन् । अस्माञ्छ्रेयांसि प्रापयन् । “उत अपि च "गभस्त्योः । बाहुनामैतत् । इन्द्रस्य हस्तयोरवस्थितः “वज्रः च अवहत् । “यत् यदायमिन्द्रः “सूर्यो “न सर्वस्य प्रेरक आदित्य इव “रोदसी द्यावापृथिव्यौ वृष्ट्यादिप्रदानेन “अवर्धयत् तदानीमित्यर्थः ॥

यदि॑ प्रवृद्ध सत्पते स॒हस्रं॑ महि॒षाँ अघ॑ः ।

आदित्त॑ इन्द्रि॒यं महि॒ प्र वा॑वृधे ॥८

यदि॑ । प्र॒ऽवृ॒द्ध॒ । स॒त्ऽप॒ते॒ । स॒हस्र॑म् । म॒हि॒षान् । अघः॑ ।

आत् । इत् । ते॒ । इ॒न्द्रि॒यम् । महि॑ । प्र । व॒वृ॒धे॒ ॥८

यदि । प्रऽवृद्ध । सत्ऽपते । सहस्रम् । महिषान् । अघः ।

आत् । इत् । ते । इन्द्रियम् । महि । प्र । ववृधे ॥८

हे “प्रवृद्ध प्रकर्षेण महन् हे “सत्पते सतामनुष्ठातॄणां पालयितरिन्द्र “सहस्रं सहस्रसंख्याकान् “महिषान् । महन्नामैतत् । महतोऽसुरान् वृत्रादीन् “यदि यदा “अघः अवधीः । हन्तेश्छान्दसमेतद्रूपम् । यद्वा ।' घस्लृ अदने ' । लुङि सिपि ' मन्त्रे घस ' इति च्लेर्लुक् । “आदित् अनन्तरमेव हे इन्द्र “ते तव “इन्द्रियं वीर्यं “महि महद्बहुलं सत् “प्र “वावृधे प्रकर्षेण वर्धते ।।

इन्द्र॒ः सूर्य॑स्य र॒श्मिभि॒र्न्य॑र्शसा॒नमो॑षति ।

अ॒ग्निर्वने॑व सास॒हिः प्र वा॑वृधे ॥९

इन्द्रः॑ । सूर्य॑स्य । र॒श्मिऽभिः॑ । नि । अ॒र्श॒सा॒नम् । ओ॒ष॒ति॒ ।

अ॒ग्निः । वना॑ऽइव । स॒स॒हिः । प्र । व॒वृ॒धे॒ ॥९

इन्द्रः । सूर्यस्य । रश्मिऽभिः । नि । अर्शसानम् । ओषति ।

अग्निः । वनाऽइव । ससहिः । प्र । ववृधे ॥९

अयम् “इन्द्रः “सूर्यस्य सर्वस्य प्रेरकस्यादित्यस्य “रश्मिभिः किरणैः करणभूतैः “अर्शसानम् ॥ ‘ अर्त्तेर्गुणः शुद् च' (उ. सू. २. २४५) इति ‘ऋ गतौ ' इत्यस्मादसानच्प्रत्ययः शुडागमश्च । अत्र केवलोऽप्यर्तिराङ्पूर्वार्थो द्रष्टव्यः । आङ्पूर्वश्च बाधने वर्तते । यथा “आर्तिमार्तोः ' (श. बा. १३. १. २. ४ ) इति ॥ अर्शसानं बाधमानं सन्देहादिकमसुरं “नि “ओषति नितरां दहति । ‘ उष दाहे'। तत्र दृष्टान्तः । “अग्निर्वनेव । यथा वनारण्यानि दावानलो भस्मसात् करोति तद्वत् । एवं “सासहिः शत्रूणामभिभवनशील इन्द्रः “प्र “वावृधे प्रकर्षेण वर्धते ॥

इ॒यं त॑ ऋ॒त्विया॑वती धी॒तिरे॑ति॒ नवी॑यसी ।

स॒प॒र्यन्ती॑ पुरुप्रि॒या मिमी॑त॒ इत् ॥१०

इ॒यम् । ते॒ । ऋ॒त्विय॑ऽवती । धी॒तिः । ए॒ति॒ । नवी॑यसी ।

स॒प॒र्यन्ती॑ । पु॒रु॒ऽप्रि॒या । मिमी॑ते । इत् ॥१०

इयम् । ते । ऋत्वियऽवती । धीतिः । एति । नवीयसी ।

सपर्यन्ती । पुरुऽप्रिया । मिमीते । इत् ॥१०

हे इन्द्र “ते त्वाम् “इयं पुरोवर्तिनी मया क्रियमाणा “धीतिः स्तुतिः “एति गच्छति । कीदृशी । “ऋत्वियावती । ऋतौ वसन्तादिकालेऽनुष्ठेयं यज्ञकर्म ऋत्वियम् । तद्वती "नवीयसी अतिशयेनाभिनवा स्तुतिः । “सपर्यन्ती पूजयन्ती “पुरुप्रिया पुरु बहुलं प्रीणयित्री सती “मिमीत “इत् इन्द्रगतान् गुणान् परिच्छिनत्त्येव । माहात्म्यं प्रख्यापयत्येव सेयमित्यन्वयः । अनुमीयमानेन वच्छब्देन च योगान्मिमीत इत्यस्य निघाताभावः । यद्वा। सपर्यन्ती पुरुप्रियेतीदमप्येतीत्यनेन संबन्धनीयम् । अतः पूर्वपदस्य

भिन्नवाक्यस्थत्वात् ‘ समानवाक्ये युष्मदस्मदादेशा वक्तव्याः' इति वचनात्तदपेक्षया निघाताभावे सति ‘अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् ॥ ॥ २ ॥

गर्भो॑ य॒ज्ञस्य॑ देव॒युः क्रतुं॑ पुनीत आनु॒षक् ।

स्तोमै॒रिन्द्र॑स्य वावृधे॒ मिमी॑त॒ इत् ॥११

गर्भः॑ । य॒ज्ञस्य॑ । दे॒व॒ऽयुः । क्रतु॑म् । पु॒नी॒ते॒ । आ॒नु॒षक् ।

स्तोमैः॑ । इन्द्र॑स्य । व॒वृ॒धे॒ । मिमी॑ते । इत् ॥११

गर्भः । यज्ञस्य । देवऽयुः । क्रतुम् । पुनीते । आनुषक् ।

स्तोमैः । इन्द्रस्य । ववृधे । मिमीते । इत् ॥११

“यज्ञस्य यष्टव्यस्येन्द्रस्य "गर्भः गरिता स्तोता। 'गॄ शब्दे'। 'अर्तिगॄभ्यां भन्' । यद्वा । यजेर्भाव एव नङ्प्रत्ययः । यागस्य गर्भो ग्रहीतानुष्ठाता “देवयुः देवं दानादिगुणयुक्तमिन्द्रमात्मन इच्छन् "आनुषक् अनुषक्तमानुपूर्व्येण संततं यथा भवति तथा “क्रतुं प्रज्ञापकं सोमं “पुनीते दशापवित्रेण शोधयति । इन्द्रपानार्थमिति शेषः । यद्वा । यज्ञस्य गर्भो दीक्षितः । पुनर्वा एतमृत्विजो गर्भं कुर्वन्ति ' (ऐ. ब्रा. १. ३) इत्यादि ब्राह्मणम् । स देवकामः क्रतुं ज्योतिष्टोमादिकमानुषक् । आनुपूर्व्यनामैतत् । यदाह यास्कः- ‘ आनुषगति नामानुपूर्व्यस्य' (निरु. ६. १४) इति । स स्तोता “इन्द्रस्य । कर्मणि षष्ठी । इन्द्रविषयैः “स्तोमैः स्तोत्रैः “ववृधे वर्धते । यद्वा । वृधिना प्रयोज्यव्यापारवाचिना प्रयोजकव्यापारो लक्ष्यते । स्तोमैः स्तोत्रैस्तमिन्द्रं वर्धयति । स च स्तोमैः “मिमीत “इत् इन्द्रस्य गुणजातं परिच्छिनत्त्येव । अनुगतार्थो भवतीत्यर्थः ॥

स॒निर्मि॒त्रस्य॑ पप्रथ॒ इन्द्र॒ः सोम॑स्य पी॒तये॑ ।

प्राची॒ वाशी॑व सुन्व॒ते मिमी॑त॒ इत् ॥१२

स॒निः । मि॒त्रस्य॑ । प॒प्र॒थे॒ । इन्द्रः॑ । सोम॑स्य । पी॒तये॑ ।

प्राची॑ । वाशी॑ऽइव । सु॒न्व॒ते । मिमी॑ते । इत् ॥१२

सनिः । मित्रस्य । पप्रथे । इन्द्रः । सोमस्य । पीतये ।

प्राची । वाशीऽइव । सुन्वते । मिमीते । इत् ॥१२

“मित्रस्य मित्रभूतस्य स्तोतुः “सनिः धनस्य दाता “इन्द्रः “सोमस्य “पीतये पानाय “पप्रथे प्रथितो विस्तीर्णशरीरो बभूव । यथा पीतो बहुलः सोमः उदरेऽन्तर्भवति तथा प्रवृद्धशरीरो बभूवेत्यर्थः । तत्र प्रथमे दृष्टान्तः । “प्राची प्राञ्चन्ती प्रकर्षेण स्तुत्यगुणगणं प्राप्नुवती “वाशीव । वाङ्नामैतत् । स्तुतिरूपा वाक् “सुन्वते । 'षष्ठ्यर्थे चतुर्थी वक्तव्या' इति चतुर्थी । सुन्वतः सोमाभिषवं कुर्वतो

यजमानस्य संबन्धिनी यथा स्तुत्यगुणबाहुल्येन विस्तीर्णा भवति तथेन्द्रः पप्रथ इत्यर्थः । प्रथिता च सा “मिमीत “इत् इन्द्रमाहात्म्यं यथावत् परिच्छिनत्त्येव ॥

यं विप्रा॑ उ॒क्थवा॑हसोऽभिप्रम॒न्दुरा॒यव॑ः ।

घृ॒तं न पिं॑प्य आ॒सन्यृ॒तस्य॒ यत् ॥१३

यम् । विप्राः॑ । उ॒क्थऽवा॑हसः । अ॒भि॒ऽप्र॒म॒न्दुः । आ॒यवः॑ ।

घृ॒तम् । न । पि॒प्ये॒ । आ॒सनि॑ । ऋ॒तस्य॑ । यत् ॥१३

यम् । विप्राः । उक्थऽवाहसः । अभिऽप्रमन्दुः । आयवः ।

घृतम् । न । पिप्ये । आसनि । ऋतस्य । यत् ॥१३

“विप्राः मेधाविनः “उक्थवाहसः उक्थानां शस्त्राणां वोढारः प्रापयितारः “आयवः मनुष्याः “यम् इन्द्रम् “अभिप्रमन्दुः अभि प्रकर्षेण मादयन्ति ।। मदेर्व्यत्ययेन परस्मैपदम् । ‘ द्विर्वचनप्रकरणे छन्दसि वा ' ( का. ६. १. ८. १) इति वचनात् द्विर्वचनाभावः ।। तस्येन्द्रस्य “आसनि आस्ये । ‘ पद्दन्' इत्यादिना आस्यशब्दस्य आसन्नादेशः । “घृतं “न घृतमिव शुद्धं “पिप्ये सेचनेन वर्धये । प्यायतेश्छान्दसो लिट् । लिङ्यङोश्च' इति पीभावः । किं तत् । हविः। “ऋतस्य यज्ञस्य संबन्धि “यत् सोमलक्षणं हविरस्ति तदित्यर्थः ।।

उ॒त स्व॒राजे॒ अदि॑ति॒ः स्तोम॒मिन्द्रा॑य जीजनत् ।

पु॒रु॒प्र॒श॒स्तमू॒तय॑ ऋ॒तस्य॒ यत् ॥१४

उ॒त । स्व॒ऽराजे॑ । अदि॑तिः । स्तोम॑म् । इन्द्रा॑य । जी॒ज॒न॒त् ।

पु॒रु॒ऽप्र॒श॒स्तम् । ऊ॒तये॑ । ऋ॒तस्य॑ । यत् ॥१४

उत । स्वऽराजे । अदितिः । स्तोमम् । इन्द्राय । जीजनत् ।

पुरुऽप्रशस्तम् । ऊतये । ऋतस्य । यत् ॥१४

“उत अपि च "अदितिः अदीना देवमाता अखण्डनीयस्तोता वा “स्वराजे स्वयमेव राजमानाय “इन्द्राय पुरुप्रशस्तं बहुलमुत्कृष्टं यद्वा पुरुभिर्बहुभिः प्रशंसितव्यं “स्तोमं स्तोत्रं “जीजनत् अजीजनत् अजनयत् । किमर्थम् । “ऊतये रक्षणार्थम् । “यत् स्तोत्रम् “ऋतस्य यज्ञस्य सत्यस्य वा संबन्धि भवति तं स्तोममित्यन्वयः ॥

अ॒भि वह्न॑य ऊ॒तयेऽनू॑षत॒ प्रश॑स्तये ।

न देंव विव्रंता हरीं ऋतस्य यत् ॥१५

अभि । वह्नंयः । ऊतयें । अनूंषत । प्रऽशंस्तये ।

न । देव । विऽव्रंता । हरी इतिं । ऋतस्यं । यत् ॥१५

अभि । वह्नयः । ऊतये । अनूषत । प्रऽशस्तये ।

न । देव । विऽव्रता । हरी इति । ऋतस्य । यत् ॥१५

“वह्नयः वोढार ऋत्विजः “ऊतये रक्षणार्थं “प्रशस्तये प्रशस्त्यर्थं च "अभि “अनूषत इन्द्रमम्यष्टुवन् । 'नू स्तुतौ ' । कुटादिः । हे “देव दानादिगुणयुक्तेन्द्र । “न इति संप्रत्यर्थे । संप्रति “विव्रता विविधकर्माणौ “हरी त्वदीयावश्वौ “ऋतस्य यज्ञस्य सत्यस्य वा संबन्धि “यत् स्तोत्रं हविर्वा विद्यते तदभिलक्ष्य त्वां वहत इति शेषः । ॥ ३ ॥

यत्सोमंमिन्द्र विष्णंवि यद्वां घ त्रित आप्त्ये ।

यद्वां मरुत्सु मन्दंसे समिन्दुंभिः ॥१६

यत् । सोमंम् । इन्द्र । विष्णंवि । यत् । वा । घ । त्रिते । आप्त्ये ।

यत् । वा । मरुत्ऽसुं । मन्दंसे । सम् । इन्दुंऽभिः ॥१६

यत् । सोमम् । इन्द्र । विष्णवि । यत् । वा । घ । त्रिते । आप्त्ये ।

यत् । वा । मरुत्ऽसु । मन्दसे । सम् । इन्दुऽभिः ॥१६

हे “इन्द्र “विष्णवि विष्णौ पानार्थमागते सत्यन्यदीये यागे “सोमं “यत् यदि तेन विष्णुना सार्धं पिबसि । “यद्वा यदि च “आप्त्ये अपां पुत्रे “त्रिते एतत्संज्ञे राजर्षौ यजमाने सोमं पिबसि । “घ इति पूरणः । “यद्वा यदि च “मरुत्सु च सोमपानायागतेष्वन्यदीये यज्ञे “मन्दसे माद्यसि । तथाप्यस्मदीयैरेव "इन्दुभिः सोम “सं सम्यक् माद्य ।।

यद्वां शक्र परावतिं समुद्रे अधि मन्दंसे ।

अस्माकमित्सुते रंणा समिन्दुंभिः ॥१७

यत् । वा । शक्र । पराऽवतिं । समुद्रे । अधिं । मन्दंसे ।

अस्माकंम् । इत् । सुते । रण । सम् । इन्दुंऽभिः ॥१७

यत् । वा । शक्र । पराऽवति । समुद्रे । अधि । मन्दसे ।

अस्माकम् । इत् । सुते । रण । सम् । इन्दुऽभिः ॥१७

हे “शक्र शक्तेन्द्र “परावति परागते दूरदेशे “समुद्रे समुन्दनशीले सोमे । “अधि सप्तम्यर्थानुवादी । “यद्वा यदि वा “मन्दसे माद्यसि तथापि “अस्माकमित् अस्माकमेव सोमे अभिषुते सति “इन्दुभिः सोमरसैः “सं “रण सम्यग्रमस्व ।।

यद्वासि॑ सुन्व॒तो वृ॒धो यज॑मानस्य सत्पते ।

उ॒क्थे वा॒ यस्य॒ रण्य॑सि॒ समिन्दु॑भिः ॥१८

यत् । वा॒ । असि॑ । सु॒न्व॒तः । वृ॒धः । यज॑मानस्य । स॒त्ऽप॒ते॒ ।

उ॒क्थे । वा॒ । यस्य॑ । रण्य॑सि । सम् । इन्दु॑ऽभिः ॥१८

यत् । वा । असि । सुन्वतः । वृधः । यजमानस्य । सत्ऽपते ।

उक्थे । वा । यस्य । रण्यसि । सम् । इन्दुऽभिः ॥१८

हे “सत्यते सतां पालयितरिन्द्र “सुन्वतः सोमाभिषवं कुर्वतः “यजमानस्य “यद्वा यदि वा “वृधः “असि वर्धयिता भवसि । वृधेरन्तर्णीतण्यर्थादिगुपधलक्षणः कः । “यस्य च यजमानस्य “उक्थे शस्त्रे “वा शंसिते सति “रण्यसि रमसे । एवमपि "इन्दुभिः अस्मदीयैरेव सोमैः सम्यग्रमस्व॥

दे॒वंदे॑वं॒ वोऽव॑स॒ इन्द्र॑मिन्द्रं गृणी॒षणि॑ ।

अधा॑ य॒ज्ञाय॑ तु॒र्वणे॒ व्या॑नशुः ॥१९

दे॒वम्ऽदे॑वम् । व॒ः । अव॑से । इन्द्र॑म्ऽइन्द्रम् । गृ॒णी॒षणि॑ ।

अध॑ । य॒ज्ञाय॑ । तु॒र्वणे॑ । वि । आ॒न॒शु॒ः ॥१९

देवम्ऽदेवम् । वः । अवसे । इन्द्रम्ऽइन्द्रम् । गृणीषणि ।

अध । यज्ञाय । तुर्वणे । वि । आनशुः ॥१९

हे ऋत्विग्यजमानाः “वः युष्माकम् “अवसे रक्षणाय “देवंदेवम् “इन्द्रमिन्द्रं दानादिगुणयुक्तम् । इन्द्रो बहुषु देशेषु युगपत्प्रवृत्तेषु यागेषु तत्र तत्र हविःस्वीकरणीय बहूनि शरीराण्याददानः स्वयमेकोऽप्यनेकः संस्तत्र तत्र संनिधत्ते । तथा च निगमान्तरम्-- ‘ इन्द्रो मायाभिः पुरुरूप ईयते । ऋ. सं. ६, ४७, १८) इति । तदपेक्षयेयं वीप्सा । बहु विभज्य वर्तमानं सर्वं तमिन्द्रं “गृणीषणि अहं स्तौमि । गृणातेर्लिङि छान्दसमेतद्रूपम् । यद्वा । कारकमेवैतत् । गृणीषणि स्तवनेच्छायां सत्याम् । “अध अनन्तरं सर्वमिन्द्रं मदीयाः स्तुतयः “व्यानशुः व्याप्नुवन्ति । किमर्थम् । “तुर्वणे तूर्णं संभजनाय “यज्ञाय यागार्थम् । यद्वा । ‘ क्रियाग्रहणं कर्तव्यम्' इति कर्मणः संप्रदानत्वाच्चतुर्थी। यज्ञं यष्टव्यं तुर्वणे शत्रूणां हिंसितारं तूर्णसंभजनं वा ।।

य॒ज्ञेभि॑र्य॒ज्ञवा॑हसं॒ सोमे॑भिः सोम॒पात॑मम् ।

होत्रा॑भि॒रिन्द्रं॑ वावृधु॒र्व्या॑नशुः ॥२०

य॒ज्ञेभिः॑ । य॒ज्ञऽवा॑हसम् । सोमे॑भिः । सो॒म॒ऽपात॑मम् ।

होत्रा॑भिः । इन्द्र॑म् । व॒वृ॒धुः॒ । वि । आ॒न॒शुः॒ ॥२०

यज्ञेभिः । यज्ञऽवाहसम् । सोमेभिः । सोमऽपातमम् ।

होत्राभिः । इन्द्रम् । ववृधुः । वि । आनशुः ॥२०

“यज्ञेभिः यज्ञैर्यजनसाधनैर्हविर्भिः “यज्ञवाहसं यज्ञे वोढव्यं प्रापणीयं यज्ञैर्यागैर्यज्ञानां यजमानानां फलस्थ प्रापयितारं वा । अथवा यज्ञवाहसं यज्ञेन प्राप्यम् । न केवलमेकेन यज्ञेन अपि तु सर्वैरित्याह यज्ञेभिरिति । एवं “सोमेभिः सोमपातमं सर्वेषां सोमानां पातृतमम् “इन्द्रं “होत्राभिः स्तुतिभिः “वावृधुः स्तोतारो वर्धयन्ति । ताश्च क्रियमाणाः स्तुतयः “व्यानशुः तमिन्द्रं व्याप्नुवन्ति च । अश्नोतेर्व्यत्ययेन परस्मैपदम् । । ४ ।।

म॒हीर॑स्य॒ प्रणी॑तयः पू॒र्वीरु॒त प्रश॑स्तयः ।

विश्वा॒ वसू॑नि दा॒शुषे॒ व्या॑नशुः ॥२१

म॒हीः । अ॒स्य॒ । प्रऽनी॑तयः । पू॒र्वीः । उ॒त । प्रऽश॑स्तयः ।

विश्वा॑ । वसू॑नि । दा॒शुषे॑ । वि । आ॒न॒शुः॒ ॥२१

महीः । अस्य । प्रऽनीतयः । पूर्वीः । उत । प्रऽशस्तयः ।

विश्वा । वसूनि । दाशुषे । वि । आनशुः ॥२१

“अस्य इन्द्रस्य “प्रणीतयः प्रणयनानि धनानां प्रकृष्टप्रापणानि “महीः महत्यो महान्ति भवन्ति । “उत अपि च अस्य “प्रशस्तयः प्रशंसनीयाः कीर्तयः “पूर्वीः बह्व्यः विस्तृततमा भवन्ति । ता उभयविधाः “दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय दातुं “विश्वा विश्वानि सर्वाणि “वसूनि धनानि “व्यानशुः व्याप्नुवन्ति ।।

इन्द्रं॑ वृ॒त्राय॒ हन्त॑वे दे॒वासो॑ दधिरे पु॒रः ।

इन्द्र॒ं वाणी॑रनूषता॒ समोज॑से ॥२२

इन्द्र॑म् । वृ॒त्राय॑ । हन्त॑वे । दे॒वासः॑ । द॒धि॒रे॒ । पु॒रः ।

इन्द्र॑म् । वाणीः॑ । अ॒नू॒ष॒त॒ । सम् । ओज॑से ॥२२

इन्द्रम् । वृत्राय । हन्तवे । देवासः । दधिरे । पुरः ।

इन्द्रम् । वाणीः । अनूषत । सम् । ओजसे ॥२२

“देवासः देवाः “वृत्राय “हन्तवे वृत्रमावरकमसुरं हन्तुम् । हन्तेस्तुमर्थे तवेन्प्रत्ययः । इमम् “इन्द्रं “पुरः “दधिरे पुरस्तात् स्वामित्वेनाधारयन् । “वाणीः वाण्यः स्तुतिरूपा वाचश्चेममेव “इन्द्रम् "अनूषत स्तुवन्ति । किमर्थम् । “सं समीचीनाय “ओजसे बलार्थम् । यथा वृत्रवधानुगुणमुत्कृष्टं बलमस्य जायते तथा स्तुवन्तीत्यर्थः ।।

म॒हान्तं॑ महि॒ना व॒यं स्तोमे॑भिर्हवन॒श्रुतं॑म् ।

अ॒र्कैर॒भि प्र णो॑नुम॒ः समोजं॑से ॥२३

म॒हान्तं॑म् । म॒हि॒ना । व॒यम् । स्तोमे॑भिः । ह॒व॒न॒ऽश्रुतं॑म् ।

अ॒र्कैः । अ॒भि । प्र । नो॒नु॒म॒ः । सम् । ओजं॑से ॥२३

महान्तम् । महिना । वयम् । स्तोमेभिः । हवनऽश्रुतम् ।

अर्कैः । अभि । प्र । नोनुमः । सम् । ओजसे ॥२३

"महिना महिम्ना “महान्तं सर्वेभ्योऽधिकं “हवनश्रुतं हवनस्याह्वानस्य श्रोतारमिन्द्रं “वयं “स्तोमेभिः स्तोमैस्त्रिवृत्पञ्चदशादिभिः “अर्कैः अर्चनसाधनैः शस्त्रैश्च “अभि “प्र “णोनुमः आभिमुख्येन प्रकर्षेण पुनःपुनः स्तुमः ॥

न यं विं॑वि॒क्तो रोदं॑सी॒ नान्तरिं॑क्षाणि व॒ज्रिणं॑म् ।

अमा॒दिदं॑स्य तित्विषे॒ समोजं॑सः ॥२४

न । यम् । वि॒वि॒क्तः । रोदं॑सी॒ इतिं॑ । न । अ॒न्तरिं॑क्षाणि । व॒ज्रिणं॑म् ।

अमां॑त् । इत् । अ॒स्य॒ । ति॒त्वि॒षे॒ । सम् । ओजं॑सः ॥२४

न । यम् । विविक्तः । रोदसी इति । न । अन्तरिक्षाणि । वज्रिणम् ।

अमात् । इत् । अस्य । तित्विषे । सम् । ओजसः ॥२४

“यं “वज्रिणं वज्रवन्तमिन्द्रं “रोदसी द्यावापृथिव्यौ “न “विविक्तः न पृथक्कुरुतः स्वसमीपात् पृथक्कर्तुं न शक्नुतः । द्यावापृथिव्यौ व्याप्य य इन्द्रो वर्तत इत्यर्थः । ‘ विचिर् पृथग्भावे ' । अन्तरिक्षणि अन्तरा क्षान्तानि द्यावापृथिव्योर्वर्तमानानि गन्धर्वादीनां स्थानानि च यं “न पृथक्कुर्वन्ति । “अस्य इन्द्रस्य “अमादित् । अमति रुजति शत्रूननेनेत्यमो बलम् । बलादेव “तित्विषे सर्वं जगद्दीप्यते । किमर्थम् । “ओजसः बलस्य संगमाय । यद्वा। ओजःशब्दाद्विहितस्य विनो ‘ बहुलं छन्दसि' इति लुक् । ओजस्विनो बलवतोऽस्येन्द्रस्येति योज्यम् । समित्युपसर्गः तित्विष इत्यनेन संबध्यते ॥

षोडशिशस्त्रे ‘यदिन्द्र पृतनाज्ये ' इति तृचः । सूत्र्यते हि - यदिन्द्र पृतनाज्येऽयं ते अस्तु हर्यत इत्यौष्णिहबार्हतौ तृचौ ' (आश्व. श्रौ. ६. २ ) इति ।।

यदिंन्द्र पृत॒नाज्यें दे॒वास्त्वां दधि॒रे पु॒रः ।

आदित्तें हर्य॒ता हरीं ववक्षतुः ॥२५

यत् । इ॒न्द्र॒ । पृ॒त॒नाज्यें । दे॒वाः । त्वा॒ । द॒धि॒रे । पु॒रः ।

आत् । इत् । ते॒ । ह॒र्य॒ता । हरी॒ इतिं । व॒व॒क्ष॒तु॒ः ॥२५

यत् । इन्द्र । पृतनाज्ये । देवाः । त्वा । दधिरे । पुरः ।

आत् । इत् । ते । हर्यता । हरी इति । ववक्षतुः ॥२५

हे “इन्द्र “पृतनाज्ये । संग्रामनामैतत् । पृतनाः सेना अजन्ति गच्छन्त्यस्मिन्निति वा पृतना जीयतेऽत्रेति वा पृतनाज्यं संग्रामः । तत्र “त्वा त्वां “यत् यदा “देवाः “पुरः “दधिरे वृत्रहननाय पुरतोऽधारयन् “आदित् अनन्तरमेव “हर्यता हर्यतौ कान्तौ । “हर्य गतिकान्त्योः ' । 'भृमृदृशि' इत्यादिनौणादिकोऽतच्प्रत्ययः । ईदृशौ “हरी अश्वौ “ते त्वां “ववक्षतुः अवहताम् ॥ ॥ ५ ॥

य॒दा वृ॒त्रं नंदी॒वृतं॒ शवंसा वज्रि॒न्नवंधीः ।

आदित्तें हर्य॒ता हरीं ववक्षतुः ॥२६

य॒दा । वृ॒त्रम् । न॒दी॒ऽवृतंम् । शवंसा । व॒ज्रि॒न् । अवंधीः ।

आत् । इत् । ते॒ । ह॒र्य॒ता । हरी॒ इतिं । व॒व॒क्ष॒तु॒ः ॥२६

यदा । वृत्रम् । नदीऽवृतम् । शवसा । वज्रिन् । अवधीः ।

आत् । इत् । ते । हर्यता । हरी इति । ववक्षतुः ॥२६

हे “वज्रिन् वज्रवन्निन्द्र “नदीवृतम् । नदनान्नद्य आपः । श्रूयते हि- अहावनदता हते तस्मादा नद्यो नाम स्थ ' (तै. सं. ५. ६. १. २) इति । ता आवृण्वन्तं “वृत्रम् अवर्षणशीलं मेघमसुरं वा “यदा यस्मिन् काले "शवसा बलेन “अवधीः अहिंसीः । शिष्टं समानम् ॥

य॒दा ते॒ विष्णु॒रोजंसा॒ त्रीणिं प॒दा विंचक्र॒मे ।

आदित्तें हर्य॒ता हरीं ववक्षतुः ॥२७

य॒दा । ते॒ । विष्णुः॑ । ओजंसा । त्रीणिं । प॒दा । वि॒ऽच॒क्र॒मे ।

आत् । इत् । ते॒ । ह॒र्य॒ता । हरी॒ इति॑ । व॒व॒क्ष॒तुः॒ ॥२७

यदा । ते । विष्णुः । ओजसा । त्रीणि । पदा । विऽचक्रमे ।

आत् । इत् । ते । हर्यता । हरी इति । ववक्षतुः ॥२७

हे इन्द्र “ते तवानुजः “विष्णुः व्यापनशीलो देवः “ओजसा बलेन “यदा यस्मिन् काले “त्रीणि पदानि पदत्रयरूपेण त्रीँल्लोकान् “विचक्रमे विक्रान्तवान् परिच्छिन्नवान् । गतमन्यत् ॥

य॒दा तें हर्य॒ता हरीं वावृ॒धातें दि॒वेदिंवे ।

आदित्ते॒ विश्वा॒ भुवंनानि येमिरे ॥२८

य॒दा । ते॒ । ह॒र्य॒ता । हरी॒ इति॑ । व॒वृ॒धा॒ते॒ इति॑ । दि॒वेऽदिंवे ।

आत् । इत् । ते॒ । विश्वा॑ । भुवंनानि । ये॒मि॒रे॒ ॥२८

यदा । ते । हर्यता । हरी इति । ववृधाते इति । दिवेऽदिवे ।

आत् । इत् । ते । विश्वा । भुवनानि । येमिरे ॥२८

हे इन्द्र त्वदीयौ “हर्यता हर्यतौ कान्तौ “हरी हरणशीलावश्वौ “दिवेदिवे प्रतिदिवसं “यदा यस्मिन् काले “वावृधाते प्रवृद्धौ बभूवतुः “आदित् अनन्तरमेव त्वया “विश्वा विश्वानि सर्वाणि “भुवनानि भूतजातानि “येमिरे नियम्यन्ते स्म ।

य॒दा ते॒ मारुंती॒र्विश॒स्तुभ्यंमिन्द्र नियेमि॒रे ।

आदित्ते॒ विश्वा॒ भुवंनानि येमिरे ॥२९

य॒दा । ते॒ । मारुंतीः । विशः॑ । तुभ्यंम् । इ॒न्द्र॒ । नि॒ऽये॒मि॒रे ।

आत् । इत् । ते॒ । विश्वा॑ । भुवंनानि । ये॒मि॒रे॒ ॥२९

यदा । ते । मारुतीः । विशः । तुभ्यम् । इन्द्र । निऽयेमिरे ।

आत् । इत् । ते । विश्वा । भुवनानि । येमिरे ॥२९

हे “इन्द्र “तुभ्यं त्वदर्थं 'मारुतीः मारुत्यो मरुद्रूपाः “ते त्वदीयाः “विशः प्रजाः “यदा यस्मिन् काले “नियेमिरे नियच्छन्ति भूतजातानि । अन्यद्गतम् ॥

य॒दा सूर्यंम॒मुं दि॒वि शु॒क्रं ज्योति॒रधांरयः ।

आदित्ते विश्वा भुवंनानि येमिरे ॥३०

यदा । सूर्यंम् । अमुम् । दिवि । शुक्रम् । ज्योतिः । अधारयः ।

आत् । इत् । ते । विश्वा । भुवनानि । येमिरे ॥३०

यदा । सूर्यम् । अमुम् । दिवि । शुक्रम् । ज्योतिः । अधारयः ।

आत् । इत् । ते । विश्वा । भुवनानि । येमिरे ॥३०

हे इन्द्र “अमुं विप्रकृष्टं “शुक्रं निर्मलं "ज्योतिः द्योतमानं “सूर्यं सर्वस्य प्रेरकं शोभनवीर्यं वादित्यं “दिवि द्युलोके जगतः प्रकाशनाय “यदा यस्मिन् काले “अधारयः धारितवानसि । समानमन्यत् ॥

इमां तं इन्द्र सुष्टुतिं विप्रं इयर्ति धीतिभिः ।

जामिं पदेव पिप्रंतीं प्राध्वरे ॥३१

इमाम् । ते । इन्द्र । सुऽस्तुतिम् । विप्रः । इयर्ति । धीतिऽभिः ।

जामिम् । पदाऽइंव । पिप्रंतीम् । प्र । अध्वरे ॥३१

इमाम् । ते । इन्द्र । सुऽस्तुतिम् । विप्रः । इयर्ति । धीतिऽभिः ।

जामिम् । पदाऽइव । पिप्रतीम् । प्र । अध्वरे ॥३१

हे “इन्द्र “विप्रः मेधावी स्तोता “अध्वरे यज्ञे “इमां पुरोवर्तिनीं “पिप्रतीं पूजयन्तीं प्रीणयन्ती वा सुष्टुतिं शोभनां स्तुतिं “धीतिभिः कर्मभिः परिचरणैः सार्धं “ते त्वां “प्र “इयर्ति प्रेरयति प्रगमयति । “जामिं "पदेव यथा बन्धुभूतं पुरुषमुत्कृष्टानि पदानि स्थानानि प्रापयति तद्वत् ॥

यदंस्य धामंनि प्रिये संमीचीनासो अस्वंरन् ।

नाभां यज्ञस्यं दोहना प्राध्वरे ॥३२

यत् । अस्य । धामंनि । प्रिये । सम्ऽईचीनासः । अस्वंरन् ।

नाभां । यज्ञस्यं । दोहनां । प्र । अध्वरे ॥३२

यत् । अस्य । धामनि । प्रिये । सम्ऽईचीनासः । अस्वरन् ।

नाभा । यज्ञस्य । दोहना । प्र । अध्वरे ॥३२

“अध्वरे यज्ञे “अस्य इन्द्रस्य “धामनि स्थाने तेजसि वा “प्रिये प्रीणयितव्ये सति “समीचीनासः संगताः स्तोतारः “यत् यदा “प्र “अस्वरन् प्रकर्षेणास्तुवन् । ‘ स्वृ शब्दोपतापयोः'। अयाळिन्द्रस्य प्रिया धामानि ' (तै. ब्रा. ३. ५. ७. ६) इति हि निगमः । कस्मिन् देशे । “नाभा नाभौ पृथिव्या नाभिस्थानीये मध्ये “यज्ञस्य यजनसाधनस्य सोमस्य “दोहना दोहने दोहनाधिकरणेऽभिषवस्थाने । वेद्यामित्यर्थः । तदानीं धनं प्रदेहीत्युत्तरत्र संबन्धः ॥

सु॒वीर्यं॑ स्वश्व्यं॑ सु॒गव्यं॑मिन्द्र दद्धि नः ।

होते॑व पू॒र्वचि॑त्तये॒ प्राध्व॒रे ॥३३

सु॒ऽवीर्यं॑म् । सु॒ऽअश्व्यं॑म् । सु॒ऽगव्यं॑म् । इ॒न्द्र॒ । द॒द्धि॒ । न॒ः ।

होता॑ऽइव । पू॒र्वऽचि॑त्तये । प्र । अ॒ध्व॒रे ॥३३

सुऽवीर्यम् । सुऽअश्व्यम् । सुऽगव्यम् । इन्द्र । दद्धि । नः ।

होताऽइव । पूर्वऽचित्तये । प्र । अध्वरे ॥३३

“सुवीर्यं शोभनवीर्योपेतं “स्वश्व्यं शोभनेनाश्वसंघेन च युक्तं “सुगव्यं शोभनगोसंघयुक्तं च धनं हे “इन्द्र “नः अस्मभ्यं दद्धि ददस्व । ‘दद दाने'। अनुदात्तेत् । व्यत्ययेन परस्मैपदम् । छान्दसः शपो लुक्। अहं च “अध्वरे यागे “होतेव यथा मानुषो होतर्त्विक् स्तौति एवमेव "पूर्वचित्तये पूर्वप्रज्ञानायान्येभ्यः स्तोतृभ्यः पूर्वमेवास्मत्स्तोत्रपरिज्ञानाय प्राशंसिषमिति शेषः ॥ ॥ ६ ॥ ॥ २ ॥

# ऋग्वेदः सूक्तं ८.१३

**ऋग्वेदः - मण्डल ८**
← सूक्तं ८.१२ सूक्तं ८.१३ सूक्तं ८.१४ →
नारदः काण्वः।

दे. इन्द्रः। उष्णिक्।

---

इन्द्रः सुतेषु सोमेषु क्रतुं पुनीत उक्थ्यम् ।

विदे वृधस्य दक्षसो महान्हि षः ॥१॥

स प्रथमे व्योमनि देवानां सदने वृधः ।

सुपारः सुश्रवस्तमः समप्सुजित् ॥२॥

तमह्वे वाजसातय इन्द्रं भराय शुष्मिणम् ।

भवा नः सुम्ने अन्तमः सखा वृधे ॥३॥

इयं त इन्द्र गिर्वणो रातिः क्षरति सुन्वतः ।

मन्दानो अस्य बर्हिषो वि राजसि ॥४॥

नूनं तदिन्द्र दद्धि नो यत्त्वा सुन्वन्त ईमहे ।

रयिं नश्चित्रमा भरा स्वर्विदम् ॥५॥

स्तोता यत्ते विचर्षणिरतिप्रशर्धयद्गिरः ।

वया इवानु रोहते जुषन्त यत् ॥६॥

प्रत्नवज्जनया गिरः शृणुधी जरितुर्हवम् ।

मदेमदे ववक्षिथा सुकृत्वने ॥७॥

क्रीळन्त्यस्य सूनृता आपो न प्रवता यतीः ।

अया धिया य उच्यते पतिर्दिवः ॥८॥

उतो पतिर्य उच्यते कृष्टीनामेक इद्वशी ।

नमोवृधैरवस्युभिः सुते रण ॥९॥

स्तुहि श्रुतं विपश्चितं हरी यस्य प्रसक्षिणा ।

गन्तारा दाशुषो गृहं नमस्विनः ॥१०॥

तूतुजानो महेमतेऽश्वेभिः प्रुषितप्सुभिः ।

आ याहि यज्ञमाशुभिः शमिद्धि ते ॥११॥

इन्द्र शविष्ठ सत्पते रयिं गृणत्सु धारय ।

श्रवः सूरिभ्यो अमृतं वसुत्वनम् ॥१२॥

हवे त्वा सूर उदिते हवे मध्यंदिने दिवः ।

जुषाण इन्द्र सप्तिभिर्न आ गहि ॥१३॥

आ तू गहि प्र तु द्रव मत्स्वा सुतस्य गोमतः ।

तन्तुं तनुष्व पूर्व्यं यथा विदे ॥१४॥

यच्छक्रासि परावति यदर्वावति वृत्रहन् ।

यद्वा समुद्रे अन्धसोऽवितेदसि ॥१५॥

इन्द्रं वर्धन्तु नो गिर इन्द्रं सुतास इन्दवः ।

इन्द्रे हविष्मतीर्विशो अराणिषुः ॥१६॥

तमिद्विप्रा अवस्यवः प्रवत्वतीभिरूतिभिः ।

इन्द्रं क्षोणीरवर्धयन्वया इव ॥१७॥

त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत ।

तमिद्वर्धन्तु नो गिरः सदावृधम् ॥१८॥

स्तोता यत्ते अनुव्रत उक्थान्यृतुथा दधे ।

शुचिः पावक उच्यते सो अद्भुतः ॥१९॥

तदिद्रुद्रस्य चेतति यह्वं प्रत्नेषु धामसु ।

मनो यत्रा वि तद्दधुर्विचेतसः ॥२०॥

यदि मे सख्यमावर इमस्य पाह्यन्धसः ।

येन विश्वा अति द्विषो अतारिम ॥२१॥

कदा त इन्द्र गिर्वण स्तोता भवाति शंतमः ।

कदा नो गव्ये अश्व्ये वसौ दधः ॥२२॥

उत ते सुष्टुता हरी वृषणा वहतो रथम् ।

अजुर्यस्य मदिन्तमं यमीमहे ॥२३॥

तमीमहे पुरुष्टुतं यह्वं प्रत्नाभिरूतिभिः ।

नि बर्हिषि प्रिये सददध द्विता ॥२४॥

वर्धस्वा सु पुरुष्टुत ऋषिष्टुताभिरूतिभिः ।

धुक्षस्व पिप्युषीमिषमवा च नः ॥२५॥

इन्द्र त्वमवितेदसीत्था स्तुवतो अद्रिवः ।

ऋतादियर्मि ते धियं मनोयुजम् ॥२६॥

इह त्या सधमाद्या युजानः सोमपीतये ।

हरी इन्द्र प्रतद्वसू अभि स्वर ॥२७॥

अभि स्वरन्तु ये तव रुद्रासः सक्षत श्रियम् ।

उतो मरुत्वतीर्विशो अभि प्रयः ॥२८॥

इमा अस्य प्रतूर्तयः पदं जुषन्त यद्दिवि ।

नाभा यज्ञस्य सं दधुर्यथा विदे ॥२९॥

अयं दीर्घाय चक्षसे प्राचि प्रयत्यध्वरे ।

मिमीते यज्ञमानुषग्विचक्ष्य ॥३०॥

वृषायमिन्द्र ते रथ उतो ते वृषणा हरी ।

वृषा त्वं शतक्रतो वृषा हवः ॥३१॥

वृषा ग्रावा वृषा मदो वृषा सोमो अयं सुतः ।

वृषा यज्ञो यमिन्वसि वृषा हवः ॥३२॥

वृषा त्वा वृषणं हुवे वज्रिञ्चित्राभिरूतिभिः ।

वावन्थ हि प्रतिष्टुतिं वृषा हवः ॥३३॥

**सायणभाष्यम्**

तृतीयेऽनुवाकेऽष्ट सूक्तानि । तत्र “इन्द्रः सुतेषु' इति त्रयस्त्रिशदृचं प्रथमं सूक्तं काण्वस्य नारदस्यार्षमौष्णिहमैन्द्रम् । तथा चानुक्रान्तम् - ‘इन्द्रः सुतेषु नारदः' इति । महाव्रते निष्केवल्ये औष्णिहतृचाशीतौ पूर्वसूक्तेन सहोक्तो विनियोगः । तृतीये पर्यायेऽच्छावाकशस्त्र • इन्द्रः सुतेषु' इति तृचः स्तोत्रियः । सूत्र्यते हि -- इन्द्रः सुतेषु सोमेषु य इन्द्र सोमपातमः' (आश्व. श्रौ. ६. ४) इति ॥

इन्द्र॑ः सु॒तेषु॒ सोमे॑षु॒ क्रतुं॑ पुनीत उ॒क्थ्य॑म् ।

वि॒दे वृ॒धस्य॒ दक्ष॑सो म॒हान्हि षः ॥१

इन्द्रः॑ । सु॒तेषु॑ । सोमे॑षु । क्रतु॑म् । पु॒नी॒ते॒ । उ॒क्थ्य॑म् ।

वि॒दे । वृ॒धस्य॑ । दक्ष॑सः । म॒हान् । हि । सः ॥१

इन्द्रः । सुतेषु । सोमेषु । क्रतुम् । पुनीते । उक्थ्यम् ।

विदे । वृधस्य । दक्षसः । महान् । हि । सः ॥१

“सोमेषु “सुतेषु अभिषुतेषु सत्सु "इन्द्रः तान् पीत्वा “क्रतुं कर्मणां कर्तारम् “उक्थ्यं स्तोतारं च “पुनीते शोधयति । यद्वा । सोमेष्वभिषुतेषूक्थ्याख्यं क्रतुं यागं तैः सोमैः पुनीते यजमानैः पूतं कारयति । किमर्थम् । “वृधस्य वर्धकस्य “दक्षसः बलस्य “विदे लाभाय । “सः तादृश इन्द्रः "महान् “हि महान् खलु । अत एवं कर्तुं शक्नोतीति भावः ॥

स प्र॑थ॒मे व्यो॑मनि दे॒वानां॒ सद॑ने वृ॒धः ।

सु॒पा॒रः सु॒श्रव॑स्तम॒ः सम॑प्सु॒जित् ॥२

सः । प्र॒थ॒मे । विऽओ॑मनि । दे॒वाना॑म् । सद॑ने । वृ॒धः ।

सु॒ऽपा॒रः । सु॒श्रवः॑ऽतमः । सम् । अ॒प्सु॒ऽजित् ॥२

सः । प्रथमे । विऽओमनि । देवानाम् । सदने । वृधः ।

सुऽपारः । सुश्रवःऽतमः । सम् । अप्सुऽजित् ॥२

“सः इन्द्रः “प्रथमे प्रथिते विस्तीर्णे मुख्ये वा “व्योमनि विशेषेण रक्षके “देवानां “सदने । सीदत्यस्मिन्निति सदनं स्थानं स्वर्गाख्यम् । तत्र स्थितः सन् “वृधः यजमानानां वर्धयिता भवति । तथा "सुपारः सुष्ठु पारयिता प्रारब्धस्य सम्यक्परिसमापयिता “सुश्रवस्तमः । अतिशयेन शोभनं श्रवोऽन्नं यशो वा यस्य स तथोक्तः। “सं सम्यक् "अप्सुजित् अप्सूदकेषु प्राप्येषु सत्सु तद्विघातिनो वृत्रादेर्जेता। यद्वा । आप इत्यन्तरिक्षनाम । अन्तरिक्षे वर्तमानानामसुराणां जेता । तमह्व इत्युत्तरत्र संबन्धः ॥

तम॑ह्वे॒ वाज॑सातय॒ इन्द्रं॒ भरा॑य शु॒ष्मिण॑म् ।

भवा॑ नः सु॒म्ने अन्त॑म॒ः सखा॑ वृ॒धे ॥३

तम् । अ॒ह्वे॒ । वाज॑ऽसातये । इन्द्र॑म् । भरा॑य । शु॒ष्मिण॑म् ।

भव॑ । न॒ः । सु॒म्ने । अन्त॑मः । सखा॑ । वृ॒धे ॥३

तम् । अह्वे । वाजऽसातये । इन्द्रम् । भराय । शुष्मिणम् ।

भव । नः । सुम्ने । अन्तमः । सखा । वृधे ॥३

"तं पूर्वोक्तगुणं "शुष्मिणं बलवन्तम् “इन्द्रं “वाजसातये बलानामन्नानां वा सातिर्लाभो यस्मिन् तादृशाय “भराय संग्रामाय । यद्वा । भ्रियन्ते तस्मिन् हवींषीति भरो यज्ञः । प्रायेण संग्रामनामानि यज्ञनामत्वेन च दृश्यन्ते । भराय यज्ञार्थम् अह्वे आह्वये। ‘लिपिसिचिह्वश्च' ‘ आत्मनेपदेष्वन्यतरस्याम्' इति ह्वयतेश्छान्दसे लुडि च्लेरादेशः । हे इन्द्र त्वं “सुम्ने सुखे धने वा लिप्सिते सति “नः अस्माकम् “अन्तमः अन्तिकतमः संनिकृष्टतमः “भव। ‘तमे तादेश्च' इत्यन्तिकशब्दस्य तादिलोपः । तथा “वृधे वर्धनार्थं च “सखा समानख्यानो मित्रभूतो भव ।।

इ॒यं त॑ इन्द्र गिर्वणो रा॒तिः क्ष॑रति सुन्व॒तः ।

म॒न्दा॒नो अ॒स्य ब॒र्हिषो॒ वि रा॑जसि ॥४

इ॒यम् । ते॒ । इ॒न्द्र॒ । गि॒र्व॒ण॒ः । रा॒तिः । क्ष॒र॒ति॒ । सु॒न्व॒तः ।

म॒न्दा॒नः । अ॒स्य । ब॒र्हिषः॑ । वि । रा॒ज॒सि॒ ॥४

इयम् । ते । इन्द्र । गिर्वणः । रातिः । क्षरति । सुन्वतः ।

मन्दानः । अस्य । बर्हिषः । वि । राजसि ॥४

हे "गिर्वणः गीर्भिः स्तुतिभिर्वननीय संभजनीय "इन्द्र "ते तुभ्यं त्वदर्थम् "इयं पुरोवर्तिनी "सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य संबन्धिनी "रातिः ऋत्विग्भिर्दीयमाना सोमाहुतिः "क्षरति आहवनीयं प्रति गच्छति । त्वं च तया "मन्दानः मन्दमानो मोदमानस्तृप्यन् "अस्य "बर्हिषः यज्ञस्य "वि "राजसि विशेषेणेशिषे । राजतिरैश्वर्यकर्मा ।।

नू॒नं तदि॑न्द्र दद्धि नो॒ यत्त्वा॑ सु॒न्वन्त॒ ईम॑हे ।

र॒यिं न॑श्चि॒त्रमा भ॑रा स्व॒र्विद॑म् ॥५

नू॒नम् । तत् । इ॒न्द्र॒ । द॒द्धि॒ । नः॒ । यत् । त्वा॒ । सु॒न्वन्तः॑ । ईम॑हे ।

र॒यिम् । नः॒ । चि॒त्रम् । आ । भ॒र॒ । स्व॒ः॒ऽविद॑म् ॥५

नूनम् । तत् । इन्द्र । दद्धि । नः । यत् । त्वा । सुन्वन्तः । ईमहे ।

रयिम् । नः । चित्रम् । आ । भर । स्वःऽविदम् ॥५

हे "इन्द्र "नूनम् अवश्यं "तत् धनं "नः अस्मभ्यं "दद्धि ददस्व । 'दद दाने'। व्यत्ययेन परस्मैपदम्। छान्दसः शपो लुक् । "यत् धनं "त्वा त्वां "सुन्वन्तः सोममभिषुण्वन्तो वयम् "ईमहे याचामहे । अपि च "चित्रं चायनीयं "स्वर्विदं सर्वस्य लम्भकं यद्वा स्वर्गस्य वेदितारमास्तिकं "रयिं पुत्रं "नः अस्मभ्यम् "आ "भर आहर ॥ ॥ ७ ॥

स्तो॒ता यत्ते॒ विच॑र्षणिरतिप्रश॒र्धय॒द्गिर॑ः ।

व॒या इ॒वानु॑ रोहते जु॒षन्त॒ यत् ॥६

स्तो॒ता । यत् । ते॒ । विऽच॑र्षणिः । अ॒ति॒ऽप्र॒श॒र्धय॑त् । गिरः॑ ।

व॒याःऽइ॑व । अनु॑ । रो॒ह॒ते॒ । जु॒षन्त॑ । यत् ॥६

स्तोता । यत् । ते । विऽचर्षणिः । अतिऽप्रशर्धयत् । गिरः ।

वयाःऽइव । अनु । रोहते । जुषन्त । यत् ॥६

हे इन्द्र "विचर्षणिः विशेषेण द्रष्टा "स्तोता "ते तुभ्यं त्वदर्थं "गिरः स्तुतीः "यत् यदा "अतिप्रशर्धयत् अतिशयेन प्रशर्धयित्रीरकरोत् । शत्रूणां प्रसहनसमर्थाः। ' शृधु प्रसहने । "यत् यदा च ता गिरः "जुषन्त त्वामसेवन्त अप्रीणयन् वा तदा "वयाइव शाखा इव यथैकस्मिन् वृक्षे बह्व्यः शाखा उपरि प्ररोहन्ति तथा "अनु "रोहते स्तुत्या सर्वे गुणास्त्वयि प्ररोहन्ति ।

प्र॒त्न॒वज्ज॑नया॒ गिर॑ः शृणु॒धी ज॑रि॒तुर्हव॑म् ।

इन्द्रः । वृत्राणि । जिघ्नते ॥८

"तुविग्रीवः विस्तीर्णकन्धरः "वपोदरः पीवरोदरः यथा बहवः सोमाः पीता अन्तर्भवन्ति तथा विस्तृतजठर इत्यर्थः । "सुबाहुः शोभनबाहुरेवंगुणकः "इन्द्रः "अन्धसः अन्नस्य सोमात्मकस्य "मदे हर्षे सति "वृत्राणि शत्रुजातानि जिघ्नते हिनस्ति ।

इन्द्र॒ प्रेहिं पु॒रस्त्वं विश्व॒स्येशा॑न॒ ओजं॑सा ।

वृ॒त्राणिं वृत्रहञ्जहि ॥९

इन्द्रं । प्र । इ॒हि॒ । पु॒रः । त्वम् । विश्वं॑स्य । ईशा॑नः । ओजं॑सा ।

वृ॒त्राणिं । वृ॒त्र॒ऽह॒न् । ज॒हि॒ ॥९

इन्द्र । प्र । इहि । पुरः । त्वम् । विश्वस्य । ईशानः । ओजसा ।

वृत्राणि । वृत्रऽहन् । जहि ॥९

हे "इन्द्र "ओजसा बलेन "विश्वस्य सर्वस्य जगतः "ईशानः स्वामी भवन् "त्वं "पुरः अस्माकं पुरस्तात् "प्रेहि प्रगच्छ प्राप्नुहि । हे "वृत्रहन् वृत्राणामावरकाणां शत्रूणां हन्तः "वृत्राणि अस्मदीयानि शत्रुजातानि "जहि विनाशय ॥

अभ्युदयेष्टाविन्द्रस्य प्रदातुः 'दीर्घस्ते अस्त्वङ्कुशः' इत्यनुवाक्या। सूत्र्यते हि - दीर्घस्ते अस्त्वङ्कुशो भद्रा ते हस्ता सुकृतोत पाणी ' (आश्व. श्रौ. ३. १३) इति ॥

दी॒र्घस्तें अस्त्वङ्कु॒शो येना॒ वसुं प्र॒यच्छं॑सि ।

यजं॑मानाय सुन्व॒ते ॥१०

दी॒र्घः । ते॒ । अ॒स्तु॒ । अ॒ङ्कु॒शः । येनं । वसुं । प्र॒ऽयच्छं॑सि ।

यजं॑मानाय । सु॒न्व॒ते ॥१०

दीर्घः । ते । अस्तु । अङ्कुशः । येन । वसु । प्रऽयच्छसि ।

यजमानाय । सुन्वते ॥१०

हे इन्द्र "ते तव "अङ्कुशः सृणिराकर्षणसाधनमायुधं "दीर्घः "अस्तु आयतो भवतु । यथा दूरस्थमपि वस्तु व्याप्नोति तथायामवान् भवत्वित्यर्थः । "येन अङ्कुशेन "सुन्वते सोमाभिषवं कुर्वते "यजमानाय "वसु धनमाहृत्य "प्रयच्छसि ददासि ॥ ॥ २३ ॥

द्वितीये पर्याये होतुः शस्त्रे 'अयं त इन्द्र' इति स्तोत्रियस्तृचः । सूत्रितं च – 'अयं त इन्द्र सोमोऽयं ते मानुषे जने ' (आश्व. श्रौ. ६. ४)

इति ॥

अ॒यं त॑ इन्द्र॒ सोमो॒ निपू॑तो॒ अधि॑ ब॒र्हिषि॑ ।

एही॑म॒स्य द्रवा॒ पिब॑ ॥११

अ॒यम् । ते॒ । इ॒न्द्र॒ । सोमः॑ । निऽपू॑तः । अधि॑ । ब॒र्हिषि॑ ।

आ । इ॒हि॒ । ई॒म् । अ॒स्य । द्रव॑ । पिब॑ ॥११

अयम् । ते । इन्द्र । सोमः । निऽपूतः । अधि । बर्हिषि ।

आ । इहि । ईम् । अस्य । द्रव । पिब ॥११

हे “इन्द्र "ते तुभ्यं त्वदर्थम् "अयं "सोमः “बर्हिषि "अधि वेद्यामास्तीर्णे दर्भे "निपूतः नितरां दशापवित्रेण शोधितः । अभिषवादिसंस्कारैः संस्कृत इत्यर्थः । “ईम् इदानीम् "अस्य इमं सोमं प्रति "एहि आगच्छ । आगत्य यत्र रसात्मकः सोमो हूयते' तं देशं प्रति “द्रव शीघ्रं गच्छ । तदनन्तरं तं सोमं "पिब ।

शाचि॑गो॒ शाचि॑पूजना॒यं रणा॑य ते सु॒तः ।

आख॑ण्डल॒ प्र हू॑यसे ॥१२

शाचि॑गो॒ इति॒ शाचि॑ऽगो । शाचि॑ऽपूजन । अ॒यम् । रणा॑य । ते॒ । सु॒तः ।

आख॑ण्डल । प्र । हू॒य॒से॒ ॥१२

शाचिगो इति शाचिऽगो । शाचिऽपूजन । अयम् । रणाय । ते । सुतः ।

आखण्डल । प्र । हूयसे ॥१२

हे "शाचिगो । शाचयः शक्ता गावो यस्यासौ शाचिगुः । यद्वा । ‘शच व्यक्तायां वाचि '। अस्मादौणादिक इङ्प्रत्ययः । शाचयो व्यक्ताः प्रख्याता गावो रश्मयो गाव एव वा यस्य तादृश । हे "शाचिपूजन। पूज्यतेऽनेनेति पूजनं स्तोत्रादि । प्रख्यातपूजन "ते तव "रणाय रमणाय सुखजननाय “अयं सोमः "सुतः अभिषुतः । यतः कारणात् हे "आखण्डल शत्रूणामाखण्डयितः “प्र "हूयसे प्रकृष्टाभिः स्तुतिभिराहूयसे । अत आगत्येमं सोमं पिबेति भावः ॥

यस्ते॑ शृङ्गवृषो नपा॒त्प्रण॑पात्कु॒ण्ड॒पाय्य॑ः ।

न्य॑स्मिन्दध्र॒ आ मन॑ः ॥१३

यः । ते॒ । शृ॒ङ्ग॒ऽवृ॒षः॒ । न॒पा॒त् । प्रन॑पा॒दिति॒ प्रऽन॑पात् । कु॒ण्ड॒ऽपाय्यः॑ ।

नि । अ॒स्मि॒न् । द॒ध्रे॒ । आ । मनः॑ ॥१३

यः । ते । शृङ्गऽवृषः । नपात् । प्रनपादिति प्रऽनपात् । कुण्डऽपाय्यः ।

नि । अस्मिन् । दध्रे । आ । मनः ॥१३

हे शृङ्गवृषो "नपात्। शृङ्गवृषा नाम कश्चिदृषिः । तस्य चेन्द्रः स्वयमेव पुत्रतया जज्ञ इत्याख्यायिका। नपादित्यपत्यनाम । शृङ्गवृषः पुत्र । यद्वा । शृणन्ति हिंसन्तीति शृङ्गाणि रश्मयः । तैर्वर्षतीति शृङ्गवृडादित्यः । तस्य नपातयितः स्वकीये स्थानेऽवस्थापयितः । ' सुबामन्त्रिते° ' इति षष्ठ्यन्तस्य पराङ्गवद्भावेनामन्त्रितानुप्रवेशात् समुदायस्याष्टमिकं सर्वानुदात्तत्वम् । ईदृश हे इन्द्र "ते तव संबन्धी "प्रणपात् प्रकर्षेण न पातयिता रक्षिता "कुण्डपाय्यः । कुण्डैः पीयतेऽस्मिन् सोम इति कुण्डपाय्यः क्रतुविशेषः । ' क्रतौ कुण्डपाय्यसंचाय्यौ ' (पा. सू. ३. १. १३०) इति पिबतेरधिकरणे ण्यत्प्रत्ययो युगागमश्च निपात्यते । एतत्संज्ञो "यः क्रतुरस्ति "अस्मिन् कुण्डपाय्ये क्रतौ "मनः स्वान्तम् "आ "नि "दध्रे । अभितो वर्तमानाः कुण्डपायिनामान ऋषयः पुरा नि दधिरे । सम्यक् त्वद्देवत्यं क्रतुमनुष्ठितवन्त इत्यर्थः । दधातेर्लिटि 'इरयो रे' इति रेभावः ॥

वास्तो॑ष्पते ध्रु॒वा स्थूणांस॑त्रं सो॒म्याना॑म् ।

द्र॒प्सो भे॒त्ता पु॒रां शश्व॑तीना॒मिन्द्रो॒ मुनी॑नां॒ सखा॑ ॥१४

वास्तोः॑ । प॒ते॒ । ध्रु॒वा । स्थूणा॑ । अंस॑त्रम् । सो॒म्याना॑म् ।

द्र॒प्सः । भे॒त्ता । पु॒राम् । शश्व॑तीनाम् । इन्द्रः॑ । मुनी॑नाम् । सखा॑ ॥१४

वास्तोः । पते । ध्रुवा । स्थूणा । अंसत्रम् । सोम्यानाम् ।

द्रप्सः । भेत्ता । पुराम् । शश्वतीनाम् । इन्द्रः । मुनीनाम् । सखा ॥१४

हे "वास्तोष्पते गृहपते "स्थूणा गृहाधारभूतः स्तम्भः "ध्रुवा स्थिरा भवतु । "सोम्यानां सोमर्हाणां सोमसंपादिनां वास्माकं "अंसत्रम् अंसत्राणमंसोपलक्षितस्य कृत्स्नशरीरस्य त्रायकं रक्षकं बलं भवतु । अपि च "द्रप्सः द्रवणशीलः सोमः तद्वान् । अर्शआदित्वादच्प्रत्ययः । "शश्वतीनां बह्वीनां "पुराम् असुरपुरीणां "भेत्ता विदारयिता एवंभूतः "इन्द्रः "मुनीनाम् ऋषीणामस्माकं "सखा मित्रभूतो भवतु ॥

पृदा॑कुसानुर्यज॒तो ग॒वेष॑ण॒ एक॒ः सन्न॒भि भूय॑सः ।

भूर्णि॒मश्वं॑ नयत्तु॒जा पु॒रो गृ॒भेन्द्रं॒ सोम॑स्य पी॒तये॑ ॥१५

पृदा॑कुऽसानुः । य॒ज॒तः । गो॒ऽएष॑णः । एकः॑ । सन् । अ॒भि । भूय॑सः ।

भूर्णि॑म् । अश्व॑म् । न॒य॒त् । तु॒जा । पु॒रः । गृ॒भा । इन्द्र॑म् । सोम॑स्य । पी॒तये॑ ॥१५

पृदाकुऽसानुः । यजतः । गोऽएषणः । एकः । सन् । अभि । भूयसः ।

भूर्णिम् । अश्वम् । नयत् । तुजा । पुरः । गृभा । इन्द्रम् । सोमस्य । पीतये ॥१५

“पृदाकुसानुः । पृदाकुः सर्पः । स इव सानुः समुच्छ्रितः । तद्वदुन्नतशिरस्क इत्यर्थः । यद्वा । पृदाकुवत् सानुः संभजनीयः । स यथा बहुभिर्मणिमन्त्रौषधादिभिः संसेव्यो नाल्पैः एवमिन्द्रोऽपि बहुभिः स्तोत्रादिभिर्यत्नैः सेव्य इत्यर्थः । "यजतः यष्टव्यः गवेषणः गवामेषयिता प्रापयिता एवंगुणको य इन्द्रः "एकः "सन् असहायः केवल एव सन् "भूयसः बहुतराञ्छत्रूनभिभवति “भूर्णिं भरणशीलम् "अश्वं व्याप्नुवन्तं तम् "इन्द्रं "सोमस्य "पीतये पानार्थं "पुरः अस्माकं पुरस्तात् "नयत् नयति प्रापयति । सामर्थ्यात् स्तोतेति लभ्यते । केन साधनेन । "तुजा क्षिप्रगामिना "गृभा ग्रहणसाधनेन स्तोत्रेण । यद्वा । अश्वमिति लुप्तोपममेतत् । यथा वोढारमश्वं दुर्ग्रहं पाशेनानयन्ति एवमुक्तेन प्रकारेण महानुभावमिन्द्रं स्तुत्या स्तोतानयतीत्यर्थः ॥ ॥ २४ ॥

---

**टिप्पणी**

८.१७.११ अयं ते इन्द्र सोमः इति

सौमित्रे द्वे-इहवद्दैवोदासम् (https://sa.wikisource.org/s/2jvp)

# ऋग्वेदः सूक्तं ८.१८

ऋग्वेदः - मण्डल ८
← सूक्तं ८.१७ सूक्तं ८.१८ सूक्तं ८.१९ →
इरिम्बिठिः काण्वः

दे. आदित्याः, ४, ६, ७ अदितिः, ८ अश्विनौ, ९ अग्निसूर्यानिलाः। उष्णिक्

इदं ह नूनमेषां सुम्नं भिक्षेत मर्त्यः ।

आदित्यानामपूर्व्यं सवीमनि ॥१॥

अनर्वाणो ह्येषां पन्था आदित्यानाम् ।

अदब्धाः सन्ति पायवः सुगेवृधः ॥२॥

तत्सु नः सविता भगो वरुणो मित्रो अर्यमा ।

शर्म यच्छन्तु सप्रथो यदीमहे ॥३॥

देवेभिर्देव्यदितेऽरिष्टभर्मन्ना गहि ।

स्मत्सूरिभिः पुरुप्रिये सुशर्मभिः ॥४॥

ते हि पुत्रासो अदितेर्विदुर्द्वेषांसि योतवे ।

अंहोश्चिदुरुचक्रयोऽनेहसः ॥५॥

अदितिर्नो दिवा पशुमदितिर्नक्तमद्वयाः ।

अदितिः पात्वंहसः सदावृधा ॥६॥

उत स्या नो दिवा मतिरदितिरूत्या गमत् ।

सा शंताति मयस्करदप स्रिधः ॥७॥

उत त्या दैव्या भिषजा शं नः करतो अश्विना ।

युयुयातामितो रपो अप स्रिधः ॥८॥

शमग्निरग्निभिः करच्छं नस्तपतु सूर्यः ।

शं वातो वात्वरपा अप स्रिधः ॥९॥

अपामीवामप स्रिधमप सेधत दुर्मतिम् ।

आदित्यासो युयोतना नो अंहसः ॥१०॥

युयोता शरुमस्मदाँ आदित्यास उतामतिम् ।

ऋधग्द्वेषः कृणुत विश्ववेदसः ॥११॥

तत्सु नः शर्म यच्छतादित्या यन्मुमोचति ।

एनस्वन्तं चिदेनसः सुदानवः ॥१२॥

यो नः कश्चिद्रिरिक्षति रक्षस्त्वेन मर्त्यः ।

स्वैः ष एवै रिरिषीष्ट युर्जनः ॥१३॥

समित्तमघमश्नवद्दुःशंसं मर्त्यं रिपुम् ।

यो अस्मत्रा दुर्हणावाँ उप द्वयुः ॥१४॥

पाकत्रा स्थन देवा हृत्सु जानीथ मर्त्यम् ।

उप द्वयुं चाद्वयुं च वसवः ॥१५॥

आ शर्म पर्वतानामोतापां वृणीमहे ।

द्यावाक्षामारे अस्मद्रपस्कृतम् ॥१६॥

ते नो भद्रेण शर्मणा युष्माकं नावा वसवः ।

अति विश्वानि दुरिता पिपर्तन ॥१७॥

तुचे तनाय तत्सु नो द्राघीय आयुर्जीवसे ।

आदित्यासः सुमहसः कृणोतन ॥१८॥

यज्ञो हीळो वो अन्तर आदित्या अस्ति मृळत ।

युष्मे इद्वो अपि ष्मसि सजात्ये ॥१९॥

बृहद्वरूथं मरुतां देवं त्रातारमश्विना ।

मित्रमीमहे वरुणं स्वस्तये ॥२०॥

अनेहो मित्रार्यमन्नृवद्वरुण शंस्यम् ।

त्रिवरूथं मरुतो यन्त नश्छर्दिः ॥२१॥

ये चिद्धि मृत्युबन्धव आदित्या मनवः स्मसि ।

प्र सू न आयुर्जीवसे तिरेतन ॥२२॥

**सायणभाष्यम्**

‘इदं ह ' इति द्वाविंशत्यृचं षष्ठं सूक्तमिरिम्बिठेरार्षमुष्णिक्छन्दस्कम् । ‘उत त्या ' इत्येषा अश्विदेवताका । शमग्निः ' इत्येषा अग्निसूर्यवायुदेवताका । शिष्टा आदित्यदेवताकाः । तथा चानुक्रम्यते - इदं ह द्व्यधिकादित्यमौष्णिहमष्टम्यश्विभ्यां पराग्निसूर्यानिलानाम् ' इति । गतो विनियोगः ।।

इ॒दं ह॑ नू॒नमे॑षां सु॒म्नं भि॑क्षेत॒ मर्त्य॑ः ।

आ॒दि॒त्याना॒मपू॑र्व्यं॒ सवी॑मनि ॥१

इ॒दम् । ह॒ । नू॒नम् । ए॒षा॒म् । सु॒म्नम् । भि॒क्षे॒त॒ । मर्त्य॑ः ।

आ॒दि॒त्याना॑म् । अपू॑र्व्यम् । सवी॑मनि ॥१

इदम् । ह । नूनम् । एषाम् । सुम्नम् । भिक्षेत । मर्त्यः ।

आदित्यानाम् । अपूर्व्यम् । सवीमनि ॥१

“इदं "ह इदानीं खलु "नूनम् अवश्यम् "आदित्यानाम् अदितेः पुत्राणाम् "एषां देवानां मित्रादीनां "सवीमनि प्रसवे प्रेरणे सति “मर्त्यः मनुष्यः स्तोता “अपूर्व्यम् अभिनवं "सुम्नं सुखकरं धनं "भिक्षेत याचेत । न कालान्तरे ॥

अ॒न॒र्वाणो॒ ह्ये॑षां॒ पन्था॑ आ॒दि॒त्याना॑म् ।

अद॑ब्धा॒ः सन्ति॑ पा॒यव॑ः सुगे॒वृध॑ः ॥२

अ॒न॒र्वाणः॑ । हि । ए॒षा॒म् । पन्थाः॑ । आ॒दि॒त्याना॑म् ।

अद॑ब्धाः । सन्ति॑ । पा॒यवः॑ । सु॒गे॒ऽवृधः॑ ॥२

अनर्वाणः । हि । एषाम् । पन्थाः । आदित्यानाम् ।

अदब्धाः । सन्ति । पायवः । सुगेऽवृधः ॥२

“एषाम् "आदित्यानां "पन्थाः पन्थानो मार्गाः। ‘सुपां सुलुक् ' इति जसः सुः । अनर्वाणः अप्रत्यृताः परैरप्रतिगताः अत एव "अदब्धाः अहिंसिताश्च "सन्ति भवन्ति । "हि यस्मादेवं तस्मात् “पायवः पालयितारस्ते मार्गाः "सुगेवृधः सुगमे सुखे विषये वर्धका भवन्तु ॥

तत्सु नः॑ सवि॒ता भगो॒ वरु॑णो मि॒त्रो अ॑र्य॒मा ।

शर्म॑ यच्छन्तु स॒प्रथो॒ यदीम॑हे ॥३

तत् । सु । न॒ः । स॒वि॒ता । भगः॑ । वरु॑णः । मि॒त्रः । अ॒र्य॒मा ।

शर्म॑ । य॒च्छ॒न्तु॒ । स॒ऽप्रथः॑ । यत् । ईम॑हे ॥३

तत् । सु । नः । सविता । भगः । वरुणः । मित्रः । अर्यमा ।

शर्म । यच्छन्तु । सऽप्रथः । यत् । ईमहे ॥३

सवित्रादयश्चत्वारो देवाः "सप्रथः सर्वतः पृथु विस्तीर्णं "तत् "शर्म सुखं गृहं वा "नः अस्मभ्यं "सु सुष्ठु "यच्छन्तु ददतु । "यत् शर्म "ईमहे वयं याचामहे ॥

दे॒वेभि॑र्देव्यदि॒तेऽरि॑ष्टभर्म॒न्ना ग॑हि ।

स्मत्सू॒रिभि॑ः पुरुप्रिये सु॒शर्म॑भिः ॥४

दे॒वेभिः॑ । दे॒वि॒ । अ॒दि॒ते॒ । अरि॑ष्टऽभर्मन् । आ । ग॒हि॒ ।

स्मत् । सू॒रिऽभिः॑ । पु॒रु॒ऽप्रि॒ये॒ । सु॒शर्म॑ऽभिः ॥४

देवेभिः । देवि । अदिते । अरिष्टऽभर्मन् । आ । गहि ।

स्मत् । सूरिऽभिः । पुरुऽप्रिये । सुशर्मऽभिः ॥४

हे "देवि दानादिगुणयुक्ते हे "अरिष्टभर्मन् अहिंसितभरणे हे "पुरुप्रिये बहुभिः प्रीयमाणे हे एवंगुणविशिष्टे "अदिते "सूरिभिः प्राज्ञैः "सुशर्मभिः सुसुखैः "देवेभिः देवैरात्मीयैः पुत्रैः सार्धम् । स्मदिति निपातः शोभनार्थः । "स्मत् शोभनं यथा भवति तथा “आ “गहि आगच्छ ।

ते हि पु॒त्रासो॒ अदि॑तेर्वि॒दुर्द्वेषां॑सि॒ योत॑वे ।

अं॒होश्चि॑दुरु॒चक्र॑योऽने॒हस॑ः ॥५

ते । हि । पु॒त्रास॑ः । अदि॑तेः । वि॒दुः । द्वेषां॑सि । योत॑वे ।

अं॒होः । चि॒त् । उ॒रु॒ऽचक्र॑यः । अ॒ने॒हस॑ः ॥५

ते । हि । पुत्रासः । अदितेः । विदुः । द्वेषांसि । योतवे ।

अंहोः । चित् । उरुऽचक्रयः । अनेहसः ॥५

"अदितेः "पुत्रासः पुत्राः “ते "हि ते खलु मित्रादयो देवाः "द्वेषांसि द्वेष्टॄणि राक्षसादीनि “योतवे पृथक्कर्तुं “विदुः जानन्ति । 'विदो लटो वा' इति विद उत्तरस्य झेरुसादेशः । तथा “ उरुचक्रयः विस्तीर्णस्य कर्मणः कर्तारः "अनेहसः अनाहन्तारो रक्षकास्ते "अंहोश्चित् आहननशीलात् पापादपि योतवे पृथक्कर्तुमस्मान् जानन्ति ॥ ॥ २५ ॥

अदि॑तिर्नो॒ दिवा॑ प॒शुमदि॑ति॒र्नक्त॒मद्व॑याः ।

अदि॑तिः पा॒त्वंह॑सः स॒दावृ॑धा ॥६

अदि॑तिः । न॒ः । दिवा॑ । प॒शुम् । अदि॑तिः । नक्त॑म् । अद्व॑याः ।

अदि॑तिः । पा॒तु॒ । अंह॑सः । स॒दाऽवृ॑धा ॥६

अदितिः । नः । दिवा । पशुम् । अदितिः । नक्तम् । अद्वयाः ।

अदितिः । पातु । अंहसः । सदाऽवृधा ॥६

"नः अस्माकं "पशुम् "अदितिः अदीना अखण्डनीया वा देवमाता "दिवा अहनि "पातु रक्षतु । तथा "अद्वयाः बाह्याभ्यन्तरभेदेन प्रकारद्वयरहिता सर्वदैकप्रकारा कपटरहिता सा “अदितिः “नक्तं रात्रौ चास्मदीयं गवादिपशुजातं रक्षतु । तथास्मानपि “अंहसः पापात् पातु रक्षतु । केन साधनेन । “सदावृधा सर्वदा वृद्धिमतात्मीयेन रक्षणेन ॥

उ॒त स्या नो॒ दिवा॑ म॒तिरदि॑तिरू॒त्या ग॑मत् ।

सा शंता॑ति॒ मय॑स्कर॒दप॒ स्रिध॑ः ॥७

उ॒त । स्या । न॒ः । दिवा॑ । म॒तिः । अदि॑तिः । ऊ॒त्या । आ । ग॒म॒त् ।

सा । शम्ऽता॑ति । मय॑ः । क॒र॒त् । अप॑ । स्रिध॑ः ॥७

उत । स्या । नः । दिवा । मतिः । अदितिः । ऊत्या । आ । गमत् ।

सा । शम्ऽताति । मयः । करत् । अप । स्निधः ॥७

“उत अपि च "स्या सा पूर्वोक्ता "मतिः मन्त्री मन्तव्या स्तोतव्या वा “अदितिः “ऊत्या रक्षया सार्धं "दिवा अहनि “नः अस्मान् “आ “गमत् आगच्छतु । आगत्य च “शंताति शान्तिकरं “मयः सुखं "सा अदितिः “करत् करोतु । "स्निधः बाधकाञ्छत्रूंश्चापगमयतु । स्निधिर्बाधनार्थः । ‘ शिवशमरिष्टस्य करे ' (पा. सू. ४. ४. १४३) इति शंशब्दात्करणेऽर्थे तातिल्प्रत्ययः ।।

उ॒त त्या दैव्या॑ भि॒षजा॒ शं नः॑ करतो अ॒श्विना॑ ।

यु॒यु॒याता॑मि॒तो रपो॒ अप॒ स्निधः॑ ॥८

उ॒त । त्या । दैव्या॑ । भि॒षजा॑ । शम् । नः॒ । क॒र॒तः॒ । अ॒श्विना॑ ।

यु॒यु॒याता॑म् । इ॒तः । रपः॑ । अप॑ । स्निधः॑ ॥८

उत । त्या । दैव्या । भिषजा । शम् । नः । करतः । अश्विना ।

युयुयाताम् । इतः । रपः । अप । स्निधः ॥८

“उत अपि च “त्या तौ प्रसिद्धौ "दैव्या देवेषु भवौ “भिषजा चिकित्सकौ ईदृशौ "अश्विना अश्विनौ "नः अस्माकं “शं सुखं रोगाणां शमनं वा "करतः कुरुताम् । “इतः अस्मत्तः "रपः पापं “युयुयातां पृथक्कुर्याताम् । "स्त्रिधः शत्रूंश्चापगमयताम् ॥

शम॒ग्निर॒ग्निभिः॑ कर॒च्छं न॑स्तपतु॒ सूर्यः॑ ।

शं वातो॑ वात्वर॒पा अप॒ स्निधः॑ ॥९

शम् । अ॒ग्निः । अ॒ग्निऽभिः॑ । क॒र॒त् । शम् । नः॒ । त॒प॒तु॒ । सूर्यः॑ ।

शम् । वातः॑ । वा॒तु॒ । अ॒र॒पाः । अप॑ । स्निधः॑ ॥९

शम् । अग्निः । अग्निऽभिः । करत् । शम् । नः । तपतु । सूर्यः ।

शम् । वातः । वातु । अरपाः । अप । स्निधः ॥९

“अग्निभिः स्वविभूत्या विभिन्नैर्गार्हपत्यादिभिः “अग्निः देवः "शं "करत् अस्माकं रोगशान्तिं सुखं वा करोतु । "सूर्यः सर्वस्य प्रेरक आदित्यश्च "नः अस्माकं "शं सुखं यथा भवति तथा “तपतु प्रदीप्यताम् । "वातः वायुश्च “अरपाः अपापः सन् "शं यथा भवति तथा च "वातु अनुवर्तताम् । “स्निधः शत्रूंश्चैतेऽग्न्यादयोऽपगमयन्तु ।।

अपामीवामप स्रिधमपं सेधत दुर्मतिम् ।

आदित्यासो युयोतना नो अंहसः ॥१०

अप । अमीवाम् । अप । स्रिधम् । अप । सेधत । दुःऽमतिम् ।

आदित्यासः । युयोतन । नः । अंहसः ॥१०

अप । अमीवाम् । अप । स्रिधम् । अप । सेधत । दुःऽमतिम् ।

आदित्यासः । युयोतन । नः । अंहसः ॥१०

हे आदित्याः "अमीवां रोगम् "अप "सेधत अस्मत्तोऽपगमयत । "स्रिधं चापसेधकं शत्रुं च "अप सेधत । "दुर्मतिम् अस्माकं दुःखस्य मन्तारं च "अप सेधत । अपि च हे "आदित्यासः आदित्याः "नः अस्मान् "अंहसः पापात् "युयोतन पृथक्कुरुत । यौतेर्लोटि छान्दसः शपः श्लुः । ' तप्तनप्तनथनाश्च' इति तस्य तनबादेशः । पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । ' आमन्त्रितं पूर्वमविद्यमानवत् ' इति पूर्वस्यामन्त्रितस्याविद्यमानत्वेन पदादपरत्वान्निघातो न भवति ॥ ॥ २६ ॥

युयोता शरुमस्मदाँ आदित्यास उतामतिम् ।

ऋधग्द्वेषः कृणुत विश्ववेदसः ॥११

युयोत । शरुम् । अस्मत् । आ । आदित्यासः । उत । अमतिम् ।

ऋधक् । द्वेषः । कृणुत । विश्वऽवेदसः ॥११

युयोत । शरुम् । अस्मत् । आ । आदित्यासः । उत । अमतिम् ।

ऋधक् । द्वेषः । कृणुत । विश्वऽवेदसः ॥११

हे आदित्याः "शरुं हिंसकम् "अस्मदा अस्मत्तश्च "युयोत पृथक्कुरुत । "उत अपि च "अमतिं दुर्बुद्धिं च पृथकुरुत । हे "विश्ववेदसः सर्वधनाः सर्वज्ञा वा "द्वेषः द्वेष्टॄञ्छत्रून् "ऋधक् पृथक् "कृणुत कुरुत । अस्मत्तो वियोजयत ।।

तत्सु नः शर्म यच्छतादित्या यन्मुमोचति ।

एनस्वन्तं चिदेनसः सुदानवः ॥१२

तत् । सु । नः । शर्म । यच्छत । आदित्याः । यत् । मुमोचति ।

एनस्वन्तम् । चित् । एनसः । सुऽदानवः ॥१२

तत् । सु । नः । शर्म । यच्छत । आदित्याः । यत् । मुमोचति ।

एनस्वन्तम् । चित् । एनसः । सुऽदानवः ॥१२

हे "आदित्याः "तत् "शर्म सुखं "नः अस्मभ्यं "सु सुष्ठु "यच्छत दत्त । हे "सुदानवः शोभनदानाः युष्मदीयं "यत् शर्म "एनस्वन्तं "चित् पापिनमपि स्तोतारम् "एनसः पापात् "मुमोचति मोचयति तद्यच्छतेत्यन्वयः ॥

यो नः कश्चिद्रिरिक्षति रक्षस्त्वेन मर्त्यः ।

स्वैः ष एवैं रिरिषीष्ट युर्जनः ॥१३

यः । नः । कः । चित् । रिरिक्षति । रक्षःऽत्वेन । मर्त्यः ।

स्वैः । सः । एवैः । रिरिषीष्ट । युः । जनः ॥१३

यः । नः । कः । चित् । रिरिक्षति । रक्षःऽत्वेन । मर्त्यः ।

स्वैः । सः । एवैः । रिरिषीष्ट । युः । जनः ॥१३

"यः "कश्चित् "मर्त्यः मनुष्यः "नः अस्मान् "रक्षस्त्वेन रक्षोभावेन पिशाचाद्यात्मना "रिरिक्षति जिहिंसिषति । 'रिष हिंसायाम्' इति धातुः । "सः मनुष्यः "स्वैः "एवैः आत्मीयैरेव चेष्टितैः "रिरिषीष्ट हिंसितो भूयात् । सः "जनः "युः यातापगमनशीलश्च भवतु । यद्वा । स जनः स्वैरेव गमनैर्युर्दुःखं गच्छन् हिंसितो भवतु ।।

समित्तमघमंश्नवद्दुःशंसं मर्त्यं रिपुम् ।

यो अस्मत्रा दुर्हणावाँ उप द्वयुः ॥१४

सम् । इत् । तम् । अघम् । अश्नवत् । दुःऽशंसम् । मर्त्यम् । रिपुम् ।

यः । अस्मऽत्रा । दुःऽहनावान् । उप । द्वयुः ॥१४

सम् । इत् । तम् । अघम् । अश्नवत् । दुःऽशंसम् । मर्त्यम् । रिपुम् ।

यः । अस्मऽत्रा । दुःऽहनावान् । उप । द्वयुः ॥१४

"दुःशंसं दुष्कीर्तिं "रिपुं शत्रुं "तं "मर्त्यम् "इत् मनुष्यमेव "अघं पापं "सम् "अश्नवत् सम्यग्व्याप्नोतु । "यः मर्त्यः "अस्मत्रा अस्मासु अस्मद्विषये "दुर्हणावान् दुष्टहननवान् उपजायते "द्वयुः द्वाभ्यां प्रकाराभ्यां युक्तश्च भवति । अयमर्थः । प्रत्यक्षकृतो हितं वदति परोक्षकृतस्त्वहितम् । तादृशः कपटो द्वयुरित्युच्यते । यश्चास्मद्विषये कपटो भवति तमपि पापं व्याप्नोत्विति ॥

पा॒क॒त्रा स्थ॑न देवा हृ॒त्सु जा॑नीथ॒ मर्त्य॑म् ।

उप॑ द्व॒युं चाद्व॑युं च वसवः ॥१५

पा॒क॒ऽत्रा । स्थ॒न॒ । दे॒वा॒ः । हृ॒त्ऽसु । जा॒नी॒थ॒ । मर्त्य॑म् ।

उप॑ । द्व॒युम् । च॒ । अद्व॑युम् । च॒ । व॒स॒व॒ः ॥१५

पाकऽत्रा । स्थन । देवाः । हृत्ऽसु । जानीथ । मर्त्यम् ।

उप । द्वयुम् । च । अद्वयुम् । च । वसवः ॥१५

हे "देवाः दानादिगुणयुक्ता आदित्या यूयं "पाकत्रा पाकेषु विपक्वप्रज्ञेषु स्तोतृषु "स्थन भवथ । यद्वा । प्रथमार्थे त्राप्रत्ययः । पाकत्रा पाकाः परिपक्वज्ञाना भवथ । यत एवमतः कारणात् "हृत्सु आत्मीयेषु हृदयेषु "द्वयुं द्विप्रकारयुक्तं कपटिनं च "अद्वयुं "च तद्विलक्षणं कापट्यरहितं च "मर्त्यं मनुष्यमुपेत्य हे "वसवः वासकाः “जानीथ अवगच्छथ ॥ ॥ २७ ॥

आ शर्म॒ पर्व॑ताना॒मोतापां वृ॑णीमहे ।

द्यावा॑क्षामा॒रे अ॒स्मद्रप॑स्कृतम् ॥१६

आ । शर्म॑ । पर्व॑तानाम् । आ । उ॒त । अ॒पाम् । वृ॒णी॒म॒हे॒ ।

द्यावा॑क्षामा । आ॒रे । अ॒स्मत् । रप॑ः । कृ॒त॒म् ॥१६

आ । शर्म । पर्वतानाम् । आ । उत । अपाम् । वृणीमहे ।

द्यावाक्षामा । आरे । अस्मत् । रपः । कृतम् ॥१६

"पर्वतानां मेघानां गिरीणां वा संबन्धि “शर्म सुखं वयम् "आ "वृणीमहे आभिमुख्येन संभजामहे । "उत अपि च “अपाम् उदकानां च । है “द्यावाक्षामा द्यावापृथिव्यौ “अस्मत् “आरे अस्मत्तो विप्रकृष्टे देशे "रपः पापं "कृतं कुरुतम् । अस्मत्तो वियोजयतमित्यर्थः ॥

ते नो॑ भ॒द्रेण॒ शर्म॑णा यु॒ष्माकं॑ ना॒वा व॑सवः ।

अति॒ विश्वा॑नि दु॒रि॒ता पि॑पर्तन ॥१७

ते । न॒ः । भ॒द्रेण॑ । शर्म॑णा । यु॒ष्माक॑म् । ना॒वा । व॒स॒व॒ः ।

अति॑ । विश्वा॑नि । दु॒ःऽइ॒ता । पि॒प॒र्त॒न॒ ॥१७

ते । नः । भद्रेण । शर्मणा । युष्माकम् । नावा । वसवः ।

अति । विश्वानि । दुःऽइता । पिपर्तन ॥१७

हे ”वसवः वासयितारः आदित्याः “ते पूर्वोक्तगुणा यूयं "भद्रेण शोभनेन "शर्मणा सुखेन "युष्माकं “नावा "नः अस्मान् "विश्वानि सर्वाणि "दुरिता दुर्गमनानि "अति "पिपर्तन पिपृत अतिपारयत ।

तुचे तनाय तत्सु नो द्राघीय आयुर्जीवसे ।

आदित्यासः सुमहसः कृणोतन ॥१८

तुचे । तनाय । तत् । सु । नः । द्राघीयः । आयुः । जीवसे ।

आदित्यासः । सुऽमहसः । कृणोतन ॥१८

तुचे । तनाय । तत् । सु । नः । द्राघीयः । आयुः । जीवसे ।

आदित्यासः । सुऽमहसः । कृणोतन ॥१८

हे "आदित्यासः अदितेः पुत्राः "सुमहसः शोभनतेजस्काः "नः अस्माकं "तुचे पुत्राय “तनाय तत्तनयाय पौत्राय च "जीवसे जीवनाय "द्राघीयः दीर्घतमं "तत् प्रसिद्धम् "आयुः जीवितं "सु सुष्ठु “कृणोतन कुरुत ॥

यज्ञो हीळो वो अन्तर आदित्या अस्ति मृळत ।

युष्मे इद्वो अपि ष्मसि सजात्ये ॥१९

यज्ञः । हीळः । वः । अन्तरः । आदित्याः । अस्ति । मृळत ।

युष्मे इति । इत् । वः । अपि । स्मसि । सऽजात्ये ॥१९

यज्ञः । हीळः । वः । अन्तरः । आदित्याः । अस्ति । मृळत ।

युष्मे इति । इत् । वः । अपि । स्मसि । सऽजात्ये ॥१९

हे "आदित्याः "हीळः । हीडिर्गत्यर्थः । गन्तव्यः प्राप्तव्योऽस्माभिरनुष्ठितः "यज्ञः "वः युष्माकम् "अन्तरः "अस्ति अन्तिके वर्तमानो भवति । अतोऽस्मान् "मृळत सुखयत । "वः युष्माकं “सजात्ये सजातत्वे ज्ञातित्वे बान्धवे वर्तमाना वयं "युष्मे "इत् युष्मास्वेव “अपि "स्मसि सर्वदा भवामोऽपि । इदन्तो मसिः ॥

बृहद्वरूथं मरुतां देवं त्रातारमश्विना ।

मित्रमीमहे वरुणं स्वस्तये ॥२०

बृ॒हत् । वरू॑थम् । म॒रुता॑म् । दे॒वम् । त्रा॒तार॑म् । अ॒श्विना॑ ।

मि॒त्रम् । ई॒म॒हे॒ । वरु॑णम् । स्व॒स्तये॑ ॥२०

बृहत् । वरूथम् । मरुताम् । देवम् । त्रातारम् । अश्विना ।

मित्रम् । ईमहे । वरुणम् । स्वस्तये ॥२०

“मरुतां देवानां स्वामिनां “त्रातारं पालयितारं “देवम् इन्द्रम् “अश्विना अश्विनौ च "मित्रं “वरुणं च "बृहत् प्रौढं “वरूथं शीतातपादिनिवारकं गृहं “स्वस्तये अविनाशाय "ईमहे याचामहे ॥

अ॒ने॒हो मि॑त्रार्यमन्नृ॒वद्व॑रुण॒ शंस्य॑म् ।

त्रि॒वरू॑थं मरुतो यन्त नश्छ॒र्दिः ॥२१

अ॒ने॒हः । मि॒त्र॒ । अ॒र्य॒म॒न् । नृ॒ऽवत् । व॒रु॒ण॒ । शंस्य॑म् ।

त्रि॒ऽवरू॑थम् । म॒रु॒तः॒ । य॒न्त॒ । नः॒ । छ॒र्दिः ॥२१

अनेहः । मित्र । अर्यमन् । नृऽवत् । वरुण । शंस्यम् ।

त्रिऽवरूथम् । मरुतः । यन्त । नः । छर्दिः ॥२१

हे “मित्र हे “अर्यमन् हे “वरुण हे "मरुतः ते सर्वे यूयम् “अनेहः अहिंसितं “नृवत् नृभिः पुत्रादिभिरुपेतं "शंस्यं स्तुत्यं “त्रिवरूथं त्रयाणां शीतातपवर्षाणां निवारकं यद्वा त्रिभूमिकं “छर्दिः गृहं "नः अस्मभ्यं “यन्त यच्छत दत्तेत्यर्थः ।।

ये चि॒द्धि मृ॒त्युब॑न्धव॒ आदि॑त्या॒ मन॑व॒ः स्मसि॑ ।

प्र सू न॒ आयु॑र्जी॒वसे॑ तिरेतन ॥२२

ये । चि॒त् । हि । मृ॒त्यु॒ऽब॑न्धवः । आदि॑त्याः । मन॑वः । स्मसि॑ ।

प्र । सु । न॒ः । आयुः॑ । जी॒वसे॑ । ति॒रे॒त॒न॒ ॥२२

ये । चित् । हि । मृत्युऽबन्धवः । आदित्याः । मनवः । स्मसि ।

प्र । सु । नः । आयुः । जीवसे । तिरेतन ॥२२

हे "आदित्याः “ये “चित् ये च वयं “मनवः मनुष्याः “हि यस्मात् “मृत्युबन्धवः “स्मसि मृत्योर्यमस्य बन्धुभूताः प्रत्यासन्नमरणा भवामः अतो हेतोस्तेषां “नः अस्माकं “जीवसे जीवनाय चिरकालावस्थानाय "आयुः जीवितं “सु “प्र “तिरेतन शोभनं प्रवर्धयत ॥ ॥ २८ ॥

# ऋग्वेदः सूक्तं ८.१९

ऋग्वेदः - मण्डल ८
← सूक्तं ८.१८ सूक्तं ८.१९ सूक्तं ८.२० →
सोभरिः काण्वः।

दे. अग्निः, ३४-३५ आदित्याः, ३६-३७ त्रसदस्युः पौरुकुत्स्यः। १-२६ प्रगाथः - विषमा ककुप्, समा सतोबृहती, २७ द्विपदा विराट्, २८-३३ प्रगाथः - समा ककुप्, विषमा सतोबृहती, 34 उष्णिक्, ३५ सतोबृहती, ३६ ककप्, ३७ पङ्क्तिः ।

---

तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे ।

देवत्रा हव्यमोहिरे ॥१॥

विभूतरातिं विप्र चित्रशोचिषमग्निमीळिष्व यन्तुरम् ।

अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम् ॥२॥

यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् ।

अस्य यज्ञस्य सुक्रतुम् ॥३॥

ऊर्जो नपातं सुभगं सुदीदितिमग्निं श्रेष्ठशोचिषम् ।

स नो मित्रस्य वरुणस्य सो अपामा सुम्नं यक्षते दिवि ॥४॥

यः समिधा य आहुती यो वेदेन ददाश मर्तो अग्नये ।

यो नमसा स्वध्वरः ॥५॥

तस्येदर्वन्तो रंहयन्त आशवस्तस्य द्युम्नितमं यशः ।

न तमंहो देवकृतं कुतश्चन न मर्त्यकृतं नशत् ॥६॥

स्वग्नयो वो अग्निभिः स्याम सूनो सहस ऊर्जां पते ।

सुवीरस्त्वमस्मयुः ॥७॥

प्रशंसमानो अतिथिर्न मित्रियोऽग्नी रथो न वेद्यः ।

त्वे क्षेमासो अपि सन्ति साधवस्त्वं राजा रयीणाम् ॥८॥

सो अद्धा दाश्वध्वरोऽग्ने मर्तः सुभग स प्रशंस्यः ।

स धीभिरस्तु सनिता ॥९॥

यस्य त्वमूर्ध्वो अध्वराय तिष्ठसि क्षयद्वीरः स साधते ।

सो अर्वद्भिः सनिता स विपन्युभिः स शूरैः सनिता कृतम् ॥१०॥

यस्याग्निर्वपुर्गृहे स्तोमं चनो दधीत विश्ववार्यः ।

हव्या वा वेविषद्विषः ॥११॥

विप्रस्य वा स्तुवतः सहसो यहो मक्षूतमस्य रातिषु ।

अवोदेवमुपरिमर्त्यं कृधि वसो विविदुषो वचः ॥१२॥

यो अग्निं हव्यदातिभिर्नमोभिर्वा सुदक्षमाविवासति ।

गिरा वाजिरशोचिषम् ॥१३॥

समिधा यो निशिती दाशददितिं धामभिरस्य मर्त्यः ।

विश्वेत्स धीभिः सुभगो जनाँ अति द्युम्नैरुद्न इव तारिषत् ॥१४॥

तदग्ने द्युम्नमा भर यत्सासहत्सदने कं चिदत्रिणम् ।

मन्युं जनस्य दूढ्यः ॥१५॥

येन चष्टे वरुणो मित्रो अर्यमा येन नासत्या भगः ।

वयं तत्ते शवसा गातुवित्तमा इन्द्रत्वोता विधेमहि ॥१६॥

ते घेदग्ने स्वाध्यो ये त्वा विप्र निदधिरे नृचक्षसम् ।

विप्रासो देव सुक्रतुम् ॥१७॥

त इद्वेदिं सुभग त आहुतिं ते सोतुं चक्रिरे दिवि ।

त इद्वाजेभिर्जिग्युर्महद्धनं ये त्वे कामं न्येरिरे ॥१८॥

भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः ।

भद्रा उत प्रशस्तयः ॥१९॥

भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहः ।

अव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टिभिः ॥२०॥

ईळे गिरा मनुर्हितं यं देवा दूतमरतिं न्येरिरे ।

यजिष्ठं हव्यवाहनम् ॥२१॥

तिग्मजम्भाय तरुणाय राजते प्रयो गायस्यग्नये ।

यः पिंशते सूनृताभिः सुवीर्यमग्निर्घृतेभिराहुतः ॥२२॥

यदी घृतेभिराहुतो वाशीमग्निर्भरत उच्चाव च ।

असुर इव निर्णिजम् ॥२३॥

यो हव्यान्यैरयता मनुर्हितो देव आसा सुगन्धिना ।

विवासते वार्याणि स्वध्वरो होता देवो अमर्त्यः ॥२४॥

यदग्ने मर्त्यस्त्वं स्यामहं मित्रमहो अमर्त्यः ।

सहसः सूनवाहुत ॥२५॥

न त्वा रासीयाभिशस्तये वसो न पापत्वाय सन्त्य ।

न मे स्तोतामतीवा न दुर्हितः स्यादग्ने न पापया ॥२६॥

पितुर्न पुत्रः सुभृतो दुरोण आ देवाँ एतु प्र णो हविः ॥२७॥

तवाहमग्न ऊतिभिर्नेदिष्ठाभिः सचेय जोषमा वसो ।

सदा देवस्य मर्त्यः ॥२८॥

तव क्रत्वा सनेयं तव रातिभिरग्ने तव प्रशस्तिभिः ।

त्वामिदाहुः प्रमतिं वसो ममाग्ने हर्षस्व दातवे ॥२९॥

प्र सो अग्ने तवोतिभिः सुवीराभिस्तिरते वाजभर्मभिः ।

यस्य त्वं सख्यमावरः ॥३०॥

तव द्रप्सो नीलवान्वाश ऋत्विय इन्धानः सिष्णवा ददे ।

त्वं महीनामुषसामसि प्रियः क्षपो वस्तुषु राजसि ॥३१॥

तमागन्म सोभरयः सहस्रमुष्कं स्वभिष्टिमवसे ।

सम्राजं त्रासदस्यवम् ॥३२॥

यस्य ते अग्ने अन्ये अग्नय उपक्षितो वया इव ।

विपो न द्युम्ना नि युवे जनानां तव क्षत्राणि वर्धयन् ॥३३॥

यमादित्यासो अद्रुहः पारं नयथ मर्त्यम् ।

मघोनां विश्वेषां सुदानवः ॥३४॥

यूयं राजानः कं चिच्चर्षणीसहः क्षयन्तं मानुषाँ अनु ।

वयं ते वो वरुण मित्रार्यमन्स्यामेदृतस्य रथ्यः ॥३५॥

अदान्मे पौरुकुत्स्यः पञ्चाशतं त्रसदस्युर्वधूनाम् ।

मंहिष्ठो अर्यः सत्पतिः ॥३६॥

उत मे प्रयियोर्वयियोः सुवास्त्वा अधि तुग्वनि ।

तिसृणां सप्ततीनां श्यावः प्रणेता भुवद्वसुर्दियानां पतिः ॥३७॥

**सायणभाष्यम्**

'तं गूर्धय' इति सप्तत्रिंशदृचं सप्तमं सूक्तं काण्वस्य सोभरेरार्षम् । प्रथमातृतीयाद्ययुजः ककुभो द्वितीयाचतुर्थ्यादियुजः सतोबृहत्यः । पितुर्न पुत्रः एषा सप्तविंशी द्विपदा विंशत्यक्षरा विराट् । ' यमादित्यासः' इत्येषा चतुस्त्रिंश्युष्णिक् । 'यूयं राजानः ' एषा पञ्चत्रिंशी सतोबृहती । ' अदान्मे' इत्येषा ककुप् । 'उत मे' इत्येषा सप्तत्रिंशी पङ्क्तिः । षट्त्रिंशी सप्तत्रिंशी च त्रसदस्युनाम्नो राज्ञो दानस्तुतिरूपत्वात्तद्देवताके। चतुस्त्रिंशीपञ्चत्रिंश्यावादित्यदेवताके । शिष्टा आग्नेय्यः । तथा चानुक्रान्तं -- तं गूर्धय सप्तत्रिंशत् सोभरिराग्नेयं काकुभं प्रागाथं ह पितुर्न द्विपदान्त्ये ककुप्पङ्क्ती त्रसदस्योर्दानस्तुतिस्तत्पूर्वे उष्णिक्सतोबृहत्यावादित्येभ्यः' इति । गतः सूक्तविनियोगः ॥

तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे ।

देवत्रा हव्यमोहिरे ॥१

तम् । गूर्धय । स्वःऽनरम् । देवासः । देवम् । अरतिम् । दधन्विरे ।

दे॒व॒ऽत्रा । ह॒व्यम् । आ । ऊ॒हि॒रे॒ ॥१

तम् । गूर्धय । स्वःऽनरम् । देवासः । देवम् । अरतिम् । दधन्विरे ।

देवऽत्रा । हव्यम् । आ । ऊहिरे ॥१

हे स्तोतः "तं प्रसिद्धमग्निं "गूर्धय स्तुहि । गूर्धयतिः स्तुतिकर्मा । कीदृशम् । "स्वर्णरं सर्वस्य नेतारं सर्वैर्यजमानैः कर्मादौ नीतं वा । अथवा स्वर्गं प्रति हविषां नेतारम् । "देवासः । दीव्यन्ति स्तुवन्तीति देवा ऋत्विजः । "देवं दानादिगुणयुक्तम् "अरतिम् अर्यं स्वामिनं यद्वाभिप्राप्तद्रव्यं "दधन्विरे धन्वन्ति गच्छन्ति स्तुत्यादिभिः प्राप्नुवन्ति । धविर्गत्यर्थः । प्राप्य च तेनाग्निना "देवत्रा देवान् । ' देवमनुष्य इत्यादिना द्वितीयार्थे त्राप्रत्ययः । "हव्यं चरुपुरोडाशादिलक्षणं हविः "ओहिरे अभिप्रापयन्ति । वहेर्लिटि यजादित्वात् संप्रसारणम् ।।

विभू॑तरातिं विप्र चि॒त्रशो॑चिषम॒ग्निमी॑ळिष्व य॒न्तुर॑म् ।

अ॒स्य मेध॑स्य सो॒म्यस्य॑ सोभरे॒ प्रेम॑ध्व॒राय॒ पूर्व्य॑म् ॥२

विभू॑तऽरातिम् । वि॒प्र॒ । चि॒त्रऽशो॑चिषम् । अ॒ग्निम् । ई॒ळि॒ष्व॒ । य॒न्तुर॑म् ।

अ॒स्य । मेध॑स्य । सो॒म्यस्य॑ । सो॒भ॒रे॒ । प्र । ई॒म् । अ॒ध्व॒राय॑ । पूर्व्य॑म् ॥२

विभूतऽरातिम् । विप्र । चित्रऽशोचिषम् । अग्निम् । ईळिष्व । यन्तुरम् ।

अस्य । मेधस्य । सोम्यस्य । सोभरे । प्र । ईम् । अध्वराय । पूर्व्यम् ॥२

ऋषिरात्मानं संबोध्य स्तुतौ प्रेरयति । हे "विप्र मेधाविन "सोभरे एतत्संज्ञ ऋषे "अध्वराय यागाय "ईम् इमम् "अग्निं "प्र "ईळिष्व प्रस्तुहि । कीदृशम् । "विभूतरातिं व्याप्तधनं प्रभूतदानं वा "चित्रशोचिषं चायनीयतेजस्कं विचित्रदीप्तिकं वा "सोम्यस्य सोमसाध्यस्य "अस्य "मेधस्य यज्ञस्य "यन्तुरं नियन्तारं "पूर्व्यं चिरंतनम् ॥ आभिप्लविकेषूक्थ्येषु तृतीयसवने प्रशास्तुः शस्त्रे ' यजिष्ठं त्वा' इत्यादिकौ प्रगाथौ वैकल्पिकौ स्तोत्रियानुरूपौ । सूत्रितं च--- यजिष्ठं स्वा ववृमहे यः समिधा य आहुती' (आश्व. श्रौ. ७. ८) इति ॥

यजि॑ष्ठं त्वा ववृमहे दे॒वं दे॑व॒त्रा होता॑र॒मम॑र्त्य॑म् ।

अ॒स्य य॒ज्ञस्य॑ सु॒क्रतु॑म् ॥३

यजि॑ष्ठम् । त्वा॒ । व॒वृ॒म॒हे॒ । दे॒वम् । दे॒व॒ऽत्रा । होता॑रम् । अम॑र्त्यम् ।

अ॒स्य । य॒ज्ञस्य॑ । सु॒ऽक्रतु॑म् ॥३

यजिष्ठम् । त्वा । ववृमहे । देवम् । देवऽत्रा । होतारम् । अमर्त्यम् ।

अस्य । यज्ञस्य । सुऽक्रतुम् ॥३

हे अग्ने “यजिष्ठं यष्टृतमं “त्वा “ववृमहे वृणीमहे संभजामहे । कीदृशं त्वाम् । “देवत्रा देवेषु मध्ये “देवम् अतिशयेन दानादिगुणयुक्तं “होतारं देवानामाह्वातारम् “अमर्त्यम् अविनाशम् “अस्य “यज्ञस्य यागस्य “सुक्रतुं सुष्ठु कर्तारम् ।।

ऊ॒र्जो नपा॑तं सु॒भगं॑ सु॒दीदि॑तिम॒ग्निं श्रेष्ठ॑शोचिषं ।

स नो॑ मि॒त्रस्य॒ वरु॑णस्य॒ सो अ॒पामा सु॒म्नं य॑क्षते दि॒वि ॥४

ऊ॒र्जः । नपा॑तम् । सु॒ऽभगं॑म् । सु॒ऽदीदि॑तिम् । अ॒ग्निम् । श्रेष्ठ॑ऽशोचिषम् ।

सः । न॒ः । मि॒त्रस्य॑ । वरु॑णस्य । सः । अ॒पाम् । आ । सु॒म्नम् । य॒क्ष॒ते॒ । दि॒वि ॥४

ऊर्जः । नपातम् । सुऽभगम् । सुऽदीदितिम् । अग्निम् । श्रेष्ठऽशोचिषम् ।

सः । नः । मित्रस्य । वरुणस्य । सः । अपाम् । आ । सुम्नम् । यक्षते । दिवि ॥४

“ऊर्जः अन्नस्य “नपातं न पातयितारम् । यद्वा । नप्तारं चतुर्थम् । हविर्लक्षणेनान्नेनापो जायन्ते अद्भिश्चौषधिवनस्पतयस्तेभ्य एष जात इति चतुर्थत्वम् । ‘नभ्राण्नपात्' इति नञः प्रकृतिभावः। “सुभगं शोभनधनं “सुदीदितिं सुष्ठु दीपयितारं “श्रेष्ठशोचिषं प्रशस्यतमतेजस्कम् “अग्निं स्तौमीति शेषः । “सः तादृशोऽग्निः “नः अस्मदर्थं “दिवि द्योतमाने देवयजने द्युलोके वा “मित्रस्य देवस्य “वरुणस्य च “सुम्नं सुखम् "आ अभिलक्ष्य "यक्षते यजतु । तथा “सः अग्निः “अपाम् अब्देवतानां सुम्नमभियजतु ।।

यः स॒मिधा॒ य आहु॑ती॒ यो वेदे॑न द॒दाश॒ मर्तो॑ अ॒ग्नये॑ ।

यो नम॑सा स्वध्व॒रः ॥५

यः । स॒म्ऽइधा॑ । यः । आऽहु॑ती । यः । वेदे॑न । द॒दाश॑ । मर्तः॑ । अ॒ग्नये॑ ।

यः । नम॑सा । सु॒ऽअ॒ध्व॒रः ॥५

यः । सम्ऽइधा । यः । आऽहुती । यः । वेदेन । ददाश । मर्तः । अग्नये ।

यः । नमसा । सुऽअध्वरः ॥५

इयं पाकयज्ञप्रशंसापरेति भगवताश्वलायनेन ब्राह्मणान्तरप्रदर्शनेन व्याख्याता (आश्व. गृ. १. १.४-५ )। “यः “मर्तः मनुष्यः “समिधा पालाशादिनेध्मेन “अग्नये अग्न्यर्थं “ददाश परिचरति । “यः च “आहुती आहुत्या आज्यादिसाध्यया परिचरति । "यः च "वेदेन वेदाध्ययनेन ब्रह्मयज्ञेन परिचरति । “यः च “स्वध्वरः शोभनेनाध्वरेण ज्योतिष्टोमादिना युक्तः सन् "नमसा अन्नेन चरुपुरोडाशादिनाग्नये ददाश अग्न्यर्थं परिचरति । तस्येदर्वन्त इत्युत्तरत्र संबन्धः ॥ ॥ २९ ॥

तस्येदर्वंतो रंहयंत आशवस्तस्यं द्युम्नितंमं यशः ।

न तमंहों देवकृतं कुतंश्चन न मर्त्यंकृतं नशत् ॥६

तस्यं । इत् । अर्वन्तः । रंहयन्ते । आशवः । तस्यं । द्युम्निऽतंमम् । यशः ।

न । तम् । अंहः । देवऽकृंतम् । कुतः । चन । न । मर्त्यंऽकृतम् । नशत् ॥६

तस्य । इत् । अर्वन्तः । रंहयन्ते । आशवः । तस्य । द्युम्निऽतमम् । यशः ।

न । तम् । अंहः । देवऽकृतम् । कुतः । चन । न । मर्त्यऽकृतम् । नशत् ॥६

यः पूर्वोक्तः "तस्येत् तस्यैव "आशवः व्यापनशीलाः "अर्वन्तः अश्वाः "रंहयन्ते वेगं कुर्वन्ति । शत्रून् प्रसहन्त इत्यर्थः। "द्युम्नितमं दीप्तिमत्तमं "यशः कीर्तिश्च "तस्य एव भवति । यद्वा । द्युम्नमिति धननाम । धनवत्तमं यशोऽन्नं च तस्य भवति । अपि च "देवकृतम् देवैः कृतम् "अंहः पापं "कुतश्चन कस्मादपि हेतोः "तं "न "नशत् न प्राप्नोति । "न "मर्त्यकृतं मनुष्यैः कृतम् ।।

स्वग्नयों वो अग्निभिः स्यामं सूनो सहस ऊर्जां पते ।

सुवीरस्त्वमंस्मयुः ॥७

सुऽअग्नयः । वः । अग्निऽभिः । स्यामं । सूनो इतिं । सहसः । ऊर्जाम् । पते ।

सुऽवीरः । त्वम् । अस्मऽयुः ॥७

सुऽअग्नयः । वः । अग्निऽभिः । स्याम । सूनो इति । सहसः । ऊर्जाम् । पते ।

सुऽवीरः । त्वम् । अस्मऽयुः ॥७

हे "सहसः "सूनो बलस्य पुत्र । अग्निर्हि बलेन मथ्यमानो जायते । हे "ऊर्जां "पते अन्नानां हविर्लक्षणानां स्वामिन्नग्ने "वः । वचनव्यत्ययः। तवावयवभूतैः "अग्निभिः गार्हपत्यादिभिर्वयं "स्वग्नयः शोभनाग्निकाः "स्याम भवेम। "सुवीरः शोभनैर्वीरैरुपेतः "त्वं च "अस्मयुः अस्मान् कामयमानो भव ॥

प्रशंसंमानो अतिंथिर्न मित्रियोऽग्नी रथो न वेद्यः ।

त्वे क्षेमांसो अपिं संति साधवस्त्वं राजां रयीणां ॥८

प्रऽशंसंमानः । अतिंथिः । न । मित्रियः । अग्निः । रथः । न । वेद्यः ।

त्वे इतिं । क्षेमांसः । अपिं । सन्ति । साधवः । त्वम् । राजां । रयीणाम् ॥८

प्रऽशंसमानः । अतिथिः । न । मित्रियः । अग्निः । रथः । न । वेद्यः ।

त्वे इति । क्षेमासः । अपि । सन्ति । साधवः । त्वम् । राजा । रयीणाम् ॥८

“प्रशंसमानः स्तुवन् “अतिथिर्न अतिथिरिव । यद्वा । व्यत्ययेन कर्मणि कर्तृप्रत्ययः । प्रशस्यमानः सः “अग्निः “मित्रियः मित्राणां स्तोतॄणां हितो भवति । तथा “रथो “न रथ इव "वेद्यः । लम्भनीयोऽभीष्टफलसाधनत्वेन ज्ञातव्यो वा । उत्तरोऽर्धर्चः प्रत्यक्षकृतः । हे अग्ने “त्वे त्वयि “साधवः साधकाः समीचीनाः “क्षेमासः धारणानि “अपि “सन्ति भवन्ति । तथा “रयीणां धनानां “त्वम् एव “राजा ईश्वरो भवसि । ।

सो अ॒द्धा दा॒श्वं॑ध्व॒रोऽग्ने॒ मर्तः॑ सुभग॒ स प्र॒शंस्यः॑ ।

स धी॒भिर॑स्तु॒ सनि॑ता ॥९

सः । अ॒द्धा । दा॒शुऽअं॑ध्वरः । अग्ने॑ । मर्तः॑ । सु॒ऽभ॒ग॒ । सः । प्र॒ऽशंस्यः॑ ।

सः । धी॒भिः । अ॒स्तु॒ । सनि॑ता ॥९

सः । अद्धा । दाशुऽअध्वरः । अग्ने । मर्तः । सुऽभग । सः । प्रऽशंस्यः ।

सः । धीभिः । अस्तु । सनिता ॥९

हे “अग्ने यः “मर्तः मनुष्यः “दाश्वध्वरः दत्तयज्ञो भवति “सः “अद्धा । सत्यनामैतत् । सत्यफलो भवतु । हे "सुभग शोभनधन अग्ने “सः एव “प्रशंस्यः प्रशंसनीयः श्लाघनीयश्च भवतु । तथा “सः “धीभिः कर्मभिः स्तोत्रैर्वा “सनिता "अस्तु संभजनशीलो भवतु ॥

यस्य॒ त्वमू॒र्ध्वो अं॑ध्व॒राय॒ तिष्ठ॑सि क्ष॒यद्वी॑रः॒ स सा॑धते ।

सो अर्व॑द्भिः॒ सनि॑ता॒ स वि॑प॒न्युभिः॒ स शूरैः॒ सनि॑ता कृ॒तं ॥१०

यस्य॑ । त्वम् । ऊ॒र्ध्वः । अ॒ध्व॒राय॑ । तिष्ठ॑सि । क्ष॒यत्ऽवी॑रः । सः । सा॒ध॒ते॒ ।

सः । अर्व॑त्ऽभिः । सनि॑ता । सः । वि॒प॒न्युऽभिः॑ । सः । शूरैः॑ । सनि॑ता । कृ॒तम् ॥१०

यस्य । त्वम् । ऊर्ध्वः । अध्वराय । तिष्ठसि । क्षयत्ऽवीरः । सः । साधते ।

सः । अर्वत्ऽभिः । सनिता । सः । विपन्युऽभिः । सः । शूरैः । सनिता । कृतम् ॥१०

हे अग्ने “यस्य यजमानस्य “अध्वराय यागनिष्पादनाय “त्वम् “ऊर्ध्वः उद्युक्तः सन् “तिष्ठसि अवतिष्ठसे "सः यजमानः “क्षयद्वीरः निवसद्भिरित्वरैर्वा वीरैः पुत्रादिभिरुपेतः सन् “साधते सर्वकर्तव्यं साधयति । तदेव विवृणोति । “सः तादृशो जनः “अर्वद्भिः अश्वैः “कृतं निष्पादितं जयादिकं “सनिता संभजनशीलो भवति । “सः तादृशो जनः “विपन्युभिः मेधाविभिः “सः “शूरैः च “सनिता भवति ॥ ॥ ३० ॥

यस्या॒ग्निर्वपु॑र्गृ॒हे स्तोम॒ं चनो॒ दधी॑त वि॒श्ववा॑र्यः ।

ह॒व्या वा॒ वेवि॑ष॒द्विषः॑ ॥११

यस्य॑ । अ॒ग्निः । वपुः॑ । गृ॒हे । स्तोम॑म् । चनः॑ । दधी॑त । वि॒श्वऽवा॑र्यः ।

ह॒व्या । वा॒ । वेवि॑षत् । विषः॑ ॥११

यस्य । अग्निः । वपुः । गृहे । स्तोमम् । चनः । दधीत । विश्वऽवार्यः ।

हव्या । वा । वेविषत् । विषः ॥११

“यस्य यजमानस्य “गृहे "विश्ववार्यः विश्वैर्वरणीयः “वपुः । रूपनामैतत् । रूपवान् दीप्तिमान् “अग्निः “स्तोमं स्तोत्रं “चनः अन्नं च हविर्लक्षणं "दधीत धारयेत् । यस्य च "हव्या । वाशब्दः समुच्चये । हव्यानि हवींषि च “विषः व्याप्तान् देवान् “वेविषत् प्रापयेत् । ‘विष्लृ व्याप्तौ । अस्माल्लेटि रूपमेतत् । स यजमान इति पूर्वत्र संबन्धः ॥

विप्र॑स्य वा स्तुव॒तः स॑हसो यहो म॒क्षूत॑मस्य रा॒तिषु॑ ।

अ॒वोदे॑वमु॒परि॑मर्त्यं कृधि॒ वसो॑ विवि॒दुषो॒ वचः॑ ॥१२

विप्र॑स्य । वा॒ । स्तु॒व॒तः । स॒ह॒सः॒ । य॒हो॒ इति॑ । म॒क्षुऽत॑मस्य । रा॒तिषु॑ ।

अ॒वःऽदे॑वम् । उ॒परि॑ऽमर्त्यम् । कृ॒धि॒ । वसो॒ इति॑ । वि॒वि॒दुषः॑ । वचः॑ ॥१२

विप्रस्य । वा । स्तुवतः । सहसः । यहो इति । मक्षुऽतमस्य । रातिषु ।

अवःऽदेवम् । उपरिऽमर्त्यम् । कृधि । वसो इति । विविदुषः । वचः ॥१२

हे “सहसो "यहो बलस्य पुत्राग्ने “विप्रस्य मेधाविनः “स्तुवतः स्तोतुः “वा “रातिषु हविर्दानेषु “मक्षुतमस्य शीघ्रतमस्य यष्टुर्वा “विविदुषः ज्ञातवतोऽभिज्ञस्य “वचः वचनं हे “वसो वासकाग्ने "अवोदेवं देवानामवस्तात् “उपरिमर्त्यं मर्त्यानामुपरिष्टाच्च “कृधि कुरु । सर्वं नभःप्रदेशं व्यापयेति यावत् ।।

यो अ॒ग्निं ह॒व्यदा॑तिभि॒र्नमो॑भिर्वा सु॒दक्ष॑मा॒विवा॑सति ।

गि॒रा वा॑जि॒रशो॑चिषं ॥१३

यः । अ॒ग्निम् । ह॒व्यदा॑तिऽभिः । नमः॑ऽभिः । वा॒ । सु॒ऽदक्ष॑म् । आ॒ऽविवा॑सति ।

गि॒रा । वा॒ । अ॒जि॒रऽशो॑चिषम् ॥१३

यः । अग्निम् । हव्यदातिऽभिः । नमःऽभिः । वा । सुऽदक्षम् । आऽविवासति ।

गिरा । वा । अजिरऽशोचिषम् ॥१३

“यः यजमानः “हव्यदातिभिः हविषां दानैः “नमोभिः नमस्कारैः “वा “सुदक्षं शोभनबलम् “अग्निम् “आविवासति परिचरति “गिरा “वा स्तुत्या वा “अजिरशोचिषं क्षिप्रगामितेजस्कं तमग्निं परिचरति स समृद्धो भवतीति शेषः ।।

स॒मिधा॒ यो निशि॑ती॒ दाश॒ददि॑तिं॒ धाम॑भिरस्य॒ मर्त्यः॑ ।

विश्वेत्स धी॒भिः सु॒भगो॒ जना॒ँ अति॑ द्यु॒म्नैरु॒द्न इ॑व तारिषत् ॥१४

स॒म्ऽइधा॑ । यः । निऽशि॑ती । दाश॑त् । अदि॑तिम् । धाम॑ऽभिः । अ॒स्य॒ । मर्त्यः॑ ।

विश्वा॑ । इत् । सः । धी॒भिः । सु॒ऽभगः॑ । जना॑न् । अति॑ । द्यु॒म्नैः । उ॒द्नःऽइ॑व । ता॒रि॒ष॒त् ॥१४

सम्ऽइधा । यः । निऽशिती । दाशत् । अदितिम् । धामऽभिः । अस्य । मर्त्यः ।

विश्वा । इत् । सः । धीभिः । सुऽभगः । जनान् । अति । द्युम्नैः । उद्नःऽइव । तारिषत् ॥१४

“यः “मर्त्यः मनुष्यः “अस्य अग्नेः “धामभिः शरीरैः गार्हपत्यादिरूपेण विभज्य वर्तमानैः सार्धम् “अदितिम् अखण्डनीयं तमेवाग्निं “निशिती निशित्या निशानसाधनया प्रज्वलनहेतुभूतया “समिधा “दाशत् परिचरेत् “धीभिः कर्मभिः बुद्धिविशेषैर्वा “सः “सुभगः सन् “विश्वेत् सर्वानेव “जनान् “द्युम्नैः द्योतमानैरन्नैर्यशोभिर्वा “उद्नइव उदकानीव अति “तारिषत् अतितरेत् अतिक्रामेत् ॥

तद॑ग्ने द्यु॒म्नमा भ॑र॒ यत्सा॒सह॒त्सद॑ने॒ कं चि॑द॒त्रिण॑ं ।

म॒न्युं जन॑स्य दू॒ढ्यः॑ ॥१५

तत् । अ॒ग्ने॒ । द्यु॒म्नम् । आ । भ॒र॒ । यत् । स॒सह॑त् । सद॑ने । कम् । चि॒त् । अ॒त्रिण॑म् ।

म॒न्युम् । जन॑स्य । दु॒ःऽध्यः॑ ॥१५

तत् । अग्ने । द्युम्नम् । आ । भर । यत् । ससहत् । सदने । कम् । चित् । अत्रिणम् ।

मन्युम् । जनस्य । दुःऽध्यः ॥१५

हे “अग्ने “तत् “द्युम्नम् “आ “भर अस्मभ्यमाहर । “यत् “सदने गृहे वर्तमानं “कं “चित् कमपि “अत्रिणम् अत्तारं राक्षसादिकं “सासहत् अत्यर्थमभिभवेत् । तथा “दूढ्यः दुर्धियः पापबुद्धेः शत्रुजनस्य “मन्युं क्रोधं यच्च द्युम्नमभिभवेत् तदाहरेत्यन्वयः । ‘ ध्यै च ' इति पृषोदरादिपाठात् दुरो रेफस्योत्वं उत्तरपदादेष्टुत्वं च ॥ ॥ ३१ ॥

येन॒ चष्टे॒ वरु॑णो मि॒त्रो अ॑र्य॒मा येन॒ नास॑त्या॒ भगः॑ ।

व॒यं तत्ते॒ शव॑सा गातु॒वित्त॑मा॒ इंद्र॑त्वोता विधेमहि ॥१६

येन॑ । चष्टे॑ । वरु॑णः । मि॒त्रः । अ॒र्य॒मा । येन॑ । नास॑त्या । भगः॑ ।

व॒यम् । तत् । ते॒ । शव॑सा । गा॒तु॒वित्ऽत॑माः । इन्द्र॑त्वाऽऊताः । वि॒धे॒म॒हि॒ ॥१६

येन । चष्टे । वरुणः । मित्रः । अर्यमा । येन । नासत्या । भगः ।

वयम् । तत् । ते । शवसा । गातुवित्ऽतमाः । इन्द्रत्वाऽऊताः । विधेमहि ॥१६

“येन आग्नेयेन तेजसा “वरुणः देवः “चष्टे प्रकाशयति । येन च “मित्रः “अर्यमा च चष्टे । “येन च “नासत्या अश्विनौ च चक्षाते । “भगः भजनीय एतत्संज्ञो देवश्च चष्टे । “शवसा बलेन “गातुवित्तमाः गातोर्गातव्यस्य स्तोत्रस्य ज्ञातृतमाः । यद्वा । गन्तव्यस्य प्राप्तव्यस्य लब्धृतमाः ।। “इन्द्रत्वोताः इन्द्रेणेश्वरेण त्वयोता रक्षिताः सन्तः “वयं हे अग्ने “ते त्वदीयं “तत् तेजः “विधेमहि परिचरेमहि ॥

ते घेद॑ग्ने स्वा॒ध्यो॒३॒॑ ये त्वा॑ विप्र निदधि॒रे नृ॒चक्ष॑सं ।

विप्रा॑सो देव सु॒क्रतुं॑ ॥१७

ते । घ॒ । इत् । अ॒ग्ने॒ । सु॒ऽआ॒ध्यः॑ । ये । त्वा॒ । वि॒प्र॒ । नि॒ऽद॒धि॒रे । नृ॒ऽचक्ष॑सम् ।

विप्रा॑सः । दे॒व॒ । सु॒ऽक्रतु॑म् ॥१७

ते । घ । इत् । अग्ने । सुऽआध्यः । ये । त्वा । विप्र । निऽदधिरे । नृऽचक्षसम् ।

विप्रासः । देव । सुऽक्रतुम् ॥१७

हे “अग्ने “ते “घेत् त एव खलु “स्वाध्यः शोभनाध्याना भवन्ति । हे “विप्र मेधाविन् “देव द्योतमानाग्ने "ये “विप्रासः विप्रा मेधाविन ऋत्विजः “नृचक्षसं नृणां चष्टारं “सुक्रतुं सुकर्माणं शोभनप्रज्ञं वा “त्वा त्वां “निदधिरे निदधति यागार्थं गार्हपत्यादिस्थानेष्वाधानसंस्कारेण स्थापयन्ति ते घेदित्यन्वयः ॥

त इद्वेदिं॑ सुभग॒ त आहु॑तिं॒ ते सोतुं॑ चक्रिरे दि॒वि ।

त इद्वाजे॑भिर्जिग्युर्म॒हद्धनं॒ ये त्वे कामं॑ न्येरि॒रे ॥१८

ते । इत् । वेदि॑म् । सु॒ऽभ॒ग॒ । ते । आऽहु॑तिम् । ते । सोतु॑म् । च॒क्रि॒रे॒ । दि॒वि ।

ते । इत् । वाजेभिः । जिग्युः । महत् । धनम् । ये । त्वे इति । कामम् । निऽएरिरे ॥१८

ते । इत् । वेदिम् । सुऽभग । ते । आऽहुतिम् । ते । सोतुम् । चक्रिरे । दिवि ।

ते । इत् । वाजेभिः । जिग्युः । महत् । धनम् । ये । त्वे इति । कामम् । निऽएरिरे ॥१८

हे “सुभग शोभनधनाग्ने “त “इत् त एव यजमानास्त्वद्यागाय "वेदिं “चक्रिरे कुर्वन्ति । तदनन्तरं “ते यजमानाः “आहुतिं चरुपुरोडाशादिसाध्यां दीक्षणीयादिषु कुर्वन्ति । ततः “दिवि द्योतमाने सौत्येऽहनि “सोतुं सोममभिषोतुं चक्रिरे उद्योगं कुर्वन्ति । अनुष्ठितयज्ञाः “त “इत् त एव “वाजेभिः वाजैर्बलैः "महत् प्रभूतं “धनं “जिग्युः जयन्ति । शत्रुभ्यो लभन्ते । कुत इत्यत आह । “ये यजमाना हे अग्ने “त्वे त्वयि “कामम् अभिलाषं “न्येरिरे नितरां गच्छन्ति । त्वामादरातिशयेन स्तुवन्तीत्यर्थः ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने प्रशास्तुः शस्त्रे ‘भद्रो नः' इति प्रगाथो वैकल्पिकः स्तोत्रियः । सूत्र्यते हि-’ भद्रो नो अग्निराहुतो यदी घृतेभिराहुतः ' ( आश्व. श्रौ. ७.८) इति ॥

भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः ।

भद्रा उत प्रशस्तयः ॥१९

भद्रः । नः । अग्निः । आऽहुतः । भद्रा । रातिः । सुऽभग । भद्रः । अध्वरः ।

भद्राः । उत । प्रऽशस्तयः ॥१९

भद्रः । नः । अग्निः । आऽहुतः । भद्रा । रातिः । सुऽभग । भद्रः । अध्वरः ।

भद्राः । उत । प्रऽशस्तयः ॥१९

“आहुतः हविर्भिस्तर्पितः “अग्निः “नः अस्माकं “भद्रः कल्याणो भवतु । हे "सुभग शोभनधनाग्ने “भद्रा कल्याणी “रातिः दानं चास्माकं भवतु । “भद्रः कल्याणः “अध्वरः यागश्च भवतु । “उत अपि च "भद्राः कल्याण्यः “प्रशस्तयः प्रशंसाः स्तुतयश्च भवन्तु ।

भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहः ।

अव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टिभिः ॥२०

भद्रम् । मनः । कृणुष्व । वृत्रऽतूर्ये । येन । समत्ऽसु । ससहः ।

अव । स्थिरा । तनुहि । भूरि । शर्धताम् । वनेम । ते । अभिष्टिऽभिः ॥२०

भद्रम् । मनः । कृणुष्व । वृत्रऽतूर्ये । येन । समत्ऽसु । ससहः ।

अव । स्थिरा । तनुहि । भूरि । शर्धताम् । वनेम । ते । अभिष्टिऽभिः ॥२०

हे अग्ने “वृत्रतूर्ये संग्रामे “भद्रं शोभनं “मनः “कृणुष्व अस्माकं कुरु । "येन मनसा त्वं “समत्सु संग्रामेषु “सासहः भृशं शत्रूनभिभवसि । अपि च “शर्धताम् अभिभवतां शत्रूणां “भूरि भूरीणि बहूनि स्थिराणि दृढान्यपि “अव “तनुहि अवाञ्चि कुरु । पराजितानि कुर्वित्यर्थः । वयं च “अभिष्टिभिः अभ्येषणसाधनैर्हविभिः स्तोत्रैश्च “ते त्वां “वनेम संभजेमहि । यद्वा । ते तव प्रसादात् अभिष्टिभिः अभीष्टैः फलैर्वनेम संगच्छेमहि ॥ ॥ ३२ ॥

ईळें गि॒रा मनु॑र्हितं॒ यं दे॒वा दू॒तम॑र॒तिं न्ये॑रि॒रे ।

यजि॑ष्ठं हव्य॒वाह॑नं ॥२१

ईळें । गि॒रा । मनुः॑ऽहितम् । यम् । दे॒वाः । दू॒तम् । अ॒र॒तिम् । नि॒ऽए॒रि॒रे ।

यजि॑ष्ठम् । ह॒व्य॒ऽवाह॑नम् ॥२१

ईळे । गिरा । मनुःऽहितम् । यम् । देवाः । दूतम् । अरतिम् । निऽएरिरे ।

यजिष्ठम् । हव्यऽवाहनम् ॥२१

“गिरा वाचा स्तुतिरूपया "मनुर्हितं मनुना प्रजापतिना यजमानेनाहितं तमग्निम् “ईळे स्तौमि । कीदृशम् । “यजिष्ठं यष्टृतम “हव्यवाहनं हविषां वोढारं “अरतिम् अर्यमीश्वरं वा “दूतं देवानां दूत्ये वर्तमानम् । “यम् अग्निं “देवाः “न्येरिरे नितरां प्रेरयन्ति ॥

ति॒ग्मजं॑भाय॒ तरु॑णाय॒ राज॑ते॒ प्रयों गायस्य॒ग्नयें ।

यः पिं॒शतें सू॒नृता॑भिः सु॒वीर्य॑म॒ग्निर्घृ॒तेभि॒राहु॑तः ॥२२

ति॒ग्मऽजं॑म्भाय । तरु॑णाय । राज॑ते । प्रयः॑ । गा॒य॒सि॒ । अ॒ग्नयें ।

यः । पिं॒शतें । सू॒नृता॑भिः । सु॒ऽवीर्य॑म् । अ॒ग्निः । घृ॒तेभिः॑ । आऽहु॑तः ॥२२

तिग्मऽजम्भाय । तरुणाय । राजते । प्रयः । गायसि । अग्नये ।

यः । पिंशते । सूनृताभिः । सुऽवीर्यम् । अग्निः । घृतेभिः । आऽहुतः ॥२२

"तिग्मजम्भाय तीक्ष्णज्वालाय “तरुणाय नित्ययूने जरामरणरहिताय “राजते राजमानाय “अग्नये “प्रयः हविर्लक्षणमन्नं “गायसि हे स्तोतः । प्रवृद्धिं प्रयच्छेत्यर्थः । “यः “अग्निः “सूनृताभिः प्रियसत्यात्मिकाभिर्वाग्भिः स्तुतः “घृतेभिः घृतैराज्यैः “आहुतः अभिहुतश्च सन् “सुवीर्यं शोभनवीर्यं “पिंशते आश्लेषयति स्तोतृभिः संयोजयति । 'पिश अवयवे' । तस्मा अग्नय इत्यन्वयः ॥

आभिप्लविकेषूक्थ्येषु प्रशास्तुः शस्त्रे यदा 'भद्रो नः' (ऋ. सं. ८. १९. १९) इति प्रगाथः स्तोत्रियः तदानीं ' यदी घृतेभिः' इति प्रगाथोऽनुरूपः। सूत्रं तु पूर्वमेवोदाहृतम् ॥

यदीं घृतेभिराहुंतो वाशींमग्निर्भरंत उच्चावं च ।

असुंर इव निर्णिजं ॥२३

यदिं । घृतेभिः । आऽहुंतः । वाशींम् । अग्निः । भरंते । उत् । च । अवं । च ।

असुंरःऽइव । निःऽनिजंम् ॥२३

यदि । घृतेभिः । आऽहुतः । वाशीम् । अग्निः । भरते । उत् । च । अव । च ।

असुरःऽइव । निःऽनिजम् ॥२३

“घृतेभिः घृतैः “आहुतः अभिहुतोऽयम् "अग्निः “यदि यदा यस्मिन्काले "वाशीम् । वाङ्नामैतत् । वाचं शब्दम् “उच्च ऊर्ध्वं च “अव “च अवाक्च “भरते संपादयति । यद्वा । वाशीं वाशनशीलां शब्दकारिणीं ज्वालामुद्धरते उद्धरति उद्गमयत्यूर्ध्वमुखम् अव च भरते अवाङ्मुखं च हरति उपसंहरति । “असुरइव रश्मीनां क्षेप्ता सूर्यो यथा “निर्णिजम् आत्मीयं रूपमुपरितनेषु लोकेषु प्रकाशतयोद्गमयति अधस्तनेषु चावाङ्मुखं गमयति तद्वदुच्चनीचभावनयाग्निस्तेज उद्गमयति । तं स्तुम इति शेषः ॥

यो हव्यान्यैरंयता मनुंर्हितो देव आसा सुंगंधिनां ।

विवांसते वार्याणि स्वध्वरो होतां देवो अमंर्त्यः ॥२४

यः । हव्यानिं । ऐरंयत । मनुंःऽहितः । देवः । आसा । सुऽगन्धिनां ।

विवांसते । वार्याणि । सुऽअध्वरः । होतां । देवः । अमंर्त्यः ॥२४

यः । हव्यानि । ऐरयत । मनुःऽहितः । देवः । आसा । सुऽगन्धिना ।

विवासते । वार्याणि । सुऽअध्वरः । होता । देवः । अमर्त्यः ॥२४

“यः "मनुर्हितः मनुना प्रजापतिनाहितः “देवः द्योतमानोऽग्निः “सुगन्धिना शोभनगन्धयुक्तेन “आसा आस्येन “हव्यानि अस्मदीयानि हवींषि “ऐरयत देवान्प्रति प्रेरयति "स्वध्वरः शोभनयज्ञः "होता देवानामाह्वाता "देवः दीप्यमानः अमर्त्यः मरणरहितः सोऽग्निः “वार्याणि वरणीयानि धनानि “विवासते परिचरते । यजमानाय प्रयच्छतीति शेषः ॥

यदंग्ने मर्त्यस्त्वं स्यामहं मिंत्रमहो अमंर्त्यः ।

सहंसः सूनवाहुत ॥२५

यत् । अग्ने । मर्त्यः । त्वम् । स्याम् । अहम् । मित्रऽमहः । अमंर्त्यः ।

सहंसः । सूनो इतिं । आऽहुत ॥२५

यत् । अग्ने । मर्त्यः । त्वम् । स्याम् । अहम् । मित्रऽमहः । अमर्त्यः ।

सहसः । सूनो इति । आऽहुत ॥२५

हे "सहसः "सूनो बलस्य पुत्र "आहुत घृतैरभिहुत हे "मित्रमहः अनुकूलदीप्तिमन् "अग्ने "मर्त्यः मरणधर्मा "अहं "यत् यदि "त्वं "स्यां त्वदुपासनया त्वद्रूपमापन्नो भवेयम् । 'ये' यथायथोपासते ते तदेव भवन्ति' इति श्रुतेः । तर्ह्यहम् "अमर्त्यः मरणरहितो देव एव भवेयमिति ॥ ॥३३॥

न त्वां रासीया॒भिश॑स्तये वसो॒ न पा॑प॒त्वाय॑ संत्य ।

न मे॑ स्तो॒ताम॑ती॒वा न दुर्हि॑त॒: स्याद॑ग्ने॒ न पा॒पया॑ ॥२६

न । त्वा॒ । रा॒सी॒य॒ । अ॒भिऽश॑स्तये । व॒सो॒ इति॑ । न । पा॒प॒ऽत्वाय॑ । स॒न्त्य॒ ।

न । मे॒ । स्तो॒ता । अ॒म॒ति॒ऽवा । न । दुः॒ऽहि॑तः । स्यात् । अ॒ग्ने॒ । न । पा॒पया॑ ॥२६

न । त्वा । रासीय । अभिऽशस्तये । वसो इति । न । पापऽत्वाय । सन्त्य ।

न । मे । स्तोता । अमतिऽवा । न । दुःऽहितः । स्यात् । अग्ने । न । पापया ॥२६

हे "वसो वासकाग्ने "त्वा त्वाम् "अभिशस्तये अभिशंसनाय मिथ्यापवादाय हिंसायै वा "न रासीय नाक्रोशयेयम् । 'रासृ शब्दे' । हे "सन्त्य संभजनीयाग्ने "पापत्वाय त्वां "न रासीय । "मे मदीयः "स्तोता चानभिमतवचनेन त्वां न आक्रोशयतु । अत एव "अमतीवा। अमतिरशोभना बुद्धिः । तद्वान् अपि च "दुर्हितः शत्रुर्हे अग्ने अस्माकं "न "स्यात् न भवतु । अत एव "पापया अशोभनया बुद्ध्या सः "न बाधताम् ।।

पि॒तुर्न पु॒त्रः सु॒भृ॑तो दुरो॒ण आ दे॒वाँ ए॑तु॒ प्र णो॑ ह॒विः ॥२७

पि॒तुः । न । पु॒त्रः । सुऽभृ॑तः । दु॒रो॒णे । आ । दे॒वान् । ए॒तु॒ । प्र । न॒: । ह॒विः ॥२७

पितुः । न । पुत्रः । सुऽभृतः । दुरोणे । आ । देवान् । एतु । प्र । नः । हविः ॥२७

"पितुर्न "पुत्रः पितुः पुत्र इवास्माकं "सुभृतः सुष्ठु भर्ता । यद्वा । पित्रा पुत्र इवास्माभिः सम्यग्भृतो हविर्भिः पोषितः । अयमग्निः पुत्र इवास्माकं सुभृतः "दुरोणे यज्ञगृहे "देवान् "आ अभिलक्ष्य "नः अस्माकं "हविः "प्र "एतु प्र गमयतु । यद्वा अग्निरैतु आगच्छतु । अस्मदीयं हविश्च देवान् प्राप्नोतु ॥

तवा॒हम॑ग्न ऊ॒तिभि॒र्नेदि॑ष्ठाभिः सचेय॒ जोष॒मा व॑सो ।

सदा॑ दे॒वस्य॒ मर्त्य॑: ॥२८

तवं । अ॒हम् । अ॒ग्ने॒ । ऊ॒तिऽभिः॑ । नेदि॑ष्ठाभिः । स॒चे॒य॒ । जोष॑म् । आ । व॒सो॒ इति॑ ।

सदा॑ । दे॒वस्य॑ । मर्त्यः॑ ॥२८

तव । अहम् । अग्ने । ऊतिऽभिः । नेदिष्ठाभिः । सचेय । जोषम् । आ । वसो इति ।

सदा । देवस्य । मर्त्यः ॥२८

हे "वसो वासक “अग्ने "नेदिष्ठाभिः अन्तिकतमाभिः ऋजुगामिनीभिर्वा “देवस्य “तव “ऊतिभिः रक्षाभिः “मर्त्यः मनुष्यः “अहं स्तोता “सदा सर्वदा “जोषम् “आ “सचेय प्रीतिमभिसेवेय ।।

तव॒ क्रत्वा॑ सनेयं॒ तव॑ रा॒तिभि॑रग्ने॒ तव॒ प्रश॑स्तिभिः ।

त्वामिदा॑हुः॒ प्रम॑तिं वसो॒ ममाग्ने॒ हर्ष॑स्व॒ दात॑वे ॥२९

तव॑ । क्रत्वा॑ । स॒ने॒य॒म् । तव॑ । रा॒तिऽभिः॑ । अग्ने॑ । तव॑ । प्रश॑स्तिऽभिः ।

त्वाम् । इत् । आ॒हुः॒ । प्रऽम॑तिम् । व॒सो॒ इति॑ । मम॑ । अ॒ग्ने॒ । हर्ष॑स्व । दात॑वे ॥२९

तव । क्रत्वा । सनेयम् । तव । रातिऽभिः । अग्ने । तव । प्रशस्तिऽभिः ।

त्वाम् । इत् । आहुः । प्रऽमतिम् । वसो इति । मम । अग्ने । हर्षस्व । दातवे ॥२९

हे “अग्ने “तव “क्रत्वा त्वदीयेन परिचरणरूपेण कर्मणा “सनेयं त्वां संभजेयम् । एतदेव विशदयति । “तव “रातिभिः त्वदीयैर्हविर्दानैश्च सनेयम् । तथा “तव “प्रशस्तिभिः प्रशंसनैः स्तोत्रैश्च त्वां संभजेयम् । अस्यैव संभजने किं कारणं तदाह । हे “वसो वासकाग्ने “मम स्तोतुः “प्रमतिं प्रकृष्टबुद्धिं रक्षकं “त्वामित् त्वामेव “आहुः ब्रह्मवादिनः कथयन्ति । अतो हे “अग्ने “दातवे दातुं “हर्षस्व हृष्टो भव । हर्षयुक्तः सन् बहु धनं प्रयच्छेत्यर्थः ।।

पूर्वोक्त एव प्रशास्तुः शस्त्रे ‘प्र सः' इति प्रगाथो वैकल्पिकोऽनुरूपः । सूत्र्यते हि-’ प्र सो अग्ने तवोतिभिरग्निं वो वृधन्तम्' (आश्व. श्रौ. ७. ८) इति ।

प्र सो अ॑ग्ने॒ तवो॒तिभिः॑ सु॒वीरा॑भिस्तिरते॒ वाज॑भर्मभिः ।

यस्य॒ त्वं स॒ख्यमा॒वरः॑ ॥३०

प्र । सः । अ॒ग्ने॒ । तव॑ । ऊ॒तिऽभिः॑ । सु॒ऽवीरा॑भिः । ति॒र॒ते॒ । वाज॑भर्मऽभिः ।

यस्य॑ । त्वम् । स॒ख्यम् । आ॒ऽवरः॑ ॥३०

प्र । सः । अग्ने । तव । ऊतिऽभिः । सुऽवीराभिः । तिरते । वाजभर्मऽभिः ।

यस्य । त्वम् । सख्यम् । आऽवरः ॥३०

हे "अग्ने "तवोतिभिः रक्षाभिः "सः यजमानः "प्र "तिरते प्रवर्धते । ऊतयो विशेष्यन्ते । "सुवीराभिः । शोभना वीराः पुत्रादयो यासु तास्तथोक्ताः। "वाजभर्मभिः । वाजानामन्नानां बलानां वा भर्म भरणं यासु तादृशीभिः । हे अग्ने "त्वं यस्य यजमानस्य "सख्यं सखित्वं मित्रत्वम् "आवरः अभिवृणोषि स तिरत इत्यन्वयः ॥ ॥ ३४ ॥

तव॑ द्र॒प्सो नील॑वान्वा॒श ऋ॒त्विय॒ इंधा॑नः सिष्ण॒वा दं॑दे ।

त्वं मं॑ही॒नामु॒षसा॑मसि प्रि॒यः क्ष॒पो वस्तुं॑षु राजसि ॥३१

तव॑ । द्र॒प्सः । नील॑ऽवान् । वा॒शः । ऋ॒त्वियः॑ । इन्धा॑नः । सि॒ष्णो॒ इति॑ । आ । द॒दे॒ ।

त्वम् । म॒ही॒नाम् । उ॒षसा॑म् । अ॒सि॒ । प्रि॒यः । क्ष॒पः । वस्तुं॑षु । रा॒ज॒सि॒ ॥३१

तव । द्रप्सः । नीलऽवान् । वाशः । ऋत्वियः । इन्धानः । सिष्णो इति । आ । ददे ।

त्वम् । महीनाम् । उषसाम् । असि । प्रियः । क्षपः । वस्तुषु । राजसि ॥३१

हे "सिष्णो । सिषिः सेचनार्थः । सोमेनासिच्यमानाग्ने "द्रप्सः द्रवणशीलः "नीलवान् शकटनीडेऽवस्थानात् तद्वान् "वाशः कान्तः शब्दायमानो वा "ऋत्वियः ऋतौ वसन्तादिकालविशेषे भवः "इन्धानः संदीपयन् एवंभूतः "तव सोमः "आ "ददे तुभ्यं होमायाध्वर्युणादीयते । अपि च "त्वं "महीनां महतीनाम् "उषसां "प्रियः मित्रभूतः "असि । उषसि ह्यग्नयो होमाय प्रज्वाल्यन्ते । तथा "क्षपः क्षपाया रात्रेः संबन्धिषु "वस्तुषु "राजसि प्रकाशसे । यद्वा । रात्रिसंबन्धीनि वस्तूनि पदार्थजातानि त्वं प्रकाशयसि ।।

तमाग॑न्म॒ सोभ॑रयः स॒हस्र॑मुष्कं स्वभि॒ष्टिमव॑से ।

स॒म्राजं॒ त्रास॑दस्यवं ॥३२

तम् । आ । अ॒ग॒न्म॒ । सोभ॑रयः । स॒हस्र॑ऽमुष्कम् । सु॒ऽअ॒भि॒ष्टिम् । अव॑से ।

स॒म्ऽराज॑म् । त्रास॑दस्यवम् ॥३२

तम् । आ । अगन्म । सोभरयः । सहस्रऽमुष्कम् । सुऽअभिष्टिम् । अवसे ।

सम्ऽराजम् । त्रासदस्यवम् ॥३२

"सोभरयः ऋषयो वयम् "अवसे रक्षणाय "तम् अग्निम् "आगन्म हविर्भिः स्तुतिभिश्च प्राप्ता अभूम । कीदृशम् । "सहस्रमुष्कम् । मुष्णन्ति तमांस्यपहरन्तीति मुष्काणि तेजांसि । बहुतेजस्कं "स्वभिष्टिं शोभनाभ्येषणं "सम्राजं सम्यग्राजमानं "त्रासदस्यवम् । त्रसदस्युर्नाम राजर्षिः । तस्य स्तोतव्यत्वेन संबन्धिनम् ।।

यस्यं ते अग्ने अ॒न्ये अ॒ग्नयं उप॒क्षितों व॒या इंव ।

विपो॒ न द्यु॒म्ना नि युं॒वे॒ जनां॒नां॒ तवं क्ष॒त्राणिं व॒र्धयंन् ॥३३

यस्यं । ते॒ । अ॒ग्ने॒ । अ॒न्ये । अ॒ग्नयः॑ । उ॒प॒ऽक्षितः॑ । व॒याःऽइंव ।

विपः॑ । न । द्यु॒म्ना । नि । यु॒वे॒ । जनां॑नाम् । तवं । क्ष॒त्राणिं । व॒र्धयंन् ॥३३

यस्य । ते । अग्ने । अन्ये । अग्नयः । उपऽक्षितः । वयाःऽइव ।

विपः । न । द्युम्ना । नि । युवे । जनानाम् । तव । क्षत्राणि । वर्धयन् ॥३३

हे “अग्ने “यस्य “ते तव “अन्ये "अग्नयः “वयाइव वृक्षस्य शाखा इव “उपक्षितः समीपे निवसन्तो भवन्ति “जनानां जनिमतां मनुष्याणां मध्येऽहं तस्य “तव “क्षत्राणि बलानि स्तुत्या “वर्धयन् “विपो “न । स्तोतृनामैतत् । अन्ये स्तोतार इव “द्युम्ना द्योतमानान्यन्नानि यशांसि वा “नि “युवे नितरां प्राप्नोमि । त्वत्प्रसादाल्लभेयेत्यर्थः ।।

यमां॑दित्यासो अद्रुहः पा॒रं नयं॑थ॒ मर्त्यं॑ ।

म॒घोनां॒ विश्वें॑षां सुदानवः ॥३४

यम् । आ॒दि॒त्या॒सः॒ । अ॒द्रु॒हः॒ । पा॒रम् । नयं॑थ । मर्त्यं॑म् ।

म॒घोनां॑म् । विश्वें॑षाम् । सु॒ऽदा॒न॒वः॒ ॥३४

यम् । आदित्यासः । अद्रुहः । पारम् । नयथ । मर्त्यम् ।

मघोनाम् । विश्वेषाम् । सुऽदानवः ॥३४

हे “अद्रुहः अद्रोग्धारः हे “सुदानवः हे "आदित्यासः अदितेः पुत्रा मित्रादयः “मघोनां हविष्मतां “विश्वेषां सर्वेषां मध्ये "यं “मर्त्यं मनुष्यं यजमानं “पारं “नयथ आरब्धस्य कर्मणः समाप्तिं प्रापयथ । स तत्फलं लभत इत्यर्थः ॥

यू॒यं रा॑जानः॒ कं चिं॑च्चर्षणीसहः॒ क्षयं॑तं॒ मानुं॑षाँ॒ अनुं॑ ।

व॒यं ते वो॒ वरुं॑ण॒ मित्रार्यं॑म॒न्त्स्यामेदृ॒तस्यं॑ र॒थ्यः॑ ॥३५

यू॒यम् । रा॒जा॒नः॒ । कम् । चि॒त् । च॒र्ष॒णि॒ऽस॒हः॒ । क्षयं॑न्तम् । मानुं॑षान् । अनुं॑ ।

व॒यम् । ते । वः॒ । वरुं॑ण । मित्रं॑ । अर्यं॑मन् । स्यामं॑ । इत् । ऋ॒तस्यं॑ । र॒थ्यः॑ ॥३५

यूयम् । राजानः । कम् । चित् । चर्षणिऽसहः । क्षयन्तम् । मानुषान् । अनु ।

वयम् । ते । वः । वरुण । मित्र । अर्यमन् । स्याम । इत् । ऋतस्य । रथ्यः ॥३५

हे “राजानः राजमाना हे “चर्षणीसहः शत्रुभूतानामभिभवितार आदित्याः "यूयं “मानुषाननु मनुष्यान् यजमानाननुलक्ष्य “क्षयन्तं क्षपयन्तं "कं “चित् कमपि शत्रुं सर्वमपि शत्रुवर्गमभिभवथेति शेषः । यद्वा । मनुष्येषु यजमानेषु क्षयन्तं स्तुतीनामीश्वरं कं चित् कमपि स्तोतारं मा यूयं गच्छत । हे “वरुण हे “मित्र हे "अर्यमन् “ते तादृशाः “वयं “वः युष्माकं संबन्धिनः “ऋतस्य यज्ञस्य “रथ्यः “स्याम नेतारो भवेम ॥

अदा॑न्मे पौरुकु॒त्स्यः पं॑चा॒शतं॑ त्र॒सद॑स्युर्व॒धूनां॑ ।

मंहि॑ष्ठो अ॒र्यः सत्प॑तिः ॥३६

अदा॑त् । मे॒ । पौ॒रु॒ऽकु॒त्स्यः । प॒ञ्चा॒शत॑म् । त्र॒सद॑स्युः । व॒धूना॑म् ।

मंहि॑ष्ठः । अ॒र्यः । सत्ऽप॑तिः ॥३६

अदात् । मे । पौरुऽकुत्स्यः । पञ्चाशतम् । त्रसदस्युः । वधूनाम् ।

मंहिष्ठः । अर्यः । सत्ऽपतिः ॥३६

इदमादिकेन प्रगाथेन त्रसदस्योर्दानमृषिः प्रशंसति । “पौरुकुत्स्यः पुरुकुत्सपुत्रः “त्रसदस्युः “मे मह्यं “वधूनां “पञ्चाशतम् “अदात् दत्तवान् । कीदृशः । “मंहिष्ठः दातृतमः “अर्यः अभिगन्तव्यः स्वामी वा “सत्पतिः सतां श्रेष्ठानां स्तोतॄणां पालयिता ।।

उ॒त मे॑ प्र॒यियो॑र्व॒यियोः॑ सु॒वास्त्वा॒ अधि॒ तुग्व॑नि ।

ति॒सॄ॒णां स॑प्तती॒नां श्या॒वः प्र॑णे॒ता भुं॑व॒द्वसु॒र्दिया॑नां॒ पतिः॑ ॥३७

उ॒त । मे॒ । प्र॒यियोः॑ । व॒यियोः॑ । सु॒ऽवास्त्वाः॑ । अधि॑ । तुग्व॑नि ।

ति॒सॄ॒णाम् । स॒प्त॒ती॒नाम् । श्या॒वः । प्र॒ऽने॒ता । भु॒व॒त् । वसुः॑ । दिया॑नाम् । पतिः॑ ॥३७

उत । मे । प्रयियोः । वयियोः । सुऽवास्त्वाः । अधि । तुग्वनि ।

तिसृॄणाम् । सप्ततीनाम् । श्यावः । प्रऽनेता । भुवत् । वसुः । दियानाम् । पतिः ॥३७

.............

---

**टिप्पणी**

८.१९.१ तं गूर्धया इति

सौभरम् (https://sa.wikisource.org/s/2hle)

सौभराणि त्रीणि (https://sa.wikisource.org/s/2hlf)    (ग्रामगेयः)

सौभरिरुपरि पौराणिकसंदर्भाः (https://puraana.tripod.com/pur_index30/pva4.htm)

सौभरेर्ऋषेः अस्य सूक्तस्य विनियोगः अतिविरलमस्ति। गूर्धया शब्दोपि वैदिकवाङ्मये अत्रैव उपलब्धमस्ति, नान्यत्रम्। स्वर्णरं शब्दः ऋग्वेदे अन्यत्रापि प्रकटयति ।

# ऋग्वेदः सूक्तं ८.२०

ऋग्वेदः - मण्डल ८
← सूक्तं ८.१९ सूक्तं ८.२० सूक्तं ८.२१ →
सोभरिः काण्वः।

दे. मरुतः । प्रगाथः ( ), १४ सतोविराट्

आ गन्ता मा रिषण्यत प्रस्थावानो माप स्थाता समन्यवः ।

स्थिरा चिन्नमयिष्णवः ॥१॥

वीळुपविभिर्मरुत ऋभुक्षण आ रुद्रासः सुदीतिभिः ।

इषा नो अद्या गता पुरुस्पृहो यज्ञमा सोभरीयवः ॥२॥

विद्मा हि रुद्रियाणां शुष्ममुग्रं मरुतां शिमीवताम् ।

विष्णोरेषस्य मीळ्हुषाम् ॥३॥

वि द्वीपानि पापतन्तिष्ठद्दुच्छुनोभे युजन्त रोदसी ।

प्र धन्वान्यैरत शुभ्रखादयो यदेजथ स्वभानवः ॥४॥

अच्युता चिद्वो अज्मन्ना नानदति पर्वतासो वनस्पतिः ।

भूमिर्यामेषु रेजते ॥५॥

अमाय वो मरुतो यातवे द्यौर्जिहीत उत्तरा बृहत् ।

यत्रा नरो देदिशते तनूष्वा त्वक्षांसि बाह्वोजसः ॥६॥

स्वधामनु श्रियं नरो महि त्वेषा अमवन्तो वृषप्सवः ।

वहन्ते अह्रुतप्सवः ॥७॥

गोभिर्वाणो अज्यते सोभरीणां रथे कोशे हिरण्यये ।

गोबन्धवः सुजातास इषे भुजे महान्तो न स्परसे नु ॥८॥

प्रति वो वृषदञ्जयो वृष्णे शर्धाय मारुताय भरध्वम् ।

हव्या वृषप्रयाव्णे ॥९॥

वृषणश्वेन मरुतो वृषप्सुना रथेन वृषनाभिना ।

आ श्येनासो न पक्षिणो वृथा नरो हव्या नो वीतये गत ॥१०॥

समानमञ्ज्येषां वि भ्राजन्ते रुक्मासो अधि बाहुषु ।

दविद्युतत्यृष्टयः ॥११॥

त उग्रासो वृषण उग्रबाहवो नकिष्टनूषु येतिरे ।

स्थिरा धन्वान्यायुधा रथेषु वोऽनीकेष्वधि श्रियः ॥१२॥

येषामर्णो न सप्रथो नाम त्वेषं शश्वतामेकमिद्भुजे ।

वयो न पित्र्यं सहः ॥१३॥

तान्वन्दस्व मरुतस्ताँ उप स्तुहि तेषां हि धुनीनाम् ।

अराणां न चरमस्तदेषां दाना मह्ना तदेषाम् ॥१४॥

सुभगः स व ऊतिष्वास पूर्वासु मरुतो व्युष्टिषु ।

यो वा नूनमुतासति ॥१५॥

यस्य वा यूयं प्रति वाजिनो नर आ हव्या वीतये गथ ।

अभि ष द्युम्नैरुत वाजसातिभिः सुम्ना वो धूतयो नशत् ॥१६॥

यथा रुद्रस्य सूनवो दिवो वशन्त्यसुरस्य वेधसः ।

युवानस्तथेदसत् ॥१७॥

ये चार्हन्ति मरुतः सुदानवः स्मन्मीळ्हुषश्चरन्ति ये ।

अतश्चिदा न उप वस्यसा हृदा युवान आ ववृध्वम् ॥१८॥

यून ऊ षु नविष्ठया वृष्णः पावकाँ अभि सोभरे गिरा ।

गाय गा इव चर्कृषत् ॥१९॥

साहा ये सन्ति मुष्टिहेव हव्यो विश्वासु पृत्सु होतृषु ।

वृष्णश्चन्द्रान्न सुश्रवस्तमान्गिरा वन्दस्व मरुतो अह ॥२०॥

गावश्चिद्घा समन्यवः सजात्येन मरुतः सबन्धवः ।

रिहते ककुभो मिथः ॥२१॥

मर्तश्चिद्वो नृतवो रुक्मवक्षस उप भ्रातृत्वमायति ।

अधि नो गात मरुतः सदा हि व आपित्वमस्ति निध्रुवि ॥२२॥

मरुतो मारुतस्य न आ भेषजस्य वहता सुदानवः ।

यूयं सखायः सप्तयः ॥२३॥

याभिः सिन्धुमवथ याभिस्तूर्वथ याभिर्दशस्यथा क्रिविम् ।

मयो नो भूतोतिभिर्मयोभुवः शिवाभिरसचद्विषः ॥२४॥

यत्सिन्धौ यदसिक्न्यां यत्समुद्रेषु मरुतः सुबर्हिषः ।

यत्पर्वतेषु भेषजम् ॥२५॥

विश्वं पश्यन्तो बिभृथा तनूष्वा तेना नो अधि वोचत ।

क्षमा रपो मरुत आतुरस्य न इष्कर्ता विह्रुतं पुनः ॥२६॥

**सायणभाष्यम्**

'आ गन्त' इति षड्विंशत्यृचमष्टमं सूक्तं काण्वस्य सोभरेरार्षं मारुतम् । प्रथमाद्ययुजः ककुभो द्वितीयादियुजः सतोबृहत्यः । अनुक्रम्यते हि - ' आ गन्त षड्विंशतिर्मारुम्' इति । गतो विनियोगः ॥

आ ग॑न्ता॒ मा रि॑षण्यत॒ प्रस्था॑वानो॒ माप॑ स्थाता समन्यवः ।

स्थि॒रा चि॑न्नमयिष्णवः ॥१

आ । ग॒न्त॒ । मा । रि॒ष॒ण्य॒त॒ । प्रऽस्था॑वानः । मा । अप॑ । स्था॒त॒ । स॒ऽम॒न्य॒वः॒ ।

स्थि॒रा । चि॒त् । न॒म॒यि॒ष्ण॒वः॒ ॥१

आ । गन्त । मा । रिषण्यत । प्रऽस्थावानः । मा । अप । स्थात । सऽमन्यवः ।

स्थिरा । चित् । नमयिष्णवः ॥१

हे “प्रस्थावानः प्रस्थातारः प्रगन्तारो मरुतः “आ “गन्त अस्मानागच्छत । “मा “रिषण्यत अनागमनेनास्मान् मा हिंस्त । हे “समन्यवः समानतेजस्काः समानक्रोधा वा “स्थिरा “चित् स्थिराणि दृढान्यपि पर्वतादीनि हे "नमयिष्णवः नमनशीलाः कम्पयितारः “माप “स्थात अस्मत्तोऽपेत्यान्यत्र मा तिष्ठत । अस्मास्वेव तिष्ठतेत्यर्थः ॥

वी॒ळु॒प॒विभि॑र्मरुत ऋभुक्षण॒ आ रु॑द्रासः सुदी॒तिभिः॑ ।

इ॒षा नो॑ अ॒द्या ग॑ता पुरुस्पृहो य॒ज्ञमा सो॑भरी॒यवः॑ ॥२

वी॒ळु॒प॒विऽभिः॑ । म॒रु॒तः॒ । ऋ॒भु॒क्ष॒णः॒ । आ । रु॒द्रा॒सः॒ । सु॒दी॒तिऽभिः॑ ।

इ॒षा । नः॒ । अ॒द्य । आ । ग॒त॒ । पु॒रु॒ऽस्पृ॒हः॒ । य॒ज्ञम् । आ । सो॒भ॒री॒ऽयवः॑ ॥२

वीळुपविऽभिः । मरुतः । ऋभुक्षणः । आ । रुद्रासः । सुदीतिऽभिः ।

इषा । नः । अद्य । आ । गत । पुरुऽस्पृहः । यज्ञम् । आ । सोभरीऽयवः ॥२

हे “ऋभुक्षणः महान्त उरुभासमाननिवासा वा हे “रुद्रासः रुद्रा रुद्रपुत्राः ईदृशा हे "मरुतः “सुदीतिभिः शोभनदीप्तिकैः “वीळुपविभिः । रथनेमयः पवयः । वीळु दृढाः पवयो येषु तादृशै रथैः “आ “गत आगच्छत । एतदेव विवृणोति । हे “पुरुस्पृहः बहुभिः स्पृहणीया ईप्सितव्याः "सोभरीयवः सोभरिमृषिं मां कामयमानाः “नः अस्माकं “यज्ञं प्रति “अद्य इदानीम् “इषा अन्नेन सहागच्छत । आ पूरणः ॥

वि॒द्मा हि रु॒द्रिया॑णा॒ं शुष्म॑मु॒ग्रं म॒रुता॒ं शिमी॑वताम् ।

विष्णो॑रे॒षस्य॑ मी॒ळ्हुषा॑म् ॥३

वि॒द्म । हि । रु॒द्रिया॑णाम् । शुष्म॑म् । उ॒ग्रम् । म॒रुता॑म् । शिमी॑ऽवताम् ।

विष्णोः॑ । ए॒षस्य॑ । मी॒ळ्हुषा॑म् ॥३

विद्म । हि । रुद्रियाणाम् । शुष्मम् । उग्रम् । मरुताम् । शिमीऽवताम् ।

विष्णोः । एषस्य । मीळ्हुषाम् ॥३

“रुद्रियाणां रुद्रपुत्राणां “शिमीवतां कर्मवतां “विष्णोः व्याप्तस्य “एषस्य एषणीयस्य वृष्ट्युदकस्य “मीळ्हुषां सेक्तॄणां “मरुताम् "उग्रम् उद्गूर्णं “शुष्मं बलं “विद्म "हि जानीमः खलु ॥

वि द्वी॒पानि॒ पाप॑त॒न्तिष्ठ॑द्दु॒च्छुनो॒भे यु॑जन्त॒ रोद॑सी ।

प्र धन्वा॑न्यैरत शुभ्रखादयो॒ यदेज॑थ स्वभानवः ॥४

वि । द्वी॒पानि॑ । पाप॑तन् । तिष्ठ॑त् । दु॒च्छुना॑ । उ॒भे इति॑ । यु॒ज॒न्त॒ । रोद॑सी॒ इति॑ ।

प्र । धन्वा॑नि । ऐ॒र॒त॒ । शु॒भ्र॒ऽखा॒द॒यः॒ । यत् । एज॑थ । स्व॒ऽभा॒न॒वः॒ ॥४

वि । द्वीपानि । पापतन् । तिष्ठत् । दुच्छुना । उभे इति । युजन्त । रोदसी इति ।

प्र । धन्वानि । ऐरत । शुभ्रऽखादयः । यत् । एजथ । स्वऽभानवः ॥४

"द्वीपानि द्वयोः पार्श्वयोरापो येषु तान्युदमध्यस्थलानि । “द्व्यन्तरुपसर्गेभ्योऽप ईत्' (पा. सू. ६. ३. ९७ ) इतीत्वम् । 'ऋक्पूः इत्यादिनाकारः समासान्तः । तानि च "वि "पापतन् अत्यर्थं मरुद्वेगेन विपतन्ति । “तिष्ठत् स्थावरं चान्यद्वृक्षजातं “दुच्छुना दुःखेन युज्यते । "उभे “रोदसी द्यावापृथिव्यावपि “युजन्त । ते मरुतः स्वागमनजनितेन कम्पनेन योजयन्ति । परोऽर्धर्चः परोक्षकृतः । “धन्वानि गमनशीलान्युदकानि च “प्र “ऐरत प्रगच्छन्ति । हे “शुभ्रखादयः शोभनायुधाः शोभनहविष्का वा हे "स्वभानवः स्वायत्तदीप्तयः यूयं “यत् यदा “एजथ कम्पयथ । तदैतत्पूर्वोक्तं सर्वं निष्पद्यत इत्यर्थः ॥

अच्यु॑ता चिद्वो॒ अज्म॒न्ना नान॑दति॒ पर्व॑तासो॒ वन॒स्पति॑ः ।

भूमि॒र्यामे॑षु रेजते ॥५

अच्यु॑ता । चि॒त् । वः॒ । अज्म॑न् । आ । नान॑दति । पर्व॑तासः । वन॒स्पति॑ः ।

भूमि॑ः । यामे॑षु । रे॒ज॒ते॒ ॥५

अच्युता । चित् । वः । अज्मन् । आ । नानदति । पर्वतासः । वनस्पतिः ।

भूमिः । यामेषु । रेजते ॥५

हे मरुतः “वः युष्माकम् “अज्मन् अज्मनि गमने सति “अच्युता “चित् च्यावयितुमशक्या अपि “पर्वतासः पर्वता मेघा गिरयो वा “वनस्पतिः । जातावेकवचनम् । वनस्पतयो वृक्षाश्च “आ “नानदति अभितो भृशं शब्दायन्ते । अपि च “यामेषु युष्मदीयेषु गमनेषु निमित्तेषु “भूमिः पृथिवी च “रेजते कम्पते ॥ ॥ ३६ ॥

अमा॑य वो मरुतो॒ यात॑वे॒ द्यौर्जिही॑त॒ उत्त॑रा बृ॒हत् ।

यत्रा॒ नरो॒ देदि॑शते त॒नूष्वा त्वक्षाँ॑सि बा॒ह्वो॑जसः ॥६

अमा॑य । व॒ः । म॒रु॒त॒ः । यात॑वे । द्यौः । जिही॑ते । उत्ऽत॑रा । बृ॒हत् ।

यत्र॑ । नरः॑ । देदि॑शते । त॒नूषु॑ । आ । त्वक्षाँ॑सि । ब॒हुऽओ॑जसः ॥६

अमाय । वः । मरुतः । यातवे । द्यौः । जिहीते । उत्ऽतरा । बृहत् ।

यत्र । नरः । देदिशते । तनूषु । आ । त्वक्षांसि । बहुऽओजसः ॥६

हे “मरुतः “वः युष्माकम् "अमाय बलाय "यातवे यातुं “द्यौः द्युलोकः “बृहत् अन्तरिक्षं विसृज्य “उत्तरा उद्गततरा “जिहीते गच्छति । युष्मदागमनाद्भीता सती युष्मदीयमान्तरिक्षं स्थानं परित्यज्योर्ध्वं पलायत इत्यर्थः । “यत्र यस्मिन्नन्तरिक्षे “बाह्वोजसः बाह्वोरोजो बलं येषां तादृशाः “नरः नेतारो मरुतः “त्वक्षांसि दीप्तान्याभरणानि “तनूषु आत्मीयेषु शरीरेषु “आ “देदिशते आदिष्टानि धृतानि कुर्वन्ति । यद्वा । तनूषु विस्तृतासु मेघस्थास्वप्सु त्वक्षांसि तनूकृतानि तीक्ष्णीकृतान्यायुधानि मेघोद्भेदनाय आ देदिशते पुनःपुनरादिशन्ति । तद्बृहदन्तरिक्षं जिहीत इत्यन्वयः ।।

स्व॒धामनु॒ श्रियं॒ नरो॒ महिं॑ त्वे॒षा अम॑वन्तो॒ वृष॑प्सवः ।

वह॑न्ते॒ अह्रु॑तप्सवः ॥७

स्व॒धाम् । अनु॑ । श्रिय॑म् । नरः॑ । महि॑ । त्वे॒षाः । अम॑ऽवन्तः । वृष॑ऽप्सवः ।

वह॑न्ते । अह्रु॑तऽप्सवः ॥७

स्वधाम् । अनु । श्रियम् । नरः । महि । त्वेषाः । अमऽवन्तः । वृषऽप्सवः ।

वहन्ते । अह्रुतऽप्सवः ॥७

“नरः नेतारो मरुतः “स्वधामनु । स्वधेत्यन्ननाम । हविर्लक्षणमन्नमनुलक्ष्य “श्रियं शोभां “महि महत्प्रौढं “वहन्ते धारयन्ति । कीदृशाः । “त्वेषाः दीप्ताः “अमवन्तः बलवन्तः “वृषप्सवः वर्षणरूपाः "अह्रुतप्सवः अकुटिलरूपाश्च ॥

गोभि॑र्वा॒णो अ॑ज्यते॒ सोभ॑रीणां॒ रथे॒ कोशे॑ हिर॒ण्यये॑ ।

गोब॑न्धवः सुजा॒तास॑ इ॒षे भुजे म॒हान्तो॑ न॒ः स्पर॑से॒ नु ॥८

गोभिः॑ । वा॒णः । अ॒ज्य॒ते॒ । सोभ॑रीणाम् । रथे॑ । कोशे॑ । हि॒र॒ण्यये॑ ।

गोऽब॑न्धवः । सु॒ऽजा॒तासः॑ । इ॒षे । भु॒जे । म॒हान्तः॑ । न॒ः । स्पर॑से । नु ॥८

गोभिः । वाणः । अज्यते । सोभरीणाम् । रथे । कोशे । हिरण्यये ।

गोऽबन्धवः । सुऽजातासः । इषे । भुजे । महान्तः । नः । स्परसे । नु ॥८

“सोभरीणाम् ऋषीणां “गोभिः शब्दैः स्तुतिलक्षणैः “वाणः मरुद्वीणा “अज्यते व्यज्यते प्रकटीक्रियते। कुत्र। “हिरण्यये “रथे “कोशे कोशवद्वेष्टिते मध्यदेशे। यद्वा । गोभिर्गन्तृभिर्गोमातृकैर्वा मरुद्भिर्वाणोऽज्यते व्यज्यते । सोभरीणां ज्ञानायेदृशे रथे वाद्यत इत्यर्थः । अपि च "गोबन्धवः गोमातृकाः “सुजातासः शोभनजन्मानः “महान्तः महानुभावास्ते मरुतः “नः अस्माकम् “इषे अन्नाय “भुजे भोगाय “स्परसे प्रीत्यै च बलनाय वा “नु क्षिप्रं भवन्विति शेषः ॥

प्रतिं वो वृषदञ्जयो॒ वृष्णे॒ शर्धा॑य॒ मारु॑ताय भरध्वम् ।

ह॒व्या वृष॑प्रयाव्णे ॥९

प्रति॑ । व॒ः । वृ॒ष॒त्ऽअ॒ञ्ज॒य॒ः । वृष्णे॑ । शर्धा॑य । मारु॑ताय । भ॒र॒ध्व॒म् ।

ह॒व्या । वृष॑ऽप्रयाव्ने ॥९

प्रति । वः । वृषत्ऽअञ्जयः । वृष्णे । शर्धाय । मारुताय । भरध्वम् ।

हव्या । वृषऽप्रयाव्ने ॥९

हे वृषदञ्जयः वृषता वर्षकेण सोमेनाञ्जन्तः सिञ्चन्तोऽध्वर्यवः “वः यूयं “वृष्णे वर्षित्रे “मारुताय मरुत्संघरूपाय “शर्धाय बलाय हव्यानि हवींषि “प्रति “भरध्वम् । आहवनीयं प्रति हरत । शर्धं विशेष्यते । “वृषप्रयाव्णे । वृषाणः सेक्तारः प्रयावानः प्रकृष्टं गन्तारो मरुतो यस्मिन् तत्तथोक्तम् । तस्मै ॥

वृ॒ष॒ण॒श्वेन॑ मरुतो॒ वृष॑प्सुना॒ रथे॑न॒ वृष॑नाभिना ।

आ श्ये॒नासो॒ न प॒क्षिणो॒ वृथा॑ नरो ह॒व्या नो॑ वी॒तये॑ गत ॥१०

वृ॒ष॒ण॒श्वेन॑ । म॒रु॒त॒ः । वृष॑ऽप्सुना । रथे॑न । वृष॑ऽनाभिना ।

आ । श्ये॒नास॑ः । न । प॒क्षिण॑ः । वृथा॑ । न॒र॒ः । ह॒व्या । न॒ः । वी॒तये॑ । ग॒त॒ ॥१०

वृषणश्वेन । मरुतः । वृषऽप्सुना । रथेन । वृषऽनाभिना ।

आ । श्येनासः । न । पक्षिणः । वृथा । नरः । हव्या । नः । वीतये । गत ॥१०

हे “नरः नेतारः “मरुतः “वृषणश्वेन वृषभिः सेचनसमर्थैरश्वैरुपेतेन “वृषप्सुना वर्षकरूपयुक्तेन “वृषनाभिना । नाभिश्चक्रच्छिद्रम् । वर्षकनाभियुक्तेन “रथेन “नः अस्माकं हव्यानि हवींषि "आ “गत आगच्छत । “वृथा अनायासेनैव “वीतये भक्षणार्थम् । तत्र दृष्टान्तः । “श्येनासो “न “पक्षिणः श्येनाः शंसनीयगतयः पक्षिणो यथा शीघ्रमागच्छन्ति तद्वदनायासेन शीघ्रमागच्छतेत्यर्थः ॥ ॥३७॥

स॒मा॒नम॒ञ्ज्ये॑षां॒ वि भ्रा॑जन्ते रु॒क्मासो॒ अधि॑ बा॒हुषु॑ ।

दवि॑द्युतत्यृ॒ष्टय॑ः ॥११

स॒मा॒नम् । अ॒ञ्जि । ए॒षा॒म् । वि । भ्रा॒ज॒न्ते॒ । रु॒क्मास॑ः । अधि॑ । बा॒हुषु॑ ।

दवि॑द्युतति । ऋ॒ष्टय॑ः ॥११

समानम् । अञ्जि । एषाम् । वि । भ्राजन्ते । रुक्मासः । अधि । बाहुषु ।

दविद्युतति । ऋष्टयः ॥११

“एषां मरुताम् “अञ्जि रूपाभिव्यञ्जकमाभरणं “समानम् एकविधमेव । एतदेवाह । “रुक्मासः रुक्मा दीप्यमानाः सुवर्णमया हाराः “वि “भ्राजन्ते । वक्षःस्थलेषु विशेषेण दीप्यन्ते । तथा “बाहुषु “अधि अंसेषु “ऋष्टयः शक्त्यादीन्यायुधानि "दविद्युतति अत्यर्थं द्योतन्ते ॥

त उ॒ग्रासो॒ वृष॑ण उ॒ग्रबा॑हवो॒ नकि॑ष्ट॒नूषु॑ येतिरे ।

स्थि॒रा धन्वा॒न्यायु॑धा॒ रथे॑षु॒ वोऽनी॑के॒ष्वधि॒ श्रिय॑ः ॥१२

ते । उ॒ग्रास॑ः । वृष॑णः । उ॒ग्रऽबा॑हवः । नकि॑ः । त॒नूषु॑ । ये॒ति॒रे॒ ।

स्थि॒रा । धन्वा॑नि । आयु॑धा । रथे॑षु । व॒ः । अनी॑केषु । अधि॑ । श्रिय॑ः ॥१२

ते । उग्रासः । वृषणः । उग्रऽबाहवः । नकिः । तनूषु । येतिरे ।

स्थिरा । धन्वानि । आयुधा । रथेषु । वः । अनीकेषु । अधि । श्रियः ॥१२

“उग्रासः उद्गूर्णाः सर्वकार्येषूद्यताः “वृषणः वर्षितारः “उग्रबाहवः उद्गूर्णबाहुकाः “ते मरुतः “तनूषु आत्मीयेषु शरीरेषु “नकिः “येतिरे रक्षणाय न प्रयतन्ते । न हि कश्चित्तेषां शरीराणि बाधितुं शक्नोति येन यत्नः क्रियेत । परोऽर्धर्चः प्रत्यक्षकृतः । हे मरुतः “वः युष्माकं “रथेषु “धन्वानि धनूंष्यायुधानि आयोधनानि बाणादीनि च “स्थिरा स्थिराणि दृढतराणि सन्ति । अत एव कारणात् “अनीकेष्वधि सेनामुखेषु “श्रियः जयसंपदः युष्माकं भवन्ति ।।

येषा॒मर्णो॒ न स॒प्रथो॒ नाम॑ त्वे॒षं शश्व॑ता॒मेक॒मिद्भु॒जे ।

वयो॒ न पित्र्यं॒ सह॑ः ॥१३

येषा॑म् । अर्ण॑ः । न । स॒ऽप्रथ॑ः । नाम॑ । त्वे॒षम् । शश्व॑ताम् । एक॑म् । इत् । भु॒जे ।

वयः॑ । न । पित्र्य॑म् । सहः॑ ॥१३

येषाम् । अर्णः । न । सऽप्रथः । नाम । त्वेषम् । शश्वताम् । एकम् । इत् । भुजे ।

वयः । न । पित्र्यम् । सहः ॥१३

“अर्णो “न उदकमिव “सप्रथः सर्वतः पृथु विस्तीर्णं “त्वेषं दीप्तं “शश्वतां बहूनां “येषां मरुतामीदृशं “नाम मरुत इति नामधेयम् “एकमित् एकमेवासहायमेव सत् "भुजे स्तोतॄणां भोगाय भवति । तत्र दृष्टान्तः । “सहः प्रसहनशीलं "पित्र्यं पितुरागतं “वयो “न अन्नमिव । यथा तद्विस्रम्भेण भोगाय भवति तथेत्यर्थः । तानित्युत्तरत्रैकवाक्यता ॥

तान्व॑न्दस्व म॒रुत॒स्ताँ उप॑ स्तुहि॒ तेषा॒ं हि धुनी॑नाम् ।

अ॒राणा॒ं न च॑र॒मस्तदे॑षां दा॒ना म॒ह्ना तदे॑षाम् ॥१४

तान् । व॒न्द॒स्व॒ । म॒रुतः॑ । तान् । उप॑ । स्तु॒हि॒ । तेषा॑म् । हि । धुनी॑नाम् ।

अ॒राणा॑म् । न । च॒र॒मः । तत् । ए॒षा॒म् । दा॒ना । म॒ह्ना । तत् । ए॒षा॒म् ॥१४

तान् । वन्दस्व । मरुतः । तान् । उप । स्तुहि । तेषाम् । हि । धुनीनाम् ।

अराणाम् । न । चरमः । तत् । एषाम् । दाना । मह्ना । तत् । एषाम् ॥१४

हे अन्तरात्मन् “तान् पूर्वोक्तगुणान् “मरुतः “वन्दस्व प्रणम । “तान् एवोपेत्य “स्तुहि । “हि यस्मात् “धुनीनां कम्पयितॄणां “तेषां मरुतां वयं शेषभूताः स्मः । “अराणाम् अर्याणां स्वामिनां यथा “चरमः हीनः सेवकः शेषभूतस्तद्वत् । “तत् तस्मात् “एषां मरुतां “दाना दानानि “मह्ना महत्त्वेन युक्तान्यस्माकं भवन्ति । “तदेषाम् इति द्विरुक्तिरादरार्था पदपूरणार्था वा ॥

सु॒भग॒ः स व॑ ऊ॒तिष्वास॒ पूर्वा॑सु मरुतो॒ व्यु॑ष्टिषु ।

यो वा॑ नू॒नमु॒तास॑ति ॥१५

सु॒ऽभगः॑ । सः । व॒ः । ऊ॒तिषु॑ । आस॑ । पूर्वा॑सु । म॒रु॒तः॒ । विऽउ॑ष्टिषु ।

यः । वा॒ । नू॒नम् । उ॒त । अस॑ति ॥१५

सुऽभगः । सः । वः । ऊतिषु । आस । पूर्वासु । मरुतः । विऽउष्टिषु ।

यः । वा । नूनम् । उत । असति ॥१५

हे “मरुतः “वः युष्माकम् “ऊतिषु रक्षासु सतीषु “सः स्तोता “सुभगः “आस शोभनधनो भवति । अस्तेश्छान्दसो भूभावाभावः । यद्वा । सुभग आस दीप्यते । “अस गतिदीप्त्यादानेषु' । कदेति चेत् उच्यते । “पूर्वासु “व्युष्टिषु पूर्वेष्वतीतेषु विवासितेषु दिवसेषु ।

यद्वा । पूर्वास्वागामिनीषु व्युष्टिषूषःसु । उषःकालोपलक्षितेषु दिवसेषु । "उत अपि च “यः मनुष्यः स्तोता यष्टा वा “नूनम् अवश्यम् “असति युष्माकं भवति । अस्तेः छान्दसः शपो लुगभावः । स सुभग इत्यन्वयः ॥ ॥३८॥

यस्यं वा यूयं प्रतिं वाजिनों नर आ हव्या वीतयें गथ ।

अभि ष द्युम्नैरुत वाजंसातिभिः सुम्ना वों धूतयो नशत् ॥१६

यस्यं । वा । यूयम् । प्रतिं । वाजिनः । नरः । आ । हव्या । वीतयें । गथ ।

अभि । सः । द्युम्नैः । उत । वाजंसातिऽभिः । सुम्ना । वः । धूतयः । नशत् ॥१६

यस्य । वा । यूयम् । प्रति । वाजिनः । नरः । आ । हव्या । वीतये । गथ ।

अभि । सः । द्युम्नैः । उत । वाजसातिऽभिः । सुम्ना । वः । धूतयः । नशत् ॥१६

हे “नरः नेतारो मरुतः “यूयं “यस्य “वा यस्य च “वाजिनः हविष्मतो यजमानस्य “हव्या हव्यानि हवींषि “प्रति “वीतये भक्षणाय “आ “गथ आगच्छथ “सः यजमानः हे “धूतयः कम्पयितारो मरुतः “द्युम्नैः द्योतमानैरन्नैर्यशोभिर्वा “उत अपि च “वाजसातिभिः वाजानां संभजनैश्च “वः युष्माकं संबन्धीनि “सुम्ना सुम्नानि सुखानि "अभि "नशत् अभितो व्याप्नोति ॥

यथां रुद्रस्यं सूनवों दिवो वशन्त्यसुंरस्य वेधसंः ।

युवांनस्तथेदंसत् ॥१७

यथां । रुद्रस्यं । सूनवः । दिवः । वशंन्ति । असुंरस्य । वेधसः ।

युवांनः । तथां । इत् । असत् ॥१७

यथा । रुद्रस्य । सूनवः । दिवः । वशन्ति । असुरस्य । वेधसः ।

युवानः । तथा । इत् । असत् ॥१७

"रुद्रस्य दुःखद्रावयितुरीश्वरस्य “सूनवः पुत्राः "असुरस्य उदकानां क्षेप्तुर्मेघस्य “वेधसः विधातारः । यद्वा । असवः प्राणाः । तान् राति ददातीत्यसुरं वृष्टिजलम् । तस्य कर्तारः । “युवानः नित्यतरुणा ईदृशा मरुतः “दिवः अन्तरिक्षादागत्य “यथा येन प्रकारेण “वशन्ति अस्मान् कामयन्ते “तथेत् तेनैव प्रकारेण “असत् इदं स्तोत्रं भवतु । वष्टेः छान्दसः शपो लुगभावः ॥

ये चार्हन्ति मरुतंः सुदानंवः स्मन्मीळ्हुषश्चरंन्ति ये ।

अतंश्चिदा न उप वस्यंसा हृदा युवांन आ वंवृध्वम् ॥१८

ये । च॒ । अर्ह॑न्ति । म॒रुतः॑ । सु॒ऽदान॑वः । स्मत् । मी॒ळ्हुषः॑ । चर॑न्ति । ये ।

अतः॑ । चि॒त् । आ । नः॒ । उप॑ । वस्य॑सा । हृ॒दा । युवा॑नः । आ । व॒वृ॒ध्व॒म् ॥१८

ये । च । अर्हन्ति । मरुतः । सुऽदानवः । स्मत् । मीळ्हुषः । चरन्ति । ये ।

अतः । चित् । आ । नः । उप । वस्यसा । हृदा । युवानः । आ । ववृध्वम् ॥१८

"सुदानवः शोभनदानाः "ये "च यजमानाः "मरुतः देवान् "अर्हन्ति पूजयन्ति । "ये च "मीळ्हुषः सेक्तॄन् मरुतः "स्मत् प्रशस्तं "चरन्ति हविर्भिः प्रचरन्ति यजन्ति । यत एवम् "अतः अपि कारणात् तानुभयविधान् "नः अस्मान् "आ अभिलक्ष्य "वस्यसा वसीयसा वसुमत्तमेन "हृदा हृदयेन हे "युवानः मरुतः "उप "आ "ववृध्वम् उपेत्याभिसंभजत ॥

यूनं॑ ऊ॒ षु नवि॑ष्ठया॒ वृष्ण॑ः पाव॒काँ अ॒भि सो॑भरे गि॒रा ।

गाय॒ गा इ॑व॒ चर्कृ॑षत् ॥१९

यूनः॑ । ऊं॒ इति॑ । सु । नवि॑ष्ठया । वृष्णः॑ । पा॒व॒कान् । अ॒भि । सो॒भ॒रे॒ । गि॒रा ।

गाय॑ । गाःऽइ॑व । चर्कृ॑षत् ॥१९

यूनः । ऊं इति । सु । नविष्ठया । वृष्णः । पावकान् । अभि । सोभरे । गिरा ।

गाय । गाःऽइव । चर्कृषत् ॥१९

हे "सोभरे "यूनः नित्यतरुणान् "वृष्णः वर्षितॄन् "पावकान् तान् मरुतः "नविष्ठया अतिशयेनाभिनवया "गिरा वाचा स्तुतिरूपया "सु शोभनम् "अभि "गाय अभिष्टुहि । "चर्कृषत् पुनःपुनः कृषन् कृषीवलः "गाइव । स यथा यूनः शक्ताननडुहः स्तौति तद्वत् ॥

सा॒हा ये सन्ति॑ मुष्टि॒हेव॒ हव्यो॒ विश्वा॑सु पृ॒त्सु होतृ॑षु ।

वृष्ण॑श्च॒न्द्रान्न सु॒श्रव॑स्तमान्गि॒रा वन्द॑स्व म॒रुतो॒ अह॑ ॥२०

स॒हाः । ये । सन्ति॑ । मु॒ष्टि॒हाऽइ॑व । हव्यः॑ । विश्वा॑सु । पृ॒त्ऽसु । होतृ॑षु ।

वृष्णः॑ । च॒न्द्रान् । न । सु॒श्रवः॑ऽतमान् । गि॒रा । वन्द॑स्व । म॒रुतः॑ । अह॑ ॥२०

सहाः । ये । सन्ति । मुष्टिहाऽइव । हव्यः । विश्वासु । पृत्ऽसु । होतृषु ।

वृष्णः । चन्द्रान् । न । सुश्रवःऽतमान् । गिरा । वन्दस्व । मरुतः । अह ॥२०

"विश्वासु सर्वासु "पृत्सु पृतनासु युद्धेषु "होतृषु आह्वानशीलेषु "योद्धृषु च "ये मरुतः "सहाः "सन्ति अभिभवितारो भवन्ति "हव्यः ह्वातव्यः "मुष्टिहेव । मुष्टिभिरेव हन्तीति मुष्टिहा मल्लः । स इव । नेति संप्रत्यर्थे । "न संप्रति "वृष्णः वर्षितॄन् "चन्द्रान् आह्लादकान्

“सुश्रवस्तमान् अतिशयेन शोभनयशस्कांस्तान् "मरुतः “अह मरुत एव “गिरा वाचा "वन्दस्व स्तुहि ॥ ॥ ३९ ॥

गावश्चिद्घा समन्यवः सजात्येन मरुतः सबन्धवः ।

रिहते ककुभो मिथः ॥२१

गावः । चित् । घ । सऽमन्यवः । सऽजात्येन । मरुतः । सऽबन्धवः ।

रिहते । ककुभः । मिथः ॥२१

गावः । चित् । घ । सऽमन्यवः । सऽजात्येन । मरुतः । सऽबन्धवः ।

रिहते । ककुभः । मिथः ॥२१

हे “समन्यवः समानतेजस्काः समानक्रोधा वा हे "मरुतः "गावश्चित् गावश्च युष्मन्मातृभूताः “सजात्येन समानजातित्वेन “सबन्धवः समानबन्धुकाः सत्यः “ककुभः दिशः प्राच्यादिदिग्भागान् प्राप्य “मिथः परस्परं “रिहते लिहन्ति । “घ इति पूरकः ॥

मर्तश्चिद्वो नृतवो रुक्मवक्षस उप भ्रातृत्वमायति ।

अधि नो गात मरुतः सदा हि व आपित्वमस्ति निध्रुवि ॥२२

मर्तः । चित् । वः । नृतवः । रुक्मऽवक्षसः । उप । भ्रातृऽत्वम् । आ । अयति ।

अधि । नः । गात । मरुतः । सदा । हि । वः । आपिऽत्वम् । अस्ति । निऽध्रुवि ॥२२

मर्तः । चित् । वः । नृतवः । रुक्मऽवक्षसः । उप । भ्रातृऽत्वम् । आ । अयति ।

अधि । नः । गात । मरुतः । सदा । हि । वः । आपिऽत्वम् । अस्ति । निऽध्रुवि ॥२२

हे “नृतवः नृत्यन्तो हे “रुक्मवक्षसः । रोचमानमाभरणं रुक्मं वक्षसि येषां ते तथोक्ताः । ईदृशा हे “मरुतः “मर्तश्चित् मनुष्योऽपि स्तोता “वः युष्माकं “भ्रातृत्वं सखित्वम् “आ आभिमुख्येन “उप “अयति उपगच्छति । अतः “नः अस्मान् मनुष्यान् स्तोतॄन् “अधि “गात अधिब्रूत अस्मत्पक्षपातवचना भवत । “हि यस्मात् “वः युष्माकम् “आपित्वं बन्धुत्वं “निध्रुवि नितरां धारयितव्ये स्तोत्रे यज्ञे वा “सदा सर्वदा “अस्ति विद्यते तस्मादित्यर्थः ॥

मरुतो मारुतस्य न आ भेषजस्य वहता सुदानवः ।

यूयं संखायः सप्तयः ॥२३

मरुतः । मारुतस्य । नः । आ । भेषजस्य । वहत । सुऽदानवः ।

यू॒यम् । स॒खा॒यः॒ । स॒प्त॒यः॒ ॥२३

मरुतः । मारुतस्य । नः । आ । भेषजस्य । वहत । सुऽदानवः ।

यूयम् । सखायः । सप्तयः ॥२३

हे “सुदानवः शोभनदाना हे “सखायः समानख्याना हे "सप्तयः सर्पणशीलाः “मरुतः “नः अस्माकं “मारुतस्य “भेषजस्य मरुत्संबन्धि भेषजमौषधं “यूयम् "आ “वहत आनयत ॥

याभि॒ः सिन्धु॒मव॑थ॒ याभि॒स्तूर्व॑थ॒ याभि॑र्दश॒स्यथा॒ क्रिवि॑म् ।

मयो॑ नो भूतो॒तिभि॑र्मयोभुवः शि॒वाभि॑रसचद्विषः ॥२४

याभिः॑ । सिन्धु॑म् । अव॑थ । याभिः॑ । तूर्व॑थ । याभिः॑ । द॒श॒स्यथ॑ । क्रिवि॑म् ।

मयः॑ । न॒ः । भू॒त॒ । ऊ॒तिऽभिः॑ । म॒य॒ःऽभु॒व॒ः । शि॒वाभिः॑ । अ॒स॒च॒ऽद्वि॒ष॒ः ॥२४

याभिः । सिन्धुम् । अवथ । याभिः । तूर्वथ । याभिः । दशस्यथ । क्रिविम् ।

मयः । नः । भूत । ऊतिऽभिः । मयःऽभुवः । शिवाभिः । असचऽद्विषः ॥२४

हे मरुतः “याभिः ऊतिभिः “सिन्धुं समुद्रम् “अवथ रक्षथ । “याभिः च “तूर्वथ स्तोतृणां शत्रून् हिंस्थ । तुर्वी हिँसार्थः । “याभिः च “क्रिविं कूपं तृष्णजे गोतमाय “दशस्यथ प्रयच्छथ । हे “मयोभुवः मयसः सुखस्य भावयितारो हे “असचद्विषः असक्तशत्रवः शत्रुरहिताः “शिवाभिः कल्याणीभिस्ताभिः सर्वाभिः “ऊतिभिः रक्षाभिः “नः अस्माकं “मयः सुखं "भूत भावयत उत्पादयत। यद्वा । ‘भू प्राप्तौ ' । प्रापयत ।।

यत्सिन्धौ॒ यदसि॑क्न्या॒ं यत्स॑मु॒द्रेषु॑ मरुतः सुबर्हिषः ।

यत्पर्व॑तेषु भेष॒जम् ॥२५

यत् । सिन्धौ॑ । यत् । असि॑क्न्याम् । यत् । स॒मु॒द्रेषु॑ । म॒रु॒त॒ः । सु॒ऽब॒र्हि॒ष॒ः ।

यत् । पर्व॑तेषु । भे॒ष॒जम् ॥२५

यत् । सिन्धौ । यत् । असिक्न्याम् । यत् । समुद्रेषु । मरुतः । सुऽबर्हिषः ।

यत् । पर्वतेषु । भेषजम् ॥२५

हे "सुबर्हिषः शोभनयज्ञाः "मरुतः “सिन्धौ एतत्संज्ञे स्यन्दनशीले नदे “यत् “भेषजम् अस्ति “यत् च “असिक्न्यां “यत् च "समुद्रेषु जलधिषु “यत् च “पर्वतेषु भेषजं विद्यते तत्सर्वं भेषजं पश्यन्त इत्युत्तरयैकवाक्यता ॥

विश्वं पश्यन्तो बिभृथा तनूष्वा तेना नो अधि वोचत ।

क्षमा रपो मरुत आतुरस्य न इष्कर्ता विह्रुतं पुनः ॥२६

विश्वम् । पश्यन्तः । बिभृथ । तनूषु । आ । तेन । नः । अधि । वोचत ।

क्षमा । रपः । मरुतः । आतुरस्य । नः । इष्कर्त । विऽह्रुतम् । पुनरिति ॥२६

विश्वम् । पश्यन्तः । बिभृथ । तनूषु । आ । तेन । नः । अधि । वोचत ।

क्षमा । रपः । मरुतः । आतुरस्य । नः । इष्कर्त । विऽह्रुतम् । पुनरिति ॥२६

“विश्वं सर्वं पूर्वोक्तं भेषजं “पश्यन्तः जानन्तो यूयं “तनूषु अस्मदीयेषु विषयेषु “आ “बिभृथ आहरथ । आहृतेन च “तेन “नः अस्मान् “अधि “वोचत अधिब्रूत । चिकित्सतेत्यर्थः । अपि च हे “मरुतः “नः अस्माकं मध्ये "आतुरस्य रोगिणः “रपः । पापनामैतत् । रपसः पापफलस्य रोगस्य “क्षमा क्षान्तिर्यथा भवति तथा “विह्रुतं विबाधितमङ्गं “पुनः “इष्कर्त निःशेषेण संपूर्णं कुरुत । निसो नलोपश्छान्दसः । करोतेर्लोटि छान्दसो विकरणस्य लुक् । “तप्तनप्तनथनाश्च' इति तशब्दस्य तबादेशः । अत एवोपसर्गसमुदायो नावगृह्यते ॥ ॥ ४० ॥ ॥ ३ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश ऋक्संहिताभाष्ये षष्ठाष्टके प्रथमोऽध्यायः समाप्तः ॥

# ऋग्वेदः सूक्तं ८.२१


ऋग्वेदः - मण्डल ८

← सूक्तं ८.२० सूक्तं ८.२१ सूक्तं ८.२२ →

सोभरिः काण्वः।


दे. इन्द्रः, १७-१८ चित्रः । प्रगाथः ( )।

वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः ।

वाजे चित्रं हवामहे ॥१॥

उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत् ।

त्वामिद्ध्यवितारं ववृमहे सखाय इन्द्र सानसिम् ॥२॥

आ याहीम इन्दवोऽश्वपते गोपत उर्वरापते ।

सोमं सोमपते पिब ॥३॥

वयं हि त्वा बन्धुमन्तमबन्धवो विप्रास इन्द्र येमिम ।

या ते धामानि वृषभ तेभिरा गहि विश्वेभिः सोमपीतये ॥४॥

सीदन्तस्ते वयो यथा गोश्रीते मधौ मदिरे विवक्षणे ।

अभि त्वामिन्द्र नोनुमः ॥५॥

अच्छा च त्वैना नमसा वदामसि किं मुहुश्चिद्वि दीधयः ।

सन्ति कामासो हरिवो ददिष्ट्वं स्मो वयं सन्ति नो धियः ॥६॥

नूत्ना इदिन्द्र ते वयमूती अभूम नहि नू ते अद्रिवः ।

विद्मा पुरा परीणसः ॥७॥

विद्मा सखित्वमुत शूर भोज्यमा ते ता वज्रिन्नीमहे ।

उतो समस्मिन्ना शिशीहि नो वसो वाजे सुशिप्र गोमति ॥८॥

यो न इदमिदं पुरा प्र वस्य आनिनाय तमु व स्तुषे ।

सखाय इन्द्रमूतये ॥९॥

हर्यश्वं सत्पतिं चर्षणीसहं स हि ष्मा यो अमन्दत ।

आ तु नः स वयति गव्यमश्व्यं स्तोतृभ्यो मघवा शतम् ॥१०॥

त्वया ह स्विद्युजा वयं प्रति श्वसन्तं वृषभ ब्रुवीमहि ।

संस्थे जनस्य गोमतः ॥११॥

जयेम कारे पुरुहूत कारिणोऽभि तिष्ठेम दूढ्यः ।

नृभिर्वृत्रं हन्याम शूशुयाम चावेरिन्द्र प्र णो धियः ॥१२॥

अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि ।

युधेदापित्वमिच्छसे ॥१३॥

नकी रेवन्तं सख्याय विन्दसे पीयन्ति ते सुराश्वः ।

यदा कृणोषि नदनुं समूहस्यादित्पितेव हूयसे ॥१४॥

मा ते अमाजुरो यथा मूरास इन्द्र सख्ये त्वावतः ।

नि षदाम सचा सुते ॥१५॥

मा ते गोदत्र निरराम राधस इन्द्र मा ते गृहामहि ।

दृळ्हा चिदर्यः प्र मृशाभ्या भर न ते दामान आदभे ॥१६॥

इन्द्रो वा घेदियन्मघं सरस्वती वा सुभगा ददिर्वसु ।

त्वं वा चित्र दाशुषे ॥१७॥

चित्र इद्राजा राजका इदन्यके यके सरस्वतीमनु ।

पर्जन्य इव ततनद्धि वृष्ट्या सहस्रमयुता ददत् ॥१८॥

**सायणभाष्यम्**

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

चतुर्थेऽनुवाके दश सूक्तानि । तत्र ' वयमु त्वाम्' इत्यष्टादशर्चं प्रथमं सूक्तम् । अत्रानुक्रमणिका–'वयमु द्व्यूनान्त्ये द्वृचे चित्रस्य दानस्तुतिः' इति । 'ऋषिश्चान्यस्मात् ' इति परिभाषया काण्वः सोभरिर्ऋषिः । ' काकुभं प्रागाथं ह' इत्युक्तत्वादस्यापि सूक्तस्यायुजः ककुभो युजः सतोबृहत्यः । अन्त्ये द्वृचे चित्रस्य दानं देवता । शिष्टा ऐन्द्र्यः । सूक्तविनियोगो लैङ्गिकः । उक्थ्ये ब्राह्मणाच्छंसिशस्त्रे 'वयमु त्वाम्' इति प्रगाथः स्तोत्रियः । सूत्रितं च-' वयमु त्वामपूर्व्यं यो न इदमिदं पुरेति प्रगाथौ' (आश्व. श्रौ. ६. १ ) इति । आभिप्लविकेषूक्थ्येष्वपि तृतीयसवने ब्राह्मणाच्छंसिनो वैकल्पिकोऽयं स्तोत्रियः प्रगाथः । सूत्रमुक्तम् । अस्मिन्नेव शस्त्रे ' त्वं न इन्द्रा भर ' इति प्रगाथो यदा स्तोत्रियः तदा 'वयमु त्वा' इत्यनुरूपतृचस्याद्या । सूत्रितं च -- वयमु त्वामपूर्व्य यो न इदमिदं पुरा याहीम इन्दव इति समाहार्योऽनुरूपः' (आश्व. श्रौ. ७. ८) इति ॥

व॒यमु॑ त्वाम॑पूर्व्य स्थू॒रं न कच्चि॒द्भर॑न्तोऽव॒स्यवः॑ ।

वाजे॑ चि॒त्रं ह॑वामहे ॥१

व॒यम् । ऊं॒ इति॑ । त्वाम् । अ॒पू॒र्व्य॒ । स्थू॒रम् । न । कत् । चि॒त् । भर॑न्तः । अ॒व॒स्यवः॑ ।

वाजे॑ । चि॒त्रम् । ह॒वा॒म॒हे॒ ॥१

वयम् । ऊं इति । त्वाम् । अपूर्व्य । स्थूरम् । न । कत् । चित् । भरन्तः । अवस्यवः ।

वाजे । चित्रम् । हवामहे ॥१

हे "अपूर्व्य त्रिषु सवनेषु प्रादुर्भूतत्वादभिनवेन्द्र "भरन्तः सोमलक्षणैरन्नैस्त्वां पोषयन्तः "वयं "वाजे । वाजयन्ति गच्छन्ति योद्धारोऽत्रेति वाजयन्त्यायुधान्यत्रेति वा वाजः संग्रामः । तस्मिन् "चित्रं चायनीयं विविधरूपं वा "त्वाम् "उ त्वामेव "अवस्यवः रक्षणमात्मन इच्छन्तः सन्तः "हवामहे त्वामाह्वयामः । तत्र दृष्टान्तः । "स्थूरं "न यथा भरन्तो व्रीह्यादिभिर्गृहं पूरयन्तो जनाः वाजे अन्नविषये स्थूरं स्थूलं गुणाधिकं "कच्चित् कंचिन्मानवं यथाह्वयन्ति तद्वत् ॥

उप॑ त्वा॒ कर्म॑न्नू॒तये॒ स नो॒ युवो॒ग्रश्च॑क्राम॒ यो धृ॒षत् ।

त्वामिद्ध्य॑वि॒तारं॑ ववृ॒महे॒ सखा॑य इन्द्र सान॒सिम् ॥२

उप॑ । त्वा॒ । कर्म॑न् । ऊ॒तये॑ । सः । न॒ः । युवा॑ । उ॒ग्रः । च॒क्रा॒म॒ । यः । धृ॒षत् ।

त्वाम् । इत् । हि । अ॒वि॒तार॑म् । व॒वृ॒महे॑ । सखा॑यः । इ॒न्द्र॒ । सा॒न॒सिम् ॥२

उप । त्वा । कर्मन् । ऊतये । सः । नः । युवा । उग्रः । चक्राम । यः । धृषत् ।

त्वाम् । इत् । हि । अवितारम् । ववृमहे । सखायः । इन्द्र । सानसिम् ॥२

प्रथमपादः प्रत्यक्षकृतः । हे इन्द्र “कर्मन् अग्निष्टोमादिकर्मणि “ऊतये रक्षणाय “त्वा त्वामुपगच्छामः । द्वितीयः पादः परोक्षकृतः । “यः इन्द्रः “धृषत् धृष्णोति शत्रूनभिभवति । ञिधृषा प्रागल्भ्ये '। 'बहुलं छन्दसि ' इति शप्रत्ययः । “युवा तरुणः “उग्रः उद्गूणः “सः इन्द्रः “नः अस्मान् प्रति “चक्राम आगच्छतु । यद्वा । चक्राम अस्मानुत्साहयुक्तान् करोतु । क्रमतेः सर्गार्थे व्यत्ययेन परस्मैपदम् (पा. सू. १. ३. ३८ )। परोऽर्धर्चः प्रत्यक्षकृतः । “सखायः समानख्याना बन्धुभूता वा वयं "सानसिम् । वन षण संभक्तौ । संभजनीयम् “अवितारं सर्वस्य रक्षितारं “त्वामित् त्वामेव “ववृमहे वृणीमहे संभजामहे । हिः प्रसिद्धौ । हियोगादनिघातः ।।

आ या॑ही॒म इन्द॒वोऽश्व॑पते॒ गोप॑त॒ उर्व॑रापते ।

सोमं॑ सोमपते पिब ॥३

आ । या॒हि॒ । इ॒मे । इन्द॑वः । अश्व॑ऽपते । गोऽप॑ते । उर्व॑राऽपते ।

सोम॑म् । सो॒म॒ऽप॒ते॒ । पि॒ब॒ ॥३

आ । याहि । इमे । इन्दवः । अश्वऽपते । गोऽपते । उर्वराऽपते ।

सोमम् । सोमऽपते । पिब ॥३

“अश्वपते अश्वानां स्वामिन् “गोपते गवां पालयितः “उर्वरापते । सर्वसस्याढ्या भूमिरुर्वरा । तस्याः पते हे इन्द्र “इन्दवः सोमाः “इमे भवदीयाः । त्वदर्थमभिषुता इत्यर्थः । तस्मात् “आ “याहि आगच्छ । आगत्य “सोमपते हे इन्द्र “सोमं “पिब ।।

व॒यं हि त्वा॒ बन्धु॑मन्तमब॒न्धवो॒ विप्रा॑स इन्द्र येमि॒म ।

या ते॒ धामा॑नि वृषभ॒ तेभि॒रा ग॑हि॒ विश्वे॑भि॒ः सोम॑पीतये ॥४

व॒यम् । हि । त्वा॒ । बन्धु॑ऽमन्तम् । अ॒ब॒न्धवः॑ । विप्रा॑सः । इ॒न्द्र॒ । ये॒मि॒म ।

या । ते॒ । धामा॑नि । वृ॒ष॒भ॒ । तेभिः॑ । आ । ग॒हि॒ । विश्वे॑भिः । सोम॑ऽपीतये ॥४

वयम् । हि । त्वा । बन्धुऽमन्तम् । अबन्धवः । विप्रासः । इन्द्र । येमिम ।

या । ते । धामानि । वृषभ । तेभिः । आ । गहि । विश्वेभिः । सोमऽपीतये ॥४

हे “इन्द्र “अबन्धवः बन्धुरहिताः “विप्रासः मेधाविनः “वयं बन्धुमन्तं बन्धुभिर्देवैरङ्गिरोभिर्वा तद्वन्तं “त्वा त्वाम् । हिरवधारणे । त्वामेव “येमिम बन्धुत्वेन नियच्छाम। यच्छतेर्लिटि रूपम् । तथा सति हे “वृषभ कामानां वर्षितरिन्द्र “ते तव “या यानि “धामानि शरीराणि तेजांसि वा विद्यन्ते “तेभिः तैः “विश्वेभिः सर्वैर्धामभिः सह “सोमपीतये सोमपानार्थम् “आ “गहि आगच्छ ।।

सीदं॑न्तस्ते॒ वयो॑ यथा॒ गोश्रीं॑ते॒ मधौ॑ मदि॒रे वि॒वक्षं॑णे ।

अ॒भि त्वामिं॑न्द्र नोनुमः ॥५

सीदं॑न्तः । ते॒ । वयः॑ । य॒था॒ । गोऽश्रीं॑ते । मधौ॑ । म॒दि॒रे । वि॒वक्षं॑णे ।

अ॒भि । त्वाम् । इ॒न्द्र॒ । नो॒नु॒मः॒ ॥५

सीदन्तः । ते । वयः । यथा । गोऽश्रीते । मधौ । मदिरे । विवक्षणे ।

अभि । त्वाम् । इन्द्र । नोनुमः ॥५

हे “इन्द्र “गोश्रीते । ‘श्रीङ् पाके'। गोविकारे दधिपयसी गोशब्देनोच्यते । दध्ना पयसा च श्रीते श्रयद्रव्येण मिश्रिते “मदिरे मदकरे “विवक्षणे स्वर्गप्रापणशीले त्वदीये “मधौ सोमे “सीदन्तः निवसन्तः । सदने दृष्टान्तः । “वयो “यथा पक्षिणो यथैकत्र संघीभूय तिष्ठन्ति तद्वत् सीदन्तो वयं “त्वाम् “अभि आभिमुख्येन "नोनुमः पुनःपुनर्भृशं वा स्तुमः ॥ ॥ १ ॥

अच्छा॑ च त्वै॒ना नमं॑सा॒ वदा॑मसि॒ किं मुहुं॑श्चि॒द्वि दीं॑धयः ।

सन्ति॒ कामा॑सो हरिवो द॒दिष्ट्वं स्मो व॒यं सन्तिं॑ नो॒ धियं॑ः ॥६

अच्छं॑ । च॒ । त्वा॒ । ए॒ना । नमं॑सा । वदा॑मसि । किम् । मुहुः॑ । चि॒त् । वि । दी॒धु॒यः॒ ।

सन्तिं॑ । कामा॑सः । ह॒रि॒ऽव॒ः॒ । द॒दिः । त्वम् । स्मः । व॒यम् । सन्तिं॑ । न॒ः॒ । धियः॑ ॥६

अच्छ । च । त्वा । एना । नमसा । वदामसि । किम् । मुहुः । चित् । वि । दीधयः ।

सन्ति । कामासः । हरिऽवः । ददिः । त्वम् । स्मः । वयम् । सन्ति । नः । धियः ॥६

हे इन्द्र “अच्छ ”च अपि च आभिमुख्येन वा “एना एनेन "नमसा स्तोत्रेण हविर्लक्षणेनान्नेन वा सह “त्वा त्वां “वदामसि अभिवदामः । ‘ चवायोगे प्रथमा ' इति न निघातः । त्वं तु “मुहुश्चित् मुहुर्मुहुः “किं कस्माद्धेतोः “वि “दीधयः । विपूर्वो दीधितिश्चिन्तने । विचिन्तयसि । “दीधीङ् दीप्तिदेवनयोः' । व्यत्ययेन परस्मैपदं लुगभावश्च । किमर्थं यूयं वदथेति चेत् । “हरिवः हरिताश्ववन् हे इन्द्र अस्माकं “कामासः पुत्रपश्वादिविषयाः कामाः “सन्ति कामाः सन्तु । अहं न प्रयच्छामीति चेत् । “त्वं तु “ददिः धनादिदाता खलु । तस्मात् “वयं त्वत्संनिधौ “स्मः भवामः । किंच “नः अस्माकं “धियः कर्माणि च तव समीपे “सन्ति तिष्ठन्ति । ततो धनादिलाभार्थं त्वां वदाम इत्यर्थः ॥

नूत्ना॒ इदिं॑न्द्र ते व॒यमू॒ती अ॑भूम न॒हि नू ते॑ अद्रिवः ।

वि॒द्मा पु॒रा परीं॑णसः ॥७

नूत्नाः॑ । इत् । इ॒न्द्र॒ । ते॒ । व॒यम् । ऊ॒ती । अ॒भू॒म॒ । न॒हि । नु । ते॒ । अ॒द्रि॒ऽव॒ः ।

वि॒द्म । पु॒रा । परीं॑णसः ॥७

नूत्नाः । इत् । इन्द्र । ते । वयम् । ऊती । अभूम । नहि । नु । ते । अद्रिऽवः ।

विद्म । पुरा । परीणसः ॥७

हे “इन्द्र “ते तव “ऊती ऊत्यै रक्षणे “वयं "नूत्ना “इत् नूतना एव “अभूम भवामः । “अद्रिवः वज्रिन हे इन्द्र “पुरा पूर्वं त्वां “परीणसः । सुब्व्यत्ययः । परीणसं परितो व्याप्तं महान्तं वेति “नहि “विद्म न जानीमः । “नु संप्रति तु “ते त्वां महान्तमिति जानन्तो वयं भवता रक्ष्या इति ।।

वि॒द्मा स॑खि॒त्वमु॒त शू॑र भो॒ज्य१॒॑मा ते॒ ता व॑ज्रिन्नीमहे ।

उ॒तो स॑मस्मि॒न्ना शि॑शीहि नो वसो॒ वाजे॑ सुशिप्र॒ गोम॑ति ॥८

वि॒द्म । स॒खि॒ऽत्वम् । उ॒त । शू॒र॒ । भो॒ज्य॑म् । आ । ते॒ । ता । व॒ज्रि॒न् । ई॒म॒हे॒ ।

उ॒तो इतिं । स॒म॒स्मि॒न् । आ । शि॒शी॒हि॒ । न॒ः । व॒सो॒ इतिं । वाजे॑ । सु॒ऽशि॒प्र॒ । गोऽम॑ति ॥८

विद्म । सखिऽत्वम् । उत । शूर । भोज्यम् । आ । ते । ता । वज्रिन् । ईमहे ।

उतो इति । समस्मिन् । आ । शिशीहि । नः । वसो इति । वाजे । सुऽशिप्र । गोऽमति ॥८

"शूर शत्रूणां शातयितर्बलवन् हे इन्द्र "सखित्वं तव सखिभावं वयं “विद्म जानीमः । "उत अपि च “भोज्यम् अभ्यवहार्यं धनं च विद्म । “वज्रिन् हे इन्द्र “ते त्वदीये “ता ते सख्यधने “आ आभिमुख्येन “ईमहे वयं याचामहे । "उतो अपि च "वसो सर्वस्य वासयितः “सुशिप्र शोभनहनो यद्वा शोभनशिरस्त्राण हे इन्द्र “गोमति गवादियुक्ते “समस्मिन् सर्वस्मिन् “वाजे अन्ने “नः अस्मान् “आ “शिशीहि तीक्ष्णीकुरु । उपलक्षणम् । प्रदानेनास्मान् प्रसिद्धान् कुर्वित्यर्थः । ‘ शिञ् निशाने' इत्यस्य छान्दसः श्लुः ॥

उक्थ्ये ब्राह्मणाच्छंसिशस्त्रे “यो न इदमिदम्' इत्ययं प्रगाथोऽनुरूपः । ‘ यो न इदमिदं पुरेति प्रगाथौ सर्वाः ककुभः ' ( आश्व. श्रौ. ६. १) इति सूत्रितम् । आभिप्लविकेषूक्थ्येष्वपि ब्राह्मणाच्छंसिशस्त्रेऽयं वैकल्पिकोऽनुरूपः ( आश्व. श्रौ. ७.८)। आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे • त्वं न इन्द्रा भर ' इति प्रगाथे स्तोत्रिये सत्यनुरूपतृचः समाहार्यः । तत्रेयं ‘यो न इदमिदम्' इति द्वितीया । सूत्रितं च--- यो न इदमिदं पुरा याहीम इन्दव इति समाहार्योऽनुरूपः' ( आश्व. श्रौ. ७. ८) इति ॥

यो न॑ इ॒दमिं॑दं पु॒रा प्र वस्य॑ आनि॒नाय॒ तमु॑ वः स्तुषे ।

सखा॑यु इन्द्र॑मू॒तये॑ ॥९

यः । नः॒ । इ॒दम्ऽइ॑दम् । पु॒रा । प्र । वस्यः॑ । आ॒ऽनि॒नाय॑ । तम् । ऊं॒ इति॑ । वः॒ । स्तु॒षे॒ ।

सखा॑यः । इन्द्र॑म् । ऊ॒तये॑ ॥९

यः । नः । इदम्ऽइदम् । पुरा । प्र । वस्यः । आऽनिनाय । तम् । ऊं इति । वः । स्तुषे ।

सखायः । इन्द्रम् । ऊतये ॥९

"सखायः समानख्याना हे ऋत्विग्यजमानाः "यः इन्द्रः "पुरा पूर्वमिदं दर्शनीयतया विद्यमानं "वस्यः वसीयः । वसोरीयसुनि ईकारलोपश्छान्दसः । प्रशस्तं वसु "नः अस्मान् "प्राणिनाय प्रकर्षेणानीतवान् "तमु तमेव धनानामानेतारम् "इन्द्रं "वः युष्माकं धनलाभार्थम् "ऊतये रक्षणाय च "स्तुषे सोभरिरहं स्तौमि ॥

हर्य॑श्वं॒ सत्प॑तिं चर्षणी॒सहं॒ स हि ष्मा॒ यो अम॑न्दत ।

आ तु न॒ः स व॑यति॒ गव्य॒मश्व्यं॑ स्तो॒तृभ्यो॑ म॒घवा॑ श॒तम् ॥१०

हरि॑ऽअश्वम् । सत्ऽप॑तिम् । च॒र्ष॒णि॒ऽसह॑म् । सः । हि । स्म॒ । यः । अम॑न्दत ।

आ । तु । नः॒ । सः । व॒य॒ति॒ । गव्य॑म् । अश्व्य॑म् । स्तो॒तृऽभ्यः॑ । म॒घऽवा॑ । श॒तम् ॥१०

हरिऽअश्वम् । सत्ऽपतिम् । चर्षणिऽसहम् । सः । हि । स्म । यः । अमन्दत ।

आ । तु । नः । सः । वयति । गव्यम् । अश्व्यम् । स्तोतृऽभ्यः । मघऽवा । शतम् ॥१०

"हर्यश्वं हरितवर्णाश्वोपेतं "सत्पतिं स्वप्रकाशाधिक्येन सतां नक्षत्राणां पतिं सतां श्रेष्ठानां पतिं वा "चर्षणीसहं चर्षणीनां शत्रुभूतानां मनुष्याणामभिभवितारं "स "हि "ष्म स खलु जनः स्तौति । "यः जनः "अमन्दत ततो लब्धधनः संस्तृप्तो भवति स एनं तुष्टूषति । एवं सति "मघवा धनवान् "सः इन्द्रः "शतं "गव्यमश्व्यम् अनेकं गवाश्वसंघं "स्तोतृभ्यः "नः अस्मभ्यं "तु क्षिप्रम् "आ "वयति आप्रापयतु । वी गत्यादिषु । अस्माल्लेट्यडागमः । ततो लब्धगवादिका वयं चैनं स्तुम इति ॥ ॥२॥

त्वया॑ ह स्विद्यु॒जा व॒यं प्रति॑ श्व॒सन्तं॑ वृषभ ब्रुवीमहि ।

सं॒स्थे जन॑स्य॒ गोम॑तः ॥११

त्वया॑ । ह॒ । स्वि॒त् । यु॒जा । व॒यम् । प्रति॑ । श्व॒सन्त॑म् । वृ॒ष॒भ॒ । ब्रु॒वी॒म॒हि॒ ।

स॒म्ऽस्थे । जन॑स्य । गोऽम॑तः ॥११

त्वया । ह । स्वित् । युजा । वयम् । प्रति । श्वसन्तम् । वृषभ । ब्रुवीमहि ।

सम्ऽस्थे । जनस्य । गोऽमतः ॥११

“वृषभ वर्षितर्हे इन्द्र “गोमतः गवादियुक्तस्य “जनस्य “संस्थे स्थाने युद्धे “श्वसन्तम् अस्मान् प्रति क्रोधातिशयेल श्वासकारिणं शत्रुं “युजा सहायेन “त्वया “ह “स्वित् त्वयैव खलु “वयं “प्रति “ब्रुवीमहि प्रतिवचनं कुर्मः । निराकरिष्याम इत्यर्थः ।।

जयेम कारे पुरुहूत कारिणोऽभि तिष्ठेम दूढ्यः ।

नृभिर्वृत्रं हन्याम शूशुयाम चावेरिन्द्र प्र णो धियः ॥१२

जयेम । कारे । पुरुऽहूत । कारिणः । अभि । तिष्ठेम । दुःऽध्यः ।

नृऽभिः । वृत्रम् । हन्याम । शूशुयाम । च । अवेः । इन्द्र । प्र । नः । धियः ॥१२

जयेम । कारे । पुरुऽहूत । कारिणः । अभि । तिष्ठेम । दुःऽध्यः ।

नृऽभिः । वृत्रम् । हन्याम । शूशुयाम । च । अवेः । इन्द्र । प्र । नः । धियः ॥१२

“पुरुहूत बहुभिराह्वातव्य हे “इन्द्र अस्माकं विविधाः शत्रव उपद्रवकारिणो बाधां मनसा स्मरन्तश्चेति । तत्र “कारिणः हिंसां कुर्वतः शत्रून् “कारे । कीर्यन्त आयुधान्यत्रेति कारो युद्धम् । तस्मिंस्तान् वयं “जयेम। “दूढ्यः दुर्धियः पापबुद्धीनपि “अभि “तिष्ठेम अभितः स्थास्यामः । किंच “वृत्रं गवामावरकं शत्रुं “नृभिः आयुधनेतृभिर्मरुद्भिः सह “हन्याम हिंस्याम । हत्वा “शूशुयाम “च ! शत्रुराहित्येन पुत्रपौत्रैरग्निष्टोमादिकर्मभिश्च वर्धयेमहि । यद्वा। श्वयतिरत्रान्तर्णीतण्यर्थः । शत्रुभ्यो बाधाभावात् सोमलक्षणैरन्नैस्त्वां वर्धयेम । ततस्त्वं “नः अस्माकं “धियः कर्माणि “प्र “अवेः प्रकर्षेण रक्ष ।।

आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे ‘ अभ्रातृव्यः' इत्यादिकौ द्वौ प्रगाथौ वैकल्पिकौ स्तोत्रियानुरूपौ । सूत्रितं च--‘अभ्रातृव्यो अना त्वं मा ते अमाजुरो यथा' (आश्व. श्रौ. ७. ८ ) इति ।।

अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि ।

युधेदापित्वमिच्छसे ॥१३

अभ्रातृव्यः । अना । त्वम् । अनापिः । इन्द्र । जनुषा । सनात् । असि ।

युधा । इत् । आपिऽत्वम् । इच्छसे ॥१३

अभ्रातृव्यः । अना । त्वम् । अनापिः । इन्द्र । जनुषा । सनात् । असि ।

युधा । इत् । आपिऽत्वम् । इच्छसे ॥१३

हे “इन्द्र “त्वं “जनुषा जन्मनैव “अभ्रातृव्यः । व्यन् सपत्ने ' ( पा. सू. ४. १. १४५) इति व्यन्प्रत्ययः । “अना अनेतृकः । ‘ ऋतश्छन्दसि ' इति कपः प्रतिषेधः । अनियन्तृक इत्यर्थः । “अनापिः बन्धुवर्जितश्च “सनादसि चिरादेव भ्रातृव्यादिवर्जितोऽसि ।

यच्च त्वया “आपित्वं बान्धवम् “इच्छसे इच्छसि तत्र “युधेत् युद्धेनैव युद्धं कुर्वन्नेव स्तोतॄणां सखा भवसीति ।।

नकीं रे॒वन्तं॑ स॒ख्याय॑ विन्दसे॒ पीय॑न्ति ते सुरा॒श्वः॑ ।

य॒दा कृ॒णोषि॑ नद॒नुं सम्‌हस्यादित्पि॒तेव॑ हूयसे ॥१४

नकिः॑ । रे॒वन्त॑म् । स॒ख्याय॑ । वि॒न्द॒से॒ । पीय॑न्ति । ते॒ । सु॒रा॒श्वः॑ ।

य॒दा । कृ॒णोषि॑ । न॒द॒नुम् । सम् । ऊ॒ह॒सि॒ । आत् । इत् । पि॒ताऽइ॑व । हू॒य॒से॒ ॥१४

नकिः । रेवन्तम् । सख्याय । विन्दसे । पीयन्ति । ते । सुराश्वः ।

यदा । कृणोषि । नदनुम् । सम् । ऊहसि । आत् । इत् । पिताऽइव । हूयसे ॥१४

हे इन्द्र “रेवन्तं धनवन्तं केवलधनवन्तं दानादिरहितमयष्टारमाढ्यं मानवं “सख्याय सखिभावाय “नकिः “विन्दसे न भजसे नाश्रयसीत्यर्थः । अयष्टारो जनाः किं सन्तीत्यत आह । “सुराश्वः । ‘ दुओश्वि गतिवृद्ध्योः ' । सुरया वृद्धास्तद्वत् प्रमत्ता नास्तिकाः “ते त्वां “पीयन्ति । पीयतिर्हिंसाकर्मा । हिंसन्ति । तान्नाश्रयसीत्यर्थः ॥

मा तें अमा॒जुरों यथा मू॒रास॑ इन्द्र स॒ख्ये त्वाव॑तः ।

नि ष॑दाम॒ सचा॑ सु॒ते ॥१५

मा । ते॒ । अ॒मा॒ऽजुरः॑ । य॒था॒ । मू॒रासः॑ । इ॒न्द्र॒ । स॒ख्ये । त्वाऽव॑तः ।

नि । स॒दा॒म॒ । सचा॑ । सु॒ते ॥१५

मा । ते । अमाऽजुरः । यथा । मूरासः । इन्द्र । सख्ये । त्वाऽवतः ।

नि । सदाम । सचा । सुते ॥१५

हे “इन्द्र “ते तव स्वभूता वयं तथा “मा भूम मा भवाम “यथा “त्वावतः त्वादृशः त्वत्सदृशस्य देवस्य “सख्ये "मूरासः मूराः । सोमप्रदानादिन्द्रेण सह सख्यं कुर्म इत्येतदजानन्तो मूढा जनाः । “अमाजुरः सोमाभिषवमकुर्वन्तस्ते गृहैः पुत्रैः पौत्रैर्धनादिभिश्च सह जीर्णा भवन्ति । तथा वयममाजुरो न भवाम । कथम् । "सचा ऋत्विग्भिः सह "सुते अभिषुते सोमे वयं तु “नि “षदाम निवसाम । तस्मात् सोमदानेन त्वया सह सखिभावं कुर्म इत्यर्थः ॥ ॥ ३ ॥

मा तें गोदत्र॒ निर॑राम॒ राध॑स॒ इन्द्र॒ मा तें गृहामहि ।

दृ॒ळ्हा चि॑द॒र्यः प्र मृ॑शा॒भ्या भ॑र॒ न तें दा॒मान॑ आ॒दभें ॥१६

मा । ते॒ । गो॒ऽद॒त्र॒ । निः । अ॒रा॒म॒ । राध॑सः । इन्द्र॑ । मा । ते॒ । गृ॒हा॒म॒हि॒ ।

दृ॒ळ्हा । चि॒त् । अ॒र्यः । प्र । मृ॒श॒ । अ॒भि । आ । भ॒र॒ । न । ते॒ । दा॒मानः॑ । आ॒ऽदभे॑ ॥१६

मा । ते । गोऽदत्र । निः । अराम । राधसः । इन्द्र । मा । ते । गृहामहि ।

दृळ्हा । चित् । अर्यः । प्र । मृश । अभि । आ । भर । न । ते । दामानः । आऽदभे ॥१६

हे “गोदत्र स्तोतॄणां गवादिदानशील हे “इन्द्र “ते तव स्वभूता वयं “राधसः धनान् “मा “निरराम मा निर्गमाम । अर्तेर्लुङि ‘सर्तिशास्त्यर्तिभ्यश्च ' इत्यङादेशः । ‘ ऋदृशोऽङि' इति गुणः । सर्वदा त्वत्तो धनाढ्या भवाम । किंच “ते तव स्वभूता वयं धनं प्रयच्छाम । कस्माच्चित् "मा “गृहामहि मा गृह्णीमः। अपि तु त्वत्त एव धनं गृह्णीम इत्यर्थः। ग्रहेर्लुङि ‘बहुलं छन्दसि' इति शः । ङित्त्वात्संप्रसारणम् । “अर्यः स्वामी त्वं “दृळ्हा “चित् दृढान्यपि विनश्वराणि धनानि “प्र “मृश प्रकर्षेणास्मासु स्थापय । किंच “अभि आभिमुख्येन “आ “भर धनादिभिः समन्तादस्मान् पोषय । “ते तव “दामानः तानि दानानि “न “आदभे न कैश्चिदपि आदम्भितुं शक्यन्ते । तस्मात् दानादियुक्तानस्मान् कुर्वित्यर्थः ॥

इन्द्रो॑ वा॒ घेदिय॑न्म॒घं सर॑स्वती वा सु॒भगा॑ द॒दिर्वसु॑ ।

त्वं वा॑ चित्र दा॒शुषे॑ ॥१७

इन्द्रः॑ । वा॒ । घ॒ । इत् । इय॑त् । म॒घम् । सर॑स्वती । वा॒ । सु॒ऽभगा॑ । द॒दिः । वसु॑ ।

त्वम् । वा॒ । चि॒त्र॒ । दा॒शुषे॑ ॥१७

इन्द्रः । वा । घ । इत् । इयत् । मघम् । सरस्वती । वा । सुऽभगा । ददिः । वसु ।

त्वम् । वा । चित्र । दाशुषे ॥१७

अत्र चित्रस्य दानं स्तौति । चित्रो नाम राजा सरस्वतीतीर इन्द्रार्थं यागमकृत । तत्र मन्त्रद्रष्टर्षिर्बहुधनलाभान्मह्यमेतावद्धनं को वा प्रयच्छदिति विकल्पयते। “दाशुषे इन्द्राय हवींषि दत्तवते मह्यम् “इन्द्रो “वा “घेत् इन्द्र एव किं खल्वेतावत् “मघं मंहनीयं धनं “ददिः प्रायच्छत् । यद्वा "सुभगा शोभनधना “सरस्वती नदी "वसु धनं ददिः किं प्रायच्छत् । अथवा “चित्र एतन्नामक हे राजन् “त्वं “वा एतावद्धनं मह्यं प्रादा इति ।

चित्र॒ इद्राजा॑ राज॒का इद॑न्य॒के य॒के सर॑स्वती॒मनु॑ ।

प॒र्जन्य॑ इव त॒तन॒द्धि वृ॒ष्ट्या स॒हस्र॑म॒युता॒ दद॑त् ॥१८

चित्रः॑ । इत् । राजा॑ । रा॒ज॒काः । इत् । अ॒न्य॒के । य॒के । सर॑स्वतीम् । अनु॑ ।

प॒र्जन्यः॑ऽइव । त॒तन॑त् । हि । वृ॒ष्ट्या । स॒हस्र॑म् । अ॒युता॑ । दद॑त् ॥१८

चित्रः । इत् । राजा । राजकाः । इत् । अन्यके । यके । सरस्वतीम् । अनु ।

पर्जन्यःऽइव । ततनत् । हि । वृष्ट्या । सहस्रम् । अयुता । ददत् ॥१८

अनया चित्र एव प्रादादिति निश्चयमकार्षीत् । “सहस्रं सहस्रसंख्याकं धनम् “अयुता अयुतानि च धनानि च “ददत् प्रयच्छन् “चित्र “इत् चित्रनामैव "राजा । “अन्यके "यके । अल्प इत्यर्थे कः । अल्पा येऽन्ये “राजका “इत् राजान एव “सरस्वतीमनु सरस्वत्यास्तीरे वर्तन्ते । तान् सर्वान् याचमानानयमेव चित्रो राजा “ततनत् धनैस्तनोति । तनोतेर्लुङि चङि रूपम् । ‘चङ्यन्यतरस्याम्' इति स्वरः। तत्र दृष्टान्तः । “पर्जन्यइव। यथा पर्जन्यः पृथिवीं वृष्ट्या तनोति प्रीणयति तथायं चित्रः सर्वान् धनैः प्रीणयतीत्यर्थः ॥ ॥ ४ ॥

---

**टिप्पणी**

८.२१.१ वयमु त्वामपूर्व्य इति

सौभरम् (https://sa.wikisource.org/s/1z97)

# ऋग्वेदः सूक्तं ८.२२

ऋग्वेदः - मण्डल ८
← सूक्तं ८.२१ सूक्तं ८.२२ सूक्तं ८.२३ →
सोभरिः काण्वः

दे. अश्विनौ। १ - ६ प्रगाथ= (विषमा बृहती, समा सतोबृहती), ७ बृहती, ८ अनुष्टुप्, ११ ककुप्, १२ मध्येज्योतिः, प्रगाथः = (९, १३, १५, १७ ककुप्, १०, १४, १६, १८ सतोबृहती) ।

---

ओ त्यमह्व आ रथमद्या दंसिष्ठमूतये ।

यमश्विना सुहवा रुद्रवर्तनी आ सूर्यायै तस्थथुः ॥१॥

पूर्वायुषं सुहवं पुरुस्पृहं भुज्युं वाजेषु पूर्व्यम् ।

सचनावन्तं सुमतिभिः सोभरे विद्वेषसमनेहसम् ॥२॥

इह त्या पुरुभूतमा देवा नमोभिरश्विना ।

अर्वाचीना स्ववसे करामहे गन्तारा दाशुषो गृहम् ॥३॥

युवो रथस्य परि चक्रमीयत ईर्मान्यद्वामिषण्यति ।

अस्माँ अच्छा सुमतिर्वां शुभस्पती आ धेनुरिव धावतु ॥४॥

रथो यो वां त्रिवन्धुरो हिरण्याभीशुरश्विना ।

परि द्यावापृथिवी भूषति श्रुतस्तेन नासत्या गतम् ॥५॥

दशस्यन्ता मनवे पूर्व्यं दिवि यवं वृकेण कर्षथः ।

ता वामद्य सुमतिभिः शुभस्पती अश्विना प्र स्तुवीमहि ॥६॥

उप नो वाजिनीवसू यातमृतस्य पथिभिः ।

येभिस्तृक्षिं वृषणा त्रासदस्यवं महे क्षत्राय जिन्वथः ॥७॥

अयं वामद्रिभिः सुतः सोमो नरा वृषण्वसू ।

आ यातं सोमपीतये पिबतं दाशुषो गृहे ॥८॥

आ हि रुहतमश्विना रथे कोशे हिरण्यये वृषण्वसू ।

युञ्जाथां पीवरीरिषः ॥९॥

याभिः पक्थमवथो याभिरध्रिगुं याभिर्बभ्रुं विजोषसम् ।

ताभिर्नो मक्षू तूयमश्विना गतं भिषज्यतं यदातुरम् ॥१०॥

यदध्रिगावो अध्रिगू इदा चिदह्नो अश्विना हवामहे ।

वयं गीर्भिर्विपन्यवः ॥११॥

ताभिरा यातं वृषणोप मे हवं विश्वप्सुं विश्ववार्यम् ।

इषा मंहिष्ठा पुरुभूतमा नरा याभिः क्रिविं वावृधुस्ताभिरा गतम् ॥१२॥

ताविदा चिदहानां तावश्विना वन्दमान उप ब्रुवे ।

ता उ नमोभिरीमहे ॥१३॥

ताविद्दोषा ता उषसि शुभस्पती ता यामन्रुद्रवर्तनी ।

मा नो मर्ताय रिपवे वाजिनीवसू परो रुद्रावति ख्यतम् ॥१४॥

आ सुग्म्याय सुग्म्यं प्राता रथेनाश्विना वा सक्षणी ।

हुवे पितेव सोभरी ॥१५॥

मनोजवसा वृषणा मदच्युता मक्षुंगमाभिरूतिभिः ।

आरात्ताच्चिद्भूतमस्मे अवसे पूर्वीभिः पुरुभोजसा ॥१६॥

आ नो अश्वावदश्विना वर्तिर्यासिष्टं मधुपातमा नरा ।

गोमद्दस्रा हिरण्यवत् ॥१७॥

सुप्रावर्गं सुवीर्यं सुष्टु वार्यमनाधृष्टं रक्षस्विना ।

अस्मिन्ना वामायाने वाजिनीवसू विश्वा वामानि धीमहि ॥१८॥

**सायणभाष्यम्**

“ओ त्यमह्व' इत्यष्टादशर्चं द्वितीयं सूक्तं काण्वस्य सोभरेरार्षम् । आद्यातृतीयापञ्चम्यो बृहत्यो द्वितीयाचतुर्थीषष्ठ्यः सतोबृहत्यः सप्तमी बृहती अष्टम्यनुष्टुप् । 'काकुभं प्रागाथं ह' इत्युक्तस्यानुवृत्तेः शिष्टाश्चत्वारः काकुभाः प्रगाथाः । अश्विनौ देवता । तथा चानुक्रान्तम्-‘ओ त्यमाश्विनं त्रिप्रगाथादि बृहत्यनुष्टुबेकादश्याद्ये ककुम्मध्येज्योतिषी' इति । प्रातरनुवाक आश्विने क्रतौ बार्हते छन्दस्याश्विनशस्त्रे चाद्याः सप्तर्चः । सूत्रितं च- ओ त्यमह्व आ रथमिति सप्त' (आश्व. श्रौ. ४. १५) इति ॥

ओ त्यमं॑ह्व आ रथ॑म॒द्या दंसि॑ष्ठमू॒तये॑ ।

यम॑श्विना सुहवा रुद्रवर्तनी॒ आ सू॒र्यायै॑ त॒स्थथुः॑ ॥१

ओ इति॑ । त्यम् । अ॒ह्वे॒ । आ । रथ॑म् । अ॒द्य । दंसि॑ष्ठम् । ऊ॒तये॑ ।

यम् । अ॒श्वि॒ना॒ । सु॒ऽह॒वा॒ । रु॒द्र॒व॒र्त॒नी॒ इति॑ रुद्रऽवर्तनी । आ । सू॒र्यायै॑ । त॒स्थथुः॑ ॥१

ओ इति । त्यम् । अह्वे । आ । रथम् । अद्य । दंसिष्ठम् । ऊतये ।

यम् । अश्विना । सुऽहवा । रुद्रवर्तनी इति रुद्रऽवर्तनी । आ । सूर्यायै । तस्थथुः ॥१

हे अश्विनौ "दंसिष्ठम् अत्यन्तदर्शनीयं यद्वातिशयेन शत्रूणामुपक्षपयितारं “त्यं तं युवयोः “रथम् "ऊतये रक्षणाय “अद्य अस्मिन् यागदिने "अह्वे सोभरिरहमाह्वयामि । "सुहवा सुहवौ स्तोत्रशस्त्रादिभिः शोभनाह्वानौ "रुद्रवर्तनी संग्रामे रोदनशीलमार्गौ यद्वा स्तूयमानमार्गौ हे अश्विनौ "सूर्यायै सूर्यां स्वयंवरे वरयितुं "यं रथं युवाम् "आ "तस्थथुः आश्रयथः तं रथमाह्वयामीति ॥

पू॒र्वा॒युषं॑ सु॒हवं॑ पुरु॒स्पृहं॑ भु॒ज्युं वाजे॑षु॒ पूर्व्यं॑ ।

स॒च॒नावं॑तं सुम॒तिभिः॑ सोभरे॒ विद्वे॑षसमने॒हसं॑ ॥२

पू॒र्व॒ऽआ॒युष॑म् । सु॒ऽहव॑म् । पु॒रु॒ऽस्पृह॑म् । भु॒ज्युम् । वाजे॑षु । पूर्व्य॑म् ।

स॒च॒नाऽव॑न्तम् । सु॒म॒तिऽभिः॑ । सो॒भ॒रे॒ । विऽद्वे॑षसम् । अ॒ने॒हस॑म् ॥२

पूर्वऽआयुषम् । सुऽहवम् । पुरुऽस्पृहम् । भुज्युम् । वाजेषु । पूर्व्यम् ।

सचनाऽवन्तम् । सुमतिऽभिः । सोभरे । विऽद्वेषसम् । अनेहसम् ॥२

हे "सोभरे "सुमतिभिः कल्याणीभिः स्तुतिभिरश्विनो रथं स्तुहि । किंविशिष्टम् । "पूर्वापुषं पूर्वेषां स्तोतॄणां धनादिदानेन पोषकं "सुहवं यज्ञेषु शोभनाह्वानं "पुरुस्पृहं बहुभिः स्पृहणीयं "भुज्युम् । ‘भुज पालने '। सर्वस्य रक्षकं “वाजेषु “पूर्व्यं संग्रामेश्वग्रतो गन्तारं “सचनावन्तं सर्वैर्भजनवन्तं “विद्वेषसं शत्रूणां विशेषेण द्वेष्टारम् “अनेहसं कैश्चिदप्यनुपद्रवं पापरहितं वा रथं स्तुहीत्यन्वयः ॥

इ॒ह त्या पु॑रु॒भूत॑मा दे॒वा नमो॑भिर॒श्विना॑ ।

अ॒र्वा॒ची॒ना स्वव॑से करामहे॒ गंता॑रा दा॒शुषो॑ गृ॒हं ॥३

इ॒ह । त्या । पु॒रु॒ऽभूत॑मा । दे॒वा । नम॑ःऽभिः । अ॒श्विना॑ ।

अ॒र्वा॒ची॒ना । सु । अव॑से । क॒रा॒म॒हे॒ । गन्ता॑रा । दा॒शुष॑ः । गृ॒हम् ॥३

इह । त्या । पुरुऽभूतमा । देवा । नमःऽभिः । अश्विना ।

अर्वाचीना । सु । अवसे । करामहे । गन्तारा । दाशुषः । गृहम् ॥३

“पुरुभूतमा अतिशयेन बहूनां शत्रूणां भावयितारौ "देवा देवौ द्योतनशीलौ स्तोतव्यौ वा “दाशुषः हविर्दत्तवतो यजमानस्य “गृहं प्रति गन्तारौ गमनशीलौ “त्या तौ “अश्विना अश्विनौ युवाम् “इह अस्मिन् कर्मणि “अवसे रक्षणाय “नमोभिः हविर्भिः स्तोत्रैर्वा “अर्वाचीना अर्वाचीनौ अभिमुखमागच्छन्तौ "सु “करामहे वयं सुष्ठु कुर्मः ॥

यु॒वो रथ॑स्य॒ परि॑ च॒क्रमी॑यत ई॒र्मान्यद्वा॑मिषण्यति ।

अ॒स्माँ अच्छा॑ सुम॒तिर्वां॑ शुभस्पती॒ आ धे॒नुरि॑व धावतु ॥४

यु॒वोः । रथ॑स्य । परि॑ । च॒क्रम् । ई॒य॒ते॒ । ई॒र्मा । अ॒न्यत् । वा॒म् । इ॒ष॒ण्य॒ति॒ ।

अ॒स्मान् । अच्छ॑ । सु॒ऽम॒तिः । वा॒म् । शु॒भ॒ः । प॒ती॒ इति॑ । आ । धे॒नुःऽइ॑व । धा॒व॒तु॒ ॥४

युवोः । रथस्य । परि । चक्रम् । ईयते । ईर्मा । अन्यत् । वाम् । इषण्यति ।

अस्मान् । अच्छ । सुऽमतिः । वाम् । शुभः । पती इति । आ । धेनुःऽइव । धावतु ॥४

हे अश्विनौ “युवोः युवयोः “रथस्य एकं “चक्रं परि “ईयते परितो द्यां गच्छति । “अन्यत् अवस्थितं रथस्य चक्रम् "ईर्मा ईर्मौ सर्वस्यान्तर्यामितया प्रेरकौ यद्वोदकस्य प्रेरयितारौ “वां युवाम् “इषण्यति गच्छति । उक्तार्थे मन्त्रान्तरं -- न्यघ्न्यस्य मूर्धनि' (ऋ. सं. १. ३०. १९) इति । हे "शुभस्पती उदकस्य पालयितारौ हे अश्विनौ “वां युवयोः “सुमतिः कल्याणी मतिः "अच्छ आभिमुख्येन “अस्मान् “आ “धावतु आगच्छतु । तत्र दृष्टान्तः । “धेनुरिव । यथा नवप्रसूता गौर्वत्सं प्रति पयोदानार्थमागच्छति तद्वद्युवयोः सुमतिरस्मान् प्रति धनादिप्रदानार्थमागच्छतु ॥

रथो॒ यो वां॑ त्रिवं॑धु॒रो हिर॑ण्याभीशुरश्विना ।

परि॒ द्यावा॑पृथि॒वी भूष॑ति श्रु॒तस्तेन॑ नास॒त्या ग॑तं ॥५

रथः॑ । यः । वा॒म् । त्रि॒ऽव॒न्धु॒रः । हिर॑ण्यऽअभीशुः । अ॒श्वि॒ना॒ ।

परि॑ । द्यावा॑पृथि॒वी इति॑ । भूष॑ति । श्रु॒तः । तेन॑ । ना॒स॒त्या॒ । आ । ग॒त॒म् ॥५

रथः । यः । वाम् । त्रिऽवन्धुरः । हिरण्यऽअभीशुः । अश्विना ।

परि । द्यावापृथिवी इति । भूषति । श्रुतः । तेन । नासत्या । आ । गतम् ॥५

हे "अश्विना अश्विनौ "त्रिवन्धुरः । वन्धुरं सारथिस्थानम्। त्रिप्रकारवन्धुरोपेतः । यद्वा । द्वे ईषे तन्मध्ये रज्जुसज्जनार्थको दण्डः एते त्रयो वन्धुरशब्देनोच्यन्ते । त्रिवन्धुरयुक्तः "हिरण्याभीशुः। हिरण्मयाश्वादिरज्जुः "वां युवयोः "यः "रथः "श्रुतः सर्वत्र प्रसिद्धः सन् "द्यावापृथिवी द्यावापृथिव्यौ "परि "भूषति स्वबलेन परिभवति । भवतेर्लेटि सिप्यडागमः । यद्वा परितः स्वप्रकाशेनालंकरोति । हे "नासत्या नासत्यौ "तेन पूर्वोक्तेन रथेन "आ "गतम् आगच्छतम् ॥ ॥ ५ ॥

द॒श॒स्यंता॒ मन॑वे पू॒र्व्यं दि॒वि यव॒ं वृके॑ण कर्षथः ।

ता वा॑म॒द्य सु॑म॒तिभिः॑ शुभस्पती॒ अश्वि॑ना॒ प्र स्तु॑वीमहि ॥६

द॒श॒स्यन्ता॑ । मन॑वे । पू॒र्व्यम् । दि॒वि । यव॑म् । वृके॑ण । क॒र्ष॒थ॒ः ।

ता । वा॒म् । अ॒द्य । सु॒म॒तिऽभिः॑ । शु॒भ॒ः । प॒ती॒ इति॑ । अश्वि॑ना । प्र । स्तु॒वी॒म॒हि॒ ॥६

दशस्यन्ता । मनवे । पूर्व्यम् । दिवि । यवम् । वृकेण । कर्षथः ।

ता । वाम् । अद्य । सुमतिऽभिः । शुभः । पती इति । अश्विना । प्र । स्तुवीमहि ॥६

हे अश्विनौ "पूर्व्यं पुरातनं "दिवि द्युलोके स्थितमुदकं "मनवे एतन्नामकाय राज्ञे "दशस्यन्ता दशस्यन्तौ प्रयच्छन्तौ युवां "वृकेण। ' वृको लाङ्गलं भवति विकर्तनात्' (निरु. ६.२६) इति यास्कः। तेन लाङ्गलेन "यवं यवनामकं धान्यं "कर्षथः । पुनश्च तस्मै विलेखनं कुरुथः । "शुभस्पती उदकस्य पालयितारौ हे "अश्विना अश्विनौ "ता तौ पूर्वोक्तलक्षणयुक्तौ "वां युवाम् "अद्य अस्मिन् यज्ञदिने "सुमतिभिः शोभनाभिः स्तुतिभिः प्रकर्षेण "स्तुवीमहि वयं स्तुमः ॥

उप॑ नो वाजिनीवसू या॒तमृ॒तस्य॑ प॒थिभिः॑ ।

येभि॑स्तृ॒क्षिं वृ॑षणा त्रासदस्य॒वं म॒हे क्ष॒त्राय॒ जिन्व॑थः ॥७

उप॑ । न॒ः । वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनीऽवसू । या॒तम् । ऋ॒तस्य॑ । प॒थिऽभिः॑ ।

येभिः॑ । तृ॒क्षिम् । वृ॒ष॒णा॒ । त्रा॒स॒द॒स्य॒वम् । म॒हे । क्ष॒त्राय॑ । जिन्व॑थः ॥७

उप । नः । वाजिनीवसू इति वाजिनीऽवसू । यातम् । ऋतस्य । पथिऽभिः ।

येभिः । तृक्षिम् । वृषणा । त्रासदस्यवम् । महे । क्षत्राय । जिन्वथः ॥७

हे “वाजिनीवसू अन्नधनवन्तौ । अन्नमेव धनं यथोस्तौ । अश्विनौ "ऋतस्य सत्यभूतस्य यज्ञस्य “पथिभिः मार्गैः “नः अस्मान् “उप “यातम् आगच्छतम् । “वृषणा वृषणौ धनानां सेक्तारौ हे अश्विनौ “त्रासदस्यवं त्रसदस्योः पुत्रं “तृक्षिम् एतन्नामकं "येभिः यैर्यज्ञमार्गैः "महे महते “क्षत्राय धनाय "जिन्वथः प्रीणयथ । एवं तैर्मार्गैरस्मान् धनादिभिः प्रीणयितुमागच्छतमित्यर्थः ॥

अ॒यं वा॒मद्रि॑भिः सु॒तः सोमो॑ नरा वृषण्वसू ।

आ या॑तं॒ सोम॑पीतये॒ पिब॑तं दा॒शुषो॑ गृ॒हे ॥८

अ॒यम् । वा॒म् । अद्रि॑ऽभिः । सु॒तः । सोमः॑ । न॒रा॒ । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू ।

आ । या॒त॒म् । सोम॑ऽपीतये । पिब॑तम् । दा॒शुषः॑ । गृ॒हे ॥८

अयम् । वाम् । अद्रिऽभिः । सुतः । सोमः । नरा । वृषण्वसू इति वृषण्ऽवसू ।

आ । यातम् । सोमऽपीतये । पिबतम् । दाशुषः । गृहे ॥८

"नरा सर्वस्य नेतारौ यद्वा स्तोतॄणां धनस्य नेतारौ “वृषण्वसू वर्षणशीलधनवन्तौ हे अश्विनौ “वां युष्मदर्थम् "अद्रिभिः ग्रावभिः "अयं “सोमः “सुतः अभिषुतः । तस्मात् “सोमपीतये सोमपानार्थं युवाम् “आ “यातम् । आगत्य च “दाशुषः हविर्दत्तवतो यजमानस्य “गृहे यज्ञस्थाने सोमं युवां “पिबतम् ॥

आ हि रु॒हत॑मश्विना॒ रथे॒ कोशे॑ हिर॒ण्यये॑ वृषण्वसू ।

यु॒ंजाथा॒ं पीव॑री॒रिषः॑ ॥९

आ । हि । रु॒हत॑म् । अ॒श्वि॒ना॒ । रथे॑ । कोशे॑ । हि॒र॒ण्यये॑ । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू ।

यु॒ञ्जाथा॑म् । पीव॑रीः । इषः॑ ॥९

आ । हि । रुहतम् । अश्विना । रथे । कोशे । हिरण्यये । वृषण्वसू इति वृषण्ऽवसू ।

युञ्जाथाम् । पीवरीः । इषः ॥९

“वृषण्वसू वर्षणशीलधनौ हे "अश्विना अश्विनौ “हिरण्यये हिरण्मयरज्ज्वादियुक्ते “कोशे आयुधादीनां कोशस्थाने रमणशीले “रथे । हिरवधारणे । युवामेव “आ “रुहतम् आरोहणं कुरुतम् । ततः “पीवरीः पावयितॄणि स्थूलानि वा “इषः अन्नानि "युञ्जाथाम् अस्मासु योजयतम् ॥

याभिः॑ प॒क्थमव॑थो॒ याभि॒रध्रि॑गुं॒ याभि॑र्ब॒भ्रुं विजो॑षसं ।

ताभि॑र्नो म॒क्षू तूय॑मश्वि॒ना ग॑तं भिष॒ज्यत॒ं यदातु॑रं ॥१०

याभिः॑ । प॒क्थम् । अव॑थः । याभिः॑ । अध्रि॑ऽगुम् । याभिः॑ । ब॒भ्रुम् । विऽजो॑षसम् ।

ताभिः॑ । न॒ः । म॒क्षु । तूय॑म् । अ॒श्वि॒ना॒ । आ । ग॒त॒म् । भि॒ष॒ज्यत॑म् । यत् । आतु॑रम् ॥१०

याभिः । पक्थम् । अवथः । याभिः । अध्रिऽगुम् । याभिः । बभ्रुम् । विऽजोषसम् ।

ताभिः । नः । मक्षु । तूयम् । अश्विना । आ । गतम् । भिषज्यतम् । यत् । आतुरम् ॥१०

हे अश्विनौ “याभिः ऊतिभिः “पक्थम् एतन्नामकं राजानम् “अवथः रक्षथः । “याभिः ऊतिभिश्च “अध्रिगुम् अधृतगमनं राजानमवथः । “याभिः ऊतिभिश्च “बभ्रुं राजानं च "विजोषसं विशेषेण सोमैः प्रीणयन्तम् । एतान् सर्वान् यैः पालनैरवथः "ताभिः तै रक्षणैः "मक्षु क्षिप्रं “तूयं तूर्णं “न अस्मान् "आ "गतं रक्षणार्थमागच्छतम् । किंच “यत् “आतुरं रोगादिसहितमस्माकं पुत्रादिकं प्रति “भिषज्यतं भैषज्यं कुरुतम् । भिषक्कण्ड्वादिः ॥ ॥ ६ ॥

यदध्रि॑गावो॒ अध्रि॑गू इ॒दा चि॒दह्नो॑ अ॒श्विना॒ हवा॑महे ।

व॒यं गी॒र्भिर्वि॑प॒न्यवः॑ ॥११

यत् । अध्रि॑ऽगावः । अध्रि॑गू॒ इत्यध्रि॑ऽगू । इ॒दा । चि॒त् । अह्नः॑ । अ॒श्विना॑ । हवा॑महे ।

व॒यम् । गी॒ःऽभिः । वि॒प॒न्यवः॑ ॥११

यत् । अध्रिऽगावः । अध्रिगू इत्यध्रिऽगू । इदा । चित् । अह्नः । अश्विना । हवामहे ।

वयम् । गीःऽभिः । विपन्यवः ॥११

“अध्रिगावः अधृतगमनाः कर्मसु त्वरमाणाः “विपन्यवः मेधाविनः “वयम् “अध्रिगू अधृतगमनौ संग्रामे शत्रुवधार्थं त्वरया गच्छन्तौ “अश्विना अश्विनौ युवाम् “अह्नः दिवसस्य “इदा “चित् इदानीमेव प्रातःकाले “गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः “यत् यदा “हवामहे युवामाह्वयामस्तदा ताभिरूतिभिरस्मानागच्छतमित्युत्तरत्र संबन्धः ।।

ताभि॒रा या॑तं वृष॒णोप॑ मे॒ हवं॑ वि॒श्वप्सुं॑ वि॒श्ववा॑र्यं ।

इ॒षा मंहि॑ष्ठा पुरु॒भूत॑मा नरा॒ याभि॒ः क्रिविं॑ वावृ॒धुस्ताभि॒रा ग॑तं ॥१२

ताभिः॑ । आ । या॒त॒म् । वृ॒ष॒णा॒ । उप॑ । मे॒ । हव॑म् । वि॒श्वऽप्सु॑म् । वि॒श्वऽवा॑र्यम् ।

इ॒षा । मंहि॑ष्ठा । पु॒रु॒ऽभूत॑मा । न॒रा॒ । याभि॑ः । क्रिवि॑म् । व॒वृ॒धुः । ताभि॑ः । आ । ग॒त॒म् ॥१२

ताभिः । आ । यातम् । वृषणा । उप । मे । हवम् । विश्वऽप्सुम् । विश्वऽवार्यम् ।

इषा । मंहिष्ठा । पुरुऽभूतमा । नरा । याभिः । क्रिविम् । ववृधुः । ताभिः । आ । गतम् ॥१२

"वृषणा वृषणौ वर्षणशीलौ हे अश्विनौ "विश्वप्सुम् । प्सुरिति रूपनाम। स्तोत्रशस्त्रात्मकत्वेन नानारूपं विश्ववार्यं सर्वैर्देवैर्वरणीयं "मे मदीयं "हवं युष्मद्विषयमाह्वानम् "आ अभिमुखीकृत्य "ताभिः ऊतिभिः उप "यातं युवामागच्छतम् । याभिः "नरा नरौ सर्वस्य नेतारावश्विनौ "इषा। ' इष इच्छायाम्'। हवींषीच्छन्तौ "मंहिष्ठा मंहिष्ठावतिशयेन धनानां दातारौ "पुरुभूतमा पुरुभूतमौ युद्धेष्वत्यन्तं पुरुधा भवन्तौ यद्वातिशयेन बहूनां शत्रूणामभिभवितारौ भवन्तौ "क्रिविं कूपं प्रति "याभिः ऊतिभिरुदकानि "वावृधुः अवर्धयतः । द्वयोर्बहुवचनं पूजार्थम् । कूपपतितो वन्दनो मायाभिः कूपं पूरयित्वा युवाभ्यामुत्थापितः खलु । तथा मन्त्रः---' उद्वन्दनमैरयतं स्वर्दृशे' (ऋ. सं. १. ११२. ५) इति । "ताभिः तैः पालनैः "आ "गतम् अस्मद्रक्षणार्थमागच्छतम् ॥

तावि॒दा चि॒दहा॑ना॒ं ताव॒श्विना॒ वंद॑मान॒ उप॑ ब्रुवे ।

ता उ॒ नमो॑भिरीमहे ॥१३

तौ । इ॒दा । चि॒त् । अहा॑नाम् । तौ । अ॒श्विना॑ । वन्द॑मानः । उप॑ । ब्रु॒वे॒ ।

तौ । ऊ॒ं इति॑ । नम॑ःऽभिः । ई॒म॒हे॒ ॥१३

तौ । इदा । चित् । अहानाम् । तौ । अश्विना । वन्दमानः । उप । ब्रुवे ।

तौ । ऊं इति । नमःऽभिः । ईमहे ॥१३

"तौ संग्रामे आयुधानि स्तोतृभ्यो धनानि वा विस्तारयन्तौ पूर्वोक्तौ "अश्विना अश्विनौ "अहानाम् अह्नाम् "इदा "चित् इदानीमेव प्रातःकाले "वन्दमानः अभिवादनं कुर्वन् सन् "उप "ब्रुवे तयोः समीपे स्तौमि। ततः "ता "उ तावेव "नमोभिः हविर्भिः स्तोत्रैर्वा "ईमहे वयं धनादिकं याचामहे ॥

तावि॒द्दो॒षा ता उ॒षसि॑ शु॒भस्पती॒ ता याम॑न्रु॒द्रव॑र्तनी ।

मा नो॒ मर्ता॑य रि॒पवे॑ वाजिनीवसू प॒रो रु॑द्रा॒वति॑ ख्यतं ॥१४

तौ । इत् । दो॒षा । तौ । उ॒षसि॑ । शु॒भः । पती॒ इति॑ । ता । याम॑न् । रु॒द्रव॑र्तनी॒ इति॑ रु॒द्रऽव॑र्तनी ।

मा । न॒ः । मर्ता॑य । रि॒पवे॑ । वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनीऽवसू । प॒रः । रु॒द्रौ॒ । अति॑ । ख्य॒त॒म् ॥१४

तौ । इत् । दोषा । तौ । उषसि । शुभः । पती इति । ता । यामन् । रुद्रवर्तनी इति रुद्रऽवर्तनी ।

मा । नः । मर्ताय । रिपवे । वाजिनीवसू इति वाजिनीऽवसू । परः । रुद्रौ । अति । ख्यतम् ॥१४

“शुभस्पती उदकस्य पालयितारौ "रुद्रवर्तनी युद्धे रोदनशीलमार्गौ स्तूयमानमार्गौ वा "तावित् तावेवाश्विनौ "दोषा दोषायां रात्रौ “तौ एव "उषसि उषःकाले तावश्विनौ “यामन् यामन्यहनि च सर्वेषु कालेषु वयमश्विनावाह्वयामः । एवं सति “वाजिनीवसू अन्नधनौ "रुद्रौ हे अश्विनौ “मर्ताय मनुष्याय “रिपवे शत्रवे "नः अस्मान् “परः परस्तात् “मा "अति “ख्यतं मा ब्रूतम् । शत्रवे अस्मान्मा कुरुतमित्यर्थः ॥

आ सुग्म्या॑य॒ सुग्म्यं॑ प्रा॒ता रथे॑ना॒श्विना॑ वा स॒क्षणी॑ ।

हु॒वे पि॒तेव॒ सोभ॑री ॥१५

आ । सुग्म्या॑य । सुग्म्य॑म् । प्रा॒तरिति॑ । रथे॑न । अ॒श्विना॑ । वा॒ । स॒क्षणी॒ इति॑ ।

हु॒वे । पि॒ताऽइ॑व । सोभ॑री ॥१५

आ । सुग्म्याय । सुग्म्यम् । प्रातरिति । रथेन । अश्विना । वा । सक्षणी इति ।

हुवे । पिताऽइव । सोभरी ॥१५

“वा अपि च "सक्षणी सेवनीयशीलौ “अश्विना अश्विनौ युवां “सुग्म्याय सुखार्हाय मह्यं “सुग्म्यं सुखं प्रातःकाले “रथेन वहतम् । ततः "सोभरी सोभरिरहं “हुवे युवामाह्वयामि । तत्र दृष्टान्तः । “पितेव यथा मम पिता आजुहाव तद्वदहमाह्वयामि ॥ ॥ ७ ॥

मनो॑जवसा वृषणा मदच्युता मक्षुंग॒माभि॑रू॒तिभिः॑ ।

आ॒रात्ता॑च्चिद्भूतम॒स्मे अव॑से पू॒र्वीभिः॑ पुरुभोजसा ॥१६

मनः॑ऽजवसा । वृ॒ष॒णा॒ । म॒द॒ऽच्यु॒ता॒ । म॒क्षु॒म्ऽग॒माभिः॑ । ऊ॒तिऽभिः॑ ।

आ॒रात्ता॑त् । चि॒त् । भू॒त॒म् । अ॒स्मे इति॑ । अव॑से । पू॒र्वीभिः॑ । पु॒रु॒ऽभो॒ज॒सा॒ ॥१६

मनःऽजवसा । वृषणा । मदऽच्युता । मक्षुम्ऽगमाभिः । ऊतिऽभिः ।

आरात्तात् । चित् । भूतम् । अस्मे इति । अवसे । पूर्वीभिः । पुरुऽभोजसा ॥१६

हे "मनोजवसा मनोवच्छीघ्रं गच्छन्तौ "वृषणा वृषणौ धनानां वर्षितारौ “मदच्युता । माद्यन्तीति मदाः शत्रवः । तेषां च्यावयितारौ “पुरुभोजसा बहूनां भोक्तारौ रक्षकौ यद्वा बहून् स्तोतॄन् धनादिभिर्भोजयन्तौ हे अश्विनौ “मक्षुंगमाभिः शीघ्रं गच्छन्तीभिः “ऊतिभिः रक्षाभिः "पूर्वीभिः बहुभिः “अस्मे अस्माकम् “अवसे रक्षणाय "आरात्ताच्चित् अन्तिक एव “भूतं भवतम् ॥

आ नो॒ अश्वा॑वदश्विना व॒र्तिर्या॑सिष्टं मधुपातमा नरा ।

गोम॑द्दस्रा॒ हिर॑ण्यवत् ॥१७

आ । न॒: । अश्वं॑ऽवत् । अ॒श्वि॒ना॒ । व॒र्तिः । या॒सि॒ष्टम् । म॒धु॒ऽपा॒त॒मा॒ । न॒रा॒ ।

गोऽमं॑त् । द॒स्रा॒ । हिरं॑ण्यऽवत् ॥१७

आ । नः । अश्वऽवत् । अश्विना । वर्तिः । यासिष्टम् । मधुऽपातमा । नरा ।

गोऽमत् । दस्रा । हिरण्यऽवत् ॥१७

"मधुपातमा अतिशयेन मधोः सोमस्य पातारौ “नरा नेतारौ "दस्रा सर्वैर्दर्शनीयौ हे अश्विनौ “नः अस्माकं “वर्तिः । वर्तन्तेऽत्रेति वर्तिर्गृहम् । तत् “अश्वावत् अश्वयुक्तं “गोमत् गवादियुक्तं “हिरण्यवत् सुवर्णकनकादियुक्तं कृत्वा “आ “यासिष्टम् आगच्छतम् । यद्वा । अस्मान् प्रति वर्तिर्यज्ञमार्गम् अश्वादियुक्तं कृत्वागच्छतम् । यातेलुङि रूपम् ॥

सु॒प्रा॒व॒र्गं सु॒वीर्यं॑ सु॒ष्ठु वार्य॒मना॑धृष्टं रक्ष॒स्विना॑ ।

अ॒स्मिन्ना वा॑मा॒याने॑ वाजिनीवसू॒ विश्वा॑ वा॒मानि॑ धीमहि ॥१८

सु॒ऽप्रा॒व॒र्गम् । सु॒ऽवीर्य॑म् । सु॒ष्ठु । वार्य॑म् । अना॑धृष्टम् । र॒क्ष॒स्विना॑ ।

अ॒स्मिन् । आ । वा॒म् । आ॒ऽयाने॑ । वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनीऽवसू । विश्वा॑ । वा॒मानि॑ । धी॒म॒हि॒ ॥१८

सुऽप्रावर्गम् । सुऽवीर्यम् । सुष्ठु । वार्यम् । अनाधृष्टम् । रक्षस्विना ।

अस्मिन् । आ । वाम् । आऽयाने । वाजिनीवसू इति वाजिनीऽवसू । विश्वा । वामानि । धीमहि ॥१८

"सुप्रावर्गं शोभनं प्रवर्जनं यस्य तत् । स्तोतृभ्यः स्वयमेव प्रयच्छतीत्यर्थः । तथाविधं “सुवीर्यं शोभनवीर्यं “सुष्ठु शोभनं यथा भवति तथा “वार्यं सर्वैर्वरणीयं “रक्षस्विना बलवतापि “अनाधृष्टम् अनभिभवनीयं धनम् “आ “धीमहि त्वत्तो वयं धारयामः । तदेवाह । “वाजिनीवसू बलयुक्तधनौ अन्नधनौ वाश्विनौ “वां युवयोः “अस्मिन् “आयाने अस्मद्गृहं प्रत्यागमने “विश्वा विश्वानि दिव्यभौमादीनि “वामानि धनानि आ धीमहि वयं लभामहे । 'धीङ् आधारे' इत्यस्य लिङि छान्दसो विकरणस्य लुक् ॥ ॥ ८ ॥

---

**टिप्पणी**

८.२२.१८ सुऽप्रावर्गम् सुऽवीर्यम् इति

विश्वा वामानि धीमहि (इधीमहि) - एनं चत्वारि वामानि गच्छन्ति निष्कः कंसो अश्वतरो हस्ती। अधिपतिर् स्वानां चान्येषा च य एवं वेद ॥ - पैप्पलाद संहिता ११.१६.१३ (https://sa.wikisource.org/s/r11) (१२.६.१३)

# ऋग्वेदः सूक्तं ८.२३

ऋग्वेदः - मण्डल ८
← सूक्तं ८.२२ सूक्तं ८.२३ सूक्तं ८.२४ →
विश्वमना वैयश्वः।

दे. अग्निः। उष्णिक्।

---

ईळिष्वा हि प्रतीव्यं यजस्व जातवेदसम् ।

चरिष्णुधूममगृभीतशोचिषम् ॥१॥

दामानं विश्वचर्षणेऽग्निं विश्वमनो गिरा ।

उत स्तुषे विष्पर्धसो रथानाम् ॥२॥

येषामाबाध ऋग्मिय इषः पृक्षश्च निग्रभे ।

उपविदा वह्निर्विन्दते वसु ॥३॥

उदस्य शोचिरस्थाद्दीदियुषो व्यजरम् ।

तपुर्जम्भस्य सुद्युतो गणश्रियः ॥४॥

उदु तिष्ठ स्वध्वर स्तवानो देव्या कृपा ।

अभिख्या भासा बृहता शुशुक्वनिः ॥५॥

अग्ने याहि सुशस्तिभिर्हव्या जुह्वान आनुषक् ।

यथा दूतो बभूथ हव्यवाहनः ॥६॥

अग्निं वः पूर्व्यं हुवे होतारं चर्षणीनाम् ।

तमया वाचा गृणे तमु व स्तुषे ॥७॥

यज्ञेभिरद्भुतक्रतुं यं कृपा सूदयन्त इत् ।

मित्रं न जने सुधितमृतावनि ॥८॥

ऋतावानमृतायवो यज्ञस्य साधनं गिरा ।

उपो एनं जुजुषुर्नमसस्पदे ॥९॥

अच्छा नो अङ्गिरस्तमं यज्ञासो यन्तु संयतः ।

होता यो अस्ति विक्ष्वा यशस्तमः ॥१०॥

अग्ने तव त्ये अजरेन्धानासो बृहद्भाः ।

अश्वा इव वृषणस्तविषीयवः ॥११॥

स त्वं न ऊर्जां पते रयिं रास्व सुवीर्यम् ।

प्राव नस्तोके तनये समत्स्वा ॥१२॥

यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशि ।

विश्वेदग्निः प्रति रक्षांसि सेधति ॥१३॥

श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते ।

नि मायिनस्तपुषा रक्षसो दह ॥१४॥

न तस्य मायया चन रिपुरीशीत मर्त्यः ।

यो अग्नये ददाश हव्यदातिभिः ॥१५॥

व्यश्वस्त्वा वसुविदमुक्षण्युरप्रीणादृषिः ।

महो राये तमु त्वा समिधीमहि ॥१६॥

उशना काव्यस्त्वा नि होतारमसादयत् ।

आयजिं त्वा मनवे जातवेदसम् ॥१७॥

विश्वे हि त्वा सजोषसो देवासो दूतमक्रत ।

श्रुष्टी देव प्रथमो यज्ञियो भुवः ॥१८॥

इमं घा वीरो अमृतं दूतं कृण्वीत मर्त्यः ।

पावकं कृष्णवर्तनिं विहायसम् ॥१९॥

तं हुवेम यतस्रुचः सुभासं शुक्रशोचिषम् ।

विशामग्निमजरं प्रत्नमीड्यम् ॥२०॥

यो अस्मै हव्यदातिभिराहुतिं मर्तोऽविधत् ।

भूरि पोषं स धत्ते वीरवद्यशः ॥२१॥

प्रथमं जातवेदसमग्निं यज्ञेषु पूर्व्यम् ।

प्रति स्रुगेति नमसा हविष्मती ॥२२॥

आभिर्विधेमाग्नये ज्येष्ठाभिर्व्यश्ववत् ।

मंहिष्ठाभिर्मतिभिः शुक्रशोचिषे ॥२३॥

नूनमर्च विहायसे स्तोमेभि स्थूरयूपवत् ।

ऋषे वैयश्व दम्यायाग्नये ॥२४॥

अतिथिं मानुषाणां सूनुं वनस्पतीनाम् ।

विप्रा अग्निमवसे प्रत्नमीळते ॥२५॥

महो विश्वाँ अभि षतोऽभि हव्यानि मानुषा ।

अग्ने नि षत्सि नमसाधि बर्हिषि ॥२६॥

वंस्वा नो वार्या पुरु वंस्व रायः पुरुस्पृहः ।

सुवीर्यस्य प्रजावतो यशस्वतः ॥२७॥

त्वं वरो सुषाम्णेऽग्ने जनाय चोदय ।

सदा वसो रातिं यविष्ठ शश्वते ॥२८॥

त्वं हि सुप्रतूरसि त्वं नो गोमतीरिषः ।

महो रायः सातिमग्ने अपा वृधि ॥२९॥

अग्ने त्वं यशा अस्या मित्रावरुणा वह ।

ऋतावाना सम्राजा पूतदक्षसा ॥३०॥

**सायणभाष्यम्**

ईळिष्व' इति त्रिंशदृचं तृतीयं सूक्तम् । व्यश्वपुत्रो विश्वमना ऋषिः । उष्णिक् छन्दः । अग्निर्देवता । तथा चानुक्रान्तम्-' ईळिष्व त्रिंशद्विश्वमना वैयश्व आग्नेयमौष्णिहं ह' इति । प्रातरनुवाक आग्नेये क्रतावौष्णिहे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च- ईलिष्वा हीत्यौष्णिहम्' (आश्व. श्रौ. ४. १३) इति ॥

ईळिं॑ष्वा॒ हि प्र॑ती॒व्यं१॒॑ यज॑स्व जा॒तवे॑दसं ।

च॒रि॒ष्णुधू॑म॒मगृ॑भीतशोचिषं ॥१

ईळि॑ष्व । हि । प्र॒ती॒व्य॑म् । यज॑स्व । जा॒तऽवे॑दसम् ।

च॒रि॒ष्णुऽधू॑मम् । अगृ॑भीतऽशोचिषम् ॥१

ईळिष्व । हि । प्रतीव्यम् । यजस्व । जातऽवेदसम् ।

चरिष्णुऽधूमम् । अगृभीतऽशोचिषम् ॥१

“प्रतीव्यं शत्रुषु प्रतिगमनशीलमग्निम् । हिरवधारणे । अग्निमेव “ईळिव स्तुतिभिः स्तोत्रं कुरु ।। किंच चरिष्णुधूमं सर्वतश्चरणशीलधूमजालम् "अगृभीतशोचिषं रक्षोभिरगृह्यमाणदीप्ति जातवेदसं जातप्रज्ञम् । यद्वा । जातानि भूतानि वेत्तीति जातवेदाः । तमग्निं “यजस्व हविर्भिः पूजय ।।

दा॒मानं॑ विश्वचर्षणे॒ऽग्निं विं॑श्वमनो गि॒रा ।

उ॒त स्तु॑षे॒ विष्प॑र्धसो॒ रथा॑नां ॥२

दा॒मान॑म् । वि॒श्व॒ऽच॒र्ष॒णे॒ । अ॒ग्निम् । वि॒श्व॒ऽम॒नः॒ । गि॒रा ।

उ॒त । स्तु॒षे॒ । विऽस्प॑र्धसः । रथा॑नाम् ॥२

दामानम् । विश्वऽचर्षणे । अग्निम् । विश्वऽमनः । गिरा ।

उत । स्तुषे । विऽस्पर्धसः । रथानाम् ॥२

“उत अपि च हे “विश्वचर्षणे विश्वस्य सर्वस्यार्थस्य ज्ञानेन द्रष्टः “विश्वमनः । सर्वेषु स्थावरजङ्गमात्मकेष्वेकं मनो यस्य सः । एतन्नामक हे ऋषे “विस्पर्धसः विगतमात्सर्यस्य यजमानस्य “रथानां रथादीनां “दामानं दातारमेवंविधम् “अग्निं “गिरा स्तुतिलक्षणया वाचा "स्तुषे स्तोत्रं कुरु ॥

येषा॑माबा॒ध ऋ॒ग्मिय॑ इ॒षः पृ॒क्षश्च॑ नि॒ग्रभे॑ ।

उ॒प॒विदा॒ वह्नि॑र्विंदते॒ वसु॑ ॥३

येषा॑म् । आ॒ऽबा॒धः । ऋ॒ग्मियः॑ । इ॒षः । पृ॒क्षः । च॒ । नि॒ऽग्रभे॑ ।

उ॒प॒ऽविदा॑ । वह्निः॑ । वि॒न्द॒ते॒ । वसु॑ ॥३

येषाम् । आऽबाधः । ऋग्मियः । इषः । पृक्षः । च । निऽग्रभे ।

उपऽविदा । वह्निः । विन्दते । वसु ॥३

“आबाधः शत्रूणामाभिमुख्येन बाधकः “ऋग्मियः ऋग्भिरर्चनीयोऽग्निः “येषाम् अयजमानानाम् “इषः अन्नानि “पृक्षः अन्नादिरसांश्च निग्रभे निगृह्णीते । ग्रहेर्लटि छान्दसो विकरणस्थ लुक् । लोपस्त आत्मनेपदेषु' इति तलोपः । ‘ हृग्रहोर्भश्छन्दसि इति भकारः । निगृह्य च “वह्निः हविषां वोढा स एवाग्निः “उपविदा उपवेदनेन एते हवींषि देवार्थं न प्रयच्छन्तीत्येतज्ज्ञानेन तेषामेव “वसु धनं “विन्दते लभते ॥

उद॑स्य शो॒चिर॑स्थाद्दीदि॒युषो॒ व्य१॒॑जर॑ं ।

तपु॑र्जंभस्य सु॒द्युतो॑ गण॒श्रियः॑ ॥४

उत् । अ॒स्य॒ । शो॒चिः । अ॒स्था॒त् । दी॒दि॒युषः॑ । वि । अ॒जर॑म् ।

तपुः॑ऽजम्भस्य । सु॒ऽद्युतः॑ । ग॒ण॒ऽश्रियः॑ ॥४

उत् । अस्य । शोचिः । अस्थात् । दीदियुषः । वि । अजरम् ।

तपुःऽजम्भस्य । सुऽद्युतः । गणऽश्रियः ॥४

“दीदियुषः । दीदितिर्दीप्तिकर्मा । संदीप्यमानस्य “तपुर्जम्भस्य तापयितृदंष्ट्रस्य “सुद्युतः शोभनदीप्तेः “गणश्रियः । हविरादानार्थं यजमानगणं श्रयति तस्य । “अस्य एतादृशोऽग्नेः “अजरं जरारहितं पुनःपुनर्मथ्यमानत्वान्नूतनं हविर्भिर्वर्धमानत्वादभिनवं वा “शोचिः तेजः “उत् “अस्थात् उद्गतमभूत् ॥

उदु॑ तिष्ठ स्वध्वर॒ स्तवा॑नो दे॒व्या कृ॒पा ।

अ॒भि॒ख्या भा॒सा बृ॑ह॒ता शु॑शु॒क्वनिः॑ ॥५

उत् । ऊं॒ इति॑ । ति॒ष्ठ॒ । सु॒ऽअ॒ध्व॒र॒ । स्तवा॑नः । दे॒व्या । कृ॒पा ।

अ॒भि॒ऽख्या । भा॒सा । बृ॒ह॒ता । शु॒शु॒क्वनिः॑ ॥५

उत् । ऊं इति । तिष्ठ । सुऽअध्वर । स्तवानः । देव्या । कृपा ।

अभिऽख्या । भासा । बृहता । शुशुक्वनिः ॥५

“स्वध्वर शोभनयज्ञ हे अग्ने “अभिख्या अभिमुखं गच्छन्त्याभितः प्रसिद्धया वा “बृहता बृहत्या “भासा दीप्त्या “शुशुक्वनिः । ‘ शुच दीप्तौ'। दीपनशीलस्त्वं “स्तवानः स्तोतृभिः स्तूयमानः सन् “देव्या द्योतमानया "कृपा ज्वालया "उत्तिष्ठ तमःपरिहारार्थमुद्गच्छ । उ प्रसिद्धौ ॥ ॥ ९ ॥

अग्ने॑ या॒हि सु॑श॒स्तिभि॑र्ह॒व्या जुह्वा॑न आनु॒षक् ।

यथा॑ दू॒तो ब॒भूथ॑ हव्य॒वाह॑नः ॥६

अग्ने॑ । या॒हि । सु॒श॒स्तिऽभिः॑ । ह॒व्या । जुह्वा॑नः । आ॒नु॒षक् ।

यथा॑ । दू॒तः । ब॒भूथ॑ । ह॒व्य॒ऽवाह॑नः ॥६

अग्ने । याहि । सुशस्तिऽभिः । हव्या । जुह्वानः । आनुषक् ।

यथा । दूतः । बभूथ । हव्यऽवाहनः ॥६

हे “अग्ने “आनुषक् अनुषक्तं यथा भवति तथा “हव्या हव्यानि हवनयोग्यान्यन्नानि “जुह्वानः जुह्वन् देवेभ्यः प्रयच्छंस्त्वं “सुशस्तिभिः शोभनैः स्तोत्रैः सह “याहि देवानां हविष्प्रदानार्थं गच्छ । अस्य हविष्प्रदातृत्वं कथमित्याशङ्क्याह । "यथा त्वं “हव्यवाहनः हविषां वोढा देवानां “दूतो “बभूथ भवसि तथा जुह्वान इत्यन्वयः ॥

अ॒ग्निं वः॑ पू॒र्व्यं हु॑वे॒ होता॑रं चर्षणी॒नां ।

तम॒या वा॒चा गृ॑णे॒ तमु॑ वः स्तुषे ॥७

अ॒ग्निम् । व॒ः । पू॒र्व्यम् । हु॒वे॒ । होता॑रम् । च॒र्ष॒णी॒नाम् ।

तम् । अ॒या । वा॒चा । गृ॒णे॒ । तम् । ऊं॒ इति॑ । व॒ः । स्तु॒षे॒ ॥७

अग्निम् । वः । पूर्व्यम् । हुवे । होतारम् । चर्षणीनाम् ।

तम् । अया । वाचा । गृणे । तम् । ऊं इति । वः । स्तुषे ॥७

“चर्षणीनां मनुष्याणां “होतारं होमनिष्पादकं “पूर्व्यं पुरातनं “वः यष्टृत्वेन युष्मत्संबन्धिनम् “अग्निं “हुवे आह्वयामि । आहूय च “तम् अग्निम् “अया अनया सूक्तरूपया “वाचा गिरा “गृणे शंसामि । किंच “वः युष्मदर्थं “तमु तमेवाग्निं “स्तुषे स्तौमि ॥

य॒ज्ञेभि॑र॒द्भुत॑क्रतुं॒ यं कृ॒पा सू॒दय॑न्त॒ इत् ।

मि॒त्रं न जने॒ सुधि॑तमृ॒ताव॑नि ॥८

य॒ज्ञेभिः॑ । अ॒द्भुत॑ऽक्रतुम् । यम् । कृ॒पा । सू॒दय॑न्ते । इत् ।

मि॒त्रम् । न । जने॑ । सुऽधि॑तम् । ऋ॒तऽव॑नि ॥८

यज्ञेभिः । अद्भुतऽक्रतुम् । यम् । कृपा । सूदयन्ते । इत् ।

मित्रम् । न । जने । सुऽधितम् । ऋतऽवनि ॥८

“अद्भुतक्रतुं बहुविधप्रज्ञं यद्वा चित्रकर्माणं "मित्रं “न यजमानानां मित्रमिव स्थितं "सुधितं हविर्भिः संतर्पितं "यम् अग्निम् "ऋतावनि यज्ञवति “जने यजमाने “कृपा स्वसामर्थ्येन “यज्ञेभिः यज्ञैः "सूदयन्ते । सूदिः क्षरणकर्मा । अध्वर्य्वादयः कामान् क्षारयन्त्येव । यजमानस्य कामान् प्रापयन्तीत्यर्थः । तमग्निमुपासेवध्वमित्युत्तरत्र संबन्धः ॥

ऋ॒तावा॑नमृतायवो य॒ज्ञस्य॒ साध॑नं गि॒रा ।

उपो॑ एनं जुजुषु॒र्नम॑सस्प॒दे ॥९

ऋ॒तऽवा॑नम् । ऋ॒त॒ऽय॒वः॒ । य॒ज्ञस्य॑ । साध॑नम् । गि॒रा ।

उषः॑ । ए॒न॒म् । जु॒जु॒षुः॒ । नम॑सः । प॒दे ॥९

ऋतऽवानम् । ऋतऽयवः । यज्ञस्य । साधनम् । गिरा ।

उषः । एनम् । जुजुषुः । नमसः । पदे ॥९

“ऋतायवः यज्ञकामा हे यजमानाः “ऋतावानं यज्ञवन्तं “यज्ञस्य “साधनं साधनभूतम् "एनम् अग्निं “नमसः हविषः “पदे स्थाने यज्ञाङ्गे वा “गिरा स्तुतिलक्षणया वाचा “उपो “जुजुषुः उपासेवध्वम् ॥ ‘ तिङा तिङो भवन्ति' इति मध्यमपुरुषस्य प्रथमपुरुषादेशः ॥

अच्छा॑ नो॒ अंगि॑रस्तमं य॒ज्ञासो॑ यंतु सं॒यतः॑ ।

होता॒ यो अस्ति॑ वि॒क्ष्वा य॒शस्त॑मः ॥१०

अच्छ॑ । नः॒ । अङ्गि॑रःऽतमम् । य॒ज्ञासः॑ । य॒न्तु॒ । स॒म्ऽयतः॑ ।

होता॑ । यः । अस्ति॑ । वि॒क्षु । आ । य॒शःऽत॑मः ॥१०

अच्छ । नः । अङ्गिरःऽतमम् । यज्ञासः । यन्तु । सम्ऽयतः ।

होता । यः । अस्ति । विक्षु । आ । यशःऽतमः ॥१०

“संयतः स्रुगादिभिर्नियमिताः “नः अस्माकं “यज्ञासः यज्ञाः “अङ्गिरस्तमम् अङ्गिरसां विशिष्टमग्निम् “अच्छ आभिमुख्येन च “यन्तु गच्छन्तु । “यः अग्निः “विक्षु मनुष्येषु “होता होमनिष्पादकः सन् “आ सर्वतः “यशस्तमः । लुप्तमत्वर्थीयः । यशस्वितमः “अस्ति भवति तमग्निं यन्त्वित्यन्वयः ॥ ॥१०॥

अग्ने॒ तव॒ त्ये अ॑ज॒रेंधा॑नासो बृ॒हद्भाः ।

अश्वा॑ इव॒ वृष॑णस्तविषी॒यवः॑ ॥११

अग्नें । तव॑ । त्ये । अ॒ज॒र॒ । इन्धा॑नासः । बृ॒हत् । भाः ।

अश्वाः॑ऽइव । वृष॑णः । त॒वि॒षी॒ऽयवः॑ ॥११

अग्ने । तव । त्ये । अजर । इन्धानासः । बृहत् । भाः ।

अश्वाःऽइव । वृषणः । तविषीऽयवः ॥११

“अजर जरारहित हे “अग्ने “इन्धानासः इन्धाना दीप्यमानाः “बृहत् बृहन्तो महान्तः “त्ये ते सर्वगताः “तव त्वदीयाः “भाः भासो रश्मयः “वृषणः कामानां वर्षितारः सन्तः “तविषीयवः बलमाचरन्तो भवन्ति । तत्र दृष्टान्तः । “अश्वाइव । यथा वृषणो रेतसः सेक्तारोऽश्वा बलमाचरन्तो भवन्ति तद्वत् ॥

स त्वं न॑ ऊर्जां पते र॒यिं रा॑स्व सु॒वीर्यं॑ ।

प्राव॑ नस्तो॒के तन॑ये स॒मत्स्वा ॥१२

सः । त्वम् । न॒ः । ऊ॒र्जा॒म् । प॒ते॒ । र॒यिम् । रा॒स्व॒ । सु॒ऽवीर्य॑म् ।

प्र । अ॒व॒ । न॒ः । तो॒के । तन॑ये । स॒मत्ऽसु॑ । आ ॥१२

सः । त्वम् । नः । ऊर्जाम् । पते । रयिम् । रास्व । सुऽवीर्यम् ।

प्र । अव । नः । तोके । तनये । समत्ऽसु । आ ॥१२

“ऊर्जाम् अन्नानां “पते स्वामिन् हे अग्ने “सः तथाविधः “त्वं “नः अस्मभ्यं "सुवीर्यं शोभन वीर्योपेतं “रयिं धनं “रास्व देहि । “नः अस्माकं "तोके पुत्रे “तनये । तनोति विस्तारयति पुत्रमिति तनयः पौत्रः । तस्मिन्वर्तमानं धनं “समत्सु संग्रामेषु च यत् रक्षितव्यं धनं तच्च “प्राव प्रकर्षेण रक्ष । अनेन पुत्रपौत्रप्रार्थनं करोति ॥

यद्वा उ॑ वि॒श्पतिः॑ शि॒तः सुप्री॑तो॒ मनु॑षो वि॒शि ।

विश्वेद॒ग्निः प्रति॒ रक्षाँसि सेधति ॥१३

यत् । वै । ऊँ॒ इतिं । वि॒श्पतिः॑ । शि॒तः । सुऽप्रीतः । मनुंषः । वि॒शि ।

विश्वा॑ । इत् । अ॒ग्निः । प्रतिं । रक्षाँसि । से॒ध॒ति॒ ॥१३

यत् । वै । ऊं इति । विश्पतिः । शितः । सुऽप्रीतः । मनुषः । विशि ।

विश्वा । इत् । अग्निः । प्रति । रक्षांसि । सेधति ॥१३

“विश्पतिः विशां पालयिता "शितः हविर्भिस्तीक्ष्णीकृतः सोऽग्निः “सुप्रीतः सुष्ठु प्रीतः सन् “मनुषः मनुष्यस्य “विशि निवेशने गृहे "यद्वै यदा खलु वर्तते तदानीम् “अग्निः “विश्वेत् विश्वान्येव तस्य बाधकानि "रक्षांसि “प्रति “षेधति हिनस्ति । 'षिधु गत्याम्'। भौवादिकः । “उ प्रसिद्धौ ।

श्रु॒ष्ट्यंग्ने॒ नवं॑स्य मे॒ स्तोमं॑स्य वीर विश्पते ।

नि मा॒यिन॒स्तपुं॑षा र॒क्षसो॑ दह ॥१४

श्रु॒ष्टी । अ॒ग्ने॒ । नवं॑स्य । मे॒ । स्तोमं॑स्य । वी॒र॒ । वि॒श्प॒ते॒ ।

नि । मा॒यिनः॑ । तपुं॑षा । र॒क्षसः॑ । द॒ह॒ ॥१४

श्रुष्टी । अग्ने । नवस्य । मे । स्तोमस्य । वीर । विश्पते ।

नि । मायिनः । तपुषा । रक्षसः । दह ॥१४

“वीर शत्रूणां विनाशयितर्वीर्यवन् “विश्पते विशां पालयितर्हे “अग्ने “नवस्य इदानीं क्रियमाणत्वान्नूतनं “मे मदीयं “स्तोमस्य स्तोत्रशस्त्रादिकं “श्रुष्टी श्रुत्वा “मायिनः मायाविनः “रक्षसः कर्मविघ्नकारिणो राक्षसान् “तपुषा तापकेन तेजसा “नि "दह नितरां भस्मीकुरु ॥ श्रुष्टी । स्नात्व्यादयश्च ' इति निपातितः । वकारलोपश्छान्दसः ॥

न तस्यं मा॒यया॑ च॒न रि॒पुरी॑शीत॒ मर्त्यः॑ ।

यो अ॒ग्नयें द॒दाशं ह॒व्यदा॑तिभिः ॥१५

न । तस्यं । मा॒यया॑ । च॒न । रि॒पुः । ई॒शी॒त॒ । मर्त्यः॑ ।

यः । अ॒ग्नयें । द॒दाशं । ह॒व्यदा॑तिऽभिः ॥१५

न । तस्य । मायया । चन । रिपुः । ईशीत । मर्त्यः ।

यः । अग्नये । ददाश । हव्यदातिऽभिः ॥१५

“मर्त्यः मनुष्यः “रिपुः शत्रुः । चनेति निपातसमुदायोऽप्यर्थे । "मायया "चन माययापि “तस्य जनस्य “न “ईशीत ईश्वरो न भवति । “यः जनः “हव्यदातिभिः हविषां दातृभिर्ऋत्विभिः “अग्नये “ददाश हवींषि प्रयच्छति । तस्य रिपुर्नास्तीत्यर्थः ॥ ॥ ११ ॥

व्यं॑श्वस्त्वा वसु॒विदं॑मुक्ष॒ण्युरं॑प्रीणा॒दृषिः॑ ।

म॒हो रा॒ये तमु॑ त्वा॒ समिं॑धीमहि ॥१६

विऽअं॑श्वः । त्वा॒ । व॒सु॒ऽविदं॑म् । उ॒क्ष॒ण्युः । अ॒प्री॒णा॒त् । ऋषिः॑ ।

म॒हः । रा॒ये । तम् । ऊं॒ इतिं॑ । त्वा॒ । सम् । इ॒धी॒म॒हि॒ ॥१६

विऽअश्वः । त्वा । वसुऽविदम् । उक्षण्युः । अप्रीणात् । ऋषिः ।

महः । राये । तम् । ऊं इति । त्वा । सम् । इधीमहि ॥१६

“उक्षण्युः धनानां सेक्तारमात्मन इच्छन् यद्वा वृष्टिसेक्तारमिच्छन् “व्यश्वः “ऋषिः एतन्नामको मम पिता “वसुविदं वसूनां धनानां लम्भकं “त्वा त्वाम् “अप्रीणात् धनादिप्राप्त्यर्थं हविर्भिरतोषयत् । तथा वयमपि “महः महते “राये धनाय “तमु तथाविधमेव “त्वा त्वां “समिधीमहि सम्यगाज्यादिहविर्भिर्दीपयेम ।।

उ॒शना॑ का॒व्यस्त्वा॒ नि होता॑रमसादयत् ।

आ॒य॒जिं त्वा॒ मनं॑वे जा॒तवें॑दसं ॥१७

उ॒शना॑ । का॒व्यः । त्वा॒ । नि । होता॑रम् । अ॒सा॒द॒य॒त् ।

आ॒ऽय॒जिम् । त्वा॒ । मनं॑वे । जा॒तऽवें॑दसम् ॥१७

उशना । काव्यः । त्वा । नि । होतारम् । असादयत् ।

आऽयजिम् । त्वा । मनवे । जातऽवेदसम् ॥१७

हे अग्ने “काव्यः कविपुत्रः "उशना एतन्नामक ऋषिः “मनवे राज्ञे । तस्य गृह इत्यर्थः । "आयजिम् आभिमुख्येन यष्टारं “जातवेदसं जातप्रज्ञं “त्वा त्वाम् । पुनस्त्वाशब्द आदरार्थः । त्वमेव “होतारं होमनिष्पादकं “नि “असादयत् नितरामुपावेशयत् ।। विश्व हि त्वां सजोषसो देवासो दूतमक्रत । श्रुष्टी दैव प्रथमो यज्ञियौ भुवः॥१८॥

विश्वे॒ हि त्वां॑ स॒जोषं॑सो दे॒वासो॑ दू॒तमक्रं॑त ।

श्रु॒ष्टी दें॑व प्रथ॒मो य॒ज्ञियो॑ भुवः ॥१८

विश्वे॑ । हि । त्वा॒ । स॒ऽजोष॑सः । दे॒वासः॑ । दू॒तम् । अक्र॑त ।

श्रु॒ष्टी । दे॒व॒ । प्र॒थ॒मः । य॒ज्ञियः॑ । भु॒वः॒ ॥१८

विश्वे । हि । त्वा । सऽजोषसः । देवासः । दूतम् । अक्रत ।

श्रुष्टी । देव । प्रथमः । यज्ञियः । भुवः ॥१८

हे अग्ने "विश्वे सर्वे "देवासः देवाः "सजोषसः संगताः सन्तः अस्माकं हवींष्यानयतीति विचार्य "त्वा। हिरवधारणे । त्वामेव "दूतं हविषां वोढारं दूतम् "अक्रत अकार्षुः । ततः "देव द्योतमान हे अग्ने "प्रथमः देवानां मुख्यभूतस्त्वं "श्रुष्टी । श्रुष्टीति क्षिप्रनाम । क्षिप्रं "यज्ञियः देवानां हविर्दातृत्वेन यज्ञार्हः "भुवः भूयाः ।।

इ॒मं घा॑ वी॒रो अ॒मृतं॑ दू॒तं कृ॑ण्वीत॒ मर्त्यः॑ ।

पा॒व॒कं कृ॒ष्णव॑र्तनिं॒ विहा॑यसं ॥१९

इ॒मम् । घ॒ । वी॒रः । अ॒मृत॑म् । दू॒तम् । कृ॒ण्वी॒त॒ । मर्त्यः॑ ।

पा॒व॒कम् । कृ॒ष्णऽव॑र्तनिम् । विऽहा॑यसम् ॥१९

इमम् । घ । वीरः । अमृतम् । दूतम् । कृण्वीत । मर्त्यः ।

पावकम् । कृष्णऽवर्तनिम् । विऽहायसम् ॥१९

अनया यजमानश्चाग्निं देवानां दूतमकार्षीदित्याह। "वीरः कर्मणि समर्थः "मर्त्यः मनुष्यो यजमानः "अमृतं मरणधर्मरहितं "पावकं पापानां शोधकं "कृष्णवर्तनिम्। वर्तनिर्मार्गः । कृष्णमार्गं "विहायसम् । विहाया इति महन्नाम। गुणैस्तेजोऽधिकत्वेन वा महान्तम् "इमं "घ इममेवाग्निं "दूतं देवानां वोढृत्वेन दूतं "कृण्वीत अकार्षीत् ।।

तं हु॑वेम य॒तस्रु॑चः सु॒भासं॑ शु॒क्रशो॑चिषं ।

वि॒शाम॒ग्निम॒जरं॑ प्र॒त्नमीड्यं॑ ॥२०

तम् । हु॒वे॒म॒ । य॒तऽस्रु॑चः । सु॒ऽभास॑म् । शु॒क्रऽशो॑चिषम् ।

वि॒शाम् । अ॒ग्निम् । अ॒जर॑म् । प्र॒त्नम् । ईड्य॑म् ॥२०

तम् । हुवेम । यतऽस्रुचः । सुऽभासम् । शुक्रऽशोचिषम् ।

विशाम् । अग्निम् । अजरम् । प्रत्नम् । ईड्यम् ॥२०

“यतस्रुचः गृहीतस्रुचो यद्वा तत्तत्स्थानेषु नियमितस्रुचो वयं "सुभासं शोभनदीप्तिं “शुक्रशोचिषं दीपनशीलतेजस्कं “विशां स्वामिनम् । यद्वा । विशाम् “ईड्यम् इत्यन्वयः । मनुष्याणां स्तोतव्यम् “अजरं जरारहितं “प्रत्नं पुरातनं “तं तथाविधम् “अग्निं “हुवेम स्तोत्रशस्त्रादिभिराह्वयामः ।। ॥ १२ ॥

यो अ॑स्मै ह॒व्यदा॑तिभि॒राहु॑तिं॒ मर्तोऽवि॑धत् ।

भूरि॒ पोषं॒ स ध॑त्ते वी॒रव॒द्यशः॑ ॥२१

यः । अ॒स्मै॒ । ह॒व्यदा॑तिऽभिः । आऽहु॑तिम् । मर्तः॑ । अवि॑धत् ।

भूरि॑ । पोष॑म् । सः । ध॒त्ते॒ । वी॒रऽव॑त् । यशः॑ ॥२१

यः । अस्मै । हव्यदातिऽभिः । आऽहुतिम् । मर्तः । अविधत् ।

भूरि । पोषम् । सः । धत्ते । वीरऽवत् । यशः ॥२१

“यः “मर्तः मनुष्यः “हव्यदातिभिः हविर्दातृभिर्ऋत्विग्भिः “अस्मै अग्नये “आहुतिम् "अविधत् विदधाति “सः मनुष्यः “भूरि बहु "पोषं धनादिभिः पोषणम् “वीरवत् पुत्रपौत्रादियुक्तं यशः कीर्तिं च “धत्ते धारयति । तस्मै धनादीनि प्रयच्छतीत्यर्थः ।।

प्र॒थ॒मं जा॒तवे॑दसम॒ग्निं य॒ज्ञेषु॑ पू॒र्व्यं ।

प्रति॒ स्रुगे॑ति॒ नम॑सा ह॒विष्म॑ती ॥२२

प्र॒थ॒मम् । जा॒तऽवे॑दसम् । अ॒ग्निम् । य॒ज्ञेषु॑ । पू॒र्व्यम् ।

प्रति॑ । स्रुक् । ए॒ति॒ । नम॑सा । ह॒विष्म॑ती ॥२२

प्रथमम् । जातऽवेदसम् । अग्निम् । यज्ञेषु । पूर्व्यम् ।

प्रति । स्रुक् । एति । नमसा । हविष्मती ॥२२

“प्रथमं देवानां प्रधानभूतं “जातवेदसं जातप्रज्ञं “पूर्व्यं पुरातनमेतादृशम् “अग्निं “यज्ञेषु अग्निष्टोमादियज्ञेषु “हविष्मती सोमादिहविर्युक्ता “स्रुक् "नमसा स्तोत्रेण नमस्कारेण वा सह “प्रति “ऐति अग्निं प्रति गच्छति ।।

आभि॑र्वि॒धेमा॒ग्नये॒ ज्येष्ठा॑भिर्व्यश्व॒वत् ।

मंहि॑ष्ठाभिर्म॒तिभिः॑ शु॒क्रशो॑चिषे ॥२३

आभिः॑ । वि॒धे॒म॒ । अ॒ग्नये॑ । ज्येष्ठा॑भिः । व्य॒श्व॒ऽवत् ।

मंहिंष्ठाभिः । म॒तिऽभिः॑ । शु॒क्रऽशों॑चिषे ॥२३

आभिः । विधेम । अग्नये । ज्येष्ठाभिः । व्यश्वऽवत् ।

मंहिष्ठाभिः । मतिऽभिः । शुक्रऽशोचिषे ॥२३

विश्वमनोनामका वयं “ज्येष्ठाभिः प्रशस्यतमाभिः “मंहिष्ठाभिः पूज्यतमाभिः “आभिः सूक्तरूपाभिः स्तुतिभिः “शुक्रशोचिषे ज्वलत्तेजसे “अग्नये “विधेम परिचरेम । कथमिव । “व्यश्ववत् । यथा व्यश्वोऽस्माकं पिता अग्निं स्तुतिभिः पर्यचरत् तद्वद्वयमपि परिचरेम ॥

नू॒नमं॑र्च॒ विहा॑यसे॒ स्तोमें॑भिः स्थूरयूप॒वत् ।

ऋषें वैयश्व॒ दम्या॑या॒ग्नयें ॥२४

नू॒नम् । अ॒र्च॒ । वि॒ऽहा॑यसे । स्तोमें॑भिः । स्थू॒र॒यू॒प॒ऽवत् ।

ऋषें । वै॒य॒श्व॒ । दम्या॑य । अ॒ग्नयें ॥२४

नूनम् । अर्च । विऽहायसे । स्तोमेभिः । स्थूरयूपऽवत् ।

ऋषे । वैयश्व । दम्याय । अग्नये ॥२४

“वैयश्व व्यश्वस्य पुत्र हे विश्वमनोनामक “ऋषे “विहायसे महते “दम्याय दमे गृहेऽरणीभिः मथ्यमानत्वेन भवाय । यद्वा । यजमानगृहाणां बाधपरिहारेण हिताय । “अग्नये “नूनं संप्रति “स्तोमेभिः त्रिवृत्पञ्चदशादिलक्षणैः स्तोमैः "अर्च स्तुहि । तत्र दृष्टान्तः । स्थूरयूपवत् । यथा स्थूरयूपो नामर्षिरेनमग्निमानर्च तद्वदर्चेत्यर्थः ।।

अतिं॑थिं॒ मानु॑षाणां सू॒नुं वन॒स्पती॑नां ।

विप्रा॑ अ॒ग्निमव॑से प्र॒त्नमीं॑ळते ॥२५

अतिं॑थिम् । मानु॑षाणाम् । सू॒नुम् । वन॒स्पती॑नाम् ।

विप्राः॑ । अ॒ग्निम् । अव॑से । प्र॒त्नम् । ई॒ळ॒ते॒ ॥२५

अतिथिम् । मानुषाणाम् । सूनुम् । वनस्पतीनाम् ।

विप्राः । अग्निम् । अवसे । प्रत्नम् । ईळते ॥२५

“विप्राः मेधाविनो यजमानाः “मानुषाणां मनुष्याणाम् “अतिथिम् अतिथिवत्पूज्यं “वनस्पतीनां “सूनुं वनस्पतिरूपाभिररणीभिर्जायमानत्वेन तेषां सूनुं “प्रत्नं पुरातनमेवंविधम् “अग्निमवसे कर्मरक्षणाय “ईळते स्तुतिभिः स्तुवन्ति ॥ ॥

१३ ॥

म॒हो विश्वाँ॑ अ॒भि ष॒तो॒३॑ऽभि ह॒व्यानि॒ मानु॑षा ।

अग्ने॒ नि ष॑त्सि॒ नम॒साधि॑ ब॒र्हिषि॑ ॥२६

म॒हः । विश्वा॑न् । अ॒भि । स॒तः । अ॒भि । ह॒व्यानि॑ । मानु॑षा ।

अग्ने॑ । नि । स॒त्सि॒ । नम॑सा । अधि॑ । ब॒र्हिषि॑ ॥२६

महः । विश्वान् । अभि । सतः । अभि । हव्यानि । मानुषा ।

अग्ने । नि । सत्सि । नमसा । अधि । बर्हिषि ॥२६

हे “अग्ने “महः कर्मकर्तृत्वेन महतः “विश्वान् सर्वान् “सतः स्तोत्रकरणार्थं वर्तमानान् स्तोतॄन् “अभि अभितस्त्वं “नमसा स्तुत्यतया “बर्हिषि “अधि “नि “षत्सि निषीद। तथा “मानुषा मनुष्यसंबन्धीनि “हव्यानि हवींषि “अभि अभितस्तानि स्वीकर्तुं निषीद ।।

वं॑स्वा॑ नो॒ वार्या॑ पु॒रु वंस्व॑ रा॒यः पु॑रु॒स्पृहः॑ ।

सु॒वीर्य॑स्य प्र॒जाव॑तो॒ यश॑स्वतः ॥२७

वंस्व॑ । न॒ः । वार्या॑ । पु॒रु । वंस्व॑ । रा॒यः । पु॒रु॒ऽस्पृहः॑ ।

सु॒ऽवीर्य॑स्य । प्र॒जाऽव॑तः । यश॑स्वतः ॥२७

वंस्व । नः । वार्या । पुरु । वंस्व । रायः । पुरुऽस्पृहः ।

सुऽवीर्यस्य । प्रजाऽवतः । यशस्वतः ॥२७

हे अग्ने "वार्या वार्याणि वरणीयानि “पुरु पुरूणि बहूनि गवादीनि "नः अस्मभ्यं “वंस्व प्रयच्छ । तथा “पुरुस्पृहः पुरुभिर्बहुभिः स्पृहणीयं “रायः धनम्। किंविशिष्टम् । “सुवीर्यस्य शोभनवीर्योपेतं "प्रजावतः पुत्रपौत्रादिसहितं “यशस्वतः कीर्तिमच्च धनं नोऽस्मभ्यं "वंस्व प्रयच्छ ।

त्वं व॑रो सु॒षाम्णेऽग्ने॒ जना॑य चोदय ।

सदा॑ वसो रा॒तिं य॑विष्ठ॒ शश्व॑ते ॥२८

त्वम् । व॒रो॒ इति॑ । सु॒ऽसाम्ने॑ । अग्ने॑ । जना॑य । चो॒द॒य॒ ।

सदा॑ । व॒सो॒ इति॑ । रा॒तिम् । य॒वि॒ष्ठ॒ । शश्व॑ते ॥२८

त्वम् । वरो इति । सुऽसाम्ने । अग्ने । जनाय । चोदय ।

सदा । वसो इति । रातिम् । यविष्ठ । शश्वते ॥२८

“वरो सर्वैर्वरणीय “वसो शत्रूणां वासयितः “यविष्ठ पुनःपुनर्जायमानत्वेन युवतम हे “अग्ने “त्वं “सुषाम्णे सुसाम्ने। सुषामादित्वात् षत्वम् । त्वत्प्रसादाच्छोभनसामवते “शश्वते बहवे "जनाय प्रादुर्भूताय स्तोतॄणां “सदा सर्वदा “रातिं धनादिकं “चोदय प्रेरय ॥

त्वं हि सु॑प्र॒तूरसि॒ त्वं नो॒ गोम॑ती॒रिषः॑ ।

म॒हो रा॒यः सा॒तिम॑ग्ने॒ अपा॑ वृधि ॥२९

त्वम् । हि । सु॒ऽप्र॒तूः । असि॑ । त्वम् । न॒ः । गोऽम॑तीः । इषः॑ ।

म॒हः । रा॒यः । सा॒तिम् । अ॒ग्ने॒ । अप॑ । वृ॒धि॒ ॥२९

त्वम् । हि । सुऽप्रतूः । असि । त्वम् । नः । गोऽमतीः । इषः ।

महः । रायः । सातिम् । अग्ने । अप । वृधि ॥२९

हे “अग्ने “त्वम् । हिरवधारणे । त्वमेव “सुप्रतूः स्तोतॄणां धनादिकं सुष्ठु प्रदाता “असि प्रयच्छसीत्यर्थः । अत एव “गोमतीः पश्वादियुक्तानि इषः अन्नानि “महः महतः “रायः धनस्य मध्ये “सातिं देयं धनं च “नः स्तोतॄणामस्माकम् “अपा "वृधि अपावृणु । प्रयच्छेत्यर्थः ॥

अग्ने॒ त्वं य॒शा अ॒स्या मि॒त्रावरु॑णा वह ।

ऋ॒तावा॑ना स॒म्राजा॑ पू॒तद॑क्षसा ॥३०

अग्ने॑ । त्वम् । य॒शाः । अ॒सि॒ । आ । मि॒त्रावरु॑णा । व॒ह॒ ।

ऋ॒तऽवा॑ना । स॒म्ऽराजा॑ । पू॒तऽद॑क्षसा ॥३०

अग्ने । त्वम् । यशाः । असि । आ । मित्रावरुणा । वह ।

ऋतऽवाना । सम्ऽराजा । पूतऽदक्षसा ॥३०

हे “अग्ने “त्वं "यशाः । लुप्तमत्वर्थीयः । देवानां मध्ये यशस्वी “असि भवसि । अत एव त्वम् “ऋतावाना ऋतावानौ सत्यवन्तौ यज्ञवन्तौ वा “सम्राजा सम्राजौ सम्यग्राजमानौ “पूतदक्षसा पूतदक्षसौ । दक्ष इति बलनाम। शुद्धबलौ मित्रावरुणावस्मिन् कर्मणि “आ “वह आह्वय । प्रायेण कर्मणि अग्नेर्मित्रावरुणसहितत्वमस्तीति' सूचयति ॥ ॥ १४ ॥

# ऋग्वेदः सूक्तं ८.२४

ऋग्वेदः - मण्डल ८
← सूक्तं ८.२३ सूक्तं ८.२४ सूक्तं ८.२५ →
विश्वमना वैयश्वः।

दे. इन्द्रः, २८- ३० वरुः सौषाम्णिः। उष्णिक्, ३० अनुष्टुप्।

सखाय आ शिषामहि ब्रह्मेन्द्राय वज्रिणे ।

स्तुष ऊ षु वो नृतमाय धृष्णवे ॥१॥

शवसा ह्यसि श्रुतो वृत्रहत्येन वृत्रहा ।

मघैर्मघोनो अति शूर दाशसि ॥२॥

स न स्तवान आ भर रयिं चित्रश्रवस्तमम् ।

निरेके चिद्यो हरिवो वसुर्ददिः ॥३॥

आ निरेकमुत प्रियमिन्द्र दर्षि जनानाम् ।

धृषता धृष्णो स्तवमान आ भर ॥४॥

न ते सव्यं न दक्षिणं हस्तं वरन्त आमुरः ।

न परिबाधो हरिवो गविष्टिषु ॥५॥

आ त्वा गोभिरिव व्रजं गीर्भिर्ऋणोम्यद्रिवः ।

आ स्मा कामं जरितुरा मनः पृण ॥६॥

विश्वानि विश्वमनसो धिया नो वृत्रहन्तम ।

उग्र प्रणेतरधि षू वसो गहि ॥७॥

वयं ते अस्य वृत्रहन्विद्याम शूर नव्यसः ।

वसो स्पार्हस्य पुरुहूत राधसः ॥८॥

इन्द्र यथा ह्यस्ति तेऽपरीतं नृतो शवः ।

अमृक्ता रातिः पुरुहूत दाशुषे ॥९॥

आ वृषस्व महामह महे नृतम राधसे ।

दृळ्हश्चिद्दृह्य मघवन्मघत्तये ॥१०॥

नू अन्यत्रा चिदद्रिवस्त्वन्नो जग्मुराशसः ।

मघवञ्छग्धि तव तन्न ऊतिभिः ॥११॥

नह्यङ्ग नृतो त्वदन्यं विन्दामि राधसे ।

राये द्युम्नाय शवसे च गिर्वणः ॥१२॥

एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु ।

प्र राधसा चोदयाते महित्वना ॥१३॥

उपो हरीणां पतिं दक्षं पृञ्चन्तमब्रवम् ।

नूनं श्रुधि स्तुवतो अश्व्यस्य ॥१४॥

नह्यङ्ग पुरा चन जज्ञे वीरतरस्त्वत् ।

नकी राया नैवथा न भन्दना ॥१५॥

एदु मध्वो मदिन्तरं सिञ्च वाध्वर्यो अन्धसः ।

एवा हि वीर स्तवते सदावृधः ॥१६॥

इन्द्र स्थातर्हरीणां नकिष्टे पूर्व्यस्तुतिम् ।

उदानंश शवसा न भन्दना ॥१७॥

तं वो वाजानां पतिमहूमहि श्रवस्यवः ।

अप्रायुभिर्यज्ञेभिर्वावृधेन्यम् ॥१८॥

एतो न्विन्द्रं स्तवाम सखाय स्तोम्यं नरम् ।

कृष्टीर्यो विश्वा अभ्यस्त्येक इत् ॥१९॥

अगोरुधाय गविषे द्युक्षाय दस्म्यं वचः ।

घृतात्स्वादीयो मधुनश्च वोचत ॥२०॥

यस्यामितानि वीर्या न राधः पर्येतवे ।

ज्योतिर्न विश्वमभ्यस्ति दक्षिणा ॥२१॥

स्तुहीन्द्रं व्यश्ववदनूर्मिं वाजिनं यमम् ।

अर्यो गयं मंहमानं वि दाशुषे ॥२२॥

एवा नूनमुप स्तुहि वैयश्व दशमं नवम् ।

सुविद्वांसं चर्कृत्यं चरणीनाम् ॥२३॥

वेत्था हि निरृतीनां वज्रहस्त परिवृजम् ।

अहरहः शुन्ध्युः परिपदामिव ॥२४॥

तदिन्द्राव आ भर येना दंसिष्ठ कृत्वने ।

द्विता कुत्साय शिश्नथो नि चोदय ॥२५॥

तमु त्वा नूनमीमहे नव्यं दंसिष्ठ सन्यसे ।

स त्वं नो विश्वा अभिमातीः सक्षणिः ॥२६॥

य ऋक्षादंहसो मुचद्यो वार्यात्सप्त सिन्धुषु ।

वधर्दासस्य तुविनृम्ण नीनमः ॥२७॥

यथा वरो सुषाम्णे सनिभ्य आवहो रयिम् ।

व्यश्वेभ्यः सुभगे वाजिनीवति ॥२८॥

आ नार्यस्य दक्षिणा व्यश्वाँ एतु सोमिनः ।

स्थूरं च राधः शतवत्सहस्रवत् ॥२९॥

यत्त्वा पृच्छादीजानः कुहया कुहयाकृते ।

एषो अपश्रितो वलो गोमतीमव तिष्ठति ॥३०॥

**सायणभाष्यम्**

'सखाय आ शिषामहि' इति त्रिंशदृचं चतुर्थं सूक्तम् । अत्रेयमनुक्रमणिका सखायस्तृचोऽन्त्यः सौषाम्णस्य वरोर्दानस्तुतिरन्त्यानुष्टुप् ' इति । व्यश्वपुत्रो विश्वमना ऋषिः । ' औष्णिहं ह' इत्युक्तत्वादेतदादीनि त्रीणि सूक्तानि उष्णिक्छन्दस्कानि । अनुक्तत्वादिन्द्रो देवता । अन्त्यासु तिसृषु सुषामाख्यस्य राज्ञः पुत्रस्य वरूनाम्नो राज्ञो दानं स्तूयते । अतस्तास्तद्देवताकाः । महाव्रते निष्केवल्ये औष्णिहतृचाशीतावेतत्सूक्तम् । तथैव पञ्चमारण्यके शौनकेन सूत्र्यते – 'सखाय आ शिषामहि य एक इद्विदयते' (ऐ. आ. ५. २. ५) इति । दशमेऽहनि मरुस्वतीयशस्त्रे 'सखायः इति तिस्र ऋचः । सूत्र्यते च – 'सखाय आ शिषामहीति तिस्र उष्णिहः' (आश्व.श्रौ. ८.१२) इति ॥

सखा॑य॒ आ शिं॑षामहि॒ ब्रह्मेन्द्रा॑य व॒ज्रिणें॑ ।

स्तु॒ष ऊ॒ षु वो॒ नृत॑माय धृ॒ष्णवें॑ ॥१

सखा॑यः । आ । शि॒षा॒म॒हि॒ । ब्रह्म॑ । इन्द्रा॑य । व॒ज्रिणें॑ ।

स्तु॒षे । ऊं॒ इतिं॑ । सु । व॒ः । नृऽत॑माय । धृ॒ष्णवें॑ ॥१

सखायः । आ । शिषामहि । ब्रह्म । इन्द्राय । वज्रिणे ।

स्तुषे । ऊं इति । सु । वः । नृऽतमाय । धृष्णवे ॥१

"सखायः मित्रभूता हे ऋत्विजः "वज्रिणे वज्रहस्ताय "इन्द्राय "ब्रह्म कर्तव्यमेतत्सूक्तरूपं स्तोत्रम् "आ "शिषामहि वयम् आशास्मः'। शासु अनुशिष्टौ'। लुङि च्लेरादेशः । इत्वषत्वे । व्यत्ययेनात्मनेपदम्। तत्र "वः सर्वेषामेव युष्माकमर्थाय "नृतमाय सर्वेषां नेतृतमाय यद्वा संग्रामेष्वायुधादीनां नेतृतमाय "धृष्णवे शत्रूणां धर्षणशीलाय तस्मा इन्द्रायाहमेव "सु सुष्ठु "स्तुषे स्तौमि ॥

शव॑सा॒ ह्यसिं॑ श्रु॒तो वृं॑त्र॒हत्यें॑न वृत्र॒हा ।

म॒घैर्म॒घोनो॒ अतिं॑ शूर दाशसि ॥२

शव॑सा । हि । असिं॑ । श्रु॒तः । वृ॒त्र॒ऽहत्यें॑न । वृ॒त्र॒ऽहा ।

म॒घैः । म॒घोनः॑ । अतिं॑ । शू॒र॒ । दा॒श॒सि॒ ॥२

शवसा । हि । असि । श्रुतः । वृत्रऽहत्येन । वृत्रऽहा ।

मघैः । मघोनः । अति । शूर । दाशसि ॥२

हे इन्द्र त्वं "शवसा बलेन "श्रुतः प्रसिद्धः "असि भवसि । "हि प्रसिद्धौ । तदेवाह । "वृत्रहत्येन वृत्रासुरहननेन "वृत्रहा वृत्रहेति प्रसिद्धो भवसि । "शूर शौर्यवन् हे इन्द्र "मघोनः मघवतो धनवतः पुरुषात् "मघैः त्वदीयैर्धनैः "अति अतिक्रम्य "दाशसि स्तोतृभ्योऽस्मभ्यं प्रयच्छसि ।

स नुः स्तवा॑नु आ भ॑र रुयिं चि॒त्रश्र॑वस्तमम् ।

नि॒रे॒के चि॒द्यो ह॑रिवो॒ वसु॑र्दुदिः ॥३

सः । नः॒ । स्तवा॑नः । आ । भ॒र॒ । र॒यिम् । चि॒त्रश्र॑वःऽतमम् ।

नि॒रे॒के । चि॒त् । यः । ह॒रि॒ऽवः॒ । वसुः॑ । द॒दिः ॥३

सः । नः । स्तवानः । आ । भर । रयिम् । चित्रश्रवःऽतमम् ।

निरेके । चित् । यः । हरिऽवः । वसुः । ददिः ॥३

हे इन्द्र “सः तथाविधस्त्वं “स्तवानः अस्माभिः स्तूयमानः सन् “चित्रश्रवस्तमम् अतिशयेन नानाविधान्नोपेतं “रयिं पुत्रं धनं वा “नः अस्मभ्यम् “आ “भर संपादय। देहीत्यर्थः । "हरिवः । हरी अश्वौ । तद्वन् हे इन्द्र “यः त्वं “निरेके “चित् निर्गमन एव “वसुः शत्रूणां वासयिता भवसि । तवायुधनिर्गमनादेव शत्रवः पलायन्ते खलु । किंच त्वं “ददिः धनानां दाता भवसि ॥

आ निं॑रे॒कमु॒त प्रि॒यमिन्द्र॒ दर्षि॒ जना॑नाम् ।

धृ॒ष॒ता धृ॑ष्णो॒ स्तव॑मानु आ भ॑र ॥४

आ । नि॒रे॒कम् । उ॒त । प्रि॒यम् । इन्द्र॑ । दर्षि॑ । जना॑नाम् ।

धृ॒ष॒ता । धृ॒ष्णो॒ इति॑ । स्तव॑मानः । आ । भ॒र॒ ॥४

आ । निरेकम् । उत । प्रियम् । इन्द्र । दर्षि । जनानाम् ।

धृषता । धृष्णो इति । स्तवमानः । आ । भर ॥४

हे “इन्द्र “उत अपि च “प्रियं प्रीणनात् प्रियतमं “निरेकम् । निरेकं धनं भवति विरेचनान्निर्गमनाद्वेति । तद्धनं जनानां स्तोतॄणामस्माकम् “आ “दर्षि आविदारय विवृतं कुरु । 'दॄ विदारणे' । छान्दसो विकरणस्य लुक् । विवृत्य च “धृष्णो धर्षणशील हे इन्द्र “स्तवमानः स्तोतृभिरस्माभिः स्तूयमानः सन् “धृषता धृष्टेन मनसा सह “आ “भर तद्धनमस्मभ्यं देहि ।।

न ते॑ स॒व्यं न दक्षि॑णं॒ हस्तं॑ वरन्त आ॒मुरः॑ ।

न प॑रि॒बाधो॑ हरिवो॒ गवि॑ष्टिषु ॥५

न । ते॒ । स॒व्यम् । न । दक्षि॑णम् । हस्त॑म् । व॒र॒न्ते॒ । आ॒ऽमुरः॑ ।

न । प॒रि॒ऽबाधः॑ । ह॒रि॒ऽवः॒ । गोऽइ॑ष्टिषु ॥५

न । ते । सव्यम् । न । दक्षिणम् । हस्तम् । वरन्ते । आऽमुरः ।

न । परिऽबाधः । हरिऽवः । गोऽइष्टिषु ॥५

हे “हरिवः अश्ववन्निन्द्र “आमुरः संग्राम आभिमुख्येन कर्तारः प्रतियोद्धारः “गविष्टिषु पणिभिरपहृतानामङ्गिरसां गवामन्वेषणेषु “ते तव “सव्यं “हस्तं “न “वरन्ते न निवारयन्ति । तेषामायुधादिभिर्न निवार्यत इत्यर्थः । तथा “दक्षिणं हस्तं च “न निवारयन्ति । किंच "परिबाधः परितो बाधमाना वृत्रादयोऽसुराश्च तव सव्यदक्षिणहस्तौ “न निवारयन्ति । संग्रामेषु त्वया सर्वे शत्रवश्छिन्नहस्ताः सर्वतो गच्छन्तु । त्वं तु तैरबाधितो वर्तस इत्यर्थः ॥ ॥ १५ ॥

आ त्वा॒ गोभिं॑रिव व्र॒जं गी॒र्भिर्ऋ॑णोम्यद्रिवः ।

आ स्मा॒ कामं॑ जरि॒तुरा मनः॑ पृण ॥६

आ । त्वा॒ । गोभिः॑ऽइव । व्र॒जम् । गी॒ःऽभिः । ऋ॒णो॒मि॒ । अ॒द्रि॒ऽव॒ः ।

आ । स्म॒ । काम॑म् । ज॒रि॒तुः । आ । मनः॑ । पृ॒ण॒ ॥६

आ । त्वा । गोभिःऽइव । व्रजम् । गीःऽभिः । ऋणोमि । अद्रिऽवः ।

आ । स्म । कामम् । जरितुः । आ । मनः । पृण ॥६

हे "अद्रिवः वज्रवन्निन्द्र “गीर्भिः स्तुतिलक्षणाभिर्वाग्भिः “त्वा त्वाम् “आ “ऋणोमि प्राप्नोमि । 'ऋणु गतौ । तनादिः । तत्र दृष्टान्तः । “गोभिरिव । यथा गोपालो गोभिः “व्रजं गोष्ठं गच्छति तद्वत्त्वां स्तुतिभिः प्राप्नोमीत्यर्थः । ततस्त्वं “जरितुः स्तोतुर्मम “कामं धनादिविषयम् "आ “पृण आपूरय । तथा "मनः मदीयं मानसं धनादिप्रदानेनापूरय ॥

विश्वा॑नि वि॒श्वम॑नसो धि॒या नो॑ वृत्रहन्तम ।

उग्र॑ प्रणेत॒रधि॒ षू व॑सो गहि ॥७

विश्वा॑नि । वि॒श्वऽम॑नसः । धि॒या । न॒ः । वृ॒त्र॒ह॒न्ऽत॒म॒ ।

उग्र॑ । प्र॒ने॒त॒रिति॑ प्रऽनेतः । अधि॑ । सु । व॒सो॒ इति॑ । ग॒हि॒ ॥७

विश्वानि । विश्वऽमनसः । धिया । नः । वृत्रहन्ऽतम ।

उग्र । प्रनेतरिति प्रऽनेतः । अधि । सु । वसो इति । गहि ॥७

हे “वृत्रहन्तम अतिशयेन वृत्रासुरस्योपद्रवाणां वा हन्तः । 'नाद्धस्य' इति तमपो नुडागमः । कीदृश । “उग्र उद्गूर्णबल “प्रणेतः स्तोतॄणां प्रकर्षेण धनादेर्नेतः । नामन्त्रिते' इत्युग्रेत्यस्य अविद्यमानवद्भावप्रतिषेधः । तथाविध “वसो शत्रूणां वासयितरिन्द्र “नः । पूजायां बहुवचनम् । “विश्वमनसः एतन्नाम्नो मम “विश्वानि सर्वाणि स्तोत्राणि कर्माणि वा “धिया मनसा “सु सुष्ठु “अधि “गहि

अधिगच्छ । स्तुत्यतया यष्टव्यतया वा मनोवेगेन गच्छेत्यर्थः । गमेर्लोटि छान्दसः शपो लुक् । हेर्ङिद्भावात् ‘अनुदात्तोपदेश' इत्यनुनासिकलोपः ।।

व॒यं ते॑ अ॒स्य वृ॑त्रहन्वि॒द्याम॑ शूर॒ नव्य॑सः ।

वसोः॑ स्पा॒र्हस्य॑ पुरुहूत॒ राध॑सः ॥८

व॒यम् । ते॒ । अ॒स्य । वृ॒त्र॒ऽह॒न् । वि॒द्याम॑ । शू॒र॒ । नव्य॑सः ।

वसोः॑ । स्पा॒र्हस्य॑ । पु॒रु॒ऽहू॒त॒ । राध॑सः ॥८

वयम् । ते । अस्य । वृत्रऽहन् । विद्याम । शूर । नव्यसः ।

वसोः । स्पार्हस्य । पुरुऽहूत । राधसः ॥८

हे वृत्रहन् वृत्रस्य हन्तः “शूर बलवन् “पुरुहूत पुरुभिर्बहुभिराह्वातव्येन्द्र “नव्यसः नवीयसः । ईषसुन ईकारलोपश्छान्दसः। नवतरं “स्पार्हस्य स्पृहणीयं “राधसः। 'राध साध संसिद्धौ'। शर्मादिः संसाधकं “ते त्वदीयम् “अस्य “वसोः । ‘ क्रियाग्रहणं कर्तव्यम्' इति वसोः संप्रदानसंज्ञा । ‘ चतुर्थ्यर्थे बहुलं छन्दसि' इति वसोः षष्ठी । त्वदीयमिदं परिदृश्यमानं धनं “वयं “विद्याम लभेमहि । ‘ विद्लृ लाभे'। आदादिकः । छान्दसो विकरणस्य लुक् ॥

इन्द्र॒ यथा॒ ह्यस्ति॒ तेऽप॑रीतं नृतो॒ शवः॑ ।

अमृ॑क्ता रा॒तिः पु॑रुहूत दा॒शुषे॑ ॥९

इन्द्र॑ । यथा॑ । हि । अस्ति॑ । ते॒ । अप॑रिऽइतम् । नृ॒तो॒ इति॑ । शवः॑ ।

अमृ॑क्ता । रा॒तिः । पु॒रु॒ऽहू॒त॒ । दा॒शुषे॑ ॥९

इन्द्र । यथा । हि । अस्ति । ते । अपरिऽइतम् । नृतो इति । शवः ।

अमृक्ता । रातिः । पुरुऽहूत । दाशुषे ॥९

हे "नृतो सर्वस्यान्तर्यामितया नर्तयितः “इन्द्र “ते त्वदीयं “शवः बलं "यथा "अपरीतम् “अस्ति शत्रुभिरपरिगतमव्याप्तं भवति । “हि प्रसिद्धौ । तथा हे “पुरुहूत पुरुभिर्बहुभिराहूतेन्द्र “दाशुषे हविर्दत्तवते यजमानाय “रातिः धनादिदानम् “अमृक्ता शत्रुभिरहिंसितं भवति । त्वत्तो लब्धं यजमानस्य धनं शत्रवो न हिंसन्ति । यथा त्वदीयबलस्य रक्षक एवं तस्य धनस्यापि रक्षक इत्यर्थः ।।

आ वृ॑षस्व महामह म॒हे नृ॑तम॒ राध॑से ।

दृ॒ळ्हश्चि॑द्दृह्य मघवन्म॒घत्त॑ये ॥१०

आ । वृ॒ष॒स्व॒ । म॒हा॒ऽम॒ह॒ । म॒हे । नृ॒ऽत॒म॒ । राध॑से ।

दृ॒ळ्हः । चि॒त् । दृ॒ह्य॒ । म॒घ॒ऽव॒न् । म॒घत्त॑ये ॥१०

आ । वृषस्व । महाऽमह । महे । नृऽतम । राधसे ।

दृळ्हः । चित् । दृह्य । मघऽवन् । मघत्तये ॥१०

हे “महामह अतिशयेन सर्वैः पूजनीय “नृतम नेतृतमेन्द्र “महे महते "राधसे शत्रुधनानां संसाधकाय बलाय बलार्थम् “आ “वृषस्व स्वोदरमासिञ्च। सोमं पिबेत्यर्थः । हे “मघवन् धनवन्निन्द्र सोमपानेन मत्तः सन् “दृळ्हश्चित् दृढानि परैरबाधितान्यपि शत्रुपुराणि “मघत्तये मघानां धनानां लाभाय “दृह्य जिघांस । विदारयेत्यर्थः ॥ ॥ १६ ॥

नू अ॒न्यत्रा॑ चिदद्रिव॒स्त्वन्नो॑ जग्मुरा॒शसः॑ ।

मघ॑वञ्छ॒ग्धि तव॒ तन्न॑ ऊ॒तिभिः॑ ॥११

नु । अ॒न्यत्र॑ । चि॒त् । अ॒द्रि॒ऽव॒ः । त्वत् । न॒ः । ज॒ग्मु॒ः । आ॒ऽशसः॑ ।

मघ॑ऽवन् । श॒ग्धि । तव॑ । तत् । न॒ः । ऊ॒तिऽभिः॑ ॥११

नु । अन्यत्र । चित् । अद्रिऽवः । त्वत् । नः । जग्मुः । आऽशसः ।

मघऽवन् । शग्धि । तव । तत् । नः । ऊतिऽभिः ॥११

हे “अद्रिवः वज्रवन्निन्द्र त्वं धनवान् दाता चेत्यपरिज्ञाय “नः अस्मदीयानि “आशसः आशंसनानि अभिलाषाः “त्वत् त्वत्तः “अन्यत्र देवादौ “नू “चित् पुरा “जग्मुः अगच्छन् । तत्र फलं नालभन्त । इदानीं त्वं धनवान् दानशील इत्यस्माभिर्ज्ञातम् । अत एव हे “मघवन् धनवन्निन्द्र “तव त्वदीयं “तत् शत्रुपुरविदारणलब्धं धनम् "ऊतिभिः त्वद्रक्षणैः “नः अस्मभ्यं "शग्धि देहि । शग्धीति दानकर्मा । शक्नोतेर्लोटि छान्दसो विकरणस्य लुक् ।।

न॒ह्य१॒॑ङ्ग नृ॑तो॒ त्वद॒न्यं वि॒न्दामि॒ राध॑से ।

रा॒ये द्यु॒म्नाय॒ शव॑से च गिर्वणः ॥१२

न॒हि । अ॒ङ्ग । नृ॒तो॒ इति॑ । त्वत् । अ॒न्यम् । वि॒न्दामि॑ । राध॑से ।

रा॒ये । द्यु॒म्नाय॑ । शव॑से । च॒ । गि॒र्व॒ण॒ः ॥१२

नहि । अङ्ग । नृतो इति । त्वत् । अन्यम् । विन्दामि । राधसे ।

राये । द्युम्नाय । शवसे । च । गिर्वणः ॥१२

हे “नृतो नर्तयितः “गिर्वणः गीर्भिः स्तुतिभिर्वननीय संभजनीयेन्द्र “राधसे बलसंसाधकायान्नाय "राये धनाय “द्युम्नाय द्योतमानाय यशसे “शवसे वर्धकाय बलाय “च “त्वत् त्वत्तः “अन्यं “नहि "विन्दामि न लभे । “अङ्ग प्रसिद्धौ ॥

एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु ।

प्र राधसा चोदयाते महित्वना ॥१३

आ । इन्दुम् । इन्द्राय । सिञ्चत । पिबाति । सोम्यम् । मधु ।

प्र । राधसा । चोदयाते । महिऽत्वना ॥१३

आ । इन्दुम् । इन्द्राय । सिञ्चत । पिबाति । सोम्यम् । मधु ।

प्र । राधसा । चोदयाते । महिऽत्वना ॥१३

हे ऋत्विजः “इन्दुं स्यन्दनशीलं सोममिन्द्रार्थम् “आ “सिञ्चत आश्रयणद्रव्येण सेचनं कुरुत । अभिषुणुतेत्यर्थः । ततः “सोम्यं सोममयं “मधु मकरं सोमरसं “पिबाति पिबतु । पीत्वा च स इन्द्रः “महित्वना स्वमहत्त्वेनैव "राधसा अन्नेन सह धनादिकं स्तोतृभ्यः “प्र “चोदयाते प्रकर्षेण चोदयति । यद्वा । यजमानो महित्वना । इन्द्राय प्रदीयमानत्वादस्य महत्व्“म् । महत्त्वयुक्तेन राधसा अन्नेन सह स्तोतॄन् प्रचोदयति । इन्द्राय हविर्दत्तेति स्तोतॄन् प्रेरयतीत्यर्थः ॥

उपो हरीणां पतिं दक्षं पृञ्चन्तमब्रवम् ।

नूनं श्रुधि स्तुवतो अश्व्यस्य ॥१४

उपो इति । हरीणाम् । पतिम् । दक्षम् । पृञ्चन्तम् । अब्रवम् ।

नूनम् । श्रुधि । स्तुवतः । अश्व्यस्य ॥१४

उपो इति । हरीणाम् । पतिम् । दक्षम् । पृञ्चन्तम् । अब्रवम् ।

नूनम् । श्रुधि । स्तुवतः । अश्व्यस्य ॥१४

“हरीणां हरितवर्णानामश्वानां “पतिं पालयितारं “दक्ष वर्धकं स्वबलं “पृञ्चन्तम् । ‘पृची संपर्के '। मरुत्सु योजयन्तम् । यद्वा। शत्रुषु स्वबलमायुधादिभिः संपर्चयन्तम् । एतादृशमिन्द्रं त्वाम् “उपो "अब्रवम् । विश्वमना अहं स्तोत्रं करवाणि । “अश्व्यस्य । व्यश्वो नामर्षिरश्वशब्देनोच्यते । तस्य पुत्रस्य “स्तुवतः स्तोत्रं कुर्वतो मम संबन्धिनीं त्वद्विषयां स्तुतिं “नूनं संप्रति "श्रुधि शृणु ॥

नह्य१ङ्ग पुरा चन जज्ञे वीरतरस्त्वत् ।

नकी राया नैवथा न भन्दना ॥१५

न॒हि । अ॒ङ्ग । पु॒रा । च॒न । ज॒ज्ञे । वी॒रऽत॑रः । त्वत् ।

नकिः॑ । रा॒या । न । ए॒वऽथा॑ । न । भ॒न्दना॑ ॥१५

नहि । अङ्ग । पुरा । चन । जज्ञे । वीरऽतरः । त्वत् ।

नकिः । राया । न । एवऽथा । न । भन्दना ॥१५

हे इन्द्र "त्वत् त्वत्तः "पुरा पूर्वं "वीरतरः सामर्थ्यवान् कश्चित् "नहि "जज्ञे जातः खलु । "अङ्ग प्रसिद्धौ। त्वमेव सामर्थ्यवान् जात इत्यर्थः । किंच त्वत्तोऽपि "राया धनेन समर्थः "नकिः न कश्चिदस्ति । तथा "एवथा शत्रुपुराणि संग्रामं वा प्रति गमनेन त्वत्तोऽधिकः "न जातः । यद्वा । एवथा। अव रक्षणादिषु । अकारस्यैकारछान्दसः । औणादिकोऽथप्रत्ययः । शरणागतानां स्तोतॄणां चावनेन त्वत्तोऽधिको नास्ति । किंच "भन्दना । भन्दतिः स्तुतिकर्मा । स्तुत्या च त्वदधिकः "न जातः । धनवान् रक्षकः स्तुत्यश्च त्वत्तोऽन्यो न जज्ञ इति ॥ ॥ १७ ॥

'एदु मध्वः' इति तृचः पूर्वोक्ते ब्राह्मणाच्छंसिशस्त्रे वैकल्पिकोऽनुरूपः । सूत्रित च -' एदु मध्वो मदिन्तरमेतो न्विन्द्रं स्तवाम सखायः' ( आश्व. श्रौ. ७. ८) इति ॥

एदु॒ मध्वो॑ म॒दिन्त॑रं सि॒ञ्च वा॑ध्वर्यो॒ अन्ध॑सः ।

ए॒वा हि वी॒रः स्तव॑ते स॒दावृ॑धः ॥१६

आ । इत् । ऊं॒ इति॑ । मध्वः॑ । म॒दिन्ऽत॑रम् । सि॒ञ्च । वा॒ । अ॒ध्व॒र्यो॒ इति॑ । अन्ध॑सः ।

ए॒व । हि । वी॒रः । स्तव॑ते । स॒दाऽवृ॑धः ॥१६

आ । इत् । ऊं इति । मध्वः । मदिन्ऽतरम् । सिञ्च । वा । अध्वर्यो इति । अन्धसः ।

एव । हि । वीरः । स्तवते । सदाऽवृधः ॥१६

हे "अध्वर्यो अध्वरस्य नेतर्ऋत्विक् "मध्वः मदकरस्य "अन्धसः सोमलक्षणस्यान्नस्य "मदिन्तरम् अत्यर्थं मादयितृतमं सोमरसमेव "आ "सिञ्च इन्द्रार्थमभिषुणु । "इदु इत्यवधारणे । "वीरः समर्थः "सदावृधः सर्वदा हविर्भिर्वर्धनीयः । यद्वा सर्वदा स्वबलस्य वर्धकोऽयम् "एव इन्द्रः "स्तवते "हि स्तोत्रशस्त्रादिभिः स्तूयते खलु । स्तुतायेन्द्राय सोमो दातव्यः । तस्मादा सिञ्चेति समन्वयः ॥

इन्द्र॑ स्थातर्हरीणा॒ं नकि॑ष्टे पू॒र्व्यस्तु॑तिम् ।

उदा॑नंश॒ शव॑सा॒ न भ॒न्दना॑ ॥१७

इन्द्र॑ । स्था॒त॒ः । ह॒री॒णा॒म् । नकिः॑ । ते॒ । पू॒र्व्यऽस्तु॑तिम् ।

उत् । आ॒न॒ंश॒ । शव॑सा । न । भ॒न्दना॑ ॥१७

इन्द्र । स्थातः । हरीणाम् । नकिः । ते । पूर्व्यऽस्तुतिम् ।

उत् । आनंश । शवसा । न । भन्दना ॥१७

हे "हरीणां "स्थातः अश्वानामधिष्ठातः "इन्द्र "ते त्वदीयां "पूर्व्यस्तुतिं पूर्वैर्ऋषिभिः कृतां स्तुतिम्। उपलक्षणमेतत् । इदानींतनैः क्रियमाणामपि स्तुतिं "नकिः न कश्चित् "शवसा बलेन "उदानंश व्याप्नोति । 'अशू व्याप्तौ । लिटि 'अश्नोतेश्च' इति नुट् । छान्दसो मुम् । कश्चिन्नातिक्रामतीत्यर्थः । किंच "भन्दना सर्वैः प्रार्थनीयत्वात् पूजनीयेन धनेन स्तुत्या वा त्वदीयां स्तुतिं न कश्चिदतिक्रामति । त्वत्तो बलवान् धनी स्तुत्यो वान्यो नास्तीत्यर्थः ॥

तं वो॒ वाजा॑नां॒ पति॒महू॑महि श्रव॒स्यवः॑ ।

अप्रा॑युभिर्य॒ज्ञेभि॑र्वावृ॒धेन्य॑म् ॥१८

तम् । व॒ः । वाजा॑नाम् । पति॑म् । अहू॑महि । श्र॒व॒स्यवः॑ ।

अप्रा॑युऽभिः । य॒ज्ञेभिः॑ । व॒वृ॒धेन्य॑म् ॥१८

तम् । वः । वाजानाम् । पतिम् । अहूमहि । श्रवस्यवः ।

अप्रायुऽभिः । यज्ञेभिः । ववृधेन्यम् ॥१८

"अप्रायुभिः कर्मसु अप्रमाद्यन्मनुष्ययुक्तैः । अथवा । अप्रमत्ता एकत्र स्थित्वैव कर्म कुर्वन्ति । कर्म प्रारभ्य नान्यं देशं गच्छन्तीत्यर्थः। एवंविधमनुष्ययुक्तैः "यज्ञेभिः यज्ञैः एतादृशमनुष्यैर्यज्ञैर्वा "वावृधेन्यं वर्धनीयं "वाजानाम् अन्नानां "पतिं स्वामिनं "वः यष्टृयष्टव्यसंबन्धेन युष्मदीयं "तं तादृशमिन्द्रं "श्रवस्यवः वयमन्नकामाः सन्तः "अहूमहि आह्वयामः । ह्वयतेर्लुङि 'बहुलं छन्दसि' इति संप्रसारणम् ॥

पूर्वोक्त एव शस्त्रे 'एतो न्विन्द्रम्' इत्येतौ तृचौ वैकल्पिकौ स्तोत्रियानुरूपौ । सूत्रितं च -- 'एतो न्विन्द्रं स्तवाम सखायः स्तुहीन्द्रं व्यश्ववत्' (आश्व. श्रौ. ७. ८) इति ।।

एतो॒ न्विन्द्रं॒ स्तवा॑म॒ सखा॑य॒ः स्तोम्यं॒ नर॑म् ।

कृ॒ष्टीर्यो विश्वा॑ अ॒भ्यस्त्येक॒ इत् ॥१९

एतो॒ इति॑ । नु । इन्द्र॑म् । स्तवा॑म । सखा॑यः । स्तोम्य॑म् । नर॑म् ।

कृ॒ष्टीः । यः । विश्वाः॑ । अ॒भि । अस्ति॑ । एकः॑ । इत् ॥१९

एतो इति । नु । इन्द्रम् । स्तवाम । सखायः । स्तोम्यम् । नरम् ।

कृष्टीः । यः । विश्वाः । अभि । अस्ति । एकः । इत् ॥१९

हे “सखायः समानख्याना मित्रभूता वा हे ऋत्विजः “नु क्षिप्रम् “एतो आगच्छतैव । किमर्थं तदाह । “स्तोम्यं स्तोमार्हं “नरं सर्वस्य नेतारं तम् “इन्द्रं “स्तवाम स्तोत्रं करवाम । “यः इन्द्रः “एक “इत् एकोऽसहाय' एव सन् “विश्वाः सर्वाः “कृष्टीः शत्रुसेनाः “अभ्यस्ति अभिभवति । तं स्तवामेति शेषः ॥

अगोंरुधाय गविषें द्युक्षाय दस्म्यं वचः ।

घृतात्स्वादींयो मधुंनश्च वोचत ॥२०

अगोंऽरुधाय । गोऽइषें । द्युक्षायं । दस्म्यंम् । वचः ।

घृतात् । स्वादींयः । मधुंनः । च । वोचत ॥२०

अगोऽरुधाय । गोऽइषे । द्युक्षाय । दस्म्यम् । वचः ।

घृतात् । स्वादीयः । मधुनः । च । वोचत ॥२०

हे ऋत्विजः “अगोरुधाय । गाः स्तुती रुणद्धीति गोरुधः । न गोरुधोऽगोरुधः । ता न विनाशयत्यादरेण शृणोतीत्यर्थः। तादृशाय अत एव “गविषे स्तोत्राणीच्छते “द्युक्षाय दीप्यमानायेन्द्राय “दस्म्यं दर्शनीयं “घृतात् स्वादुतरादाज्यात् "मधुनश्च “स्वादीयः अतिशयेन स्वादुभूतं “वचः स्तोत्ररूपं वाक्यं “वोचत ब्रूत । ऋत्विग्भिः कृतं कर्म यजमानोऽपि कृतवान् भवतीति मदीयमिन्द्रविषयं वचो घृतान्मधुनश्च स्वादुतरं भवत्वित्याशास्ते । तदाह भगवानाश्वलायनः - वच एव म इदं घृताच्च मधुनश्च स्वादीयोऽस्ति प्रीतिः स्वादीयोऽस्त्वित्येव तदाह' (आश्व. गृ. १. १. ५) इति ॥ ॥ १८ ॥

यस्यामिंतानि वीर्या३ न राधः पर्येतवे ।

ज्योतिर्न विश्वंमभ्यस्ति दक्षिंणा ॥२१

यस्यं । अमिंतानि । वीर्या । न । राधः । परिंऽएतवे ।

ज्योतिः । न । विश्वंम् । अभि । अस्तिं । दक्षिंणा ॥२१

यस्य । अमितानि । वीर्या । न । राधः । परिऽएतवे ।

ज्योतिः । न । विश्वम् । अभि । अस्ति । दक्षिणा ॥२१

“यस्य इन्द्रस्य “वीर्या वीर्याणि वृत्रहननादिलक्षणानि सामर्थ्यानि “अमितानि अस्य इयन्ति सामर्थ्यानि नान्यानीति परिमितानि न भवन्ति । यद्वा । ' मीङ् हिंसायाम्। छान्दसो ह्रस्वः । शत्रुभिरहिंसितानि भवन्ति । तथा यस्येन्द्रस्य “राधः धनं “पर्येतवे शत्रुभिः परिगन्तुं प्राप्तुं शक्यं “न भवति । अत एव “यस्य "दक्षिणा धनदानं “विश्वमभ्यस्ति सर्वं स्तोतृजनमभिभवति । तत्र दृष्टान्तः । “ज्योतिर्न । ज्योतिषामयनत्वाज्ज्योतिरन्तरिक्षम् । यथान्तरिक्षं सर्वलोकं पिधाय तिष्ठति तद्वत् स्तोतृजनं धनदानेन पिधत्त इत्यर्थः ॥

स्तु॒हीन्द्रं॑ व्यश्व॒वदनू॑र्मिं वा॒जिनं॒ यमं॑म् ।

अ॒र्यो गयं॒ मंह॑मानं॒ वि दा॒शुषे॑ ॥२२

स्तु॒हि । इन्द्र॑म् । व्य॒श्व॒ऽवत् । अनू॑र्मिम् । वा॒जिन॑म् । यमं॑म् ।

अ॒र्यः । गय॑म् । मंह॑मानम् । वि । दा॒शुषे॑ ॥२२

स्तुहि । इन्द्रम् । व्यश्वऽवत् । अनूर्मिम् । वाजिनम् । यमम् ।

अर्यः । गयम् । मंहमानम् । वि । दाशुषे ॥२२

हे विश्वमनः “अनूर्मिम् । ऊर्मिर्हिंसाकर्मा । कैश्चिदप्यहिंस्यम् । अथ वा शत्रुभिरगन्तव्यम् अत एव “वाजिनं बलवन्तं "यमं स्तोतृभिः सुनियतमेतादृशम् “इन्द्रं “स्तुहि। स्तोत्रे दृष्टान्तः । “व्यश्ववत् । यथा व्यश्वो विश्वमनसः पिता इन्द्रमस्तौत् तद्वत् स्तुहीत्यर्थः । स्तुतश्चेत् "अर्यः स्वामी इन्द्रः “दाशुषे हविर्दतक्ते यजमानाय “मंहमानं पूज्यमानं “गयं धनम् । यद्वा । देवानां पूजायै गयं गृहम् । गृहमस्ति चेत् देवा हविर्भिः पूज्यन्ते । तादृशं गृहं वितरति । तस्मात् त्वं धनगृहलाभाय स्तुहीत्यर्थः ॥

ए॒वा नू॒नमुप॑ स्तुहि॒ वैय॑श्व दश॒मं नव॑म् ।

सुवि॑द्वांसं च॒र्कृत्यं॑ च॒रणी॑नाम् ॥२३

ए॒व । नू॒नम् । उप॑ । स्तु॒हि॒ । वैय॑श्व । द॒श॒मम् । नव॑म् ।

सुऽवि॑द्वांसम् । च॒र्कृत्य॑म् । च॒रणी॑नाम् ॥२३

एव । नूनम् । उप । स्तुहि । वैयश्व । दशमम् । नवम् ।

सुऽविद्वांसम् । चर्कृत्यम् । चरणीनाम् ॥२३

हे “वैयश्व व्यश्वस्य पुत्र विश्वमनः “चर्षणीनां मनुष्याणां देहे स्थितानां नवानां प्राणानां “दशमं दशसंख्यापूरकम् । तत्र मन्त्रः-’ नव वै पुरुषे प्राणा मनुष्येषु वर्तमाना इन्द्रस्तेषां दशधा भवतीन्द्रस्यात्मानं दशधा चरन्तम्' इति । एतादृशमत एव “नवं स्तुत्यं सुविद्वांसम् अन्तर्यामित्वात् सुष्ठु सर्वं जानन्तं “चर्कृत्यं भूयो भूयः कार्येषु सर्वैर्नमस्कर्तव्यमेवंविधमिन्द्रम् “एव "नूनम् इदानीम् “उप "स्तुहि समीपे स्तुहि ॥

वेत्था॒ हि निरृ॑तीनां॒ वज्र॑हस्त परि॒वृज॑म् ।

अह॑रहः शु॒न्ध्युः प॑रि॒पदा॑मिव ॥२४

वेत्थ॑ । हि । निःऽऋ॑तीनाम् । वज्र॑ऽहस्त । प॒रि॒ऽवृज॑म् ।

अहः॑ऽअहः । शु॒न्ध्युः । प॒रि॒पदा॑म्ऽइव ॥२४

वेत्थ । हि । निःऽऋतीनाम् । वज्रऽहस्त । परिऽवृजम् ।

अहःऽअहः । शुन्ध्युः । परिपदाम्ऽइव ॥२४

इदानीमृषिरिन्द्रं संबोध्याह । हे “वज्रहस्त वज्रयुक्तहस्तेन्द्र “निर्ऋतीनाम् उपद्रवकारिणां रक्षसां “परिवृजं परिवर्जनम् । हिरवधारणे । त्वमेव वेत्थ जानीषे । तत्र दृष्टान्तः । “अहरहः “शुन्ध्युः । अस्मिन्नुदिते सति ब्राह्मणा आत्मीयं कर्म कृत्वा शुद्धा भवन्तीति शोधनहेतुत्वात् शुन्ध्युरादित्यः । “परिपदामिव परितो यजमानानामिव । यद्वा। परिपदां समानाधिकरणः । परितः पततां पक्षिणां वर्जनं स्वस्थानत्यागमहरहः प्रतिदिवसं यथा वेत्ति । उदिते सूर्ये पक्षिणः स्वस्थानं परित्यज्य सर्वतो गच्छन्ति खलु । एवं त्वयीन्द्रे स्वबलेन प्रकाशमाने सति शत्रवः स्वपुरादि त्यक्त्वा पलायन्त इत्यर्थः ॥

तदि॒न्द्राव॒ आ भ॑र॒ येना॑ दंसिष्ठ॒ कृत्व॑ने ।

द्वि॒ता कुत्सा॑य शिश्नथो॒ नि चो॑दय ॥२५

तत् । इ॒न्द्र॒ । अवः॑ । आ । भ॒र॒ । येन॑ । दं॒सि॒ष्ठ॒ । कृत्व॑ने ।

द्वि॒ता । कुत्सा॑य । शि॒श्न॒थ॒ः । नि । चो॒द॒य॒ ॥२५

तत् । इन्द्र । अवः । आ । भर । येन । दंसिष्ठ । कृत्वने ।

द्विता । कुत्साय । शिश्नथः । नि । चोदय ॥२५

हे इन्द्र “तत् “अवः तद्रक्षणमस्मभ्यम् “आ “भर । हे “दंसिष्ठ अत्यन्तं दर्शनीय यद्वा शत्रूणामुपक्षपयितरिन्द्र “कृत्वने कर्म कुर्वते यजमानाय तदर्थं “येन पालनमकृथाः तद्रक्षणम् आभिरेति समन्वयः । किंच ”कुत्साय कुत्सनामकाय राजर्षये “द्विता द्विधा द्विप्रकारेण “शिश्नथः त्वं शत्रूनवधीः । तस्मै द्वैधं पालनमकार्षीरित्यर्थः। तद्रक्षणमस्मभ्यं “नि “चोदय नितरामत्यर्थं प्रेरय । यद्वा कृत्वन इति सामान्येनोक्त्वा विशेषेण तदेवाह कुत्सायेत्यादि । शेषं पूर्ववत् ॥ ॥ १९ ॥

तमु॑ त्वा नू॒नमी॑महे॒ नव्यं॑ दंसिष्ठ॒ सन्यं॑से ।

स त्वं नो॒ विश्वा॑ अ॒भिमा॑तीः स॒क्षणिः॑ ॥२६

तम् । ऊं॒ इति॑ । त्वा॒ । नू॒नम् । ई॒म॒हे॒ । नव्य॑म् । दं॒सि॒ष्ठ॒ । सन्यं॑से ।

सः । त्वम् । न॒ः । विश्वाः॑ । अ॒भिऽमा॑तीः । स॒क्षणिः॑ ॥२६

तम् । ऊं इति । त्वा । नूनम् । ईमहे । नव्यम् । दंसिष्ठ । सन्यसे ।

सः । त्वम् । नः । विश्वाः । अभिऽमातीः । सक्षणिः ॥२६

हे “दंसिष्ठ अतिशयेन दर्शनीयेन्द्र "नव्यं स्तोतृभिः स्तोतव्यं “तमु तादृशमेव “त्वा त्वां “नूनम् इदानीम् “ईमहे वयं याचामहे। किमर्थम्। “संन्यसे । “असु क्षेपणे '। भावे क्विप् । संन्यासार्थं याचामह इति शेषः। “सः तादृशः “त्वं “नः अस्माकं “विश्वाः सर्वाः “अभिमातीः शत्रुसेनाः “सक्षणिः । सहेः सनिप्रत्ययः । सहनशीलोऽभिभवनशीलो भवसि ।।

य ऋ॒क्षा॒दंह॑सो मु॒चद्यो वार्या॑त्स॒प्त सिन्धु॑षु ।

वध॑र्दा॒सस्य॑ तुविनृम्ण नीनमः ॥२७

यः । ऋ॒क्षा॑त् । अंह॑सः । मु॒चत् । यः । वा॒ । आर्या॑त् । स॒प्त । सिन्धु॑षु ।

वधः॑ । दा॒सस्य॑ । तु॒वि॒ऽनृ॒म्ण॒ । नी॒न॒मः॒ ॥२७

यः । ऋक्षात् । अंहसः । मुचत् । यः । वा । आर्यात् । सप्त । सिन्धुषु ।

वधः । दासस्य । तुविऽनृम्ण । नीनमः ॥२७

पूर्वोऽर्धर्चः परोक्षकृतः । “यः इन्द्रः “ऋक्षात् । ऋन् मनुष्यान् क्षणोति । क्षणोतेरौणादिको डप्रत्ययः । तस्मात् रक्षसो जातात् “अंहसः पापरूपादुपद्रवात् "मुचत् मुञ्चति । राक्षस एनं न बाधते किं पुनस्तं हन्तीत्यर्थः । अपि च “यः इन्द्रः “सप्त “सिन्धुषु गङ्गाद्यासु नदीषु । यद्वा । सप्त सर्पणशीलासु सिन्धुषु । तत्कूलेष्वित्यर्थः । गङ्गायां घोष इतिवत् । तेषु वर्तमानानां स्तोतॄणाम् “आर्यात् धनादिकं प्रेरयेत् ।' ऋ गतिप्रापणयोः '। आशीर्लिङि ‘गुणोऽर्तिसंयोगाद्योः' (पा. सू. ७. ४. २९) इति गुणः । ‘बहुलं छन्दसि' इति लिङयप्याडागमः । अथ प्रत्यक्षः। हे "तुविनृम्ण बहुधनेन्द्र "दासस्य उपक्षपयितुरसुरस्य “वधः हननसाधनमायुधं “नीनमः नमय ॥

यथा॑ वरो सु॒षाम्णे॑ स॒निभ्य॒ आव॑हो र॒यिम् ।

व्यं॑श्वेभ्यः सुभगे वाजिनीवति ॥२८

यथा॑ । व॒रो॒ इति॑ । सु॒ऽसाम्ने॑ । स॒निऽभ्यः॑ । आ । अव॑हः । र॒यिम् ।

विऽअं॑श्वेभ्यः । सु॒ऽभ॒गे॒ । वा॒जि॒नी॒ऽव॒ति॒ ॥२८

यथा । वरो इति । सुऽसाम्ने । सनिऽभ्यः । आ । अवहः । रयिम् ।

विऽअश्वेभ्यः । सुऽभगे । वाजिनीऽवति ॥२८

अनेन तृचेन वरोर्दानं स्तूयते । हे "वरो वरुनामक राजन् “सुषाम्णे सुसाम्ने सुषामाख्यं राजानं स्वपितरमुद्दिश्य तस्योत्तमलोकप्राप्त्यर्थं “सनिभ्यः भिक्षमाणेभ्यः “आ कोशादाहृत्य “रयिं धनं “यथा पुरा “अवहः प्रापितवानसि अत एवमिदानीं “व्यश्वेभ्यः व्यश्वपुत्रेभ्यः अस्मभ्यं धनमावह। वाजिनीवतीति पदलिङ्गादियमुषस्या । अयं तृचोऽप्युषस्य इति शौनकेनोक्तं-’ यथा वरो सुषाम्ण इत्युत्तमस्त्वौषसस्तृचः' इति । हे “सुभगे शोभनधनयुक्ते “वाजिनीवति अन्नवति । मतुबनुवादार्थः । यद्वा । वाजो वाजनं

गमनमस्यास्तीति वाजिन्यन्नम् । तद्वति हे उषः त्वं चास्मभ्यं धनं प्रयच्छ । वरोर्बहुधनदानात्तस्य दानस्तुतिः । यद्वा । विश्वमना ऋषिर्वरुं संबोध्याह । हे सुभगे शोभनधने वाजिनीवति अन्नवति हे उषः यथा त्वं सुषाम्णे सुषामनाम्ने मम पित्रे धनं दत्त्वा तेनैव सुषाम्णा सनिभ्यो याचमानेभ्यो धनं यथा प्रापितवत्यसि तेन यथा दानमकारयः एवं मह्यमपि धनं दत्त्वा व्यश्वेभ्यः। पूजायां बहुवचनम् । व्यश्वपुत्राय विश्वमनसे धनं प्रापयेति मयापि दानं करोषि । हे वरो उषसमेवं वदेत्यृषिराह ॥

आ ना॒र्यस्य॒ दक्षि॑णा॒ व्य॑श्वाँ॑ एतु सो॒मिनः॑ ।

स्थू॒रं च॒ राधः॑ श॒तव॑त्स॒हस्र॑वत् ॥२९

आ । ना॒र्यस्य॑ । दक्षि॑णा । विऽअ॑श्वान् । ए॒तु॒ । सो॒मिनः॑ ।

स्थू॒रम् । च॒ । राधः॑ । श॒तऽव॑त् । स॒हस्र॑ऽवत् ॥२९

आ । नार्यस्य । दक्षिणा । विऽअश्वान् । एतु । सोमिनः ।

स्थूरम् । च । राधः । शतऽवत् । सहस्रऽवत् ॥२९

अनया धनमृषिरादत्तवानित्याह। "नार्यस्य । नरहितो नर्यः । तस्यापत्यं नार्यः । तस्मात् संबन्धमात्रे 'तस्येदम्' इत्यण् । तस्य "सोमिनः सोमवतो यजमानस्य । यद्वा । व्यश्वानां विशेषणम् । तादृशस्य वरोः "दक्षिणा दानं सोमवतः "व्यश्वान् व्यश्वपुत्रानस्मान् "आ "एतु आगच्छतु । किंच "स्थूरं स्थूलं "शतवत्सहस्रवत् शतसहस्रधनयुक्तं "राधः अन्नं च अस्मानागच्छतु ।।

यत्त्वा॑ पृ॒च्छादी॑जा॒नः कु॑ह॒या कु॑हयाकृते ।

ए॒षो अप॑श्रितो व॒लो गो॑म॒तीमव॑ तिष्ठति ॥३०

यत् । त्वा॒ । पृ॒च्छात् । ई॒जा॒नः । कु॒ह॒या । कु॒ह॒या॒ऽकृ॒ते॒ ।

ए॒षः । अप॑ऽश्रितः । व॒लः । गो॒ऽम॒तीम् । अव॑ । ति॒ष्ठ॒ति॒ ॥३०

यत् । त्वा । पृच्छात् । ईजानः । कुहया । कुहयाऽकृते ।

एषः । अपऽश्रितः । वलः । गोऽमतीम् । अव । तिष्ठति ॥३०

इदानीमुषसं संबोध्याभिधीयते । हे "कुहयाकृते स वरुः कुह कुत्र तिष्ठतीत्येतदिच्छया अभिलक्षणप्रवृत्तैर्जिज्ञासुभिः पुरस्कृते । कुहशब्दात् क्यच् । एतादृशे हे उषः "त्वा त्वां "यत् यदा कश्चित् "पृच्छात् पृच्छति "ईजानः इष्टवान् वरुः "कुहया क्व तिष्ठतीति यदा पृच्छति तदानीम् "अपश्रितः सर्वैराश्रितः । यद्वा । विवृतद्वारः । यदा याचमाना आगच्छन्ति तदा दौवारिका ने प्रतिबध्नन्तीत्यर्थः । तादृशः "वलः वरः स्वबलेनावारकः शत्रूणाम् । यद्वा । भिक्षूणां धनादिप्रदानेनावरिता । "एषो एष वरुः "गोमतीम् एतन्नामिकां नदीम् । 'कालाध्वनोः ' इति द्वितीया । तस्यास्तीरे "अव "तिष्ठति इति तदानीं त्वं कथयसि ॥ ॥ २० ॥

# ऋग्वेदः सूक्तं ८.२५



दे. मित्रावरुणौ, १०-१२ विश्वे देवाः। उष्णिक्, २३ उष्णिग्गर्भा

---

ता वां विश्वस्य गोपा देवा देवेषु यज्ञिया ।

ऋतावाना यजसे पूतदक्षसा ॥१॥

मित्रा तना न रथ्या वरुणो यश्च सुक्रतुः ।

सनात्सुजाता तनया धृतव्रता ॥२॥

ता माता विश्ववेदसासुर्याय प्रमहसा ।

मही जजानादितिरृतावरी ॥३॥

महान्ता मित्रावरुणा सम्राजा देवावसुरा ।

ऋतावानावृतमा घोषतो बृहत् ॥४॥

नपाता शवसो महः सूनू दक्षस्य सुक्रतू ।

सृप्रदानू इषो वास्त्वधि क्षितः ॥५॥

सं या दानूनि येमथुर्दिव्याः पार्थिवीरिषः ।

नभस्वतीरा वां चरन्तु वृष्टयः ॥६॥

अधि या बृहतो दिवोऽभि यूथेव पश्यतः ।

ऋतावाना सम्राजा नमसे हिता ॥७॥

ऋतावाना नि षेदतुः साम्राज्याय सुक्रतू ।

धृतव्रता क्षत्रिया क्षत्रमाशतुः ॥८॥

अक्ष्णश्चिद्गातुवित्तरानुल्बणेन चक्षसा ।

नि चिन्मिषन्ता निचिरा नि चिक्यतुः ॥९॥

उत नो देव्यदितिरुरुष्यतां नासत्या ।

उरुष्यन्तु मरुतो वृद्धशवसः ॥१०॥

ते नो नावमुरुष्यत दिवा नक्तं सुदानवः ।

अरिष्यन्तो नि पायुभिः सचेमहि ॥११॥

अघ्नते विष्णवे वयमरिष्यन्तः सुदानवे ।

श्रुधि स्वयावन्सिन्धो पूर्वचित्तये ॥१२॥

तद्वार्यं वृणीमहे वरिष्ठं गोपयत्यम् ।

मित्रो यत्पान्ति वरुणो यदर्यमा ॥१३॥

उत नः सिन्धुरपां तन्मरुतस्तदश्विना ।

इन्द्रो विष्णुर्मीढ्वांसः सजोषसः ॥१४॥

ते हि ष्मा वनुषो नरोऽभिमातिं कयस्य चित् ।

तिग्मं न क्षोदः प्रतिघ्नन्ति भूर्णयः ॥१५॥

अयमेक इत्था पुरूरु चष्टे वि विश्पतिः ।

तस्य व्रतान्यनु वश्चरामसि ॥१६॥

अनु पूर्वाण्योक्या साम्राज्यस्य सश्चिम ।

मित्रस्य व्रता वरुणस्य दीर्घश्रुत् ॥१७॥

परि यो रश्मिना दिवोऽन्तान्ममे पृथिव्याः ।

उभे आ पप्रौ रोदसी महित्वा ॥१८॥

उदु ष्य शरणे दिवो ज्योतिरयंस्त सूर्यः ।

अग्निर्न शुक्रः समिधान आहुतः ॥१९॥

वचो दीर्घप्रसद्मनीशे वाजस्य गोमतः ।

ईशे हि पित्वोऽविषस्य दावने ॥२०॥

तत्सूर्यं रोदसी उभे दोषा वस्तोरुप ब्रुवे ।

भोजेष्वस्माँ अभ्युच्चरा सदा ॥२१॥

ऋज्रमुक्षण्यायने रजतं हरयाणे ।

रथं युक्तमसनाम सुषामणि ॥२२॥

ता मे अश्व्यानां हरीणां नितोशना ।

उतो नु कृत्व्यानां नृवाहसा ॥२३॥

स्मदभीशू कशावन्ता विप्रा नविष्ठया मती ।

महो वाजिनावर्वन्ता सचासनम् ॥२४॥

**सायणभाष्यम्**

‘ ता वाम्' इति चतुर्विंशत्यृचं पञ्चमं सूक्तम् । अत्रेयमनुक्रमणिका-' ता वां चतुर्विंशतिर्मैत्रावरुणं दशम्याद्यास्तिस्रो वैश्वदेव्य उपान्त्योष्णिग्गर्भा ' इति । व्यश्वपुत्रो विश्वमना ऋषिः । उष्णिक् छन्दः । उपान्त्या उष्णिग्गर्भा ‘षट्सप्तैकादशा उष्णिग्गर्भा' (अनु. ४. ३ ) इति तल्लक्षणोपेतत्वात् । दशम्येकादशीद्वादश्यो वैश्वदेव्योऽवशिष्टानां मित्रावरुणौ देवता । सूक्तविनियोगो लैङ्गिकः ॥

ता वा॒ं विश्वं॑स्य गो॒पा दे॒वा दे॒वेषु॑ य॒ज्ञिया॑ ।

ऋ॒तावा॑ना यजसे पू॒तद॑क्षसा ॥१

ता । वा॒म् । विश्वं॑स्य । गो॒पा । दे॒वा । दे॒वेषु॑ । य॒ज्ञिया॑ ।

ऋ॒तऽवा॑ना । य॒ज॒से॒ । पू॒तऽद॑क्षसा ॥१

ता । वाम् । विश्वस्य । गोपा । देवा । देवेषु । यज्ञिया ।

ऋतऽवाना । यजसे । पूतऽदक्षसा ॥१

हे मित्रावरुणौ “विश्वस्य सर्वस्य लोकस्य “गोपा गोपायितारौ "देवा देवौ द्योतनशीलौ “देवेषु मध्ये “यज्ञिया यज्ञार्हौ “ता तौ तादृशौ “वां युवां हविष्प्रदानार्थं यजमानं भजथः। अत एव हे विश्वमनः “ऋतावाना ऋतावानौ सत्यवन्तौ यज्ञवन्तौ वा पूतदक्षसौ शुद्धबलौ। आवां बलवन्ताविति वचनमात्रेण बलवन्तौ न भवतः किंतु यथार्थत्वेन सामर्थ्यवन्तौ । मित्रावरुणौ “यजसे हविर्भिः पूजयसि ॥

मि॒त्रा तना॒ न र॒थ्या॒३॑ वरु॑णो॒ यश्च॑ सु॒क्रतु॑ः ।

स॒नात्सु॑जा॒ता तन॑या धृ॒तव्र॑ता ॥२

मि॒त्रा । तना॑ । न । र॒थ्या॑ । वरु॑णः । यः । च॒ । सु॒ऽक्रतुः॑ ।

स॒नात् । सु॒ऽजा॒ता । तन॑या । धृ॒तऽव्र॑ता ॥२

मित्रा । तना । न । रथ्या । वरुणः । यः । च । सुऽक्रतुः ।

सनात् । सुऽजाता । तनया । धृतऽव्रता ॥२

"सुक्रतुः शोभनकर्मा "यः “वरुणः सुकर्मा “मित्रा “च मित्रावरुणौ । कीदृशौ । “तना । तन्वन्ति मुकुटकटकादिनेति तनानि धनानि । नश्चार्थे । धनानि च “रथ्या रथ्यौ नेतारौ । यद्वा । धनानि कर्मणः कर्त्रपेक्षत्वात् प्रयच्छन्ताविति संबध्यते । तादृशौ रथ्यौ रथवन्तौ “सनात् चिरादेव "सुजाता सुजातौ शोभनजन्मानौ । तदेवाह । “तनया तनयौ अदितेः पुत्रौ “धृतव्रता धृतव्रतौ धृतकर्माणौ ता यजस इति पूर्वेण समन्वयः ॥

ता मा॒ता वि॒श्ववे॑दसासु॒र्या॑य॒ प्रम॑हसा ।

म॒ही ज॑जा॒नादि॑तिर्‌ऋ॒ताव॑री ॥३

ता । मा॒ता । वि॒श्वऽवे॑दसा । अ॒सु॒र्या॑य । प्रऽम॑हसा ।

म॒ही । ज॒जा॒न॒ । अदि॑तिः । ऋ॒तऽव॑री ॥३

ता । माता । विश्वऽवेदसा । असुर्याय । प्रऽमहसा ।

मही । जजान । अदितिः । ऋतऽवरी ॥३

अदितेस्तनयत्वमेव स्फुटयति । “विश्ववेदसा विश्ववेदसौ सर्वधनौ । यद्वा । विश्वानि स्थावरजङ्गमात्मकानि सर्वाणि विदतुर्जानीत इति विश्ववेदसौ । “प्रमहसा प्रमहसौ प्रकृष्टतेजस्कौ “ता तौ तादृशौ मित्रावरुणौ “मही महती “ऋतावरी सत्यवती “माता देवमाता “अदितिः "जजान जनयामास । किमर्थम् । असुर्याय असुराणां हन्त्रे बलाय । असुरान् हन्तुमुत्पादितवतीत्यर्थः ॥

म॒हान्ता॑ मि॒त्रावरु॑णा स॒म्राजा॑ दे॒वावसु॑रा ।

ऋ॒तावा॑नावृ॒तमा घो॑षतो बृ॒हत् ॥४

म॒हान्ता॑ । मि॒त्रावरु॑णा । स॒म्ऽराजा॑ । दे॒वौ । असु॑रा ।

ऋ॒तऽवा॑नौ । ऋ॒तम् । आ । घो॒ष॒त॒ः । बृ॒हत् ॥४

महान्ता । मित्रावरुणा । सम्ऽराजा । देवौ । असुरा ।

ऋतऽवानौ । ऋतम् । आ । घोषतः । बृहत् ॥४

“महान्ता गुणाधिक्येन महान्तौ “सम्राजा सम्राजौ सम्यग्दीप्यमानौ “असुरा असुरौ बलवन्तौ । यद्वा । सर्वान्तर्यामितया प्रेरकौ । ऋतावाना सत्यवन्तौ मित्रावरुणौ “देवौ “बृहत् स्तोत्रऋचादिना महान्तम् "ऋतं यज्ञम् "आ “घोषतः स्वदीप्त्या प्रकाशयतः । घुषेर्लटि रूपम् ।

नपा॑ता॒ शव॑सो म॒हः सू॒नू दक्ष॑स्य सु॒क्रतू॑ ।

सृ॒प्रदा॑नू इ॒षो वास्त्वधि॑ क्षितः ॥५

नपा॑ता । शव॑सः । म॒हः । सू॒नू इति॑ । दक्ष॑स्य । सु॒क्रतू॒ इति॑ सु॒ऽक्रतू॑ ।

सृ॒प्रदा॑नू॒ इति॑ सृ॒प्रऽदा॑नू । इ॒षः । वास्तु॑ । अधि॑ । क्षि॒त॒ः ॥५

नपाता । शवसः । महः । सूनू इति । दक्षस्य । सुक्रतू इति सुऽक्रतू ।

सृप्रदानू इति सृप्रऽदानू । इषः । वास्तु । अधि । क्षितः ॥५

“महः महतः “शवसः बलस्य “नपाता नपातौ पौत्रौ । बलत उत्पादिताविति बलस्य पौत्रौ । तादृशौ "दक्षस्य । दक्ष बृद्धौ शीघ्रार्थे च' इति दक्षो वेगः । तस्य "सूनू पुत्रौ । बलाद्वेग इति तयोः पुत्रत्वम् । तौ “सुक्रतु शोभनकर्माणौ “सृप्रदानू प्रसृतधनादिदानौ मित्रावरुणौ “इषः अन्नस्य “वास्तु निवासस्थाने “अधि “क्षितः अधिवसतः । अधिशीङ् इति वास्तुनः कर्मसंज्ञा । क्षयतेः लटि छान्दसो विकरणस्य लुक्॥ ॥ २१ ॥

सं या दानू॑नि ये॒मथु॑र्दि॒व्याः पार्थि॑वी॒रिषः॑ ।

नभ॑स्वती॒रा वां॑ चरन्तु वृ॒ष्टयः॑ ॥६

सम् । या । दानू॑नि । ये॒मथुः॑ । दि॒व्याः । पार्थि॑वीः । इषः॑ ।

नभ॑स्वतीः । आ । वा॒म् । च॒र॒न्तु॒ । वृ॒ष्टयः॑ ॥६

सम् । या । दानूनि । येमथुः । दिव्याः । पार्थिवीः । इषः ।

नभस्वतीः । आ । वाम् । चरन्तु । वृष्टयः ॥६

हे मित्रावरुणौ यौ युवां “दानूनि देयानि धनानि “सं "येमथुः अस्मासु संयच्छतं तथा “दिव्याः दिव्यानि दिवि भवानि “पार्थिवीः पृथिव्यामुत्पन्नानि “इषः अन्नानि संयच्छतम् । वृष्ट्यभावे कथमन्नं लभ्यत इति चेत् तदुच्यते । “नभस्वतीः उदकवत्यः “वृष्टयः तादृशौ “वां युवाम् “आ “चरन्तु उपतिष्ठन्तु । यदा वृष्ट्यवेला तदा वर्षतमित्यर्थः ॥

अधि॒ या बृ॑ह॒तो दि॒वो॒३॑ऽभि यू॒थेव॒ पश्य॑तः ।

ऋ॒तावा॑ना स॒म्राजा॒ नम॑से हि॒ता ॥७

अधि॑ । या । बृ॒ह॒तः । दि॒वः । अ॒भि । यू॒थाऽइ॑व । पश्य॑तः ।

ऋ॒तऽवा॑ना । स॒म्ऽराजा॑ । नम॑से । हि॒ता ॥७

अधि । या । बृहतः । दिवः । अभि । यूथाऽइव । पश्यतः ।

ऋतऽवाना । सम्ऽराजा । नमसे । हिता ॥७

“या यौ मित्रावरुणौ “बृहतो "दिवः द्योतमानान् देवान् “अधि “पश्यतः । तत्र दृष्टान्तः ।। “यूथेव। यथा वृषभो गोयूथानि रन्तुम् "अभि अभिमुखं पश्यति तद्वदेतौ स्ववीर्येणासुरान् हत्वा देवान् नोदयितुं पश्यत इत्यर्थः । कीदृशौ । “ऋतावाना सत्यवन्तौ “सम्राजा सम्राजौ सम्यग्दीप्यमानौ “नमसे हविषे “हिता हितौ प्रियौ पश्यत इति ॥

ऋ॒तावा॑ना॒ नि षे॑दतुः साम्रा॑ज्याय सु॒क्रतू॑ ।

धृ॒तव्र॑ता क्ष॒त्रिया॑ क्ष॒त्रमा॑शतुः ॥८

ऋ॒तऽवा॑ना । नि । से॒द॒तुः॒ । साम्ऽरा॑ज्याय । सु॒क्रतू॒ इति॑ सु॒ऽक्रतू॑ ।

धृ॒तऽव्र॑ता । क्ष॒त्रिया॑ । क्ष॒त्रम् । आ॒श॒तुः॒ ॥८

ऋतऽवाना । नि । सेदतुः । साम्ऽराज्याय । सुक्रतू इति सुऽक्रतू ।

धृतऽव्रता । क्षत्रिया । क्षत्रम् । आशतुः ॥८

"ऋतावाना ऋतावानौ सत्यवन्तौ "सुक्रतू शोभनकर्माणौ सुप्रज्ञौ वा मित्रावरुणौ "साम्राज्याय साम्राज्यार्थं "नि “षेदतुः न्यसीदताम् । तथा मन्त्रः --- नि षसाद धृतव्रतो वरुणः पस्त्यास्वा साम्राज्याय सुक्रतुः' (ऋ. सं. १. २५. १०) इति । “धृतव्रता धृतव्रतौ धृतकर्माणौ "क्षत्रिया क्षत्रियौ बलवन्तौ "क्षत्रं बलम् "आशतुः आनशाते व्याप्नुत इत्यर्थः ।

अ॒क्ष्णश्चि॑द्गातु॒वित्त॑रानुल्ब॒णेन॒ चक्ष॑सा ।

नि चिंन्मिषन्तां निचिरा नि चिंक्यतुः ॥९

अक्षणः । चित् । गातुवित्ऽतंरा । अनुल्बणेनं । चक्षंसा ।

नि । चित् । मिषन्तां । निऽचिरा । नि । चिक्यतुः ॥९

अक्षणः । चित् । गातुवित्ऽतरा । अनुल्बणेन । चक्षसा ।

नि । चित् । मिषन्ता । निऽचिरा । नि । चिक्यतुः ॥९

“अक्षणश्चित् चक्षुषोऽपि पूर्वं "गातुवित्तरा गातुवित्तरावतिशयेन मार्गवेत्तारौ । यद्वा । गातुवित्तरौ गातु गमनशीलं प्राणिजातं चक्षुषोऽपि पूर्वं वेत्तारौ मित्रावरुणौ । कीदृशौ। "नि "मिषन्ता निमिषन्तौ सर्वमुन्मेषयन्तौ स्वस्वकर्मणि "निचिरा नितरां चिरंतनौ तौ “अनुल्बणेन । उल्बणमिति दुःसहमग्नेस्तेजः । तद्वददुःसहेन "चक्षसा अहोरात्रयोर्व्याप्तेन तेजसैब "नि "चिक्यतुः पूजितौ बभूवतुः । "चित् अवधारणे ॥

उत नों देव्यदिंतिरुरुष्यतां नासंत्या ।

उरुष्यन्तुं मरुतों वृद्धशंवसः ॥१०

उत । नः । देवी । अदिंतिः । उरुष्यतांम् । नासंत्या ।

उरुष्यन्तुं । मरुतः । वृद्धऽशंवसः ॥१०

उत । नः । देवी । अदितिः । उरुष्यताम् । नासत्या ।

उरुष्यन्तु । मरुतः । वृद्धऽशवसः ॥१०

“उत अपि च "देवी द्योतनशीला "अदितिः मित्रावरुणयोर्माता “नः अस्मान् रक्षतु । “नासत्या नासत्यौ । असत्यमनयोर्नास्तीति नासत्यौ। अश्विनौ च “उरुष्यतां रक्षताम् । उरुष्यतिः कण्ड्वादिः । "वृद्धश्रवसः वृद्धवेगाः । अतिशयेन वेगवन्त इत्यर्थः । यद्वा वर्धनशीलहविर्लक्षणान्नोपेताः । “मरुतः “उरुष्यन्तु अस्मान् पालयन्तु ॥ ॥ २२ ॥

ते नों नावमुंरुष्यत दिवा नक्तं सुदानवः ।

अरिंष्यन्तो नि पायुभिंः सचेमहि ॥११

ते । नः । नावम् । उरुष्यत । दिवां । नक्तंम् । सुऽदानवः ।

अरिंष्यन्तः । नि । पायुऽभिंः । सचेमहि ॥११

ते । नः । नावम् । उरुष्यत । दिवा । नक्तम् । सुऽदानवः ।

अरिष्यन्तः । नि । पायुऽभिः । सचेमहि ॥११

हे सुदानवः शोभनदाना मरुतः "अरिष्यन्तः केनाप्यहिंसिताः “ते तादृशा यूयं “नः अस्मदीयां "नावं यज्ञियां नावं "दिवा “नक्तं च “उरुष्यत पालयत । ततो वयं "पायुभिः युष्मदीयैः पालनैः "नि "सचेमहि नितरां समवेता भवेम ॥

अघ्नंते विष्णंवे वयमरिंष्यन्तः सुदानंवे ।

श्रुधि स्वंयावन्सिन्धो पूर्वचिंत्तये ॥१२

अघ्नंते । विष्णंवे । वयम् । अरिंष्यन्तः । सुऽदानंवे ।

श्रुधि । स्वऽयावन् । सिन्धो इतिं । पूर्वऽचिंत्तये ॥१२

अघ्नते । विष्णवे । वयम् । अरिष्यन्तः । सुऽदानवे ।

श्रुधि । स्वऽयावन् । सिन्धो इति । पूर्वऽचित्तये ॥१२

पूर्वोऽर्धर्चः परोक्षकृतः । “अरिष्यन्तः पालनवत्त्वात् केनाप्यबाधिताः "वयम् "अघ्नते स्तोतॄणां यष्टॄणां चाहिंसकाय “सुदानवे शोभनदानाय "विष्णवे स्वमहत्त्वेन सर्वव्यापकायैतन्नामकाय देवाय स्तुतिं कुर्मः । अथ प्रत्यक्षः । हे "स्वयावन् । स्वयमेवासहायः सन् दिवि संग्रामे वा यातीति स्वयावान् । "सिन्धो स्तोतॄन् प्रति धनानां स्यन्दनशील विष्णो “पूर्वचित्तये । चित्तिः कर्म । मन्त्रान्तरेऽपि तथा श्रवणात् - ‘सा चित्तिभिर्नि हि चकार मर्त्यम् ' (ऋ. सं. १. १६४. २९) इति । पूर्वं प्रारब्धकर्मणे यजमानाय तदर्थं "श्रुधि अस्माभिः क्रियमाणां स्तुतिं त्वं शृणु ॥

तद्वार्यं वृणीमहे वरिंष्ठं गोपयत्यंम् ।

मित्रो यत्पान्ति वरुंणो यदंर्यमा ॥१३

तत् । वार्यंम् । वृणीमहे । वरिंष्ठम् । गोपयत्यंम् ।

मित्रः । यत् । पान्तिं । वरुंणः । यत् । अर्यमा ॥१३

तत् । वार्यम् । वृणीमहे । वरिष्ठम् । गोपयत्यम् ।

मित्रः । यत् । पान्ति । वरुणः । यत् । अर्यमा ॥१३

“वरिष्ठम् उरुतरं “गोपयत्यं सर्वेषां रक्षकं यतैः पालनीयं वा "वार्यं सर्वैर्वननीयं "तत् धनं “वृणीमहे वयं संभजामहे । “यत् धनं “मित्रः सर्वेषां मित्रभूतः "वरुणः शत्रूणां वारयिता “अर्यमा सर्वदा गच्छन् एतन्नामकास्त्रयो देवाः "पान्ति पालयन्ति । तद्धनं वृणीमहे । अस्मदीयस्य धनस्य रक्षका भवन्तीत्यर्थः ॥

उ॒त न॑ः सिन्धु॑र॒पां तन्म॒रुत॒स्तद॒श्विना॑ ।

इन्द्रो॒ विष्णु॑र्मी॒ढ्वांस॑ः स॒जोष॑सः ॥१४

उ॒त । न॒ः । सिन्धु॑ः । अ॒पाम् । तत् । म॒रुत॑ः । तत् । अ॒श्विना॑ ।

इन्द्र॑ः । विष्णु॑ः । मी॒ढ्वांस॑ः । स॒ऽजोष॑सः ॥१४

उत । नः । सिन्धुः । अपाम् । तत् । मरुतः । तत् । अश्विना ।

इन्द्रः । विष्णुः । मीढ्वांसः । सऽजोषसः ॥१४

पुनरपि धनरक्षणमेवाशास्ते। “उत अपि च “अपाम् उदकानां “सिन्धुः स्यन्दनाशीलः पर्जन्यः “नः अस्मदीयं "तत् धनं रक्षतु । "तत् एव “मरुतः च पालयन्तु । "अश्विना अश्विनौ देवौ तद्धनं पालयताम् । तथा “इन्द्रः "विष्णुः ॥ “मीढ्वांसः कामानां सेक्तार एते सर्वे देवाः "सजोषसः संगताः सन्तोऽस्मदीयं धनं रक्षन्तु । एते देवा अस्मभ्यं धनं दत्त्वा पालयन्त्वित्यर्थः ॥

ते हि ष्मा॑ व॒नुषो॒ नरो॒ऽभिमा॑तिं॒ कय॑स्य चित् ।

ति॒ग्मं न क्षोद॑ः प्रति॒घ्नन्ति॒ भूर्ण॑यः ॥१५

ते । हि । स्म॒ । व॒नुष॑ः । नर॑ः । अ॒भिऽमा॑तिम् । कय॑स्य । चि॒त् ।

ति॒ग्मम् । न । क्षोद॑ः । प्र॒ति॒ऽघ्नन्ति॑ । भूर्ण॑यः ॥१५

ते । हि । स्म । वनुषः । नरः । अभिऽमातिम् । कयस्य । चित् ।

तिग्मम् । न । क्षोदः । प्रतिऽघ्नन्ति । भूर्णयः ॥१५

“वनुषः वननीयाः संभजनीयाः "नरः नेतारः “ते “हि “ष्मा ते खलु देवाः “भूर्णयः क्षिप्रगमनाः सन्तः "कयस्य “चित् कस्यचिच्छत्रोः "अभिमातिम् अभिमानं “प्रतिघ्नन्ति प्रतिकूलं यथा भवति तथा हिंसन्ति । तत्र दृष्टान्तः । "तिग्मं “न यथा तिग्मं तीक्ष्णं जवेन गच्छत् “क्षोदः उदकमग्रतः स्थितं वृक्षमुन्मूलयति तद्वत्तस्याभिमानं घ्नन्तीत्यर्थः ॥ ॥ २३ ॥

अ॒यमेक॑ इ॒त्था पु॒रूरु च॑ष्टे॒ वि वि॒श्पति॑ः ।

तस्य॑ व्र॒तान्यनु॑ वश्चरामसि ॥१६

अ॒यम् । एक॑ः । इ॒त्था । पु॒रु । उ॒रु । च॒ष्टे॒ । वि । वि॒श्पति॑ः ।

तस्य॑ । व्र॒तानि॑ । अनु॑ । व॒ः । च॒रा॒म॒सि॒ ॥१६

अयम् । एकः । इत्था । पुरु । उरु । चष्टे । वि । विश्पतिः ।

तस्य । व्रतानि । अनु । वः । चरामसि ॥१६

मित्रस्य कर्माण्याह । "विश्पतिः विशां पालयिता अनयोर्मित्रावरुणयोः "एकः "अयं मित्रः “पुरु पुरूणि बहूनि च “उरु उरूणि च द्रव्याणि “इत्था इत्थं “वि “चष्टे स्वतेजसा पश्यति । “तस्य मित्रस्य “व्रतानि कर्माणि "वः युष्मदर्थम् "अनु "चरामसि अनुचरामः । कुर्म इत्यर्थः ॥

अनु॒ पूर्वा॑ण्यो॒क्या॑ साम्रा॒ज्यस्य॑ सश्चिम ।

मि॒त्रस्य॑ व्र॒ता वरु॑णस्य दीर्घ॒श्रुत् ॥१७

अनु॑ । पूर्वा॑णि । ओ॒क्या॑ । सा॒म्ऽरा॒ज्यस्य॑ । स॒श्चि॒म॒ ।

मि॒त्रस्य॑ । व्र॒ता । वरु॑णस्य । दी॒र्घ॒ऽश्रुत् ॥१७

अनु । पूर्वाणि । ओक्या । साम्ऽराज्यस्य । सश्चिम ।

मित्रस्य । व्रता । वरुणस्य । दीर्घऽश्रुत् ॥१७

"साम्राज्यस्य । सम्राजो भावः साम्राज्यम्। साम्राज्यमस्यास्तीति साम्राज्यः। 'अर्शआदिभ्यः' इत्यच्प्रत्ययः । साम्राज्यवतो वरुणस्य "पूर्वाणि पुरातनानि “ओक्या । ओको गृहम् । तस्मै हितानि कर्माणि वयं "सश्चिम । सश्चतिर्गतिकर्मा । लिटि रूपम् । द्विर्वचनस्य छन्दसि विकल्पितत्वादत्र द्विर्वचनाभावः । तदेवाह । "मित्रस्य “व्रता व्रतानि कर्माणि च "दीर्घश्रुत् । ' सुपां सुलुक्' इति षष्ठ्या लुक् । दीर्घश्रुतोऽतिशयेन प्रसिद्धस्य "वरुणस्य व्रतानि च सश्चिमेति ॥

परि॒ यो र॒श्मिना॑ दि॒वोऽन्ता॑न्म॒मे पृ॑थि॒व्याः ।

उ॒भे आ प॑प्रौ॒ रोद॑सी महि॒त्वा ॥१८

परि॑ । यः । र॒श्मिना॑ । दि॒वः । अन्ता॑न् । म॒मे । पृ॒थि॒व्याः ।

उ॒भे इति॑ । आ । प॒प्रौ॒ । रोद॑सी॒ इति॑ । म॒हि॒ऽत्वा ॥१८

परि । यः । रश्मिना । दिवः । अन्तान् । ममे । पृथिव्याः ।

उभे इति । आ । पप्रौ । रोदसी इति । महिऽत्वा ॥१८

"यः मित्रः “दिवः "पृथिव्याः द्यावापृथिव्योः "अन्तान् "रश्मिना स्वतेजसा "परि “ममे परिमिनोति । तयोः पर्यन्तान् स्वरश्मिना भासयतीत्यर्थः। स एव "उभे "रोदसी द्यावापृथिव्यौ “महित्वा स्वमहिम्ना "आ "पप्रौ आ समन्तात् पूरयति ॥

उदु ष्य शंरणे दिवो ज्योतिंरयंस्त सूर्यः ।

अग्निर्न शुक्रः संमिधान आहुंतः ॥१९

उत् । ऊं इतिं । स्यः । शरणे । दिवः । ज्योतिः । अयंस्त । सूर्यः ।

अग्निः । न । शुक्रः । सम्ऽइधानः । आऽहुंतः ॥१९

उत् । ऊं इति । स्यः । शरणे । दिवः । ज्योतिः । अयंस्त । सूर्यः ।

अग्निः । न । शुक्रः । सम्ऽइधानः । आऽहुतः ॥१९

"सूर्यः सुवीर्यः सुष्ठु सर्वस्य प्रेरकः "स्यः स मित्रो वरुणश्च "दिवः द्योतमानस्यादित्यस्य "शरणे स्थाने नभसि "ज्योतिः आत्मीयं तेजः "उत् "अयंस्त उद्यच्छति । ऊर्ध्वं गमयति । सर्वत्र विस्तारयतीत्यर्थः । यमेर्लुङि रूपम् । ततः सः “अग्निर्न “शुक्रः अग्निरिव दीप्यमानः "समिधानः हविर्भिः समिध्यमानः “आहुतः सर्वैराहूतस्तिष्ठति । ।

वचों दीर्घप्रंसद्मनीशे वाजंस्य गोमंतः ।

ईशे हि पित्वोंऽविषस्यं दावनें ॥२०

वचः । दीर्घऽप्रंसद्मनि । ईशें । वाजंस्य । गोऽमंतः ।

ईशें । हि । पित्वः । अविषस्यं । दावनें ॥२०

वचः । दीर्घऽप्रसद्मनि । ईशे । वाजस्य । गोऽमतः ।

ईशे । हि । पित्वः । अविषस्य । दावने ॥२०

हे स्तोतः "दीर्घप्रसद्मनि दीर्घं प्रततं विस्तृतं सद्म सदनं यस्मिन् यज्ञे "वचः मित्रं वरुणं च स्तुहि । वक्तेर्लेट्यडागमः । स वरुणः “गोमतः पशुमतः “वाजस्य अन्नस्य "ईशे ईष्टे स्वामी भवति । केवलं स्वामी न भवति किंतु "अविषस्य महतः प्रीतिकारिणः पित्वः अन्नस्य “दावने दानाय च "ईशे समर्थो भवति । ये स्तोत्रं कुर्वन्ति तेभ्योऽयं ददातीत्यर्थः ॥ ॥ २४ ॥

तत्सूर्यं रोदंसी उभे दोषा वस्तोरुपं ब्रुवे ।

भोजेष्वस्माँ अभ्युच्चंरा सदां ॥२१

तत् । सूर्यम् । रोदंसी इतिं । उभे इतिं । दोषा । वस्तोः । उपं । ब्रुवे ।

भोजेषुं । अस्मान् । अभि । उत् । चर । सदां ॥२१

तत् । सूर्यम् । रोदसी इति । उभे इति । दोषा । वस्तोः । उप । ब्रुवे ।

भोजेषु । अस्मान् । अभि । उत् । चर । सदा ॥२१

“सूर्यं सुवीर्यं "तत् वारुणं मैत्रं च तेजः "उभे "रोदसी उभे द्यावापृथिव्यौ च "दोषा । ‘सुपां सुलुक्' इति द्वितीयाया लुक् । 'कालाध्वनोः' इति द्वितीथा। रात्रौ "वस्तोः अहनि चाहम् "उप “ब्रुवे उपस्तौमि । त्वं स्तूयमानो वरुणः “भोजेषु दातृषु "अस्मान् सदा “अभ्युच्चर सर्वदाभिमुखं प्रेरय । दातृष्वेतेषां दानेष्वस्मान् पुरोभाविनः कुर्वित्यर्थः ।।

ऋ॒ज्रमु॑क्ष॒ण्याय॑ने रज॒तं हर॑याणे ।

रथं॑ यु॒क्तम॑सनाम सु॒षाम॑णि ॥२२

ऋ॒ज्रम् । उ॒क्ष॒ण्याय॑ने । र॒ज॒तम् । हर॑याणे ।

रथ॑म् । यु॒क्तम् । अ॒स॒ना॒म॒ । सु॒ऽसाम॑नि ॥२२

ऋज्रम् । उक्षण्यायने । रजतम् । हरयाणे ।

रथम् । युक्तम् । असनाम । सुऽसामनि ॥२२

सुषाम्णः पुत्रो वरुर्नाम राजा । स यद्दानं प्रादात् विश्वमनसे तदसौ विश्वमना ऋषिरनया आचष्टे । "उक्षण्यायने । उक्षनामा कश्चिद्वरोः पूर्वजः। तस्य गोत्रापत्य उक्षणशब्दाण्ण्यः । तदन्तात् फक्प्रत्ययः । एतौ छान्दसौ। वृद्धिभावोऽपि संज्ञापूर्वको विधिरनित्यः' इति न भवति । तस्य गोत्रापत्ये "हरयाणे शत्रुजीवितैश्वर्यादिहरणशीलयाने एतादृशे “सुषामणि । बहुवत्पितृशब्देन पुत्रोऽभिधीयते । सुषाम्णः पुत्रे वरौ राजनि ददति सति किमभूत्। “ऋज्रम् ऋजुगामिनं "रजतं रजतमयं रजतसदृशं वा "युक्तम् अश्वाभ्यां युक्तं “रथम् "असनाम् । एतेषां मित्रादीनां प्रसादात् वयं संभक्तवन्तो लब्धवन्तोऽभूम ॥

ता मे॒ अश्व्या॑ना॒ं हरी॑णां नि॒तोश॑ना ।

उ॒तो नु कृत्व्या॑नां नृ॒वाह॑सा ॥२३

ता । मे॒ । अश्व्या॑नाम् । हरी॑णाम् । नि॒ऽतोश॑ना ।

उ॒तो इति॑ । नु । कृत्व्या॑नाम् । नृ॒ऽवाह॑सा ॥२३

ता । मे । अश्व्यानाम् । हरीणाम् । निऽतोशना ।

उतो इति । नु । कृत्व्यानाम् । नृऽवाहसा ॥२३

ऋषिः प्रतिगृहीतावश्वावाह। "हरीणां हरितवर्णानाम् "अश्व्यानाम् अश्वसंघानां मध्ये “नितोशना नितोशनौ । तोशतिर्हिंसाकम। शत्रूणामत्यन्तं बाधकृतौ "उतो अपि च "कृत्व्यानां युद्धकर्मणि कुशलानां च स्वकुशलमिति बाधकौ "नृवाहसा नृवाहसौ

आयुधनेतॄणां मनुष्याणां वोढारौ "ता तावश्वौ "मे मह्यं "नु क्षिप्रं सौषाम्णेन वरुणा दत्तौ भवेताम् ।।

स्मद॑भीशू॒ कशा॑वन्ता॒ विप्रा॒ नवि॑ष्ठया म॒ती ।

म॒हो वा॒जिना॒वर्व॑न्ता॒ सचा॑सनम् ॥२४

स्मद॑भीशू॒ इति॒ स्मत्ऽअ॑भीशू । कशा॑ऽवन्ता । विप्रा॑ । नवि॑ष्ठया । म॒ती ।

म॒हः । वा॒जिनौ॑ । अर्व॑न्ता । सचा॑ । अ॒स॒न॒म् ॥२४

स्मदभीशू इति स्मत्ऽअभीशू । कशाऽवन्ता । विप्रा । नविष्ठया । मती ।

महः । वाजिनौ । अर्वन्ता । सचा । असनम् ॥२४

ऋषिरिदानीं तावश्वावग्रहीषमित्याह। "स्मदभीशू। स्मत्सुमत् । उकारलोपश्छान्दसः । शोभनरज्जुयुक्तौ यद्वा शोभनशरीरकान्ती "कशावन्ता कशावन्तौ कशायुक्तौ "विप्रा विप्रौ मेधाविनामुचितौ । मेधावी स्तोता यथा स्तुत्यं देवं स्तुतिभिः प्रीणयति तद्वत् संतोषकौ । "महः महतः सौषाम्णस्य वरोः संवन्धिनौ "वाजिनौ शीघ्रगमनवन्तौ “अर्वन्ता अर्वन्तौ द्वावश्वौ “सचा सह युगपदेव "नविष्ठया नवतरया "मती मत्या स्तुत्या मित्रादीन् स्तुवन् “असनम् । विश्वमना अहं समभजम् । प्रत्यग्रहीषमित्यर्थः ॥ ॥ २५ ॥

# ऋग्वेदः सूक्तं ८.२६

ऋग्वेदः - मण्डल ८
← सूक्तं ८.२५ सूक्तं ८.२६ सूक्तं ८.२७ →
विश्वमना वैयश्वः, व्यश्वो वाङ्गिरसः।

दे. अश्विनौ, २०-२५ वायुः। उष्णिक्, १६-१९, २१, २५ गायत्री, २० अनुष्टुप्।

---

युवोरु षू रथं हुवे सधस्तुत्याय सूरिषु ।

अतूर्तदक्षा वृषणा वृषण्वसू ॥१॥

युवं वरो सुषाम्णे महे तने नासत्या ।

अवोभिर्याथो वृषणा वृषण्वसू ॥२॥

ता वामद्य हवामहे हव्येभिर्वाजिनीवसू ।

पूर्वीरिष इषयन्तावति क्षपः ॥३॥

आ वां वाहिष्ठो अश्विना रथो यातु श्रुतो नरा ।

उप स्तोमान्तुरस्य दर्शथः श्रिये ॥४॥

जुहुराणा चिदश्विना मन्येथां वृषण्वसू ।

युवं हि रुद्रा पर्षथो अति द्विषः ॥५॥

दस्रा हि विश्वमानुषङ्मक्षूभिः परिदीयथः ।

धियंजिन्वा मधुवर्णा शुभस्पती ॥६॥

उप नो यातमश्विना राया विश्वपुषा सह ।

मघवाना सुवीरावनपच्युता ॥७॥

आ मे अस्य प्रतीव्यमिन्द्रनासत्या गतम् ।

देवा देवेभिरद्य सचनस्तमा ॥८॥

वयं हि वां हवामह उक्षण्यन्तो व्यश्ववत् ।

सुमतिभिरुप विप्राविहा गतम् ॥९॥

अश्विना स्वृषे स्तुहि कुवित्ते श्रवतो हवम् ।

नेदीयसः कूळयातः पणीँरुत ॥१०॥

वैयश्वस्य श्रुतं नरोतो मे अस्य वेदथः ।

सजोषसा वरुणो मित्रो अर्यमा ॥११॥

युवादत्तस्य धिष्ण्या युवानीतस्य सूरिभिः ।

अहरहर्वृषण मह्यं शिक्षतम् ॥१२॥

यो वां यज्ञेभिरावृतोऽधिवस्त्रा वधूरिव ।

सपर्यन्ता शुभे चक्राते अश्विना ॥१३॥

यो वामुरुव्यचस्तमं चिकेतति नृपाय्यम् ।

वर्तिरश्विना परि यातमस्मयू ॥१४॥

अस्मभ्यं सु वृषण्वसू यातं वर्तिर्नृपाय्यम् ।

विषुद्रुहेव यज्ञमूहथुर्गिरा ॥१५॥

वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा ।

युवाभ्यां भूत्वश्विना ॥१६॥

यददो दिवो अर्णव इषो वा मदथो गृहे ।

श्रुतमिन्मे अमर्त्या ॥१७॥

उत स्या श्वेतयावरी वाहिष्ठा वां नदीनाम् ।

सिन्धुर्हिरण्यवर्तनिः ॥१८॥

स्मदेतया सुकीर्त्याश्विना श्वेतया धिया ।

वहेथे शुभ्रयावाना ॥१९॥

युक्ष्वा हि त्वं रथासहा युवस्व पोष्या वसो ।

आन्नो वायो मधु पिबास्माकं सवना गहि ॥२०॥

तव वायवृतस्पते त्वष्टुर्जामातरद्भुत ।

अवांस्या वृणीमहे ॥२१॥

त्वष्टुर्जामातरं वयमीशानं राय ईमहे ।

सुतावन्तो वायुं द्युम्ना जनासः ॥२२॥

वायो याहि शिवा दिवो वहस्वा सु स्वश्व्यम् ।

वहस्व महः पृथुपक्षसा रथे ॥२३॥

त्वां हि सुप्सरस्तमं नृषदनेषु हूमहे ।

ग्रावाणं नाश्वपृष्ठं मंहना ॥२४॥

स त्वं नो देव मनसा वायो मन्दानो अग्रियः ।

कृधि वाजाँ अपो धियः ॥२५॥

**सायणभाष्यम्**

‘युवोरु षू' इति पञ्चविंशत्यृचं षष्ठं सूक्तम् । अत्रानुक्रमणिका – 'युवोः पञ्चाधिका व्यश्वो वाङ्गिरस आश्विनं विंश्याद्या वायव्यास्तत्पूर्वाश्वतस्रो गायत्र्योऽन्यैकविंश्यौ च विंश्यनुष्टुप्' इति । आङ्गिरसो व्यश्वो वैयश्वो विश्वमना वा ऋषिः । षोडश्याद्याश्वतस्रो गायत्र्यो विंश्यनुष्टुबेकविंशी पञ्चविंशी च गायत्र्यौ शिष्टाः पूर्ववदुष्णिहः । अश्विनौ देवता। विंश्याद्याः पञ्चर्चो वायुदेवताकाः । प्रातरनुवाक आश्विने क्रतौ औष्णिहे छन्दस्याश्विनशस्त्रे चादितः पञ्चदशर्चः । सूत्रितं च -- युवोरु षू रथं हुव इति पञ्चदशेत्यौष्णिहम् ' (आश्व. श्रौ. ४. १५) इति ॥

युवोरु षू रथं हुवे सधस्तुत्याय सूरिषु ।

अतूर्तदक्षा वृषणा वृषण्वसू ॥१

युवोः । ऊं इति । सु । रथम् । हुवे । सधऽस्तुत्याय । सूरिषु ।

अतूर्तऽदक्षा । वृषणा । वृषण्वसू इति वृषण्ऽवसू ॥१

युवोः । ऊं इति । सु । रथम् । हुवे । सधऽस्तुत्याय । सूरिषु ।

अतूर्तऽदक्षा । वृषणा । वृषण्वसू इति वृषण्ऽवसू ॥१

हे "अतूर्तदक्षा । ‘तॄ प्लवनतरणयोः' इत्यस्य निष्ठायां ‘नसत्त' इति सूत्रेण निपातितः । परैरहिंसितबलौ "वृषणा वृषणौ कामानां सेक्तारौ अत एव "वृषण्वसू वर्षणशीलधनवन्तावश्विनौ “युवोः युवयो रथं "सु "हुवे सुष्ठु स्तोत्रादिभिराह्वयामि । किमर्थम् । "सूरिषु प्राज्ञेषु स्तोतृषु मध्ये “सधस्तुत्याय । स्तौतेर्भावे क्यप् । सह भवन्तौ स्तोतुम् । तस्माद्युवयोः शीघ्रगत्यै युष्मद्गमनसाधनरथमेवाह्वयामि ।।

युवं वरो सुषाम्णे महे तने नासत्या ।

अवोभिर्याथो वृषणा वृषण्वसू ॥२

युवम् । वरो इति । सुऽसाम्ने । महे । तने । नासत्या ।

अवःऽभिः । याथः । वृषणा । वृषण्वसू इति वृषण्ऽवसू ॥२

युवम् । वरो इति । सुऽसाम्ने । महे । तने । नासत्या ।

अवःऽभिः । याथः । वृषणा । वृषण्वसू इति वृषण्ऽवसू ॥२

ऋषिर्वरुं राजानं संबोध्याह । हे "नासत्या नासत्यौ । न विद्यतेऽसत्यमनयोरिति नासत्यौ । “वृषणा कामानां वर्षितारौ "वृषण्वसू वर्षणशीलवसुमन्तावश्विनौ "युवं युवां "सुषाम्णे सुषामाख्यराज्ञे मम पित्रेऽस्मै “महे महते “तने । तनोतीति तनं धनम् । धनाय । ‘क्रियार्थोपपदस्य' इति चतुर्थी । तस्मै धनं दातुं पुरा यथागच्छतं तद्वत् मह्यमपि धनं दातुम् "अवोभिः पालनैः सह "याथः युवामायातमिति हे "वरो वरुनामक राजन्नेवं ब्रूहीति ऋषिर्वदति ॥

ता वा॑म॒द्य ह॑वामहे ह॒व्येभि॑र्वाजिनीवसू ।

पू॒र्वीरि॒ष इ॒षयं॑ता॒वति॑ क्ष॒पः ॥३

ता । वा॒म् । अ॒द्य । ह॒वा॒म॒हे॒ । ह॒व्येभिः॑ । वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनीऽवसू ।

पू॒र्वीः । इ॒षः । इ॒षय॑न्तौ । अति॑ । क्ष॒पः ॥३

ता । वाम् । अद्य । हवामहे । हव्येभिः । वाजिनीवसू इति वाजिनीऽवसू ।

पूर्वीः । इषः । इषयन्तौ । अति । क्षपः ॥३

हे “वाजिनीवसू अन्नयुक्तधनवन्तावश्विनौ “पूर्वीः बहूनि “इषः अन्नानि “इषयन्तौ । ‘इषु इच्छायाम् । इच्छन्तौ “ता तौ प्रसिद्धौ "वां युवाम् "अद्य अस्मिन् यागदिने "अति "क्षपः क्षपाया अतिक्रमे । उषःकाल इत्यर्थः । तस्मिन्नुषःकाले "हव्येभिः हविर्लक्षणैरन्नैः सह वयं "हवामहे आह्वयामः । आश्विनशस्त्रस्य तत्र शस्यमानत्वादुषःकाल एवाह । याग इत्यर्थः ॥

आ वां॒ वाहि॑ष्ठो अश्विना॒ रथो॑ यातु श्रु॒तो न॑रा ।

उप॒ स्तोमा॑न्तु॒रस्य॑ दर्शथः श्रि॒ये ॥४

आ । वा॒म् । वाहि॑ष्ठः । अ॒श्वि॒ना॒ । रथः॑ । या॒तु॒ । श्रु॒तः । न॒रा॒ ।

उप॑ । स्तोमा॑न् । तु॒रस्य॑ । द॒र्श॒थ॒ः । श्रि॒ये ॥४

आ । वाम् । वाहिष्ठः । अश्विना । रथः । यातु । श्रुतः । नरा ।

उप । स्तोमान् । तुरस्य । दर्शथः । श्रिये ॥४

हे "नरा सर्वस्य नेतारौ "अश्विना अश्विनौ "वां युवयोः “वाहिष्ठः वोढृतमः "श्रुतः विश्रुतः सर्वत्र प्रसिद्धः “रथः “आ “यातु अस्मदीयं यज्ञं प्रत्यागच्छतु । तेन रथेन युवामागत्य “तुरस्य क्षिप्रं स्तोत्रं कुर्वतस्तस्य "स्तोमान् त्रिवृत्पञ्चदशादिस्तोमान् "श्रिये तस्यैश्वर्यप्रदानाय “उप "दर्शथः । पश्यतिर्ज्ञानकर्मा । जानीतम् । दृशेर्लटि व्यत्ययेनाङादेशः ।।

जु॒हु॒रा॒णा चि॑दश्वि॒ना म॑न्येथां वृषण्वसू ।

यु॒वं हि रु॑द्रा॒ पर्षि॑थो॒ अति॒ द्विषः॑ ॥५

जु॒हु॒रा॒णा । चि॒त् । अ॒श्वि॒ना॒ । आ । म॒न्ये॒था॒म् । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू ।

यु॒वम् । हि । रु॒द्रा॒ । पर्षि॑थः । अति॑ । द्विषः॑ ॥५

जुहुराणा । चित् । अश्विना । आ । मन्येथाम् । वृषण्वसू इति वृषण्ऽवसू ।

युवम् । हि । रुद्रा । पर्षथः । अति । द्विषः ॥५

हे वृषण्वसू वर्षणशीलधनवन्तौ "अश्विना अश्विनौ "जुहुराणा "चित् । “हुर्छा कौटिल्ये'। ‘हुर्छेः सनो लुक् छलोपश्च' (उ. सू. २. २४८) इत्यानच्प्रत्ययः । कुटिलान् कर्मविघ्कारिणो मायाविनोऽपि शत्रून् "आ आभिमुख्येन “मन्येथां जानीतम् । ततो हे "रुद्रा संग्रामे रोदनशीलौ रुवन्तौ वा अश्विनौ “युवम् । हिरवधारणे । युवामेव "द्विषः द्वेषकारिणः तान् शत्रून् "अति “पर्षथः अतीत्य संक्लेशयतम् । हतमित्यर्थः । ‘पृषु हिंसासंक्लेशनयोः' इति भौवादिकः ॥ ॥ २६ ॥

द॒स्रा हि विश्व॑मानु॒षङ्म॒क्षूभिः॑ परि॒दीय॑थः ।

धि॒यं॒जि॒न्वा मधु॑वर्णा शु॒भस्पती॑ ॥६

द॒स्रा । हि । विश्व॑म् । आ॒नु॒षक् । म॒क्षुऽभिः॑ । प॒रि॒ऽदीय॑थः ।

धि॒य॒म्ऽजि॒न्वा । मधु॑ऽवर्णा । शु॒भः । पती॒ इति॑ ॥६

दस्रा । हि । विश्वम् । आनुषक् । मक्षुऽभिः । परिऽदीयथः ।

धियम्ऽजिन्वा । मधुऽवर्णा । शुभः । पती इति ॥६

"दस्रा दस्रौ सर्वैदर्शनीयौ । यद्वा । ' दसु उपक्षये' । शत्रूणामुपक्षपयितारावश्विनौ । कीदृशौ । धियंजिन्वा धियंजिन्वौ । जिविः प्रीणनार्थः । कर्माणि प्रीणयन्तौ “मधुवर्णा मधुवर्णौ सर्वेषां मादनशीलशरीरकान्ती । ये युवयो रूपं पश्यन्ति ते तत्रैव हृष्टा भवन्तीत्यर्थः । तादृशौ “शुभस्पती उदकस्य पालयितारौ तादृशौ युवां “मक्षुभिः शीघ्रगमनैरश्वैः “आनुषक् अनुषक्तं यथा भवति तथा “विश्वम् ऋत्विग्भिर्हविर्भिश्च व्याप्तम् । हिरवधारणे । अस्मदीयं यज्ञमेव प्रति “परिदीयथः । दीयतिर्गतिकर्मा । परित आगच्छतम् ॥

उप॑ नो यातमश्विना रा॒या वि॑श्व॒पुषा॑ स॒ह ।

म॒घवा॑ना सु॒वीरा॒वन॑पच्युता ॥७

उप॑ । न॒ः । या॒त॒म् । अ॒श्वि॒ना॒ । रा॒या । वि॒श्व॒ऽपुषा॑ । स॒ह ।

म॒घऽवा॑ना । सु॒ऽवीरौ॑ । अन॑पऽच्युता ॥७

उप । नः । यातम् । अश्विना । राया । विश्वऽपुषा । सह ।

मघऽवाना । सुऽवीरौ । अनपऽच्युता ॥७

हे "अश्विना अश्विनौ “विश्वपुषा विश्वस्य सर्वस्य पोषकेण "राया धनेन "सह "नः अस्मदीयं यज्ञम् “उप “यातम् उपागच्छतम् । यज्ञमागत्य धनमस्यभ्यं प्रयच्छतमिति भावः । किमनयोर्धनमस्तीत्यत आह । "मघवाना मघवानौ मंहनीयधनवन्तौ "सुवीरौ शोभनसामर्थ्योपेतौ । यद्वा । वीराः समर्थाः शत्रवः । तद्वन्तौ । तथापि “अनपच्युता तैरपच्यावनीयौ न भवतः । तौ यज्ञं प्रत्यागच्छतम्

आ मे॑ अ॒स्य प्र॑ती॒व्य१॒॑मिंद्रं॑नासत्या गतं ।

दे॒वा दे॒वेभि॑र॒द्य स॒चनं॑स्तमा ॥८

आ । मे॒ । अ॒स्य । प्र॒ती॒व्य॑म् । इन्द्रं॑नासत्या । ग॒त॒म् ।

दे॒वा । दे॒वेभिः॑ । अ॒द्य । स॒चनः॑ऽतमा ॥८

आ । मे । अस्य । प्रतीव्यम् । इन्द्रनासत्या । गतम् ।

देवा । देवेभिः । अद्य । सचनःऽतमा ॥८

हे “इन्द्रनासत्या इन्द्राश्विनौ "सचनस्तमा । “षच समवाये । ‘कृत्यल्युटः ' इति कर्मणि ल्युट् । अतिशयेन सर्वैः समवेतव्यौ सेव्यमानौ युवां "प्रतीव्यम् । वी गत्यादिषु । अधिकरणे औणादिकः क्विप् । प्रतिशब्दस्य वीप्सार्थोऽस्ति । पुनःपुनर्वियन्ति भक्षयन्ति हवींषि देवा अत्रेति प्रतीवीर्यज्ञः । तम् "अस्य पुरोवर्तिनः "मे मम संबन्धिनं यज्ञम् "अद्य अस्मिन् दिने “देवेभिः देवैः सार्धम् आ "गतम् आगच्छतम् । यद्वा। मे मम अस्य क्रियमाणस्य स्तोत्रस्य प्रतीव्यं प्रतिगतं यथा भवति तथाभिमुख्येनायातम् ।।

व॒यं हि वा॒ं हवा॑मह उक्ष॒ण्यंतो॑ व्यश्व॒वत् ।

सु॒म॒तिभि॒रुप॑ विप्रावि॒हा ग॑तं ॥९

व॒यम् । हि । वा॒म् । हवा॑महे । उ॒क्ष॒ण्यन्तः॑ । व्य॒श्व॒ऽवत् ।

सु॒म॒तिऽभिः॑ । उप॑ । वि॒प्रौ॒ । इ॒ह । आ । ग॒त॒म् ॥९

वयम् । हि । वाम् । हवामहे । उक्षण्यन्तः । व्यश्वऽवत् ।

सुमतिऽभिः । उप । विप्रौ । इह । आ । गतम् ॥९

“उक्षण्यन्तः धनादिसेक्तारावात्मन इच्छन्तः "वयं वां “हि धनादीनां प्रत्तारौ युवामेव "हवामहे तल्लाभार्थमाह्वयामः । तत्र दृष्टान्तः । “व्यश्ववत् । यथास्माकं पिता युवामेव स्तुत्वा धनमलभत तद्वत् । हे “विप्रौ मेधाविनावश्विनौ "सुमतिभिः अस्माभिः क्रियमाणैः कल्याणैः स्तोत्रैः सह । यद्वा । सुमतिभिः शोभनाभिरनुग्रहबुद्धिभिः सह । "इह अस्मिन् यागदिने उप “आ “गतम् उपागच्छतम् ।।

अ॒श्विना॒ स्वृ॑षे स्तुहि कु॒वित्ते॒ श्रव॑तो॒ हवं॑ ।

नेदी॑यसः कूळयातः प॒णीँरु॒त ॥१०

अ॒श्विना॑ । सु । ऋ॒षे॒ । स्तु॒हि॒ । कु॒वित् । ते॒ । श्रव॑तः । हव॑म् ।

नेदी॑यसः । कू॒ळ॒या॒तः॒ । प॒णीन् । उ॒त ॥१०

अश्विना । सु । ऋषे । स्तुहि । कुवित् । ते । श्रवतः । हवम् ।

नेदीयसः । कूळयातः । पणीन् । उत ॥१०

हे “ऋषे विश्वमनः "अश्विना अश्विनौ देवौ “सु “ष्टुहि शोभनं स्तुहि । ततस्तावश्विनौ “ते स्तोतुस्तव "हवम् आह्वानं "कुवित् । कुविदिति बहुनाम । बहुवारं “श्रवतः शृणुताम् । श्रु श्रवणे'। लेट्यडागमः । एवं त्वया स्तुतावश्विनौ "नेदीयसः अन्तिकतमान् शत्रून् कूळयातः हिंस्ताम् । "उत अपि च "पणीन् एतन्नामकान् अङ्गिरोगवामपनेतॄन असुरानपि हिंस्ताम् ॥ ‘कुडि दाहे । ण्यन्तस्य लेट्याडागमः ॥ ॥ २७ ॥

वै॒य॒श्वस्य॑ श्रुतं नरो॒तो मे॑ अ॒स्य वे॑दथः ।

स॒जोष॑सा॒ वरु॑णो मि॒त्रो अ॑र्य॒मा ॥११

वै॒य॒श्वस्य॑ । श्रु॒त॒म् । न॒रा॒ । उ॒तो इति॑ । मे॒ । अ॒स्य । वे॒द॒थः॒ ।

स॒ऽजोष॑सा । वरु॑णः । मि॒त्रः । अ॒र्य॒मा ॥११

वैयश्वस्य । श्रुतम् । नरा । उतो इति । मे । अस्य । वेदथः ।

सऽजोषसा । वरुणः । मित्रः । अर्यमा ॥११

हे "नरा नेतारावश्विनौ “वैयश्वस्य व्यश्वपुत्रस्य विश्वमनसो ममाह्वानं “श्रुतं शृणुतम् । “उत अपि च "मे मदीयम् "अस्य तदाह्वानं "वेदथः आत्मीयतया जानीथः । अथ "वरुणः ”मित्रः मित्रावरुणौ च "सजोषसा संगतौ सन्तौ "अर्यमा एतन्नामको देवश्च मदीयमाह्वानं श्रुत्वा मह्यं धनादिकं प्रयच्छन्तु ॥

यु॒वाद॑त्तस्य धिष्ण्या यु॒वानी॑तस्य सू॒रिभिः॑ ।

अह॑रहर्वृषण॒ मह्यं॑ शिक्षतं ॥१२

यु॒वाऽद॑त्तस्य । धि॒ष्ण्या॒ । यु॒वाऽनी॑तस्य । सू॒रिऽभिः॑ ।

अहः॑ऽअहः । वृ॒ष॒णा॒ । मह्य॑म् । शि॒क्ष॒त॒म् ॥१२

युवाऽदत्तस्य । धिष्ण्या । युवाऽनीतस्य । सूरिऽभिः ।

अहःऽअहः । वृषणा । मह्यम् । शिक्षतम् ॥१२

हे “धिष्ण्या धिष्ण्यौ धिषणार्हौ स्तुत्यौ वृषणौ कामानां सेक्तारावश्विनौ "सूरिभिः । ‘सुपां सुपो भवन्ति' इति चतुर्थ्यास्तृतीया । सूरिभ्यः स्तोतृभ्यः “युवादत्तस्य युवाभ्यां यत्स्तोतृभ्यो दीयते तत् तथा “युवानीतस्थ युवाभ्यां यत्स्तोतृभ्यो नीयते तञ्च धनादिकम् "अहरहः अहन्यहनि “मह्यं विश्वमनसे स्तोत्रं कुर्वाणाय युवां "शिक्षतं प्रयच्छतम् ।।

यो वां॑ य॒ज्ञेभि॒रावृ॒तोऽधि॑वस्त्रा व॒धूरि॑व ।

स॒प॒र्यन्ता॑ शु॒भे च॑क्राते अ॒श्विना॑ ॥१३

यः । वा॒म् । य॒ज्ञेभिः॑ । आऽवृ॑तः । अधि॑ऽवस्त्रा । व॒धूःऽइ॑व ।

स॒प॒र्यन्ता॑ । शु॒भे । च॒क्रा॒ते॒ इति॑ । अ॒श्विना॑ ॥१३

यः । वाम् । यज्ञेभिः । आऽवृतः । अधिऽवस्त्रा । वधूःऽइव ।

सपर्यन्ता । शुभे । चक्राते इति । अश्विना ॥१३

अथ पूर्वोऽर्धर्चः परोक्षकृतः । “यः मनुष्यः “वां युवयोः "यज्ञेभिः यजनैः पूजनैः यद्वा युष्मद्विषयैर्यागैः “आवृतः परिवृतो भवति । तत्र दृष्टान्तः । अधिवस्त्रा उपरिनिहितवस्त्रा “वधूः अन्येन वस्त्रेण यथाच्छादिता भवति तथावृतो यदा भवति तदा "सपर्यन्ता अभीष्टप्रदानेन तं परिचरन्तौ “अश्विना अश्विनौ भवन्तौ तं मनुष्यं “शुभे "चक्राते मङ्गले धने कृतवन्तौ । तं धनादियुक्तमकार्ष्टमित्यर्थः । यो युवाभ्यां हवींषि प्रयच्छति तं धनादियुक्तं कुरुतमित्यर्थः ॥

यो वा॑मुरु॒व्यच॑स्तमं॒ चिके॑तति नृ॒पाय्यं॑ ।

व॒र्तिर॑श्विना॒ परि॑ यातमस्म॒यू ॥१४

यः । वा॒म् । उ॒रु॒व्यचः॑ऽतमम् । चिके॑तति । नृ॒ऽपाय्यं॑म् ।

व॒र्तिः । अ॒श्वि॒ना॒ । परि॑ । या॒त॒म् । अ॒स्म॒यू इत्य॑स्म॒ऽयू ॥१४

यः । वाम् । उरुव्यचःऽतमम् । चिकेतति । नृऽपाय्यम् ।

वर्तिः । अश्विना । परि । यातम् । अस्मयू इत्यस्मऽयू ॥१४

हे अश्विनौ "उरुव्यचस्तमम् अतिशयेन ग्रहेषु भूतं व्याप्तं नृपाय्यं नेतृभ्यां युवाभ्यां पातव्यं सोमं "यः मनुष्यः "वां युवाभ्यां तं सोमं दातुं “चिकेतति भृशं जानाति तस्य “वर्तिः। वर्ततेऽत्रेति वर्तिगृहम् । "अस्मयू अस्मान् । पूजार्थं बहुवचनम् । विश्वमनसं मां कामयमानौ युवां "परि "यातं सोमपानार्थं तस्य गृहं प्रत्यायातम् ॥ चिकेतति । ‘कित ज्ञाने' इत्यस्य यङ्लुगन्तस्य लेट्यडागमः ॥

अ॒स्मभ्यं॒ सु वृ॑षण्वसू या॒तं व॒र्तिर्नृ॒पाय्य॑॑ ।

वि॒षु॒द्रुहे॑व य॒ज्ञमू॑हथुर्गि॒रा ॥१५

अ॒स्मभ्य॑म् । सु । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू । या॒तम् । व॒र्तिः । नृ॒ऽपाय्य॑म् ।

वि॒षु॒द्रुहा॑ऽइव । य॒ज्ञम् । ऊ॒ह॒थुः॒ । गि॒रा ॥१५

अस्मभ्यम् । सु । वृषण्वसू इति वृषण्ऽवसू । यातम् । वर्तिः । नृऽपाय्यम् ।

विषुद्रुहाऽइव । यज्ञम् । ऊहथुः । गिरा ॥१५

हे "वृषण्वसू वर्षणशीलधनवन्ताश्विनौ “अस्मभ्यम् अस्मदर्थं "नृपाय्यं नेतृभ्यां पातव्यं सोमं प्रति "वर्तिः अस्मदीयं गृहं प्रति "सु "यातं युवां सुष्ठु आयातम् । "गिरा स्तुतिलक्षणया वाचा युवां “यज्ञमूहथुः मनुष्येषु यज्ञसमाप्तिं प्रापयथः । तत्र दृष्टान्तः। “विषुद्रुहेव । ‘द्रुह जिघांसायाम् । विश्वान् हिनस्ति शत्रूनिति विशुद्रुहः शरः । तेन यथा व्याधो मृगमभिलषितं देशं प्रापयति तद्वत् स्तुत्या यज्ञमवैकल्येन समाप्तिं प्रापयथ इत्यर्थः ॥ ॥ २८ ॥ ।

प्रातरनुवाक आश्विने क्रतौ गायत्रे छन्दसि वाहिष्ठो वां हवानाम् ' इति चतस्रः । सूत्रितं च---- ‘वाहिष्ठो वहां हवानामिति चतस्र उदीराथामा मे हवमिति गायत्रम्' ( आश्व. श्रौ. ४.१५) इति ।

वाहि॑ष्ठो वां॒ हवा॑नां॒ स्तोमो॑ दू॒तो हु॑वन्नरा ।

यु॒वाभ्यां॑ भूत्वश्विना ॥१६

वाहि॑ष्ठः । वा॒म् । हवा॑नाम् । स्तोमः॑ । दू॒तः । हु॒व॒त् । न॒रा॒ ।

यु॒वाभ्या॑म् । भू॒तु॒ । अ॒श्वि॒ना॒ ॥१६

वाहिष्ठः । वाम् । हवानाम् । स्तोमः । दूतः । हुवत् । नरा ।

युवाभ्याम् । भूतु । अश्विना ॥१६

हे "नरा नरौ सर्वस्य नेताराविश्विनौ "हवानां स्तोतॄणां स्तोत्राणां मध्ये "स्तोमः “वाहिष्ठः युवामतिशयेन व्याप्नुवन् मदीयः स्तोमः "दूतः दूतभूतः सन् “हुवत् आह्वयतु । सोऽयं मदीयः स्तोमः "युवाभ्यां प्रियकरः "भूतु भवतु ॥

यद॒दो दि॒वो अ॑र्ण॒व इ॒षो वा॒ मद॑थो गृ॒हे ।

श्रु॒तमिन्मे॑ अमर्त्या ॥१७

यत् । अ॒दः । दि॒वः । अ॒र्ण॒वे । इ॒षः । वा॒ । मद॑थः । गृ॒हे ।

श्रु॒तम् । इत् । मे॒ । अ॒म॒र्त्या॒ ॥१७

यत् । अदः । दिवः । अर्णवे । इषः । वा । मदथः । गृहे ।

श्रुतम् । इत् । मे । अमर्त्या ॥१७

हे अश्विनौ "दिवः द्युलोकस्य "अदः । 'सुपां सुलुक्' इति सप्तम्याः सः । अमुष्मिन् "अर्णवे अपां स्थाने "यत् यदि "मदथः माद्यथः। "वा अपि च "इषः युवामिच्छतो यजमानस्य "गृहे यदि साद्यथः । एवं चेत् हे "अमर्त्या मरणधर्मरहितावमनुष्यौ वाश्विनौ "मे मदीयं स्तोत्रं "श्रुतमित् युवां ऋणुतमेव । ममैव स्तोत्रं श्रुत्वा युवां माद्यतमित्यर्थः । यद्वा । अदः स्तोत्रमिति संबध्यते ।।

उ॒त स्या श्वे॑त॒याव॑री॒ वाहि॑ष्ठा वां न॒दीना॑ं ।

सिं॒धु॒र्हिर॑ण्यवर्तनिः ॥१८

उ॒त । स्या । श्वे॒त॒ऽयाव॑री । वाहि॑ष्ठा । वा॒म् । न॒दीना॑म् ।

सिन्धुः॑ । हिर॑ण्यऽवर्तनिः ॥१८

उत । स्या । श्वेतऽयावरी । वाहिष्ठा । वाम् । नदीनाम् ।

सिन्धुः । हिरण्यऽवर्तनिः ॥१८

विश्वमना ऋषिः श्वेतयावरीनाम्न्या नद्यास्तीरेऽश्विनावस्तौत् । अनया नद्यपि स्तुतवतीत्याह । "उत अपि च "श्वेतयावरी । श्वेतजला यातीति श्वेतयावरी । कीदृशी । "सिन्धुः स्यन्दमाना "हिरण्यवर्तनिः हिरण्मयस्वीयमार्गा हिरण्मयोभयकूला। "स्या एषा श्वेतयावरीनामिका "नदीनाम् अन्यासां नदीनां मध्ये "वां युवां "वाहिष्ठा स्तुत्यातिशयेनागन्त्री भवति । एषापि युवां स्तौतीत्यर्थः । यद्वा । एषा नदी युवयो रथस्य वाहिष्ठा वोढृतमा सती प्रियकरी भवति । यस्मादहमस्यास्तीरे युवामस्तुवमिति ॥

स्मदे॒तया॑ सुकी॒र्त्याश्वि॑ना श्वे॒तया॑ धि॒या ।

वहे॑थे शुभ्रयावाना ॥१९

स्मत् । ए॒तया॑ । सु॒ऽकी॒र्त्या । अश्वि॑ना । श्वे॒तया॑ । धि॒या ।

वहे॑थे॒ इति॑ । शु॒भ्र॒ऽया॒वा॒ना॒ ॥१९

स्मत् । एतया । सुऽकीर्त्या । अश्विना । श्वेतया । धिया ।

वहेथे इति । शुभ्रऽयावाना ॥१९

हे “शुभ्रयावाना शोभनशीलगमनवन्तौ हे "अश्विना अश्विनौ सुकीर्त्या शोभनस्तुत्या "श्वेतया श्वेतजलया “धिया धारयित्र्या हिरण्मयकूलवत्वादुभयकूलस्थितानां प्राणिनां धनदानेन पोषयित्र्या “एतया नद्या "स्मत् सुमत् शोभनं “वहेथे युवां स्तुतिं प्राप्नुथः । एषा युवामस्तौदित्यर्थः ।।

यु॒क्ष्वा हि त्वं र॑था॒सहा॑ यु॒वस्व॒ पोष्या॑ वसो ।

आन्नो॑ वायो॒ मधु॑ पिबा॒स्माकं॒ सव॒ना ग॑हि ॥२०

यु॒क्ष्व । हि । त्वम् । र॒थ॒ऽसहा॑ । यु॒वस्व॑ । पोष्या॑ । व॒सो॒ इति॑ ।

आत् । न॒ः । वा॒यो॒ इति॑ । मधु॑ । पि॒ब॒ । अ॒स्माक॑म् । सव॑ना । आ । ग॒हि॒ ॥२०

युक्ष्व । हि । त्वम् । रथऽसहा । युवस्व । पोष्या । वसो इति ।

आत् । नः । वायो इति । मधु । पिब । अस्माकम् । सवना । आ । गहि ॥२०

एतदाद्या वायव्यः । हे वायो "रथसहा रथसहौ रथवहनसमर्थावश्वौ । हिरवधारणे । "त्वम् एव “युक्ष्व संयोजय । हे “वसो वासयितः शत्रूणां “पोष्या पोष्यौ कण्ठेषु करतलास्फालनैराश्वास्य पोषणीयौ तावश्वौ "युवस्व संग्रामेषु शत्रुवधार्थं मिश्रय । यद्वा । अस्मद्यज्ञेषु संमिश्रय । ताभ्यां युक्तः सन् यज्ञं प्रत्यागच्छेत्यर्थः । हे “वायो “आत् अनन्तरं “नः अस्मदीयं "मधु मदकरं सोमं त्वं पिब । अत एव “अस्माकं यज्ञेषु "सवना त्रिषु सवनेषु “आ “गहि सोमपानार्थमागच्छ ॥ ॥ २९ ॥

वायव्ये पशौ वपायाः ‘तव वायो' इत्येषा वानुवाक्या । सूत्रितं च - प्र वायुमच्छा बृहती मनीषा तव वायवृतस्पते' ( आश्व. श्रौ, ३. ८) इति ॥

तव॑ वायवृतस्पते॒ त्वष्टु॑र्जामातरद्भुत ।

अवा॒ंस्या वृ॑णीमहे ॥२१

तव॑ । वा॒यो॒ इति॑ । ऋ॒त॒ःऽप॒ते॒ । त्वष्टु॑ः । जा॒मा॒त॒ः । अ॒द्भु॒त॒ ।

अवा॑ंसि । आ । वृ॒णी॒म॒हे॒ ॥२१

तव । वायो इति । ऋतःऽपते । त्वष्टुः । जामातः । अद्भुत ।

अवांसि । आ । वृणीमहे ॥२१

हे “ऋतस्पते ऋतपते यज्ञानां पते । “ सर्वप्रातिपदिकेभ्यो लालसायां सुक्' (का. ७.१.५१.४ ) इति सुगागमः। “त्वष्टुर्जामातः ब्रह्मणो जामातः । एषा कथेतिहासादिभिरवगन्तव्या । तादृश "अद्भुत महन् विचित्रकर्मन् हे "वायो "तव त्वदीयानि "अवांसि पालनानि “आ “वृणीमहे वयमस्मिन् पशुयागे संभजामहे ।।

त्वष्टुर्जामातरं वयमीशानं राय ईमहे ।

सुतावंतो वायुं द्युम्ना जनासः ॥२२

त्वष्टुः । जामातरम् । वयम् । ईशानम् । रायः । ईमहे ।

सुतऽवन्तः । वायुम् । द्युम्ना । जनासः ॥२२

त्वष्टुः । जामातरम् । वयम् । ईशानम् । रायः । ईमहे ।

सुतऽवन्तः । वायुम् । द्युम्ना । जनासः ॥२२

इमे “जनासः जनाः “वयं “त्वष्टुः ब्रह्मणः “जामातरम् "ईशानं सर्वस्येश्वरमेतादृशं "वायुं "सुतवन्तः अभिषुतसोमाः “रायः धनम् "ईमहे याचामहे। तेन दत्तेन वयं "द्युम्ना धनवन्तः स्यामेति शेषः ।।

वायव्यतृचे ‘वायो याहि शिवा दिवः' इत्यादिके द्वे ऋचौ द्वितीयतृतीये। सूत्रितं च --वायो याहि शिवा दिव इति द्वे' ( आश्व. श्रौ. ७. १० ) इति ॥

वायों याहि शिवा दिवो वहंस्वा सु स्वश्व्यं ।

वहंस्व महः पृंथुपक्षंसा रथें ॥२३

वायो इतिं । याहि । शिव । आ । दिवः । वहंस्व । सु । सुऽअश्व्यंम् ।

वहंस्व । महः । पृथुऽपक्षंसा । रथें ॥२३

वायो इति । याहि । शिव । आ । दिवः । वहस्व । सु । सुऽअश्व्यम् ।

वहस्व । महः । पृथुऽपक्षसा । रथे ॥२३

हे "वायो "दिवः द्युलोकस्य "शिव। ' सुपां सुलुक्' इति द्वितीयाया लुक् । शिवं कल्याणम् “आ “याहि आप्रापय । सर्वज्योतिषां त्वदाधारत्वात् तेषामाधारो भूत्वा द्युलोके तानि स्थापयेति प्रार्थयते । ततस्त्वं “स्वश्व्यम् । अश्वानां संघोऽश्व्यः । शोभनाश्वसंघं रथं "सु सुष्ठु "वहस्व सर्वतो दिक्षु प्रापय । इदानीं तेभ्योऽपि समर्थावश्वावावह। "महः महांस्त्वं "पृथुपक्षसा पृथुपार्श्वद्वययुक्तावश्वौ "रथे स्वकीये “वहस्व शत्रुहननार्थं संयोजय ॥

वायव्ये पशौ पुरोडाशहविषः ‘त्वां हि सुप्सरस्तमम्' इति द्वे अनुवाक्ये । सूत्रितं च--- त्वां हि सुप्सरस्तममिति द्वे कुविदङ्ग नमसा ये वृधासः ' ( आश्व. श्रौ. ३. ८) इति ।।

त्वां हि सुप्सरंस्तमं नृषदंनेषु हूमहें ।

ग्रावा॑णं॒ नाश्व॑पृष्ठं मं॒हना॑ ॥२४

त्वाम् । हि । सु॒प्सरः॑ऽतमम् । नृ॒ऽसद॑नेषु । हू॒महे॑ ।

ग्रावा॑णम् । न । अश्व॑ऽपृष्ठम् । मं॒हना॑ ॥२४

त्वाम् । हि । सुप्सरःऽतमम् । नृऽसदनेषु । हूमहे ।

ग्रावाणम् । न । अश्वऽपृष्ठम् । मंहना ॥२४

हे वायो “सुप्सरस्तमम् । सुप्स इति रूपनाम । रो मत्वर्थीयः। अतिशयेन शोभनरूपवन्तं “मंहना स्वकीयेन महत्त्वेन “अश्वपृष्ठं सर्वतो व्याप्तपृष्टम् । पृष्ठशब्दः सर्वाङ्गं लक्षयति । व्याप्तकृत्स्नाङ्गमित्यर्थः । "त्वाम् । हिरवधारणे । त्वामेव “नृषदनेषु नृसदनेषु । नरोऽध्वरस्य नेतार ऋत्विजोऽत्र सीदन्तीति नृषदना यज्ञाः । तेषु "हूमहे वयमाह्वयामः । कथमिव । "ग्रावाणं “न । यथा सोमाभिषवार्थं ग्रावाणं स्तुतिभिराह्वयन्ति तद्वत्त्वां स्तुतिभिराह्वयामः ॥

शुनासीरीये ‘स त्वं नो देव' इत्येषा वायोरनुवाक्या । सूत्रितं च -- स त्वं नो देव मनसेशानाय प्रहुतिं यस्त आनट्' (आश्व. श्रौ. २. २० ) इति ।

स त्वं नो॑ दे॒व मन॑सा॒ वायो॑ मंदा॒नो अ॑ग्रि॒यः ।

कृ॒धि वाजाँ॑ अ॒पो धियः॑ ॥२५

सः । त्वम् । नः॒ । दे॒व॒ । मन॑सा । वायो॒ इति॑ । म॒न्दा॒नः । अ॒ग्रि॒यः ।

कृ॒धि । वाजा॑न् । अ॒पः । धियः॑ ॥२५

सः । त्वम् । नः । देव । मनसा । वायो इति । मन्दानः । अग्रियः ।

कृधि । वाजान् । अपः । धियः ॥२५

हे "देव द्योतमान यद्वा स्तोतव्य “वायो “अग्रियः देवानां मध्ये मुख्योऽग्रतो गन्तासि । तादृशः “त्वं "मनसा “मन्दानः मन्दमानः स्वयमेव मोदमानः सन् “नः अस्माकं “वाजान् अन्नानि “अपः मेघभेदनेनोदकानि च उभयस्मिंस्त्वया प्रदत्ते सति “धियः अग्निहोत्रादिकर्माणि च "कृधि कुरु । कारयेत्यर्थः ।। ॥ ३० ॥

# ऋग्वेदः सूक्तं ८.२७

ऋग्वेदः - मण्डल ८
← सूक्तं ८.२६ सूक्तं ८.२७ सूक्तं ८.२८ →
मनुर्वैवस्वतः

दे. विश्वे देवाः । प्रगाथः (विषमा बृहती, समा सतोबृहती )

अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे ।

ऋचा यामि मरुतो ब्रह्मणस्पतिं देवाँ अवो वरेण्यम् ॥१॥

आ पशुं गासि पृथिवीं वनस्पतीनुषासा नक्तमोषधीः ।

विश्वे च नो वसवो विश्ववेदसो धीनां भूत प्रावितारः ॥२॥

प्र सू न एत्वध्वरोऽग्ना देवेषु पूर्व्यः ।

आदित्येषु प्र वरुणे धृतव्रते मरुत्सु विश्वभानुषु ॥३॥

विश्वे हि ष्मा मनवे विश्ववेदसो भुवन्वृधे रिशादसः ।

अरिष्टेभिः पायुभिर्विश्ववेदसो यन्ता नोऽवृकं छर्दिः ॥४॥

आ नो अद्य समनसो गन्ता विश्वे सजोषसः ।

ऋचा गिरा मरुतो देव्यदिते सदने पस्त्ये महि ॥५॥

अभि प्रिया मरुतो या वो अश्व्या हव्या मित्र प्रयाथन ।

आ बर्हिरिन्द्रो वरुणस्तुरा नर आदित्यासः सदन्तु नः ॥६॥

वयं वो वृक्तबर्हिषो हितप्रयस आनुषक् ।

सुतसोमासो वरुण हवामहे मनुष्वदिद्धाग्नयः ॥७॥

आ प्र यात मरुतो विष्णो अश्विना पूषन्माकीनया धिया ।

इन्द्र आ यातु प्रथमः सनिष्युभिर्वृषा यो वृत्रहा गृणे ॥८॥

वि नो देवासो अद्रुहोऽच्छिद्रं शर्म यच्छत ।

न यद्दूराद्वसवो नू चिदन्तितो वरूथमादधर्षति ॥९॥

अस्ति हि वः सजात्यं रिशादसो देवासो अस्त्याप्यम् ।

प्र णः पूर्वस्मै सुविताय वोचत मक्षू सुम्नाय नव्यसे ॥१०॥

इदा हि व उपस्तुतिमिदा वामस्य भक्तये ।

उप वो विश्ववेदसो नमस्युराँ असृक्ष्यन्यामिव ॥११॥

उदु ष्य वः सविता सुप्रणीतयोऽस्थादूर्ध्वो वरेण्यः ।

नि द्विपादश्चतुष्पादो अर्थिनोऽविश्रन्पतयिष्णवः ॥१२॥

देवंदेवं वोऽवसे देवंदेवमभिष्टये ।

देवंदेवं हुवेम वाजसातये गृणन्तो देव्या धिया ॥१३॥

देवासो हि ष्मा मनवे समन्यवो विश्वे साकं सरातयः ।

ते नो अद्य ते अपरं तुचे तु नो भवन्तु वरिवोविदः ॥१४॥

प्र वः शंसाम्यद्रुहः संस्थ उपस्तुतीनाम् ।

न तं धूर्तिर्वरुण मित्र मर्त्यं यो वो धामभ्योऽविधत् ॥१५॥

प्र स क्षयं तिरते वि महीरिषो यो वो वराय दाशति ।

प्र प्रजाभिर्जायते धर्मणस्पर्यरिष्टः सर्व एधते ॥१६॥

ऋते स विन्दते युधः सुगेभिर्यात्यध्वनः ।

अर्यमा मित्रो वरुणः सरातयो यं त्रायन्ते सजोषसः ॥१७॥

अज्रे चिदस्मै कृणुथा न्यञ्चनं दुर्गे चिदा सुसरणम् ।

एषा चिदस्मादशनिः परो नु सास्रेधन्ती वि नश्यतु ॥१८॥

यदद्य सूर्य उद्यति प्रियक्षत्रा ऋतं दध ।

यन्निम्रुचि प्रबुधि विश्ववेदसो यद्वा मध्यंदिने दिवः ॥१९॥

यद्वाभिपित्वे असुरा ऋतं यते छर्दिर्येम वि दाशुषे ।

वयं तद्वो वसवो विश्ववेदस उप स्थेयाम मध्य आ ॥२०॥

यदद्य सूर उदिते यन्मध्यंदिन आतुचि ।

वामं धत्थ मनवे विश्ववेदसो जुह्वानाय प्रचेतसे ॥२१॥

वयं तद्वः सम्राज आ वृणीमहे पुत्रो न बहुपाय्यम् ।

अश्याम तदादित्या जुह्वतो हविर्येन वस्योऽनशामहै ॥२२॥

**सायणभाष्यम्**

'अग्निरुक्थे ' इति द्वाविंशत्यृचं सप्तमं सूक्तम् । अत्रानुक्रमणिका– अग्निरुक्थे द्व्यधिका मनुर्वैवस्वतो वैश्वदेवं ह प्रागाथम्' इति । विवस्वतः पुत्रो मनुर्ऋषिः। प्रथमातृतीयाद्ययुजो बृहत्यो द्वितीयाचतुर्थादियुजः सतोबृहत्यः । इदमादीनां चतुर्णां सूक्तानां विश्वे देवा देवता । सूक्तविनियोगो लैङ्गिकः ॥

अ॒ग्निरु॒क्थे पु॒रोहि॑तो॒ ग्रावा॑णो ब॒र्हिर॑ध्व॒रे ।

ऋ॒चा या॑मि म॒रुतो॒ ब्रह्म॑ण॒स्पतिं॑ दे॒वाँ अवो॒ वरे॑ण्यम् ॥१

अ॒ग्निः । उ॒क्थे । पु॒रःऽहि॑तः । ग्रावा॑णः । ब॒र्हिः । अ॒ध्व॒रे ।

ऋ॒चा । या॒मि॒ । म॒रुतः॑ । ब्रह्म॑णः । पतिं॑म् । दे॒वान् । अवः॑ । वरे॑ण्यम् ॥१

अग्निः । उक्थे । पुरःऽहितः । ग्रावाणः । बर्हिः । अध्वरे ।

ऋचा। यामि । मरुतः । ब्रह्मणः । पतिम् । देवान् । अवः । वरेण्यम् ॥ १ ॥

मनुः प्रार्थयते । "उक्थे स्तोत्रशस्त्रात्मके "अध्वरे हिंसारहितेऽस्मिन् यज्ञे "अग्निः "पुरोहितः यज्ञार्थं पुरत उत्तरवेद्यामृत्विग्भिर्निहितोऽभूत् । तथा "ग्रावाणः च सोमाभिषवार्थं पुरतो निहिताः । "बर्हिः च पुरतो निहितमासादितम् । एवं सामग्र्यां सत्यां मरुतः एकोनपञ्चाशन्मरुद्गणान् "ब्रह्मणस्पतिं स्तोत्रस्य पालयितारमेतन्नामकं देवं "देवान् इन्द्रादींश्च एतान् सर्वान् देवान् "वरेण्यं वरणीयं भजनीयम् "अवः रक्षणम् "ऋचा सूक्तरूपया स्तुत्या "यामि मनुरहं याचामि। याचतेर्लटि रूपम् । वर्णलोपश्छान्दसः ॥

आ प॒शुं गा॑सि पृथि॒वीं वन॒स्पतीं॑नु॒षासा॒ नक्त॒मोष॑धीः ।

विश्वे॑ च नो वसवो विश्ववेदसो धी॒नां भू॑त प्रावि॒तारः॑ ॥२

आ । प॒शुम् । गा॒सि॒ । पृ॒थि॒वीम् । वन॒स्पतीं॑न् । उ॒षसा॑ । नक्त॑म् । ओष॑धीः ।

विश्वे॑ । च॒ । नः॒ । व॒स॒वः॒ । वि॒श्व॒ऽवे॒द॒सः॒ । धी॒नाम् । भू॒त॒ । प्र॒ऽअ॒वि॒तारः॑ ॥२

आ। पशुम् । गासि । पृथिवीम् । वनस्पतीन्। उषसा । नक्तम् । ओषधीः ।

विश्वे । च । नः । वसवः । विश्वऽवेदसः । धीनाम् । भूत। प्रऽअवितारः ॥ २ ॥

पूर्वार्धर्चेऽग्निः संबोध्यते पश्वादिशब्दसद्भावात् । हे अग्ने नोऽस्मदीये यज्ञे पशुम् अग्नीषोमीयं पशुं प्रति “आ “गासि आगच्छसि। गाङ् गतौ । व्यत्ययेन परस्मैपदम् । तथा “पृथिवीम् इदं देवसदनं प्रति किंच "वनस्पतीन् मथनसाधनानरणिरूपान् वनस्पतीन् प्रति तथा “उषासा होतव्यत्वेन उषःकालं तथा “नक्तं यष्टव्यतया रात्रिं च प्रति किंच "ओषधीः । 'उष दाहे' अत्र मादनकर्मा । ओषन्ति माद्यन्त्यनेनेत्योषः सोमः । स धीयते निधीयते येष्वित्योषधयो ग्रावाणः । तान् प्रत्यागच्छसि । यद्वा । ओषध्यः फलपाकान्ता लताः । ताः प्रत्यायाहि। अथवा हे स्तोतः पश्वादीन् आ गासि समन्तात् स्तुहि । 'कै गै शब्दे' इति धातुः । ततो हे "वसवः वासयितारः "विश्ववेदसः सर्वधनाः सर्वज्ञाना वा हे "विश्वे सर्वेऽपि देवाः “नः अस्मदीयानां कर्मणां “प्रावितारः “भूत । अनेनाग्निना सह यूयं प्रकर्षेण रक्षका भवत ॥

प्र सू न॑ एत्वध्व॒रो॒३॒ऽग्ना दे॒वेषु॑ पू॒र्व्यः ।

आ॒दि॒त्येषु॒ प्र वरु॑णे धृ॒तव्र॑ते म॒रुत्सु॑ वि॒श्वभा॑नुषु ॥३

प्र । सु । नः॒ । ए॒तु॒ । अ॒ध्व॒रः । अ॒ग्ना । दे॒वेषु॑ । पू॒र्व्यः ।

आ॒दि॒त्येषु॑ । प्र । वरु॑णे । धृ॒तऽव्र॑ते । म॒रुत्ऽसु॑ । वि॒श्वऽभा॑नुषु ॥३

प्र। सु । नः । एतु । अध्वरः । अग्ना। देवेषु । पूर्व्यः ।

आदित्येषु । प्र । वरुणे । धृतऽव्रते। मरुत्ऽसु । विश्वऽभानुषु ।। ३ ।।

"पूर्व्यः पुरातनः । पूर्व्यान् पुरातनानिन्द्रादीन् देवान् प्रति क्रियमाणत्वात् यज्ञोऽपि पूर्व्यं इत्युच्यते । तादृशो मुख्यः "नः अस्मदीयः "अध्वरः यज्ञः "अग्ना। 'सुपां सुलुक्' इति सप्तम्या डादेशः । अग्नौ । अग्निर्देवानां मुख्यत्वात् प्रथममभिहितः । तस्मिन्नग्नौ सर्वेष्वन्येषु "देवेषु च "सु सुष्ठु “प्र “एतु प्रकर्षेण गच्छतु । देवान् विशिनष्टि। "आदित्येषु अदितेः पुत्रेष्विन्द्रादिषु “धृतवते धृतकर्मणि "वरुणे च "विश्वभानुषु सर्वतो व्याप्ततेजस्केषु "मरुत्सु च “प्र एतु ॥

विश्वे॒ हि ष्मा॒ मन॑वे वि॒श्ववे॑दसो॒ भुव॑न्वृ॒धे रि॒शाद॑सः ।

अरिंष्टेभिः पा॒युभि॑र्विश्ववेदसो॒ यन्ता॑ नोऽवृ॒कं छ॒र्दिः ॥४

विश्वें । हि । स्म॒ । मनंवे । वि॒श्वऽवेंदसः । भुवंन् । वृ॒धे । रि॒शादंसः ।

अरिंष्टेभिः । पा॒युऽभिः॑ । वि॒श्वऽवे॒द॒सः॒ । यन्तं॑ । नः॒ । अ॒वृ॒कम् । छ॒र्दिः ॥४

विश्वे । हि। स्म । मनवे । विश्वऽवेदसः । भुवन् । वृधे। रिशादसः ।

अरिष्टेभिः । पायुऽभिः । विश्वऽवेदसः । यन्त । नः । अवृकम् । छर्दिः ॥ ४ ॥

“विश्ववेदसः सर्वतो व्याप्तधनाः । बहुधना इत्यर्थः। तादृशाः "रिशादसः रिशतां हिंसतां शत्रूणामसितार उपक्षपयितारो वा “विश्वे "हि “ष्म सर्वे खलु देवाः “मनवे । षष्ठ्यर्थे चतुर्थी। मनोः "वृधे वर्धनाथ “भुवन् भवन्तु । स्तोत्रे मनुष्याय धनं दत्वा तं वर्धयन्तु इत्याशास्ते । ततो हे "विश्ववेदसः सर्वधनाः सर्वज्ञा वा देवाः "अरिष्टेभिः परैरहिंसितैः "पायुभिः पालनैः सह "अवृकम् । वृकः स्तेनः । तद्रहितम्। बाधारहितमित्यर्थः । तादृशं “छर्दिः गृहं "नः अस्मभ्यं "यन्त प्रयच्छत । शत्रून् हत्वा गृहेष्वस्माभिः कर्माणि कारयतेत्यर्थः । यन्तेति यमेर्लोटि छान्दसो विकरणस्य लुक् । तस्य तबादेशः । तेनानुनासिकलोपाभावः ॥

आ नों अ॒द्य समंनसो॒ गन्ता॒ विश्वें स॒जोषंसः ।

ऋ॒चा गि॒रा मरुंतो॒ देव्यदिंते॒ सदंने॒ पस्त्यें महि ॥५

आ । न॒ः । अ॒द्य । सऽमंनसः । गन्तं । विश्वें । स॒ऽजोषंसः ।

ऋ॒चा । गि॒रा । मरुंतः । देविं । अदिंते । सदंने । पस्त्यें । म॒हि॒ ॥५

आ। नः । अद्य । सऽमनसः । गन्त । विश्वे । सऽजोषसः ।

ऋचा । गिरा। मरुतः । देवि । अदिते । सदने । पस्त्ये। महि ॥५॥

"समनसः सर्वेषु स्तोतृषु समानमनस्काः "विश्वे सर्वे देवा यूयं सजोषसः परस्परं संगताः सन्तः "गिरा। शुश्रूषुतया प्राप्तव्ययेत्यर्थः । तया “ऋचा सह "अद्य अस्मिन् यागदिने “नः यष्टॄन् अस्मान् “आ “गन्त आगच्छत । अनन्तरं हे “मरुतः "देवि द्योतमाने “महि महति देवानां मातृत्वान्महत्वयुक्ते हे "अदिते अदीने एतन्नामिके देवि "सदने स्थाने "पस्त्ये अम्मदीये गृहे स्तोतव्यतयोपविशत ॥ मरुत इत्यादेर्वाक्यभेदादनिघातः । उत्तरत्र पूर्वस्यामन्त्रितस्याविद्यमानवत्त्वेन वाक्यादित्वादनिघातः ॥ ॥ ३१ ॥

अ॒भि प्रि॒या मंरुतो॒ या वो॒ अश्व्या॑ ह॒व्या मिंत्र प्रया॒थनं ।

आ ब॒र्हिरिन्द्रो॒ वरुंणस्तु॒रा नरं आदि॒त्यासः॑ सदन्तु नः ॥६

अ॒भि । प्रि॒या । म॒रु॒त॒ः । या । व॒ः । अश्व्या॑ । ह॒व्या । मि॒त्र॒ । प्र॒ऽया॒थनं ।

आ । ब॒र्हिः । इन्द्रः॑ । वरुंणः । तु॒राः । नरः॑ । आ॒दि॒त्यासः॑ । स॒द॒न्तु॒ । न॒ः ॥६

यः । सृबिन्दम् । अनर्शनिम् । पिप्रुम् । दासम् । अहीशुवम् ।

वधीत् । उग्रः । रिणन् । अपः ॥२

“यः इन्द्रः “उग्रः उद्गूर्णस्तेजस्वी वा सः “अपः उदकानि “रिणन् प्रेरयन् सृबिन्दं सृबिन्दनामकं शत्रुम् “अनर्शनिम् अनर्शनिनामकं “पिप्रुं पिप्रुनामकं च "दासं च "अहीशुवं च शत्रुं “वधीत् अवधीत् जघान ।।

न्यर्बुदस्य विष्टपं वर्ष्माणं बृहतस्तिर ।

कृषे तदिन्द्र पौंस्यम् ॥३

नि । अर्बुदस्य । विष्टपम् । वर्ष्माणम् । बृहतः । तिर ।

कृषे । तत् । इन्द्र । पौंस्यम् ॥३

नि । अर्बुदस्य । विष्टपम् । वर्ष्माणम् । बृहतः । तिर ।

कृषे । तत् । इन्द्र । पौंस्यम् ॥३

हे "इन्द्र “बृहतः महतः “अर्बुदस्य मेघस्य “वर्ष्माणम् उदकस्य वारकं “विष्टपं स्थानं “नि “तिर विध्य । “तत् प्रसिद्ध “पौंस्यं व्रतं च "कृषे कुरु ।।

प्रति श्रुताय वो धृषत्तूर्णाशं न गिरेरधि ।

हुवे सुशिप्रमूतये ॥४

प्रति । श्रुताय । वः । धृषत् । तूर्णाशम् । न । गिरेः । अधि ।

हुवे । सुऽशिप्रम् । ऊतये ॥४

प्रति । श्रुताय । वः । धृषत् । तूर्णाशम् । न । गिरेः । अधि ।

हुवे । सुऽशिप्रम् । ऊतये ॥४

हे स्तोतारः “वः युष्माकं "श्रुताय स्तुतीनां श्रवणाय रक्षणाय च “धृषत् शत्रून् धृषन्तं “सुशिप्रं सुहनुमिन्द्रं "प्रति “हुवे ह्वयामि । “तूर्णाशं “न । यथा घर्मेऽभितप्तः पुमांस्तूर्णाशमुदकम् । तथा च यास्कः - ‘ तूर्णाशमुदकं भवति तूर्णमश्नुते ' ( निरु. ५. १६ ) इति । “गिरेरधि मेघं प्रति ह्वयति । ‘पर्वतो गिरिः' इति मेघनामसु पाठात् । तद्वदित्यर्थः ।।

स गोरश्वस्य वि व्रजं मन्दानः सोम्येभ्यः ।

पुरं न शूंर दर्षसि ॥५

सः । गोः । अश्वंस्य । वि । व्रजम् । मन्दानः । सोम्येभ्यः । 

पुरंम् । न । शूर । दर्षसि ॥५

सः । गोः । अश्वस्य । वि । व्रजम् । मन्दानः । सोम्येभ्यः ।

पुरम् । न । शूर । दर्षसि ॥५

हे “शूर इन्द्र “सः प्रसिद्धस्त्वं “मन्दानः मोदमानः “गोः अश्वस्य च “व्रजं निवासस्थानं “सोम्येभ्यः सोमार्हेभ्यः “पुरं “न शत्रूणां नगरीमिव “वि “दर्षसि विवृतद्वारं करोषि ॥ ॥ १ ॥

यदिं मे रारणंः सुत उक्थे वा दधंसे चनंः ।

आरादुपं स्वधा गंहि ॥६

यदिं । मे । ररणंः । सुते । उक्थे । वा । दधंसे । चनंः ।

आरात् । उपं । स्वधा । आ । गहि ॥६

यदि । मे । ररणः । सुते । उक्थे । वा । दधसे । चनः ।

आरात् । उप । स्वधा । आ । गहि ॥६

हे इन्द्र “मे मम "सुते अभिषुते सोमे “उक्थे स्तोत्रे “वा “यदि "रारणः रमसे “चनः अन्नं यदि च “दधसे मह्यं प्रयच्छसि तर्हि "आरात् दूरात् "स्वधा अन्नेन “उप “आ “गहि उपागच्छ ।

वयं घां ते अपिं ष्मसि स्तोतारं इन्द्र गिर्वणः ।

त्वं नों जिन्व सोमपाः ॥७

वयम् । घ । ते । अपिं । स्मसि । स्तोतारंः । इन्द्र । गिर्वणः ।

त्वम् । नः । जिन्व । सोमऽपाः ॥७

वयम् । घ । ते । अपि । स्मसि । स्तोतारः । इन्द्र । गिर्वणः ।

त्वम् । नः । जिन्व । सोमऽपाः ॥७

हे "गिर्वणः गीर्भिर्वननीय "इन्द्र "ते तव "अपि "वयं "घ वयं खलु "स्तोतारः "स्मसि भवामः । हे "सोमपाः सोमस्य पातरिन्द्र "त्वं "नः अस्मान् "जिन्व प्रीणयसि ॥

उ॒त नः॑ पि॒तुमा भ॑र संररा॒णो अवि॑क्षितम् ।

मघ॑व॒न्भूरि॑ ते॒ वसु॑ ॥८

उ॒त । नः॒ । पि॒तुम् । आ । भ॒र॒ । स॒म्ऽर॒रा॒णः । अवि॑ऽक्षितम् ।

मघ॑ऽवन् । भूरि॑ । ते॒ । वसु॑ ॥८

उत । नः । पितुम् । आ । भर । सम्ऽरराणः । अविऽक्षितम् ।

मघऽवन् । भूरि । ते । वसु ॥८

"उत अपि च हे "मघवन् "संरराणः संरममाणस्त्वम् "अविक्षितम् अविक्षीणं "पितुम् अन्नम् । 'पृक्षः पितुः' इत्यन्ननामसु पाठात् । "नः अस्मभ्यम् "आ "भर आहर । "ते तव "वसु धनं "भूरि अधिकं हि ॥

उ॒त नो॒ गोम॑तस्कृधि॒ हिर॑ण्यवतो अ॒श्विनः॑ ।

इळा॑भि॒ः सं र॑भेमहि ॥९

उ॒त । नः॒ । गोऽम॑तः । कृ॒धि॒ । हिर॑ण्यऽवतः । अ॒श्विनः॑ ।

इळा॑भिः । सम् । र॒भे॒म॒हि॒ ॥९

उत । नः । गोऽमतः । कृधि । हिरण्यऽवतः । अश्विनः ।

इळाभिः । सम् । रभेमहि ॥९

"उत अपि च हे इन्द्र "नः अस्मान् "गोमतः गोमिनः "कृधि कुरु। "अश्विनः अश्वयुक्तान् कृधि । "हिरण्यवतः धनवतश्च कृधि । "इळाभिः अन्नैश्च "सं "रभेमहि वयं संरब्धा भवेम ॥

बृ॒बदु॑क्थं हवामहे सृ॒प्रक॑रस्नमू॒तये॑ ।

साधु॑ कृ॒ण्वन्त॒मव॑से ॥१०

बृ॒बत्ऽउ॑क्थम् । ह॒वा॒म॒हे॒ । सृ॒प्रऽक॑रस्नम् । ऊ॒तये॑ ।

साधु॑ । कृ॒ण्वन्त॑म् । अव॑से ॥१०

बृबत्ऽउक्थम् । हवामहे । सृप्रऽकरस्नम् । ऊतये ।

साधु । कृण्वन्तम् । अवसे ॥१०

“ऊतये लोकस्य रक्षणाय “सृप्रकरस्नं प्रसृतबाहुम् । ‘करस्नौ बाहू कर्मणां प्रस्नातारौ ' (निरु. ६. १७) इति यास्कवचनात् । “अवसे लोकस्य पालनाय “साधु “कृण्वन्तं साधु कुर्वन्तं “बृबदुक्थं महदुक्थमिन्द्रं “हवामहे ह्वयामः । तथा च यास्कः - बृबदुक्थो महदुक्थो वक्तव्यमस्मा उक्थम् ' (निरु. ६. ४) इति ॥ ॥ २ ॥

यः सं॒स्थे चिं॑च्छ॒तक्र॑तु॒रादीं॑ कृ॒णोति॑ वृत्र॒हा ।

ज॒रि॒तृभ्य॑ः पुरू॒वसु॑ः ॥११

यः । स॒म्ऽस्थे । चि॒त् । श॒तऽक्र॑तुः । आत् । ई॒म् । कृ॒णोति॑ । वृ॒त्र॒ऽहा ।

ज॒रि॒तृऽभ्यः॑ । पु॒रु॒ऽवसुः॑ ॥११

यः । सम्ऽस्थे । चित् । शतऽक्रतुः । आत् । ईम् । कृणोति । वृत्रऽहा ।

जरितृऽभ्यः । पुरुऽवसुः ॥११

"यः प्रसिद्ध इन्द्रः “संस्थे संग्रामे “शतक्रतुः बहुकर्मा भवति अपि च "आत् अनन्तरम् “ईम् इदं शत्रुवधादिकं “कृणोति करोति “चित् एव अयमिन्द्रः “वृत्रहा शत्रूणां हन्ता भवति । किंच “जरितृभ्यः स्तोतृणामर्थे पुरूवसुः बहुधनो भवति । न स्वार्थमित्यर्थः ॥

स न॑ः श॒क्रश्चि॒दा श॑क॒द्दान॑वाँ अन्तराभ॒रः ।

इन्द्रो॒ विश्वा॑भिरू॒तिभि॑ः ॥१२

सः । न॒ः । श॒क्रः । चि॒त् । आ । श॒क॒त् । दान॑ऽवान् । अ॒न्त॒र॒ऽआ॒भ॒रः ।

इन्द्रः॑ । विश्वा॑भिः । ऊ॒तिऽभिः॑ ॥१२

सः । नः । शक्रः । चित् । आ । शकत् । दानऽवान् । अन्तरऽआभरः ।

इन्द्रः । विश्वाभिः । ऊतिऽभिः ॥१२

“शक्रः शक्तः “सः इन्द्रः “नः “चित् अस्मानपि “आ “शकत् शक्तान् करोतु । अपि च “इन्द्रः “दानवान् “विश्वाभिः सर्वैः “ऊतिभिः पालनैः “अन्तराभरः अन्तराहरश्छिद्राणामापूरकः ।। छिद्रापिधायीत्यर्थः ॥

यो रा॒यो३॒ऽवनि॑र्म॒हान्सु॑पा॒रः सु॑न्व॒तः सखा॑ ।

तमिन्द्रंमभि गांयत ॥१३

यः । रायः । अवनिः । महान् । सुऽपारः । सुन्वतः । सखां ।

तम् । इन्द्रंम् । अभि । गायत ॥१३

यः । रायः । अवनिः । महान् । सुऽपारः । सुन्वतः । सखा ।

तम् । इन्द्रम् । अभि । गायत ॥१३

“यः इन्द्रः “रायः धनस्य “अवनिः पालकः “महान् सर्वोत्तमः "सुपारः शोभनपारणश्च भवति । यश्च “सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य “सखा प्रियो भवति। “तमिन्द्रमभि "गायत अभिष्टुत ।

आयन्तारं महिं स्थिरं पृतंनासु श्रवोजितंम् ।

भूरेरीशांनमोजंसा ॥१४

आऽयन्तारंम् । महिं । स्थिरम् । पृतंनासु । श्रवःऽजितंम् ।

भूरेः । ईशांनम् । ओजंसा ॥१४

आऽयन्तारम् । महि । स्थिरम् । पृतनासु । श्रवःऽजितम् ।

भूरेः । ईशानम् । ओजसा ॥१४

“आयन्तारम् आगन्तारं "महि महान्तं “पृतनासु संग्रामेषु “स्थिरम् अचलं “श्रवोजितं श्रवसो जेतारम् "ओजसा बलेन "भूरेः बहोर्धनस्य “ईशानम् ईश्वरमभिगायत ॥

नकिंरस्य शचींनां नियन्ता सूनृतांनाम् ।

नकिंर्वक्ता न दादितिं ॥१५

नकिः । अस्य । शचींनाम् । निऽयन्ता । सूनृतांनाम् ।

नकिः । वक्ता । न । दात् । इतिं ॥१५

नकिः । अस्य । शचीनाम् । निऽयन्ता । सूनृतानाम् ।

नकिः । वक्ता । न । दात् । इति ॥१५

“अस्य इन्द्रस्य “सूनृतानां शोभनानां “शचीनां कर्मणाम् । ‘ धीः शची' इति कर्मनामसु पाठात् । “नकिः न कश्चित् “नियन्ता नियामकः । अयमिन्द्रः “न “दादिति न प्रयच्छतीति “नकिर्वक्ता न कश्चिद्वदति । किंतु सर्वोऽपि जनोऽयं प्रदातेत्येव ब्रवीतीत्यर्थः ॥ ॥ ३ ॥

न नूनं ब्रह्मणांमृणं प्रांशूनामंस्ति सुन्वताम् ।

न सोमों अप्रता पंपे ॥१६

न । नूनम् । ब्रह्मणांम् । ऋणम् । प्राशूनाम् । अस्ति । सुन्वताम् ।

न । सोमः । अप्रता । पपे ॥१६

न । नूनम् । ब्रह्मणाम् । ऋणम् । प्राशूनाम् । अस्ति । सुन्वताम् ।

न । सोमः । अप्रता । पपे ॥१६

“प्राशूनाम् । ये सोमं प्राश्नुवन्ति ते प्राशवः । तेषां सोमं “सुन्वतां “ब्रह्मणां ब्राह्मणानाम् “ऋणं देवर्णं “न “नूनम् अस्ति न खलु विद्यते । तथा च श्रूयते - ‘एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारिवासी' ( तै. सं. ६. ३. १०. ५) इति । किंच “अप्रता अविस्तीर्णधनेन “सोमः “न “पपे न पीयते । प्रभूतधनेनैव सोमः पीयत इत्यर्थः ।।

पन्य इदुपं गायत पन्यं उक्थानिं शंसत ।

ब्रह्मां कृणोत पन्य इत् ॥१७

पन्यें । इत् । उपं । गायत । पन्यें । उक्थानिं । शंसत ।

ब्रह्मं । कृणोत । पन्यें । इत् ॥१७

पन्ये । इत् । उप । गायत । पन्ये । उक्थानि । शंसत ।

ब्रह्म । कृणोत । पन्ये । इत् ॥१७

हे उपगातारः “पन्य “इत् स्तुत्य एवेन्द्रे “उप “गायत उपगानं कुरुत । किंच “पन्ये एवेन्द्रे “उक्थानि स्तोत्राणि “शंसत । हे स्तोतार इति शेषः । “पन्ये “इत् स्तुत्य एवेन्द्रे ब्रह्माण्यन्यानि स्तोत्राणि “कृणोत कुरुत ।।

पन्य आ दंर्दिरच्छता सहस्रां वाज्यवृंतः ।

इन्द्रो यो यज्वंनो वृधः ॥१८

पन्यः॑ । आ । द॒र्दि॒र॒त् । श॒ता । स॒हस्रा॑ । वा॒जी । अवृ॑तः ।

इन्द्रः॑ । यः । यज्व॑नः । वृ॒धः ॥१८

पन्यः । आ । दर्दिरत् । शता । सहस्रा । वाजी । अवृतः ।

इन्द्रः । यः । यज्वनः । वृधः ॥१८

"यः "वाजी बलवान् "शता वीराणां शतानि "सहस्रा सहस्राणि च "आ "दर्दिरत् आभिमुख्येन दास्यति सोऽयम् "इन्द्रः शत्रुभिः "अवृतः "पन्यः स्तुत्यो भवति । "यज्वनः विधिनेष्टवतो यजमानस्य "वृधः वर्धयिता च भवति ॥

वि षू च॑र स्व॒धा अनु॑ कृष्टी॒नामन्वा॒हुव॑ः ।

इन्द्र॒ पिब॑ सु॒ताना॑म् ॥१९

वि । सु । च॒र॒ । स्व॒धाः । अनु॑ । कृ॒ष्टी॒नाम् । अनु॑ । आ॒ऽहुवः॑ ।

इन्द्र॑ । पिब॑ । सु॒ताना॑म् ॥१९

वि । सु । चर । स्वधाः । अनु । कृष्टीनाम् । अनु । आऽहुवः ।

इन्द्र । पिब । सुतानाम् ॥१९

हे "इन्द्र "आहुवः आह्वातव्यस्त्वं "कृष्टीनां मनुष्याणां "स्वधाः हवींषि "अनु "सु सुष्ठु "वि "चर । द्वितीयः "अनु पूरणः । 'सुतानाम् अभिषुतान् सोमांश्च पिब ।।

पिब॒ स्वधै॑नवानामु॒त यस्तुग्र्ये॒ सचा॑ ।

उ॒तायमि॑न्द्र॒ यस्तव॑ ॥२०

पिब॑ । स्वऽधै॑नवानाम् । उ॒त । यः । तुग्र्ये॑ । सचा॑ ।

उ॒त । अ॒यम् । इ॒न्द्र॒ । यः । तव॑ ॥२०

पिब । स्वऽधैनवानाम् । उत । यः । तुग्र्ये । सचा ।

उत । अयम् । इन्द्र । यः । तव ॥२०

हे "इन्द्र "स्वधैनवानां स्वधैनवान् स्वभूतपयसो धेनोः संबन्धिनः सोमान् । धेन्वा क्रीतानित्यर्थः । तथा च श्रूयते- ' धेन्वा क्रीणाति' (तै. सं. ६. १. १०. २ ) इति । "उत अपि च "यः सोमः "तुग्र्ये उदके। 'बुसं तुग्र्यम्' इत्युदकनामसु पाठात् । "सचा संसृष्टः तमपि सोमं "पिब । "उत अपि च "यः सोमः "तव त्वदीयः त्वामुद्दिश्य गृहीतः सः "अयं त्वया पातव्य इति शेषः ॥ ॥ ४ ॥

अतीहि मन्युषाविणं सुषुवांसमुपारणे ।

इमं रातं सुतं पिब ॥२१

अति । इहि । मन्युऽसाविनम् । सुसुऽवांसम् । उपऽअरणे ।

इमम् । रातम् । सुतम् । पिब ॥२१

अति । इहि । मन्युऽसाविनम् । सुसुऽवांसम् । उपऽअरणे ।

इमम् । रातम् । सुतम् । पिब ॥२१

हे इन्द्र “मन्युषाविणं क्रोधेन सोमं सुन्वन्तम् “अतीहि अतिगच्छ । तथा “उपारणे । ब्राह्मणा उपेत्य यस्मिन् देशे न रमन्ते स उपारणः । तस्मिन् देशे “सुषुवांसं सुन्वन्तम् अतीहि । “इमं “रातं ब्राह्मणोपद्रवरहिते देशे अस्माभिर्दत्तमिमं “सुतं सोमं “पिब ।।

इहि तिस्रः परावत इहि पञ्च जनाँ अति ।

धेना इन्द्रावचाकशत् ॥२२

इहि । तिस्रः । पराऽवतः । इहि । पञ्च । जनान् । अति ।

धेनाः । इन्द्र । अवऽचाकशत् ॥२२

इहि । तिस्रः । पराऽवतः । इहि । पञ्च । जनान् । अति ।

धेनाः । इन्द्र । अवऽचाकशत् ॥२२

हे “इन्द्र “धेनाः अस्मदीयाः स्तुतीः “अवचाकशत् योऽपश्यत् स त्वं “परावतः दूरात् । ‘आरे परावतः' इति दूरनामसु पाठात् । “तिस्रः अग्रपृष्ठपार्श्वदिशः “इहि गच्छ । अनेन अग्रतः पृष्ठतः पार्श्वतश्च इन्द्रस्यागमनमाशास्ते । अपि च “पञ्च “जनान् मनुष्यान् “अति “इहि अतिगच्छ । यद्वा । गन्धर्वाः पितरो देवा असुरा रक्षांसि च पञ्चजनाः । तानतीहीत्यर्थः । तथा च यास्कः--- ‘ गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके चत्वारो वर्णा निषादः पञ्चम इत्यौपमन्यवः' (निरु. ३.८) इति ॥

सूर्यो रश्मिं यथा सृजा त्वा यच्छन्तु मे गिरः ।

निम्नमापो न सध्र्यक् ॥२३

सूर्यः । रश्मिम् । यथा । सृज । आ । त्वा । यच्छन्तु । मे । गिरः ।

निम्नम् । आपः । न । सध्र्यक् ॥२३

सूर्यः । रश्मिम् । यथा । सृज । आ । त्वा । यच्छन्तु । मे । गिरः ।

निम्नम् । आपः । न । सध्र्यक् ॥२३

हे इन्द्र “सूर्यः “यथा “रश्मिं रश्मीन् किरणानश्वप्रग्रहान् वा विसृजति तथा मह्यं धनं विसृज । अपि च “मे मदीयाः “गिरः स्तुतयः “सध्र्यक् सह त्वाम् “आ “यच्छन्तु ! “निम्नमापो “न । यथा निम्नं देशमापः सह परिगृह्णन्ति तद्वदित्यर्थः । ।

अध्व॑र्य॒वा तु हि षि॒ञ्च सोमं॑ वी॒राय॑ शि॒प्रिणे॑ ।

भरा॑ सु॒तस्य॑ पी॒तये॑ ॥२४

अध्व॑र्यो॒ इति॑ । आ । तु । हि । सि॒ञ्च । सोम॑म् । वी॒राय॑ । शि॒प्रिणे॑ ।

भर॑ । सु॒तस्य॑ । पी॒तये॑ ॥२४

अध्वर्यो इति । आ । तु । हि । सिञ्च । सोमम् । वीराय । शिप्रिणे ।

भर । सुतस्य । पीतये ॥२४

हे “अध्वर्यो “शिप्रिणे हनूमते “वीराय शूरायेन्द्राय “सोमं “तु “हि क्षिप्रमेव “आ “सिञ्च । “सुतस्य सुतं सोमं “पीतये पानाय च “भर आहर च ।।

य उ॒द्नः फ॑लि॒गं भि॒नन्न्य१॒॑क्सिन्धूँ॑र॒वासृ॑जत् ।

यो गोषु॑ प॒क्वं धा॒रय॑त् ॥२५

यः । उ॒द्नः । फ॒लि॒ऽगम् । भि॒नत् । न्य॑क् । सिन्धू॑न् । अ॒व॒ऽअसृ॑जत् ।

यः । गोषु॑ । प॒क्वम् । धा॒रय॑त् ॥२५

यः । उद्नः । फलिऽगम् । भिनत् । न्यक् । सिन्धून् । अवऽअसृजत् ।

यः । गोषु । पक्वम् । धारयत् ॥२५

“यः “उद्नः उदकार्थं “फलिगं मेघम् । रैवतः फलिगः' इति मेघनामसु पाठात् । “भिनत् अभिनत् । “सिन्धून् अपश्च अन्तरिक्षात् “न्यक् अर्वाक् “अवासृजत् । “यः च “गोषु “पक्वं पयः “धारयत् अधारयत् । स इन्द्र इत्यर्थः ॥ ॥ ५ ॥

अह॒न्वृ॒त्रमृची॑षम और्णवा॒भम॑ही॒शुव॑म् ।

हि॒मेना॑विध्य॒दर्बु॑दम् ॥२६

अह॑न् । वृ॒त्रम् । ऋ॒चीष॑मः । औ॒र्णऽवा॒भम् । अ॒ही॒शुव॑म् ।

हि॒मेन॑ । अ॒वि॒ध्य॒त् । अर्बु॑दम् ॥२६

अहन् । वृत्रम् । ऋचीषमः । और्णऽवाभम् । अहीशुवम् ।

हिमेन । अविध्यत् । अर्बुदम् ॥२६

“ऋचीषमः ऋचा दीप्त्या सम इन्द्रः “वृत्रं वृत्रनामकं शत्रुम् “अहन् जघान । तथा “और्णवाभम् और्णवाभनामकम् “अहीशुवम् अहीशुवनामकं च शत्रुमहन् । तथा “हिमेन तुषारेणोदकेन वा “अर्बुदं मेघम् “अविध्यत् ॥

प्र व॑ उ॒ग्राय॑ नि॒ष्टुरेऽषा॑ळ्हाय प्रस॒क्षिणे॑ ।

दे॒वत्तं॒ ब्रह्म॑ गायत ॥२७

प्र । व॒: । उ॒ग्राय॑ । नि॒:ऽतुरे॑ । अषा॑ळ्हाय । प्र॒ऽस॒क्षिणे॑ ।

दे॒वत्त॑म् । ब्रह्म॑ । गा॒य॒त॒ ॥२७

प्र । वः । उग्राय । निःऽतुरे । अषाळ्हाय । प्रऽसक्षिणे ।

देवत्तम् । ब्रह्म । गायत ॥२७

हे उद्गातारः “वः यूयम् “उग्राय उद्गूर्णाय “निष्टुरे शत्रून्निस्तरते “अषाळ्हाय शत्रूणामभिभवित्रे “प्रसक्षिणे प्रसहनशीलायेन्द्राय “देवत्तं देवप्रसादलब्धं “ब्रह्म स्तोत्रं “प्र “गायत ।।

यो विश्वा॑न्य॒भि व्र॒ता सोम॑स्य॒ मदे॒ अन्ध॑सः ।

इन्द्रो॑ दे॒वेषु॒ चेत॑ति ॥२८

यः । विश्वा॑नि । अ॒भि । व्र॒ता । सोम॑स्य । मदे॑ । अन्ध॑सः ।

इन्द्र॑: । दे॒वेषु॑ । चेत॑ति ॥२८

यः । विश्वानि । अभि । व्रता । सोमस्य । मदे । अन्धसः ।

इन्द्रः । देवेषु । चेतति ॥२८

“अन्धसः अद्यमानस्य “सोमस्य “मदे संजाते “विश्वानि सर्वाणि “व्रता व्रतानि कर्माणि “यः “इन्द्रः "देवेषु “अभि “चेतति ज्ञापयति तस्मा इन्द्राय देवत्तं ब्रह्म गायतेत्यर्थः ।।

इ॒ह त्या स॑धु॒माद्या॒ हरी॒ हिर॑ण्यकेश्या ।

वो॒ळ्हाम॒भि प्रयो॑ हि॒तम् ॥२९

इ॒ह । त्या । स॒धु॒ऽमाद्या॑ । हरी॒ इति॑ । हिर॑ण्यऽकेश्या ।

वो॒ळ्हाम् । अ॒भि । प्रयः॑ । हि॒तम् ॥२९

इह । त्या । सधऽमाद्या । हरी इति । हिरण्यऽकेश्या ।

वोळ्हाम् । अभि । प्रयः । हितम् ॥२९

“इह यज्ञे “त्या तौ प्रसिद्धौ “सधमाद्या सह माद्यन्तौ “हिरण्यकेश्या हिरण्यकेश्यौ “हरी अश्वौ “हितं हितकरं “प्रयः सोमरूपमन्नम् “अभि अभिलक्ष्य “वोळ्हाम् इन्द्रं वहताम् । प्रापयतामिति ।।

अ॒र्वाञ्चं॑ त्वा पुरुष्टुत प्रि॒यमे॑धस्तुता॒ हरी॑ ।

सो॒म॒पेया॑य वक्षतः ॥३०

अ॒र्वाञ्चं॑म् । त्वा॒ । पु॒रु॒ऽस्तु॒त॒ । प्रि॒यमे॑धऽस्तुता । हरी॒ इति॑ ।

सो॒म॒ऽपेया॑य । व॒क्ष॒तः॒ ॥३०

अर्वाञ्चम् । त्वा । पुरुऽस्तुत । प्रियमेधऽस्तुता । हरी इति ।

सोमऽपेयाय । वक्षतः ॥३०

हे पुरुष्टुत इन्द्र “त्वा त्वां “प्रियमेधस्तुता “हरी अश्वौ “सोमपेयाय सोमपानाय “अर्वाञ्चम् अस्मदभिमुखं “वक्षतः वहतः ॥ ॥ ६ ॥

# ऋग्वेदः सूक्तं ८.३३



दे. इन्द्रः। बृहती, १६-१८ गायत्री, १९ अनुष्टुप्।

वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।

पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ॥१॥

स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः ।

कदा सुतं तृषाण ओक आ गम इन्द्र स्वब्दीव वंसगः ॥२॥

कण्वेभिर्धृष्णवा धृषद्वाजं दर्षि सहस्रिणम् ।

पिशङ्गरूपं मघवन्विचर्षणे मक्षू गोमन्तमीमहे ॥३॥

पाहि गायान्धसो मद इन्द्राय मेध्यातिथे ।

यः सम्मिश्लो हर्योर्यः सुते सचा वज्री रथो हिरण्ययः ॥४॥

यः सुषव्यः सुदक्षिण इनो यः सुक्रतुर्गृणे ।

य आकरः सहस्रा यः शतामघ इन्द्रो यः पूर्भिदारितः ॥५॥

यो धृषितो योऽवृतो यो अस्ति श्मश्रुषु श्रितः ।

विभूतद्युम्नश्च्यवनः पुरुष्टुतः क्रत्वा गौरिव शाकिनः ॥६॥

क ईं वेद सुते सचा पिबन्तं कद्वयो दधे ।

अयं यः पुरो विभिनत्त्योजसा मन्दानः शिप्र्यन्धसः ॥७॥

दाना मृगो न वारणः पुरुत्रा चरथं दधे ।

नकिष्ट्वा नि यमदा सुते गमो महाँश्चरस्योजसा ॥८॥

य उग्रः सन्ननिष्टृत स्थिरो रणाय संस्कृतः ।

यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत् ॥९॥

सत्यमित्था वृषेदसि वृषजूतिर्नोऽवृतः ।

वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥१०॥

वृषणस्ते अभीशवो वृषा कशा हिरण्ययी ।

वृषा रथो मघवन्वृषणा हरी वृषा त्वं शतक्रतो ॥११॥

वृषा सोता सुनोतु ते वृषन्नृजीपिन्ना भर ।

वृषा दधन्वे वृषणं नदीष्वा तुभ्यं स्थातर्हरीणाम् ॥१२॥

एन्द्र याहि पीतये मधु शविष्ठ सोम्यम् ।

नायमच्छा मघवा शृणवद्गिरो ब्रह्मोक्था च सुक्रतुः ॥१३॥

वहन्तु त्वा रथेष्ठामा हरयो रथयुजः ।

तिरश्चिदर्यं सवनानि वृत्रहन्नन्येषां या शतक्रतो ॥१४॥

अस्माकमद्यान्तमं स्तोमं धिष्व महामह ।

अस्माकं ते सवना सन्तु शंतमा मदाय द्युक्ष सोमपाः ॥१५॥

नहि षस्तव नो मम शास्त्रे अन्यस्य रण्यति ।

यो अस्मान्वीर आनयत् ॥१६॥

इन्द्रश्चिद्घा तदब्रवीत्स्त्रिया अशास्यं मनः ।

उतो अह क्रतुं रघुम् ॥१७॥

सप्ती चिद्घा मदच्युता मिथुना वहतो रथम् ।

एवेद्धूर्वृष्ण उत्तरा ॥१८॥

अधः पश्यस्व मोपरि संतरां पादकौ हर ।

मा ते कशप्लकौ दृशन्स्त्री हि ब्रह्मा बभूविथ ॥१९॥

**सायणभाष्यम्**

‘वयं घ त्वा' इत्येकोनविंशत्यृचं तृतीयं सूक्तं काण्वस्य मेध्यातिथेरार्षं बृहतीच्छन्दस्कम् । षोडश्याद्यास्तिस्रो गायत्र्य एकोनविंश्यनुष्टुप् । इन्द्रो देवता । तथा चानुक्रान्तं- ‘ वयं घैकोना मेध्यातिथिर्बार्हतं त्रिगायत्र्यनुष्टुबन्तम् ' इति । महाव्रते निष्केवल्ये बार्हततृचाशीतावादितः पञ्चदशर्चः । तथैव पञ्चमारण्यके शौनकेन सूत्र्यते- ‘ वयं घ त्वा सुतावन्त इति पञ्चदश मो षु त्वा वाघतश्चनेत्येतस्य द्विपदां चोद्धरति ' ( ऐ. आ. ५, २. ४ ) इति । चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिशस्त्रे ‘ वयं घ त्वा ' इति तृचो वैकल्पिकः स्तोत्रियः । तथा च सूत्रं - ‘ वयं घ त्वा सुतावन्तः क ईं वेद सुते सचा ' ( आश्व. श्रौ. ७. ४ ) इति । स्वरसाम्न्ययमेव तृचोऽनुरूपः । सूत्रितं च – वयं घ त्वा सुतावन्त इति तिस्रो बृहत्यः ' ( आश्व. श्रौ. ८. ५) इति । तस्मिन्नेव शस्त्रे ‘ क ईं वेद' इति वैकल्पिकोऽनुरूपः । सूत्रमुक्तमेव ॥

व॒यं घ॑ त्वा सु॒ताव॑न्त॒ आपो॒ न वृ॒क्तब॑र्हिषः ।

प॒वित्र॑स्य प्र॒स्रव॑णेषु वृत्रह॒न्परि॑ स्तो॒तार॑ आसते ॥१

व॒यम् । घ॒ । त्वा॒ । सु॒तऽव॑न्तः । आपः॑ । न । वृ॒क्तऽब॑र्हिषः ।

प॒वित्र॑स्य । प्र॒ऽस्रव॑णेषु । वृ॒त्र॒ऽह॒न् । परि॑ । स्तो॒तारः॑ । आ॒स॒ते॒ ॥१

वयम् । घ । त्वा । सुतऽवन्तः । आपः । न । वृक्तऽबर्हिषः ।

पवित्रस्य । प्रऽस्रवणेषु । वृत्रऽहन् । परि । स्तोतारः । आसते ॥१

हे “वृत्रहन इन्द्र “त्वा त्वां “वयं “घ वयं खलु “सुतवन्तः सोममभिषुतवन्तः “आपो “न आप इव प्रवणमभिगच्छामः । "पवित्रस्य सोमानां “प्रस्रवणेषु “वृक्तबर्हिषः स्तीर्णबर्हिषः “स्तोतारः च त्वां पर्युपासते । ।

स्वर॑न्ति त्वा सु॒ते नरो॒ वसो॑ निरे॒क उ॒क्थिनः॑ ।

क॒दा सु॒तं तृ॑षा॒ण ओक॒ आ ग॑म॒ इन्द्र॑ स्व॒ब्दीव॒ वंस॑गः ॥२

स्वर॑न्ति । त्वा॒ । सु॒ते । नरः॑ । वसो॒ इति॑ । नि॒रे॒के । उ॒क्थिनः॑ ।

क॒दा । सु॒तम् । तृ॒षा॒णः । ओकः॑ । आ । ग॒मः॒ । इन्द्र॑ । स्व॒ब्दीऽइ॑व । वंस॑गः ॥२

स्वरन्ति । त्वा । सुते । नरः । वसो इति । निरेके । उक्थिनः ।

कदा । सुतम् । तृषाणः । ओकः । आ । गमः । इन्द्र । स्वब्दीऽइव । वंसगः ॥२

हे “वसो वासयितरिन्द्र “त्वा त्वां “सुते अभिषुते सोमे “निरेके निर्गमने “उक्थिनः “नरः नेतारः “स्वरन्ति शब्दायन्ते । अपि चेन्द्रः “सुतं सोमं प्रति “तृषाणः तृष्यन् “स्वब्दीव स्वभूतशब्द इव “वंसगः वननीयगमनो वृषभः शब्दं कुर्वन् “कदा “ओकः स्थानम् “आ गमत् ॥

कण्वे॑भिर्धृष्ण॒वा धृ॒षद्वाजं॑ दर्षि सह॒स्रिण॑म् ।

पि॒शङ्ग॑रूपं मघवन्विचर्षणे म॒क्षू गोम॑न्तमीमहे ॥३

कण्वे॑भिः । धृ॒ष्णो॒ इति॑ । आ । धृ॒षत् । वाज॑म् । द॒र्षि॒ । स॒ह॒स्रिण॑म् ।

पि॒शङ्ग॑ऽरूपम् । म॒घ॒ऽव॒न् । वि॒ऽच॒र्ष॒णे॒ । म॒क्षु । गोऽम॑न्तम् । ई॒म॒हे॒ ॥३

कण्वेभिः । धृष्णो इति । आ । धृषत् । वाजम् । दर्षि । सहस्रिणम् ।

पिशङ्गऽरूपम् । मघऽवन् । विऽचर्षणे । मक्षु । गोऽमन्तम् । ईमहे ॥३

हे “धृष्णो धर्षकेन्द्र “कण्वेभिः कण्वानुद्दिश्य । विभक्तिव्यत्ययः । “सहस्रिणं सहस्रसंख्याकं “वाजम् “आ “दर्षि देहि। हे “मघवन् धनवन् “विचर्षणे विद्रष्टरिन्द्र “धृषत् धृष्टं “पिशङ्गरूपं “गोमन्तं च वाजं “मक्षु शीघ्रम् “ईमहे याचामहे । त्वामिति शेषः ॥

पा॒हि गायान्ध॑सो॒ मद॒ इन्द्रा॑य मेध्यातिथे ।

यः सम्मि॑श्लो॒ हर्यो॒र्यः सु॒ते सचा॑ व॒ज्री रथो॑ हिर॒ण्यय॑ः ॥४

पा॒हि । गाय॑ । अन्ध॑सः । मदे॑ । इन्द्रा॑य । मे॒ध्य॒ऽअ॒ति॒थे॒ ।

यः । सम्ऽमि॑श्लः । हर्यो॑ः । यः । सु॒ते । सचा॑ । व॒ज्री । रथ॑ः । हि॒र॒ण्यय॑ः ॥४

पाहि । गाय । अन्धसः । मदे । इन्द्राय । मेध्यऽअतिथे ।

यः । सम्ऽमिश्लः । हर्योः । यः । सुते । सचा । वज्री । रथः । हिरण्ययः ॥४

हे “मेध्यातिथे “पाहि सोमं पिब । “अन्धसः पीतस्य सोमस्य “मदे तस्मै “इन्द्राय “गाय स्तोत्रं पठ' च । “यः इन्द्रः "हर्योः अश्वयोः “संमिश्लः स्वरथे संमिश्लयिता । “यः च “सुते सोमे “सचा सहायः । य इन्द्रः “वज्री । यस्य “रथः “हिरण्ययः हिरण्मयः ।।

यः सु॑ष॒व्यः सु॒दक्षि॑ण इ॒नो यः सु॒क्रतु॑र्गृ॒णे ।

य आ॑कु॒रः स॒हस्रा॒ यः श॒ताम॑घ॒ इन्द्रो॒ यः पू॒र्भिदा॑रि॒तः ॥५

यः । सु॒ऽस॒व्यः । सु॒ऽदक्षि॑णः । इ॒नः । यः । सु॒ऽक्रतु॑ः । गृ॒णे ।

यः । आ॒ऽक॒रः । स॒हस्रा॑ । यः । श॒तऽम॑घः । इन्द्रः॑ । यः । पूः॒ऽभित् । आ॒रि॒तः ॥५

यः । सुऽसव्यः । सुऽदक्षिणः । इनः । यः । सुऽक्रतुः । गृणे ।

यः । आऽकरः । सहस्रा । यः । शतऽमघः । इन्द्रः । यः । पूःऽभित् । आरितः ॥५

“यः “सुषव्यः शोभनसव्यहस्तः यश्च “सुदक्षिणः यश्च “इनः ईश्वरः । ‘ नियुत्वान् इनः' इतीश्वरनामसु पाठात् । “यः चापि “सुक्रतुः सुप्रज्ञः। “सहस्रा सहस्राणां बहूनां “यः च “आकरः कर्ता । “यः चापि “शतमघः बहुधनः । “यः च “पूर्भित् पुरां भेत्ता । यश्च “आरितः प्रत्यृतः स्तोमान् । तथा च यास्कः- ‘ य आरितः कर्मणि कर्मणि स्थिरः प्रत्यृतः स्तोमान्' (निरु. ५. १५) इति । सः “इन्द्रः “गृणे अस्माभिः स्तूयते च ॥ ॥ ७ ॥

यो धृ॑षि॒तो यो॑ऽवृ॑तो॒ यो अस्ति॒ श्मश्रु॑षु श्रि॒तः ।

विभू॑तद्युम्न॒श्च्यव॑नः पुरुष्टु॒तः क्रत्वा॒ गौरि॑व शाकि॒नः ॥६

यः । धृ॒षि॒तः । यः । अवृ॑तः । यः । अस्ति॑ । श्मश्रु॑षु । श्रि॒तः ।

विभू॑तऽद्युम्नः । च्यव॑नः । पु॒रु॒ऽस्तु॒तः । क्रत्वा॑ । गौःऽइ॑व । शा॒कि॒नः ॥६

यः । धृषितः । यः । अवृतः । यः । अस्ति । श्मश्रुषु । श्रितः ।

विभूतऽद्युम्नः । च्यवनः । पुरुऽस्तुतः । क्रत्वा । गौःऽइव । शाकिनः ॥६

“यो “धृषितः शत्रूणां धर्षयिता "यः च "अवृतः शत्रुभिरपरिवृतः “यः चापि “श्मश्रुषु युद्धेषु । श्रवः श्रयन्त्यस्मिन्निति व्युत्पत्तेः श्मश्रु युद्धमिति वृद्धा वदन्ति । “श्रितः “अस्ति भवति । यश्चापि “विभूतद्युम्नः प्रभूतधनः । यश्च “च्यवनः सोमानां च्यावयिता । यश्चापि “पुरुष्टुतः बहुस्तुतः । स इन्द्रः “क्रत्वा कर्मणा “शाकिनः शक्तस्य यजमानस्य “गौरिव यथा गौः पयसो दोग्ध्री तथा कामानां दोग्धा भवति ।।

क ईं॑ वेद सु॒ते सचा॒ पिब॑न्तं॒ कद्वयो॑ दधे ।

अ॒यं यः पुरो॑ विभि॒नत्त्योज॑सा मन्दा॒नः शि॒प्र्यन्ध॑सः ॥७

कः । ई॒म् । वे॒द॒ । सु॒ते । सचा॑ । पिब॑न्तम् । कत् । वयः॑ । द॒धे॒ ।

अ॒यम् । यः । पुरः॑ । वि॒ऽभि॒नत्ति॑ । ओज॑सा । म॒न्दा॒नः । शि॒प्री । अन्ध॑सः ॥७

कः । ईम् । वेद । सुते । सचा । पिबन्तम् । कत् । वयः । दधे ।

अयम् । यः । पुरः । विऽभिनत्ति । ओजसा । मन्दानः । शिप्री । अन्धसः ॥७

“सुते अभिषुते सोमे “सचा ऋत्विजा सह सोमं “पिबन्तम् “ईम् एनमिन्द्रं “कः “वेद वेत्ति । न कोऽपि वेत्तीत्यर्थः । “कत् किं वा “वयः अन्नं “दधे धारयति । “यः "अयम् इन्द्रः “शिप्री हनूमान् “अन्धसः सोमेन “मन्दानः मन्दमानः “ओजसा बलेन “पुरः “विभिनत्ति ॥

दा॒ना मृ॒गो न वा॑र॒णः पु॑रु॒त्रा च॒रथं॑ दधे ।

नकि॑ष्ट्वा॒ नि य॑म॒दा सु॒ते ग॑मो म॒हाँश्च॑र॒स्योज॑सा ॥८

दा॒ना । मृ॒गः । न । वा॒र॒णः । पु॒रु॒ऽत्रा । च॒रथ॑म् । द॒धे॒ ।

नकिः॑ । त्वा॒ । नि । य॒म॒त् । आ । सु॒ते । ग॒मः॒ । म॒हान् । च॒र॒सि॒ । ओज॑सा ॥८

दाना । मृगः । न । वारणः । पुरुऽत्रा । चरथम् । दधे ।

नकिः । त्वा । नि । यमत् । आ । सुते । गमः । महान् । चरसि । ओजसा ॥८

“मृगः शत्रूणामन्वेषकः “वारणः गजः “दाना मदजलानीव “पुरुत्रा बहुषु यज्ञेषु “चरथं चरणशीलं मदं “दधे इन्द्रो धारयति । अथ प्रत्यक्षस्तुतिः । हे इन्द्र “त्वा त्वां “नकिः “नि “यमत् न कश्चिन्नियच्छति । “सुते सोमे “आ “गमः आगच्छ । “महान् हि त्वम् “ओजसा बलेन सर्वतः “चरसि ॥

य उ॒ग्रः सन्ननि॑ष्टृतः स्थि॒रो रणा॑य॒ संस्कृ॑तः ।

यदि॑ स्तो॒तुर्म॒घवा॑ शृ॒णव॒द्धवं॒ नेन्द्रो॑ योष॒त्या ग॑मत् ॥९

यः । उ॒ग्रः । सन् । अनि॑ऽस्तृतः । स्थि॒रः । रणा॑य । संस्कृ॑तः ।

यदि॑ । स्तो॒तुः । म॒घऽवा॑ । शृ॒णव॑त् । हव॑म् । न । इन्द्रः॑ । यो॒ष॒ति॒ । आ । ग॒म॒त् ॥९

यः । उग्रः । सन् । अनिऽस्तृतः । स्थिरः । रणाय । संस्कृतः ।

यदि । स्तोतुः । मघऽवा । शृणवत् । हवम् । न । इन्द्रः । योषति । आ । गमत् ॥९

"यः “उग्रः उद्गूर्ण ओजस्वी वा “सन् भवन् “अनिष्टृतः शत्रुभिरनिस्तीर्णः “स्थिरः अचलः “रणाय युद्धाय “संस्कृतः शस्त्रैरलंकृतः सोमैर्वा संस्कृतः सः “इन्द्रः “मघवा धनवान् "यदि “स्तोतुः “हवम् आह्वानं “शृणवत् शृणोति तर्ह्यन्यत्र “न "योषति न गच्छति । किंतु “आ “गमत् तत्रैवागच्छति ॥

स॒त्यमि॒त्था वृषेद॑सि॒ वृष॑जूति॒र्नोऽवृ॑तः ।

वृषा॒ ह्यु॑ग्र शृण्वि॒षे प॑रा॒वति॒ वृषो॑ अर्वा॒वति॑ श्रु॒तः ॥१०

स॒त्यम् । इ॒त्था । वृषा॑ । इत् । अ॒सि॒ । वृष॑ऽजूतिः । न॒: । अवृ॑तः ।

वृषा॑ । हि । उ॒ग्र॒ । शृ॒ण्वि॒षे । प॒रा॒ऽवति॑ । वृषो॒ इति॑ । अ॒र्वा॒ऽवति॑ । श्रु॒तः ॥१०

सत्यम् । इत्था । वृषा । इत् । असि । वृषऽजूतिः । नः । अवृतः ।

वृषा । हि । उग्र । शृण्विषे । पराऽवति । वृषो इति । अर्वाऽवति । श्रुतः ॥१०

हे “उग्र उद्गूर्णेन्द्र त्वं “सत्यम् “इत्था इत्थं “वृषेत् कामानां वर्षक एव “असि । “वृषजूतिः वृषभिश्वाकृष्टः “नः अस्माकम् “अवृतः शत्रुभिरपरिवृतश्चासि । “वृषा “हि सेचक एव “शृण्विषे श्रूयसे । “परावति दूरेऽपि वृषैव “अर्वावति समीपेऽपि वृषा सेचक एव “श्रुतः वृषैवाश्रूयथाः ॥ ॥८॥

वृष॑णस्ते अ॒भीश॑वो॒ वृषा॒ कशा॑ हिर॒ण्ययी॑ ।

वृषा॒ रथो॑ मघव॒न्वृष॑णा॒ हरी॒ वृषा॒ त्वं श॑तक्रतो ॥११

वृष॑णः । ते॒ । अ॒भीश॑वः । वृषा॑ । कशा॑ । हि॒र॒ण्ययी॑ ।

वृषा॑ । रथ॑: । म॒घ॒ऽव॒न् । वृष॑णा । हरी॒ इति॑ । वृषा॑ । त्वम् । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो ॥११

वृषणः । ते । अभीशवः । वृषा । कशा । हिरण्ययी ।

वृषा । रथः । मघऽवन् । वृषणा । हरी इति । वृषा । त्वम् । शतक्रतो इति शतऽक्रतो ॥११

हे “मघवन् “ते तव “अभीशवः रश्मयोऽश्वरशनाः “वृषणः वर्षितारः । “हिरण्ययी हिरण्मयी "कशा अपि “वृषा । “रथः अपि “वृषा वर्षिता । “हरी अश्वावपि “वृषणा वृषणौ वर्षितारौ । हे “शतक्रतो बहुप्रज्ञेन्द्र “त्वं च “वृषा वर्षिता ॥

वृषा॒ सोता॑ सुनोतु ते॒ वृष॑न्नृजीपि॒न्ना भ॑र ।

वृषा॑ दधन्वे॒ वृष॑णं न॒दीष्वा तुभ्य॑ं स्थातर्हरीणाम् ॥१२

वृषा॑ । सोता॑ । सु॒नो॒तु॒ । ते॒ । वृष॑न् । ऋ॒जी॒पि॒न् । आ । भ॒र॒ ।

वृषा॑ । द॒ध॒न्वे॒ । वृष॑णम् । न॒दीषु॑ । आ । तुभ्य॑म् । स्था॒त॒: । ह॒री॒णा॒म् ॥१२

वृषा । सोता । सुनोतु । ते । वृषन् । ऋजीपिन् । आ । भर ।

वृषा । दधन्वे । वृषणम् । नदीषु । आ । तुभ्यम् । स्थातः । हरीणाम् ॥१२

हे “वृषन् वर्षितरिन्द्र “ते तव “सोता अभिषवकर्ता “वृषा वर्षिता सन् "सुनोतु सोमममभिषुणोतु । हे “ऋजीपिन् ऋजुगमनेन्द्र “आ “भर धनमस्मभ्यमाहर । “हरीणाम् अश्वानाम् “आ आभिमुख्येन हे "स्थातः इन्द्र “तुभ्यं “नदीषु उदकेषु “वृषणं वर्षितारं सोमं “वृषा

वर्षिता “दधन्वे धारितवानभिषवार्थम् ॥

एन्द्रं याहि पी॒तये॒ मधुं शविष्ठ सो॒म्यम् ।

नायमच्छां म॒घवां शृ॒णव॒द्गिरो॒ ब्रह्मो॒क्था चं सु॒क्रतुः॑ ॥१३

आ । इ॒न्द्र॒ । या॒हि॒ । पी॒तयें । मधुं । श॒वि॒ष्ठ॒ । सो॒म्यम् ।

न । अ॒यम् । अच्छं । म॒घऽवां । शृ॒णवंत् । गिरः॑ । ब्रह्मं । उ॒क्था । च॒ । सु॒ऽक्रतुः॑ ॥१३

आ । इन्द्र । याहि । पीतये । मधु । शविष्ठ । सोम्यम् ।

न । अयम् । अच्छ । मघऽवा । शृणवत् । गिरः । ब्रह्म । उक्था । च । सुऽक्रतुः ॥१३

हे “शविष्ठ बलवत्तम “इन्द्र “सोम्यं सोमात्मकं “मधु अमृतं “पीतये पानाय “आ “याहि आगच्छ । किमर्थमागमनमित्यत आह । यत आगमनमन्तरेण “मघवा धनवान् “सुक्रतुः सुकर्मा शोभनप्रज्ञो वा “अयम् इन्द्रः “गिरः स्तुतीः “ब्रह्म स्तोत्राण्युक्थानि “च “न “अच्छ, “शृणवत् नाभिशृणोति । अत आगमनमित्यर्थः ॥

वहंन्तु त्वा रथे॒ष्ठामा हरंयो रथ॒युजः॑ ।

ति॒रश्चिंद॒र्यं सवंनानि वृत्रहन्न॒न्येषां॒ या शंतक्रतो ॥१४

वहंन्तु । त्वा॒ । र॒थे॒ऽस्थाम् । आ । हरंयः । र॒थ॒ऽयुजः॑ ।

ति॒रः । चि॒त् । अ॒र्यम् । सवंनानि । वृ॒त्र॒ऽह॒न् । अ॒न्येषां॑म् । या । श॒त॒क्र॒तो॒ इतिं शतऽक्रतो ॥१४

वहन्तु । त्वा । रथेऽस्थाम् । आ । हरयः । रथऽयुजः ।

तिरः । चित् । अर्यम् । सवनानि । वृत्रऽहन् । अन्येषाम् । या । शतक्रतो इति शतऽक्रतो ॥१४

हे “वृत्रहन् “शतक्रतो बहुप्रज्ञ “रथेष्ठां रथस्थम् “अर्यम् ईश्वरं “त्वा त्वां “रथयुजः रथे युक्ताः “हरयः अश्वाः “अन्येषां “या यानि सवनानि सन्ति तानि “तिरः तिरस्कुर्वन्तः “सवनानि अस्मदीयानि सवनानि “आ “वहन्तु ॥

अ॒स्माकंम॒द्यान्तंम॒ स्तोमं॑ धिष्व महामह ।

अ॒स्माकं॑ ते॒ सवंना सन्तु॒ शंतंमा॒ मदा॑य द्युक्ष सोमपाः ॥१५

अ॒स्माकंम् । अ॒द्य । अन्तंमम् । स्तोमंम् । धि॒ष्व॒ । म॒हा॒ऽम॒ह॒ ।

अ॒स्माकंम् । ते॒ । सवंना । स॒न्तु॒ । शम्ऽतंमा । मदा॑य । द्यु॒क्ष॒ । सो॒म॒ऽपा॒ः ॥१५

अस्माकम् । अद्य । अन्तमम् । स्तोमम् । धिष्व । महाऽमह ।

अस्माकम् । ते । सवना । सन्तु । शम्ऽतमा । मदाय । द्युक्ष । सोमऽपाः ॥१५

हे "महामह महतामपि महन् महापूज वा "अद्य "अन्तमम् अन्तिकतमम् "अस्माकं मेध्यातिथीनां "स्तोमं "धिष्व धारय । हे "द्युक्ष दीप्त "सोमपाः सोमस्य पातरिन्द्र "ते तव "मदाय मदार्थं "सवना सवनानि "अस्माकं "शंतमा शंतमानि सुखतमानि "सन्तु भवन्तु ॥ ॥ ९ ॥

न॒हि ष॒स्तव॒ नो मम॑ शा॒स्त्रे अ॒न्यस्य॒ रण्य॑ति ।

यो अ॒स्मान्वी॒र आन॑यत् ॥१६

न॒हि । सः । तव॑ । न॒ः । मम॑ । शा॒स्त्रे । अ॒न्यस्य॑ । रण्य॑ति ।

यः । अ॒स्मान् । वी॒रः । आ । अन॑यत् ॥१६

नहि । सः । तव । नः । मम । शास्त्रे । अन्यस्य । रण्यति ।

यः । अस्मान् । वीरः । आ । अनयत् ॥१६

"यः "वीरः शूरः "अस्मान् "आनयत् "सः इन्द्रः "तव "शास्त्रे शासने "नहि "रण्यति न रमते । "मम अपि शास्त्रे शासने "नो रण्यति । "अन्यस्य अपि शासने न रण्यति । किंतु रक्षण एव रमत इत्यर्थः । ।

इन्द्र॑श्चिद्घा॒ तद॑ब्रवीत्स्त्रि॒या अ॑शा॒स्यं मन॑ः ।

उ॒तो अह॒ क्रतुं॑ र॒घुम् ॥१७

इन्द्र॑ः । चि॒त् । घ॒ । तत् । अ॒ब्र॒वी॒त् । स्त्रि॒याः । अ॒शा॒स्यम् । मन॑ः ।

उ॒तो इति॑ । अह॑ । क्रतु॑म् । र॒घुम् ॥१७

इन्द्रः । चित् । घ । तत् । अब्रवीत् । स्त्रियाः । अशास्यम् । मनः ।

उतो इति । अह । क्रतुम् । रघुम् ॥१७

यो मेध्यातिथेर्धनप्रदाता प्लायोगिरासङ्गः स पुमान् भूत्वा स्त्र्यभवत् । तदा यदिन्द्र उवाच तदिदमाह । तथा चाहुः -'प्लायोगिश्चासङ्गो यः स्त्री भूत्वा पुमानभूत् स मेध्यातिथये दानं दत्त्वा ' इति । "इन्द्रश्चिद्ध इन्द्रः खलु "तदब्रवीत् । "स्त्रियाः "मनः चित्तम् "अशास्यं पुरुषेणाशिष्यं शासितुमशक्यं प्रबलत्वादिति । "उतो अपि च स्त्रियाः "क्रतुं प्रज्ञां "रघुं लघुमाह ॥

सप्तीं चिद्घा मदच्युतां मिथुना वंहतो रथंम् ।

एवेद्धूर्वृष्ण उत्तंरा ॥१८

सप्ती इतिं । चित् । घ । मदऽच्युतां । मिथुना । वहतः । रथंम् ।

एव । इत् । धूः । वृष्णः । उत्ऽतंरा ॥१८

सप्ती इति । चित् । घ । मदऽच्युता । मिथुना । वहतः । रथम् ।

एव । इत् । धूः । वृष्णः । उत्ऽतरा ॥१८

“सप्ती “चिद्ध इन्द्रस्याश्वावपि खलु “मदच्युता सोमं प्रति गन्ताराविन्द्रस्यैव “रथं मिथुनौ “वहतः । “एवेत् एवमेव “वृष्णः इन्द्रस्य रथस्य “धूः “उत्तरा अश्वयोरुत्तरा भवति ॥

अधः पंश्यस्व मोपरिं संतरां पांदकौ हंर ।

मा तें कशप्लकौ दृंशन्स्त्री हि ब्रह्मा बभूविंथ ॥१९

अधः । पश्यस्व । मा । उपरिं । सम्ऽतराम् । पादकौ । हर ।

मा । ते । कशऽप्लकौ । दृशन् । स्त्री । हि । ब्रह्मा । बभूविंथ ॥१९

अधः । पश्यस्व । मा । उपरि । सम्ऽतराम् । पादकौ । हर ।

मा । ते । कशऽप्लकौ । दृशन् । स्त्री । हि । ब्रह्मा । बभूविथ ॥१९

एवमन्तरिक्षादागच्छन् रथस्थ इन्द्रः स्त्रियं सन्तं स्वस्मात् पुंस्त्वमिच्छन्तं प्लायोगिं यदुवाच तदाह । हे प्लायोगे त्वं स्त्री सती “अधः “पश्यस्व । एष स्त्रीणां धर्मः । “उपरि “मा पश्यस्व । उपरिदर्शनं स्त्रीणां धर्मो न भवति हि । “पादकौ पादावपि “संतरां संश्लिष्टौ यथा भवतस्तथा “हर । यथा पुरुषो विश्लिष्टपादनिधानो भवति तथा त्वया स्त्रिया न कर्तव्यमित्यर्थः । अपि च “ते “कशप्लकौ । कशश्च प्लकश्च कशप्लकौ । कशतिराहननकर्मा। कशप्लकावुभे अङ्गे “मा “दृशन्। पुरुषा न पश्यन्तु । तयोरदर्शनं वाससः सुष्ठु परिधानेन भवति । अतः सुष्ठु वाससा परिधानं कुरु । स्त्रियो हि आ गुल्फादभिसंवीता भवन्तीत्यर्थः । “हि यस्मात् कारणात् “ब्रह्मा सन् "स्त्री "बभूविथ ॥ ॥ १० ॥

---

**टिप्पणी**

# ऋग्वेदः सूक्तं ८.३४

ऋग्वेदः - मण्डल ८
← सूक्तं ८.३३
सूक्तं ८.३४
नीपातिथिः काण्वः, १६-१८ सहस्रं वसुरोचिषोऽङ्गिरसः।
सूक्तं ८.३५ →

दे. इन्द्रः। गायत्री।

---

एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥१॥

आ त्वा ग्रावा वदन्निह सोमी घोषेण यच्छतु ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥२॥

अत्रा वि नेमिरेषामुरां न धूनुते वृकः ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥३॥

आ त्वा कण्वा इहावसे हवन्ते वाजसातये ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥४॥

दधामि ते सुतानां वृष्णे न पूर्वपाय्यम् ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥५॥

स्मत्पुरंधिर्न आ गहि विश्वतोधीर्न ऊतये ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥६॥

आ नो याहि महेमते सहस्रोते शतामघ ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥७॥

आ त्वा होता मनुर्हितो देवत्रा वक्षदीड्यः ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥८॥

आ त्वा मदच्युता हरी श्येनं पक्षेव वक्षतः ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥९॥

आ याह्यर्य आ परि स्वाहा सोमस्य पीतये ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥१०॥

आ नो याह्युपश्रुत्युक्थेषु रणया इह ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥११॥

सरूपैरा सु नो गहि सम्भृतैः सम्भृताश्वः ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥१२॥

आ याहि पर्वतेभ्यः समुद्रस्याधि विष्टपः ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥१३॥

आ नो गव्यान्यश्व्या सहस्रा शूर दर्दृहि ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥१४॥

आ नः सहस्रशो भरायुतानि शतानि च ।

दिवो अमुष्य शासतो दिवं यय दिवावसो ॥१५॥

आ यदिन्द्रश्च दद्वहे सहस्रं वसुरोचिषः ।

ओजिष्ठमश्व्यं पशुम् ॥१६॥

य ऋज्रा वातरंहसोऽरुषासो रघुष्यदः ।

भ्राजन्ते सूर्या इव ॥१७॥

पारावतस्य रातिषु द्रवच्चक्रेष्वाशुषु ।

तिष्ठं वनस्य मध्य आ ॥१८॥

**सायणभाष्यम्**

‘एन्द्र याहि' इत्यष्टादशर्चं चतुर्थं सूक्तं काण्वस्य नीपातिथेरार्षमानुष्टुभम् । षोडश्याद्यास्तिस्रो गायत्र्यः । वसुरोचिषोऽङ्गिरोगोत्राः सहस्रसंख्याकाः ‘आ यदिन्द्रश्च' इत्यादीनां तासां तिसृणामृषयः । इन्द्रो देवता । तथा चानुक्रमणम्-' एन्द्र याहि द्व्यूना नीपातिथिरानुष्टुभं तृचोऽन्त्यो गायत्रस्तं सहस्रं वसुरोचिषोऽङ्गिरसोऽपश्यन्' इति । विनियोगो लैङ्गिकः ।।

एन्द्रं याहि हरिंभिरुप कण्वंस्य सुष्टुतिम् ।

दिवो अमुष्य शासंतो दिवं यय दिंवावसो ॥१

आ । इन्द्र । याहि । हरिंऽभिः । उपं । कण्वंस्य । सुऽस्तुतिम् ।

दिवः । अमुष्यं । शासंतः । दिवंम् । यय । दिवावसो इतिं दिवाऽवसो ॥१

आ । इन्द्र । याहि । हरिऽभिः । उप । कण्वस्य । सुऽस्तुतिम् ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥१

हे “इन्द्र “कण्वस्य “सुष्टुतिं शोभनां स्तुतिं “हरिभिः अश्वैः “उप "आ “याहि । “दिवः द्युलोकम् । द्वितीयार्थे षष्ठी । “अमुष्य अमुष्मिन्निन्द्रे “शासतः शासति । विभक्तिव्यत्ययः । तत्र वयं सुखमास्महे । हे “दिवावसो दीप्तहविष्केन्द्र “दिवं स्वर्गं “यय यूयं गच्छत । बहुवचनं पूजार्थम् । यद्वा । हे दिवावसो दिवो द्युनामकम् अमुष्य अमुं लोकं शासनं कुर्वन्तो यूयं दिवं स्वर्गं यय गच्छत । अत्र बहुवचनं पूजार्थमित्यर्थः ॥

आ त्वा ग्रावा वदंन्निह सोमी घोषेंण यच्छतु ।

दिवो अमुष्य शासंतो दिवं यय दिंवावसो ॥२

आ । त्वा । ग्रावां । वदंन् । इह । सोमी । घोषेंण । यच्छतु ।

दिवः । अमुष्यं । शासंतः । दिवंम् । यय । दिवावसो इतिं दिवाऽवसो ॥२

आ । त्वा । ग्रावा । वदन् । इह । सोमी । घोषेण । यच्छतु ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥२

हे इन्द्र “त्वा त्वाम् “इह यज्ञे “ग्रावा सोमाभिषवपाषाणः “सोमी सोमवान् “वदन् शब्दं कुर्वन् “घोषेण ध्वनिना सह "आ “यच्छतु । सिद्धमन्यत् ॥

अत्रा॒ वि ने॒मिरे॑षा॒मुरां॒ न धू॑नुते॒ वृक॑ः ।

दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दिं॑वावसो ॥३

अत्र॑ । वि । ने॒मिः । ए॒षा॒म् । उरा॑म् । न । धू॒नु॒ते॒ । वृकः॑ ।

दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥३

अत्र । वि । नेमिः । एषाम् । उराम् । न । धूनुते । वृकः ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥३

“अत्र अस्मिन् यज्ञे “एषाम् अभिषवग्राव्णां “नेमिः सोमलतां “वि “धूनुते विशेषेण कम्पयति । "उरां मेषीं “वृको “न वृक इव । सिद्धमन्यत् ॥

आ त्वा॒ कण्वा॑ इ॒हाव॑से॒ हव॑न्ते॒ वाज॑सातये ।

दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दिं॑वावसो ॥४

आ । त्वा॒ । कण्वाः॑ । इ॒ह । अव॑से । हव॑न्ते । वाज॑ऽसातये ।

दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥४

आ । त्वा । कण्वाः । इह । अवसे । हवन्ते । वाजऽसातये ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥४

हे इन्द्र “त्वा त्वाम् “इह यज्ञे “कण्वाः “अवसे रक्षणाय “वाजसातये अन्नस्य प्राप्त्यर्थं च “आ “हवन्ते आभिमुख्येन ह्वयन्ति । सिद्धमन्यत् ।।

दधा॑मि ते सु॒ताना॒ं वृष्णे॒ न पू॑र्व॒पाय्य॑म् ।

दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दिं॑वावसो ॥५

दधा॑मि । ते॒ । सु॒ताना॑म् । वृष्णे॑ । न । पू॒र्व॒ऽपाय्य॑म् ।

दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥५

दधामि । ते । सुतानाम् । वृष्णे । न । पूर्वऽपाय्यम् ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥५

हे इन्द्र “ते तुभ्यं “सुतानाम् । द्वितीयार्थे षष्ठी । सुतान् सोमान् “दधामि प्रयच्छामि । “वृष्णे “न यथा वायवे “पूर्वपाय्यं यज्ञमुखे पेयं प्रयच्छन्ति तद्वदहं प्रयच्छामीत्यर्थः । सिद्धमन्यत् ॥ ॥११॥

स्मत्पुं॑रंधिर्न॒ आ गं॑हि वि॒श्वतों॑धीर्न ऊ॒तयें॑ ।

दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दिं॑वावसो ॥६

स्मत्ऽपुं॑रन्धिः । न॒ः । आ । ग॒हि॒ । वि॒श्वतः॑ऽधीः । न॒ः । ऊ॒तयें॑ ।

दि॒वः । अ॒मुष्यं॑ । शास॑तः । दिवं॑म् । य॒य । दि॒वा॒व॒सो॒ इतिं॑ दिवाऽवसो ॥६

स्मत्ऽपुरन्धिः । नः । आ । गहि । विश्वतःऽधीः । नः । ऊतये ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥६

हे इन्द्र “स्मत्पुरंधिः स्वर्गकुटुम्बी “नः अस्मान् “आ “गहि । तथा “विश्वतोधीः सर्वजगतो धारकस्त्वं “नः अस्माकम् “ऊतये रक्षणाय आ गहि आगच्छ ।।

आ नों॑ याहि महेमते॒ सह॑स्रोते॒ शता॑मघ ।

दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दिं॑वावसो ॥७

आ । न॒ः । या॒हि॒ । म॒हे॒ऽम॒ते॒ । सह॑स्रऽऊते । शत॑ऽमघ ।

दि॒वः । अ॒मुष्यं॑ । शास॑तः । दिवं॑म् । य॒य । दि॒वा॒व॒सो॒ इतिं॑ दिवाऽवसो ॥७

आ । नः । याहि । महेऽमते । सहस्रऽऊते । शतऽमघ ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥७

हे “महेमते महाबुद्धे "सहस्रोते सहस्ररक्षण “शतामघ बहुधनेन्द्र त्वं “नः अस्मान् “आ “याहि आगच्छ । सिद्धमन्यत् ।।

आ त्वा॒ होता॒ मनुं॑र्हितो देव॒त्रा वं॑क्ष॒दीड्यं॑ः ।

दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दिं॑वावसो ॥८

आ । त्वा॒ । होता॑ । मनुः॑ऽहितः । दे॒व॒ऽत्रा । व॒क्ष॒त् । ईड्यः॑ ।

दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥८

आ । त्वा । होता । मनुःऽहितः । देवऽत्रा । वक्षत् । ईड्यः ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥८

हे इन्द्र "त्वा त्वां "देवत्रा देवानां मध्ये "ईड्यः स्तुत्यः "होता देवानामाह्वाताग्निः "मनुर्हितः मनुष्यैर्गृहेषु निहितः "आ "वक्षत् वहतु । सिद्धमन्यत् ॥

आ त्वा॑ म॒द॒च्युता॒ हरी॑ श्ये॒नं प॒क्षेव॑ वक्षतः ।

दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दिवा॑वसो ॥९

आ । त्वा॒ । म॒द॒ऽच्युता॑ । हरी॒ इति॑ । श्ये॒नम् । प॒क्षाऽइ॑व । व॒क्ष॒तः॒ ।

दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥९

आ । त्वा । मदऽच्युता । हरी इति । श्येनम् । पक्षाऽइव । वक्षतः ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥९

हे इन्द्र "त्वा त्वां "मदच्युता मदच्युतौ शत्रूणां मदस्य च्यावयितारौ "हरी अश्वौ "श्येनं श्येनाख्यं पक्षिणं "पक्षेव आत्मीयपक्षाविव "आ "वक्षतः आवहताम् । सिद्धमन्यत् ॥

आ या॑ह्य॒र्य आ परि॒ स्वाहा॒ सोम॑स्य पी॒तये॑ ।

दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दिवा॑वसो ॥१०

आ । या॒हि॒ । अ॒र्यः । आ । परि॑ । स्वाहा॑ । सोम॑स्य । पी॒तये॑ ।

दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥१०

आ । याहि । अर्यः । आ । परि । स्वाहा । सोमस्य । पीतये ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥१०

हे "अर्य ईश्वर त्वम् "आ "परि सर्वतः "आ "याहि आगच्छ । "पीतये तव पानार्थं "सोमस्य सोमं "स्वाहा स्वाहा करोमि । सिद्धमन्यत् ॥ ॥ १२ ॥

आ नों याह्युपंश्रुत्युक्थेषुं रणया इह ।

दिवो अमुष्य शासंतो दिवं यय दिंवावसो ॥११

आ । नः । याहि । उपंऽश्रुति । उक्थेषुं । रणय । इह ।

दिवः । अमुष्यं । शासंतः । दिवंम् । यय । दिवावसो इतिं दिवाऽवसो ॥११

आ । नः । याहि । उपऽश्रुति । उक्थेषु । रणय । इह ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥११

हे इन्द्र त्वं “नः अस्माकम् “इह यज्ञे “उक्थेषु शस्त्रेषु पठ्यमानेषु “उपश्रुति उपश्रुतौ समीपम् “आ “याहि आगच्छ । अस्मान् “रणय च । सिद्धमन्यत् ॥

सरूंपैरा सु नों गहि सम्भृंतैः सम्भृंताश्वः ।

दिवो अमुष्य शासंतो दिवं यय दिंवावसो ॥१२

सऽरूंपैः । आ । सु । नः । गहि । सम्ऽभृंतैः । सम्भृंतऽअश्वः ।

दिवः । अमुष्यं । शासंतः । दिवंम् । यय । दिवावसो इतिं दिवाऽवसो ॥१२

सऽरूपैः । आ । सु । नः । गहि । सम्ऽभृतैः । सम्भृतऽअश्वः ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥१२

हे इन्द्र “संभृताश्वः पुष्टाश्वस्त्वं “सु “संभृतैः “सरूपैः समानरूपैरश्वैः “नः अस्मान् “आ “गहि आगच्छ । सिद्धमन्यत् ।।

आ यांहि पर्वंतेभ्यः समुद्रस्याधिं विष्टपंः ।

दिवो अमुष्य शासंतो दिवं यय दिंवावसो ॥१३

आ । याहि । पर्वंतेभ्यः । समुद्रस्यं । अधिं । विष्टपंः ।

दिवः । अमुष्यं । शासंतः । दिवंम् । यय । दिवावसो इतिं दिवाऽवसो ॥१३

आ । याहि । पर्वतेभ्यः । समुद्रस्य । अधि । विष्टपः ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥१३

हे इन्द्र त्वं “पर्वतेभ्यः “आ “याहि आगच्छ । “समुद्रस्य अन्तरिक्षस्य “विष्टपः विष्टपाच्च “अधि आयाहीत्यर्थः । सिद्धमन्यत् ॥

आ नो॒ गव्या॒न्यश्व्या॑ स॒हस्रा॑ शूर दर्दृहि ।

दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दिं॑वावसो ॥१४

आ । न॒: । गव्या॑नि । अश्व्या॑ । स॒हस्रा॑ । शू॒र॒ । द॒र्दृ॒हि॒ ।

दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥१४

आ । नः । गव्यानि । अश्व्या । सहस्रा । शूर । दर्दृहि ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥१४

हे "शूर इन्द्र त्वं “नः अस्मभ्यं “सहस्रा सहस्राणि सहस्रसंख्यानि “गव्यानि गोहितानि गोरूपाणि वा अश्व्यानि अश्वहितान्यश्वात्मकानि वा "आ “ददृहि आविवृणु । सिद्धमन्यत् ।।

आ न॑ः सहस्र॒शो भ॑रा॒युता॑नि श॒तानि॑ च ।

दि॒वो अ॒मुष्य॒ शास॑तो॒ दिवं॑ य॒य दिं॑वावसो ॥१५

आ । न॒: । स॒ह॒स्र॒ऽशः । भ॒र॒ । अ॒युता॑नि । श॒तानि॑ । च॒ ।

दि॒वः । अ॒मुष्य॑ । शास॑तः । दिव॑म् । य॒य । दि॒वा॒व॒सो॒ इति॑ दिवाऽवसो ॥१५

आ । नः । सहस्रऽशः । भर । अयुतानि । शतानि । च ।

दिवः । अमुष्य । शासतः । दिवम् । यय । दिवावसो इति दिवाऽवसो ॥१५

हे इन्द्र “नः अस्मभ्यं “सहस्रशः सहस्रधा "अयुतानि “शतानि “च अभीष्टानि वस्तूनि “आ “भर आहर । सिद्धमन्यत् ॥

आ यदिन्द्र॑श्च॒ दद्व॑हे स॒हस्र॒ं वसु॑रोचिषः ।

ओजि॑ष्ठ॒मश्व्य॑ं प॒शुम् ॥१६

आ । यत् । इन्द्र॑ः । च॒ । दद्व॑हे॒ इति॑ । स॒हस्र॑म् । वसु॑ऽरोचिषः ।

ओजि॑ष्ठम् । अश्व्य॑म् । प॒शुम् ॥१६

आ । यत् । इन्द्रः । च । दद्वहे इति । सहस्रम् । वसुऽरोचिषः ।

ओजिष्ठम् । अश्व्यम् । पशुम् ॥१६

“वसुरोचिषः वसुदीप्तयो वयं “सहस्रम् अस्माकं नेता “इन्द्रश्च “ओजिष्ठं बलवत्तरम् “अश्व्यम् अश्वात्मकं “पशुं च “यत् यदा “आ “दद्महे पारावतादादद्महे । उत्तरत्र संबन्धः ॥

य ऋ॒ज्रा वात॑रंहसोऽरु॒षासो॑ रघु॒ष्यद॑ः ।

भ्राज॑न्ते॒ सूर्या॑ इव ॥१७

ये । ऋ॒ज्राः । वात॑ऽरंहसः । अ॒रु॒षास॑ः । र॒घु॒ऽस्यद॑ः ।

भ्राज॑न्ते । सूर्या॑ःऽइव ॥१७

ये । ऋज्राः । वातऽरंहसः । अरुषासः । रघुऽस्यदः ।

भ्राजन्ते । सूर्याःऽइव ॥१७

तदा “ये “ऋज्राः ऋजुगामिनः “वातरंहसः वायुसदृशवेगाः "अरुषासः आरोचमानाः रघुष्यदः लघु स्यन्दमाना अश्वाः “सूर्याइव यथा सूर्यस्तथा “भ्राजन्ते ॥

पारा॑वतस्य रा॒तिषु॑ द्र॒वच्च॑क्रेष्वा॒शुषु॑ ।

तिष्ठं॒ वन॑स्य॒ मध्य॒ आ ॥१८

पारा॑वतस्य । रा॒तिषु॑ । द्र॒वत्ऽच॑क्रेषु । आ॒शुषु॑ ।

तिष्ठ॑म् । वन॑स्य । मध्ये॑ । आ ॥१८

पारावतस्य । रातिषु । द्रवत्ऽचक्रेषु । आशुषु ।

तिष्ठम् । वनस्य । मध्ये । आ ॥१८

तेषु “पारावतस्य “रातिषु देयेषु “द्रवच्चक्रेषु द्रवद्रथचक्रेषु "आशुषु अश्वेषु । ‘ताक्ष्र्यः आशुः' इत्यश्वनामसु पाठात् । प्रतिगृहीतेषु सत्सु “धनस्य “मध्ये “आ “तिष्ठम् इति वसुरोचिषां सहस्रं वदति ॥ ॥ १३ ॥

# ऋग्वेदः सूक्तं ८.३५

ऋग्वेदः - मण्डल ८
← सूक्तं ८.३४ सूक्तं ८.३५ सूक्तं ८.३६ →
श्यावाश्व आत्रेयः।

दे. अश्विनौ । उपरिष्टाज्ज्योतिः (त्रिष्टुप्), २२-२४ पङ्क्तिः, २३ महाबृहती ।

---

अग्निनेन्द्रेण वरुणेन विष्णुनादित्यै रुद्रैर्वसुभिः सचाभुवा ।

सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना ॥१॥

विश्वाभिर्धीभिर्भुवनेन वाजिना दिवा पृथिव्याद्रिभिः सचाभुवा ।

सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना ॥२॥

विश्वैर्देवैस्त्रिभिरेकादशैरिहाद्भिर्मरुद्भिर्भृगुभिः सचाभुवा ।

सजोषसा उषसा सूर्येण च सोमं पिबतमश्विना ॥३॥

जुषेथां यज्ञं बोधतं हवस्य मे विश्वेह देवौ सवनाव गच्छतम् ।

सजोषसा उषसा सूर्येण चेषं नो वोळ्हमश्विना ॥४॥

स्तोमं जुषेथां युवशेव कन्यनां विश्वेह देवौ सवनाव गच्छतम् ।

सजोषसा उषसा सूर्येण चेषं नो वोळ्हमश्विना ॥५॥

गिरो जुषेथामध्वरं जुषेथां विश्वेह देवौ सवनाव गच्छतम् ।

सजोषसा उषसा सूर्येण चेषं नो वोळ्हमश्विना ॥६॥

हारिद्रवेव पतथो वनेदुप सोमं सुतं महिषेवाव गच्छथः ।

सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥७॥

हंसाविव पतथो अध्वगाविव सोमं सुतं महिषेवाव गच्छथः ।

सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥८॥

श्येनाविव पतथो हव्यदातये सोमं सुतं महिषेवाव गच्छथः ।

सजोषसा उषसा सूर्येण च त्रिर्वर्तिर्यातमश्विना ॥९॥

पिबतं च तृप्णुतं चा च गच्छतं प्रजां च धत्तं द्रविणं च धत्तम् ।

सजोषसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥१०॥

जयतं च प्र स्तुतं च प्र चावतं प्रजां च धत्तं द्रविणं च धत्तम् ।

सजोषसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥११॥

हतं च शत्रून्यततं च मित्रिणः प्रजां च धत्तं द्रविणं च धत्तम् ।

सजोषसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥१२॥

मित्रावरुणवन्ता उत धर्मवन्ता मरुत्वन्ता जरितुर्गच्छथो हवम् ।

सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥१३॥

अङ्गिरस्वन्ता उत विष्णुवन्ता मरुत्वन्ता जरितुर्गच्छथो हवम् ।

सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥१४॥

ऋभुमन्ता वृषणा वाजवन्ता मरुत्वन्ता जरितुर्गच्छथो हवम् ।

सजोषसा उषसा सूर्येण चादित्यैर्यातमश्विना ॥१५॥

ब्रह्म जिन्वतमुत जिन्वतं धियो हतं रक्षांसि सेधतममीवाः ।

सजोषसा उषसा सूर्येण च सोमं सुन्वतो अश्विना ॥१६॥

क्षत्रं जिन्वतमुत जिन्वतं नॄन्हतं रक्षांसि सेधतममीवाः ।

सजोषसा उषसा सूर्येण च सोमं सुन्वतो अश्विना ॥१७॥

धेनूर्जिन्वतमुत जिन्वतं विशो हतं रक्षांसि सेधतममीवाः ।

सजोषसा उषसा सूर्येण च सोमं सुन्वतो अश्विना ॥१८॥

अत्रेरिव शृणुतं पूर्व्यस्तुतिं श्यावाश्वस्य सुन्वतो मदच्युता ।

सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यम् ॥१९॥

सर्गाँ इव सृजतं सुष्टुतीरुप श्यावाश्वस्य सुन्वतो मदच्युता ।

सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यम् ॥२०॥

रश्मीँरिव यच्छतमध्वराँ उप श्यावाश्वस्य सुन्वतो मदच्युता ।

सजोषसा उषसा सूर्येण चाश्विना तिरोअह्न्यम् ॥२१॥

अर्वाग्रथं नि यच्छतं पिबतं सोम्यं मधु ।

आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥२२॥

नमोवाके प्रस्थिते अध्वरे नरा विवक्षणस्य पीतये ।

आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥२३॥

स्वाहाकृतस्य तृम्पतं सुतस्य देवावन्धसः ।

आ यातमश्विना गतमवस्युर्वामहं हुवे धत्तं रत्नानि दाशुषे ॥२४॥

**सायणभाष्यम्**

'अग्निनेन्द्रेण' इति चतुर्विंशत्यृचं पञ्चमं सूक्तं श्यावाश्वस्यात्रेयस्यार्षम् । अत्रानुक्रमणिका-- ‘अग्निना चतुर्विंशतिः श्यावाश्व आश्विनमौपरिष्टाज्ज्योतिषं पङ्क्तिमहाबृहतीपङ्क्त्यन्तम्' इति । उपरिष्टाज्ज्योतिश्छन्दः। चतुर्थपादस्याष्टाक्षरत्वात् । यतोऽष्टकस्ततो ज्योतिः' (अनु. ९.८) इति तल्लक्षणम्। द्वाविंशी पङ्क्तिः । त्रयोविंशी महाबृहती ‘चत्वारोऽष्टका जागतश्च महाबृहती ' ( अनु. ९. ९ ) इत्युक्तलक्षणोपेतत्वात् । चतुर्विंशी पङ्क्तिः । अश्विनौ देवता । अप्तोर्यामे होतुरतिरिक्तोक्थे ' अग्निनेन्द्रेण ' इत्येतत्सूक्तम् । सूत्रितं च– अग्निनेन्द्रेणा भात्यग्निः ' ( आश्व. श्रौ. ९. ११ ) इति ।

अ॒ग्निनेन्द्रे॑ण॒ वरु॑णेन॒ विष्णु॑नादि॒त्यै रु॒द्रैर्वसु॑भिः सचा॒भुवा॑ ।

स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ सोमं॑ पिबतमश्विना ॥१

अ॒ग्निना॑ । इन्द्रे॑ण । वरु॑णेन । विष्णु॑ना । आ॒दि॒त्यैः । रु॒द्रैः । वसु॑ऽभिः । स॒चा॒ऽभुवा॑ ।

स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । सोम॑म् । पि॒ब॒त॒म् । अ॒श्वि॒ना॒ ॥१

अग्निना । इन्द्रेण । वरुणेन । विष्णुना । आदित्यैः । रुद्रैः । वसुऽभिः । सचाऽभुवा ।

सऽजोषसौ । उषसा । सूर्येण । च । सोमम् । पिबतम् । अश्विना ॥१

हे "अश्विना अश्विनौ "अग्निनेन्द्रेण "वरुणेन "विष्णुनादित्यैः "रुद्रैः “वसुभिः च "सचाभुवा सहभूतौ "उषसा "सूर्येण च "सजोषसा संगतौ युवां सोमं पिबतम् ॥

विश्वा॑भिर्धी॒भिर्भुव॑नेन वाजिना दि॒वा पृ॑थि॒व्याद्रि॑भिः सचा॒भुवा॑ ।

स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ सोमं॑ पिबतमश्विना ॥२

विश्वा॑भिः । धी॒भिः । भुव॑नेन । वा॒जि॒ना॒ । दि॒वा । पृ॒थि॒व्या । अद्रि॑ऽभिः । स॒चा॒ऽभुवा॑ ।

स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । सोम॑म् । पि॒ब॒त॒म् । अ॒श्वि॒ना॒ ॥२

विश्वाभिः । धीभिः । भुवनेन । वाजिना । दिवा । पृथिव्या । अद्रिऽभिः । सचाऽभुवा ।

सऽजोषसौ । उषसा । सूर्येण । च । सोमम् । पिबतम् । अश्विना ॥२

हे "वाजिना बलिनावश्विनौ "विश्वाभिः सर्वाभिः “धीभिः प्रज्ञाभिः “भुवनेन अखिलेन भूतजातेन च "दिवा द्युलोकेन च "पृथिव्या स “अद्रिभिः च "सचाभुवा सहभूतौ "उषसा सूर्येण “च संगतौ युवां "सोमं "पिबतम् ।।

विश्वै॑र्दे॒वैस्त्रि॒भिरे॑काद॒शैरि॒हाद्भिर्म॒रुद्भि॒र्भृगु॑भिः सचा॒भुवा॑ ।

स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ सोमं॑ पिबतमश्विना ॥३

विश्वैः॑ । दे॒वैः । त्रि॒ऽभिः । ए॒का॒द॒शैः । इ॒ह । अ॒त्ऽभिः । म॒रुत्ऽभिः॑ । भृगु॑ऽभिः । स॒चा॒ऽभुवा॑ ।

स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । सोम॑म् । पि॒ब॒त॒म् । अ॒श्वि॒ना॒ ॥३

विश्वैः । देवैः । त्रिऽभिः । एकादशैः । इह । अत्ऽभिः । मरुत्ऽभिः । भृगुऽभिः । सचाऽभुवा ।

सऽजोषसौ । उषसा । सूर्येण । च । सोमम् । पिबतम् । अश्विना ॥३

हे अश्विनौ “विश्वेदेवैस्त्रिभिरेकादशैः त्रयस्त्रिशैः “इह यज्ञे “अद्भिः "मरुद्भिः “भृगुभिः । च "सचाभुवा सहभूतौ "उषसा "सूर्येण च संगतौ युवां “सोमं पिबतम् ॥

जु॒षेथां॑ य॒ज्ञं बोध॑तं॒ हव॑स्य मे॒ विश्वे॒ह दे॑वौ॒ सव॒नाव॑ गच्छतं ।

स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण॒ चेषं॑ नो वोळ्हमश्विना ॥४

जु॒षेथा॑म् । य॒ज्ञम् । बोध॑तम् । हव॑स्य । मे॒ । विश्वा॑ । इ॒ह । दे॒वौ॒ । सव॑ना । अव॑ । ग॒च्छ॒त॒म् ।

स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । आ । इष॑म् । न॒ः । वो॒ळ्ह॒म् । अ॒श्वि॒ना॒ ॥४

जुषेथाम् । यज्ञम् । बोधतम् । हवस्य । मे । विश्वा । इह । देवौ । सवना । अव । गच्छतम् ।

सऽजोषसौ । उषसा । सूर्येण । च । आ । इषम् । नः । वोळ्हम् । अश्विना ॥४

हे अश्विनौ "यज्ञं “जुषेथां सेवेथाम् । “मे मम "हवस्य हवं "बोधतं जानीतम् । "इह यज्ञे "विश्वा “सवना सर्वाणि सवनानि "अव "गच्छतं प्राप्नुतम् । "इषम् अन्नं "नः “आ “वोळ्हं प्रापयतम् ॥

स्तोमं॑ जुषेथां युव॒शेव॑ क॒न्यनां॒ विश्वे॒ह दे॑वौ॒ सव॒नाव॑ गच्छतं ।

स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण॒ चेषं॑ नो वोळ्हमश्विना ॥५

स्तोम॑म् । जु॒षे॒था॒म् । यु॒व॒शाऽइ॑व । क॒न्यना॑म् । विश्वा॑ । इ॒ह । दे॒वौ॒ । सव॑ना । अव॑ । ग॒च्छ॒त॒म् ।

स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । आ । इष॑म् । न॒ः । वो॒ळ्ह॒म् । अ॒श्वि॒ना॒ ॥५

स्तोमम् । जुषेथाम् । युवशाऽइव । कन्यनाम् । विश्वा । इह । देवौ । सवना । अव । गच्छतम् ।

सऽजोषसौ । उषसा । सूर्येण । च । आ । इषम् । नः । वोळ्हम् । अश्विना ॥५

हे अश्विनौ "देवौ युवामिहास्मिन् यज्ञे "स्तोमं "जुषेथां सेवेथाम् । "युवशेव यथा युवानौ “कन्यनां कन्यानामाह्वानं सेवेते । तद्वदित्यर्थः । "इह यज्ञे "विश्वा विश्वानि सवनानि "अव “गच्छतं प्राप्नुतम् । सिद्धमन्यत् ॥

गिरो॑ जुषेथामध्व॒रं जु॑षेथा॒ं विश्वे॒ह दे॑वौ॒ सव॒नाव॑ गच्छतं ।

स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण॒ चेषं॑ नो वोळ्हमश्विना ॥६

गिर॑ः । जु॒षे॒था॒म् । अ॒ध्व॒रम् । जु॒षे॒था॒म् । विश्वा॑ । इ॒ह । दे॒वौ॒ । सव॑ना । अव॑ । ग॒च्छ॒त॒म् ।

स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । आ । इष॑म् । न॒ः । वो॒ळ्ह॒म् । अ॒श्वि॒ना॒ ॥६

गिरः । जुषेथाम् । अध्वरम् । जुषेथाम् । विश्वा । इह । देवौ । सवना । अव । गच्छतम् ।

सऽजोषसौ । उषसा । सूर्येण । च । आ । इषम् । नः । वोळ्हम् । अश्विना ॥६

हे "देवौ अश्विनौ नोऽस्माकं "गिरः स्तुतीः "जुषेथां सेवेथाम् । तथा “अध्वरं यज्ञं च “जुषेथाम् । "इह यज्ञे विश्वानि सवनानि "अव "गच्छतं प्राप्नुतम् ॥ ॥ १४ ॥

हा॒रि॒द्र॒वेव॑ पतथो॒ वनेदुप॒ सोमं॑ सु॒तं म॑हि॒षेवाव॑ गच्छथः ।

स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ त्रिर्व॒र्तिर्या॑तमश्विना ॥७

हा॒रि॒द्र॒वाऽइ॑व । प॒त॒थः॒ । वना॑ । इत् । उप॑ । सोम॑म् । सु॒तम् । म॒हि॒षाऽइ॑व । अव॑ । ग॒च्छ॒थः॒ ।

स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । त्रिः । व॒र्तिः । या॒त॒म् । अ॒श्वि॒ना॒ ॥७

हारिद्रवाऽइव । पतथः । वना । इत् । उप । सोमम् । सुतम् । महिषाऽइव । अव । गच्छथः ।

सऽजोषसौ । उषसा । सूर्येण । च । त्रिः । वर्तिः । यातम् । अश्विना ॥७

हे अश्विनौ युवां "सुतम् अभिषुतं "सोमम् "उप "पतथः "हारिद्रवाविव यथा हारिद्रवौ पक्षिणौ “वना वनान्युदकानि । 'वाः वनम् ' इत्युदकनामसु पाठात् । उपपततः । तद्वदित्यर्थः । “महिषाविव यथा पिपासितौ महिषावुदकान्युपगच्छतः “तथा “सुतं "सोमम् "अव “गच्छथः। “उषसा “सूर्येण “च संगतौ “त्रिवर्तिः त्रिर्मार्गं "यातं च ॥

हं॒सावि॑व पतथो अध्व॒गावि॑व॒ सोमं॑ सु॒तं म॑हि॒षेवाव॑ गच्छथः ।

स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ त्रिर्व॒र्तिर्या॑तमश्विना ॥८

हं॒सौऽइ॑व । प॒त॒थः॒ । अ॒ध्व॒गौऽइ॑व । सोम॑म् । सु॒तम् । म॒हि॒षाऽइ॑व । अव॑ । ग॒च्छ॒थः॒ ।

स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । त्रिः । व॒र्तिः । या॒त॒म् । अ॒श्वि॒ना॒ ॥८

हंसौऽइव । पतथः । अध्वगौऽइव । सोमम् । सुतम् । महिषाऽइव । अव । गच्छथः ।

सऽजोषसौ । उषसा । सूर्येण । च । त्रिः । वर्तिः । यातम् । अश्विना ॥८

हे अश्विनौ युवां "हंसाविव यथा हंसौ "अध्वगाविव यथा च पथिकावुदकं गच्छतः तथा वेगेन "सुतं "सोमं "पतथः । सिद्धमन्यत् ॥ ।

श्ये॒नावि॑व पतथो ह॒व्यदा॑तये॒ सोमं॑ सु॒तं म॑हि॒षेवाव॑ गच्छथः ।

स॒जोष॑सा उ॒षसा॒ सूर्ये॑ण च॒ त्रिर्व॒र्तिर्या॑तमश्विना ॥९

श्ये॒नौऽइ॑व । प॒त॒थः॒ । ह॒व्यऽदा॑तये । सोम॑म् । सु॒तम् । म॒हि॒षाऽइ॑व । अव॑ । ग॒च्छ॒थः॒ ।

स॒ऽजोष॑सौ । उ॒षसा॑ । सूर्ये॑ण । च॒ । त्रिः । व॒र्तिः । या॒त॒म् । अ॒श्वि॒ना॒ ॥९

श्येनौऽइव । पतथः । हव्यऽदातये । सोमम् । सुतम् । महिषाऽइव । अव । गच्छथः ।

सऽजोषसौ । उषसा । सूर्येण । च । त्रिः । वर्तिः । यातम् । अश्विना ॥९

हे अश्विनौ युवां "श्येनाविव यथा श्येनौ गगनं गच्छतः तथा वेगेन "सुतं "सोमं "हव्यदातये यजमानार्थं पतथः गच्छथः । सिद्धमन्यत् ॥ ।

पिबंतं च तृण्णुतं चा चं गच्छतं प्रजां चं धृत्तं द्रविंणं च धत्तं ।

सजोषंसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥१०

पिबंतम् । च । तृण्णुतम् । च । आ । च । गच्छतम् । प्रऽजाम् । च । धत्तम् । द्रविंणम् । च । धत्तम् ।

सऽजोषंसौ । उषसां । सूर्येण । च । ऊर्जम् । नः । धत्तम् । अश्विना ॥१०

पिबतम् । च । तृण्णुतम् । च । आ । च । गच्छतम् । प्रऽजाम् । च । धत्तम् । द्रविणम् । च । धत्तम् ।

सऽजोषसौ । उषसा । सूर्येण । च । ऊर्जम् । नः । धत्तम् । अश्विना ॥१०

हे अश्विनौ युवां सोमं "पिबतं च "तृण्णुतं च तृप्यतं च । पानार्थं तृप्त्यर्थं "च "आ "गच्छतम् । सोमं पीत्वा तृप्तौ सन्तौ युवामस्मभ्यं "प्रजां “च “धत्तं धारयतम् । "द्रविणं धनं "च “धत्तम् । “उषसा सूर्येण च संगतौ “नः अस्मभ्यम् “ऊर्जं बलं च “धत्तम् ॥

जयंतं च प्र स्तुंतं च प्र चांवतं प्रजां चं धत्तं द्रविंणं च धत्तं ।

सजोषंसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥११

जयंतम् । च । प्र । स्तुतम् । च । प्र । च । अवतम् । प्रऽजाम् । च । धत्तम् । द्रविंणम् । च । धत्तम् ।

सऽजोषंसौ । उषसां । सूर्येण । च । ऊर्जम् । नः । धत्तम् । अश्विना ॥११

जयतम् । च । प्र । स्तुतम् । च । प्र । च । अवतम् । प्रऽजाम् । च । धत्तम् । द्रविणम् । च । धत्तम् ।

सऽजोषसौ । उषसा । सूर्येण । च । ऊर्जम् । नः । धत्तम् । अश्विना ॥११

हे अश्विनौ युवां "जयतं शत्रून् "च जयतम् । “प्र “स्तुतं स्तोतॄन् "च “प्र “चावतम् अस्मांश्च प्ररक्षतम् । अन्यत् सिद्धम् ॥

हतं च शत्रून्यतंतं च मित्रिणंः प्रजां चं धत्तं द्रविंणं च धत्तं ।

सजोषंसा उषसा सूर्येण चोर्जं नो धत्तमश्विना ॥१२

हतम् । च । शत्रून् । यतंतम् । च । मित्रिणंः । प्रऽजाम् । च । धत्तम् । द्रविंणम् । च । धत्तम् ।

सऽजोषंसौ । उषसां । सूर्येण । च । ऊर्जम् । नः । धत्तम् । अश्विना ॥१२

प्र । न॒: । आयु॑: । व॒सो॒ इति॑ । ति॒र ॥३०

पुरा । अग्ने । दुःऽइतेभ्यः । पुरा । मृध्रेभ्यः । कवे ।

प्र । नः । आयुः । वसो इति । तिर ॥३०

हे "वसो वासक "कवे क्रान्तकर्मन् "अग्ने "दुरितेभ्यः पापेभ्यः "पुरा "मृध्रेभ्यः हिंसकेभ्यश्च "पुरा । यदा दुरितानि शत्रवश्चास्मान् हिंसितुमुद्युञ्जते ततः प्रागेवेत्यर्थः । "नः अस्माकम् "आयुः "प्र "तिर वर्धय ॥ ॥ ४१ ॥

---

**टिप्पणी**

८.४४.१ समिधाग्निं इति

द्र. शतपथब्राह्मणम् ६.८.१.६, ऐतरेयब्राह्मणम् १.१७.१

८.४४.१६ अग्निर्मूर्द्धा दिवः इति

आर्षेयम् (https://sa.wikisource.org/s/2mo0) (ग्रामगेयः)

भ्राजाभ्राजे (https://sa.wikisource.org/s/2ibw)

अग्न्याधेयः -- अग्निं स्तोमेन बोधयेत्याग्नेयस्याज्यभागस्य पुरोऽनुवाक्या भवति । अग्न आयूंषि पवस इति सौम्यस्य १० अग्निर्मूर्धेति वा सौम्यस्य कुर्यात् आप.श्रौ.सू. ५.२८.११ (https://sa.wikisource.org/s/24qu)

अग्निचयनम्(छन्द इष्टकाः) - अग्निर्मूर्धेति कार्ष्मर्यमयीमुपतिष्ठते । भुवो यज्ञस्येत्यौदुम्बरीम् । एतद्वा विपरीतम् आप.श्रौ.सू. १६.२२.६ (https://sa.wikisource.org/s/24r5)

अग्निचयनम् -- पञ्चम्याश्चितेः शेषं याज्ञसेनीं चितिं चिनोति ९ अग्निर्मूर्धेति तिस्रो गायत्रीः पुरस्तादुपदधाति । एवमुत्तराणि त्रीणित्रीणि । -- आप.श्रौ.सू. १७.४.१० (https://sa.wikisource.org/s/24r6)

अग्ने यशस्विन्निति चतस्रो राष्ट्रभृतः पुरस्तादुपधाय हिरण्येष्टकाभिः सर्वतो मुखमुपदधाति २....अग्निर्मूर्धा । भुवः । जनस्य गोपाः । त्वां चित्रश्रवस्तम । अग्ने तमद्याश्वमित्येता आम्नाता भवन्ति आप.श्रौ.सू. १७.१०.६ (https://sa.wikisource.org/s/24r6)

अश्वमेधः - अश्वमन्वारभ्य बहिष्पवमानं सर्पन्त्यग्निर्मूर्धेति आप.श्रौ.सू. २०.१३.४ (https://sa.wikisource.org/s/24r9)

आहवनीयोपस्थानम् - अग्निर्मूर्धा इति - तैसं. १.५.५.१ (https://sa.wikisource.org/s/1e2m)

अग्निर् मूर्धा दिवः ककुद् इत्य् आह मूर्धानम् एवैनꣳ समानानां करोत्य् अथो देवलोकाद् एव मनुष्यलोके प्रति तिष्ठति ।- तैसं १.५.७.१ (https://sa.wikisource.org/s/1e2m)

आग्नेयमष्टाकपालं निर्वपति इत्यस्मिन् हविषि याज्यापुरोनुवाक्या -- अग्निर्मूर्धा ....तैसं. ४.१.११.१ (https://sa.wikisource.org/s/1e2f)

वैश्वसृजाग्निचयनम् - अग्निर्मूर्धा भुव इति - तै.ब्रा. ३.१२.३.४

बृहदुपस्थानम् - अग्निर्मूर्धा इति - माश २.३.४.११ (https://sa.wikisource.org/s/eq4)

स्रुगिष्टकाद्वयोपधानम् -- स कार्ष्मर्यमयीं दक्षिणत उपदधाति । अग्नेष्ट्वा तेजसा सादयामीति यदेवास्य तदग्निस्तेज आदाय दक्षिणाकर्षत्तदस्मिन्नेतत्प्रतिदधात्यग्निर्मूर्धा दिवः ककुदित्येष उ सोऽग्निर्गायत्र्या गायत्रोऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनामेतदुपदधाति घृतेन पूर्णा भवत्याग्नेयं वै घृतं स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति - माश ७.४.१.४१ (https://sa.wikisource.org/s/e9y)

अथाग्नेयीष्टिः -- अग्निर्मूर्धा दिवः ककुद्भुवो यज्ञस्य रजसश्च नेतेत्युपांशु हविषो याज्यानुवाक्ये मूर्धन्वत्यन्या भवति सद्वत्यन्यैष वै मूर्धा य एष तपत्येतस्यैवावरुद्ध्या - माश १३.४.१.१३ (https://sa.wikisource.org/s/epf)

अग्निर्मूर्द्धा इति त्रिषु वेदेषु मंगल ग्रहस्य मन्त्रमस्ति।

# ऋग्वेदः सूक्तं ८.४५

| ऋग्वेदः - मण्डल ८ | | |
|---|---|---|
| ← सूक्तं ८.४४ | सूक्तं ८.४५<br>त्रिशोकः काण्वः। | सूक्तं ८.४६ → |

दे. इन्द्रः, १ अग्नीन्द्रौ। गायत्री।

---



*सूर्यः, अग्निः, इन्द्रः, ब्रह्मा, स्कन्दः*

आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।

येषामिन्द्रो युवा सखा ॥१॥

बृहन्निदिध्म एषां भूरि शस्तं पृथुः स्वरुः ।

येषामिन्द्रो युवा सखा ॥२॥

अयुद्ध इद्युधा वृतं शूर आजति सत्वभिः ।

येषामिन्द्रो युवा सखा ॥३॥

आ बुन्दं वृत्रहा ददे जातः पृच्छद्वि मातरम् ।

क उग्राः के ह शृण्विरे ॥४॥

प्रति त्वा शवसी वदद्गिरावप्सो न योधिषत् ।

यस्ते शत्रुत्वमाचके ॥५॥

उत त्वं मघवञ्छृणु यस्ते वष्टि ववक्षि तत् ।

यद्वीळयासि वीळु तत् ॥६॥

यदाजिं यात्याजिकृदिन्द्रः स्वश्वयुरुप ।

रथीतमो रथीनाम् ॥७॥

वि षु विश्वा अभियुजो वज्रिन्विष्वग्यथा वृह ।

भवा नः सुश्रवस्तमः ॥८॥

अस्माकं सु रथं पुर इन्द्रः कृणोतु सातये ।

न यं धूर्वन्ति धूर्तयः ॥९॥

वृज्याम ते परि द्विषोऽरं ते शक्र दावने ।

गमेमेदिन्द्र गोमतः ॥१०॥

शनैश्चिद्यन्तो अद्रिवोऽश्वावन्तः शतग्विनः ।

विवक्षणा अनेहसः ॥११॥

ऊर्ध्वा हि ते दिवेदिवे सहस्रा सूनृता शता ।

जरितृभ्यो विमंहते ॥१२॥

विद्मा हि त्वा धनंजयमिन्द्र दृळ्हा चिदारुजम् ।

आदारिणं यथा गयम् ॥१३॥

ककुहं चित्त्वा कवे मन्दन्तु धृष्णविन्दवः ।

आ त्वा पणिं यदीमहे ॥१४॥

यस्ते रेवाँ अदाशुरिः प्रममर्ष मघत्तये ।

तस्य नो वेद आ भर ॥१५॥

इम उ त्वा वि चक्षते सखाय इन्द्र सोमिनः ।

पुष्टावन्तो यथा पशुम् ॥१६॥

उत त्वाबधिरं वयं श्रुत्कर्णं सन्तमूतये ।

दूरादिह हवामहे ॥१७॥

यच्छुश्रूया इमं हवं दुर्मर्षं चक्रिया उत ।

भवेरापिर्नो अन्तमः ॥१८॥

यच्चिद्धि ते अपि व्यथिर्जगन्वांसो अमन्महि ।

गोदा इदिन्द्र बोधि नः ॥१९॥

आ त्वा रम्भं न जिव्रयो ररभ्मा शवसस्पते ।

उश्मसि त्वा सधस्थ आ ॥२०॥

स्तोत्रमिन्द्राय गायत पुरुनृम्णाय सत्वने ।

नकिर्यं वृण्वते युधि ॥२१॥

अभि त्वा वृषभा सुते सुतं सृजामि पीतये ।

तृम्पा व्यश्नुही मदम् ॥२२॥

मा त्वा मूरा अविष्यवो मोपहस्वान आ दभन् ।

माकीं ब्रह्मद्विषो वनः ॥२३॥

इह त्वा गोपरीणसा महे मन्दन्तु राधसे ।

सरो गौरो यथा पिब ॥२४॥

या वृत्रहा परावति सना नवा च चुच्युवे ।

ता संसत्सु प्र वोचत ॥२५॥

अपिबत्कद्रुवः सुतमिन्द्रः सहस्रबाह्वे ।

अत्रादेदिष्ट पौंस्यम् ॥२६॥

सत्यं तत्तुर्वशे यदौ विदानो अह्नवाय्यम् ।

व्यानट् तुर्वणे शमि ॥२७॥

तरणिं वो जनानां त्रदं वाजस्य गोमतः ।

समानमु प्र शंसिषम् ॥२८॥

ऋभुक्षणं न वर्तव उक्थेषु तुग्र्यावृधम् ।

इन्द्रं सोमे सचा सुते ॥२९॥

यः कृन्तदिद्वि योन्यं त्रिशोकाय गिरिं पृथुम् ।

गोभ्यो गातुं निरेतवे ॥३०॥

यद्दधिषे मनस्यसि मन्दानः प्रेदियक्षसि ।

मा तत्करिन्द्र मृळय ॥३१॥

दभ्रं चिद्धि त्वावतः कृतं शृण्वे अधि क्षमि ।

जिगात्विन्द्र ते मनः ॥३२॥

तवेदु ताः सुकीर्तयोऽसन्नुत प्रशस्तयः ।

यदिन्द्र मृळयासि नः ॥३३॥

मा न एकस्मिन्नागसि मा द्वयोरुत त्रिषु ।

वधीर्मा शूर भूरिषु ॥३४॥

बिभया हि त्वावत उग्रादभिप्रभङ्गिणः ।

दस्मादहमृतीषहः ॥३५॥

मा सख्युः शूनमा विदे मा पुत्रस्य प्रभूवसो ।

आवृत्वद्भूतु ते मनः ॥३६॥

को नु मर्या अमिथितः सखा सखायमब्रवीत् ।

जहा को अस्मदीषते ॥३७॥

एवारे वृषभा सुतेऽसिन्वन्भूर्यावयः ।

श्वघ्नीव निवता चरन् ॥३८॥

आ त एता वचोयुजा हरी गृभ्णे सुमद्रथा ।

यदीं ब्रह्मभ्य इद्ददः ॥३९॥

भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः ।

वसु स्पार्हं तदा भर ॥४०॥

यद्वीळाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम् ।

वसु स्पार्हं तदा भर ॥४१॥

यस्य ते विश्वमानुषो भूरेर्दत्तस्य वेदति ।

वसु स्पार्हं तदा भर ॥४२॥

**सायणभाष्यम्**

‘आ घा ये' इति द्विचत्वारिंशदृचं तृतीयं सूक्तम् । अत्रेयमनुक्रमणिका–’आ घ द्विचत्वारिंशत्त्रिशोक आद्याग्नेन्द्री'। अनुक्तगोत्रत्वात् काण्वस्त्रिशोक ऋषिः । ‘ परं गायत्रं प्राग्वत्सप्रेः' इति परिभाषया गायत्री छन्दः । अनुक्तत्वादिन्द्रो देवता । आद्यायास्त्वग्निश्चेन्द्रश्च । महाव्रते निष्केवल्ये गायत्रतृचाशीतावेतत्सूक्तम् । तथैव पञ्चमारण्यके सूत्रितम्-’आ घा ये अग्निमिन्धत आ तू न इन्द्र क्षुमन्तमिति सूक्ते ' ( ऐ. आ. ५. २, ३) इति । तृतीये पर्यायेऽच्छावाकशस्त्र आदितः सप्तदशर्चः । तथैव “ अतिरात्रे' इति खण्डे सूत्र्यते - ’आ घा ये अग्निमिन्धत इति सप्तदश' (आश्व. श्रौ. ६. ४ ) इति । आग्रयण आग्नेन्द्रस्य हविषः ‘आ घा ये' इत्येषानुवाक्या । सूत्रितं च--- ‘आ घा ये अग्निमिन्धते सुकर्माणः सुरुचो देवयन्त इति स्तोत्रम्' (आश्व. श्रौ. २. ९) इति । मैत्रावरुणातिरिक्तोक्थे ‘स्तोत्रमिन्द्राय' इत्याद्याः षड़्चो विकल्पेन स्तोत्रियानुरूपाः । सूत्रितं च -- ’तद्वो गाय सुते सचा स्तोत्रमिन्द्राय गायत' (आश्व. श्रौ. ९. ११ ) इति । द्वितीये पर्याये ब्राह्मणाच्छंसिनः ‘अभि त्वा वृषभ ' इति स्तोत्रियस्तृचः । सूत्रितं च - ’अभि त्वा वृषभा सुतेऽभि प्र गोपतिं गिरा' (आश्व. श्रौ. ६. ४ ) इति । चातुर्विंशिकेऽहनि प्रातःसवने ‘भिन्धि विश्वाः' इति ब्राह्मणाच्छंसिनः षळहस्तोत्रियः । तथा च सूत्रितं-- भिन्धि विश्वा अप द्विष इति ब्राह्मणाच्छंसिनः' (आश्व. श्रौ. ७. २) इति ॥

आ घा॒ ये अ॒ग्निमिं॑ध॒ते स्तृ॒णंतिं॑ ब॒र्हिरा॑नु॒षक् ।

येषा॒मिंद्रो॒ युवा॒ सखा॑ ॥१

आ । घ॒ । ये । अ॒ग्निम् । इ॒न्ध॒ते । स्तृ॒णन्तिं॑ । ब॒र्हिः । आ॒नु॒षक् ।

येषा॑म् । इन्द्रः॑ । युवा॑ । सखा॑ ॥१

आ । घ । ये । अग्निम् । इन्धते । स्तृणन्ति । बर्हिः । आनुषक् ।

येषाम् । इन्द्रः । युवा । सखा ॥१

"ये ऋषयः “आ “घ आभिमुख्येन खलु “अग्निमिन्धते दीपयन्ति "येषां च "युवा नित्यतरुणः “इन्द्रः "सखा भवति ते "आनुषक् आनुपूर्व्येण “बर्हिः “स्तृणन्ति ।

बृहन्निदिध्म एंषां भूरिं शस्तं पृथुः स्वरुः ।

येषामिंद्रो युवा सखां ॥२

बृहन् । इत् । इध्मः । एषाम् । भूरिं । शस्तम् । पृथु । स्वरुः ।

येषांम् । इन्द्रः । युवां । सखां ॥२

बृहन् । इत् । इध्मः । एषाम् । भूरि । शस्तम् । पृथु । स्वरुः ।

येषाम् । इन्द्रः । युवा । सखा ॥२

“एषाम् ऋषीणाम् "इध्मः "बृहन्नित् महान् खलु "भूरि बहु च “शस्तं स्तोत्रं "स्वरुः च "पृथुः महान् । सिद्धमन्यत् ॥

अयुंद्ध इद्युधा वृतं शूर आजंति सत्वंभिः ।

येषामिंद्रो युवा सखां ॥३

अयुंद्धः । इत् । युधा । वृतंम् । शूरः । आ । अजति । सत्वंऽभिः ।

येषांम् । इन्द्रः । युवां । सखां ॥३

अयुद्धः । इत् । युधा । वृतम् । शूरः । आ । अजति । सत्वऽभिः ।

येषाम् । इन्द्रः । युवा । सखा ॥३

तेष्वन्तर्भूतः कश्चित् "अयुद्ध “इत् प्रागयोद्धैव सन् "युधा "वृतं योद्धृभिर्भटैरावृतं शत्रं “सत्वभिः आत्मीयैर्बलैः "शूरः सन् “आजति नमयति ॥

आ बुंदं वृंत्रहा दंदे जातः पृंच्छद्वि मातरं ।

क उग्राः के हं शृण्विरे ॥४

आ । बुन्दम् । वृत्रऽहा । ददे । जातः । पृच्छत् । वि । मातरंम् ।

के । उग्राः । के । ह । शृण्विरे ॥४

आ । बुन्दम् । वृत्रऽहा । ददे । जातः । पृच्छत् । वि । मातरम् ।

के । उग्राः । के । ह । शृण्विरे ॥४

“जातः उत्पन्नः "वृत्रहा इन्द्रः “बुन्दम् इषुम् । तथा च यास्कः– बुन्द इषुर्भवति' (निरु. ६. ३२) इति । “आ “ददे । आदाय च इषुम् "उग्राः उद्गूर्णबलाः “के “के च “श्रृण्विरे वीर्येण विश्रुता इति स्वमातरं "वि “पृच्छत् अप्राक्षीत् ॥

प्रतिं त्वा शव॒सी वंदद्गि॒रावप्सो॒ न योंधिषत् ।

यस्तें शत्रु॒त्वमांच॒के ॥५

प्रतिं । त्वा॒ । श॒व॒सी । व॒द॒त् । गि॒रौ । अप्सः॑ । न । यो॒धि॒ष॒त् ।

यः । ते॒ । श॒त्रु॒ऽत्वम् । आ॒ऽच॒के ॥५

प्रति । त्वा । शवसी । वदत् । गिरौ । अप्सः । न । योधिषत् ।

यः । ते । शत्रुऽत्वम् । आऽचके ॥५

हे इन्द्र “त्वा त्वां “शवसी बलवती माता “प्रति "वदत् प्रत्यवोचत् । "यस्ते “शत्रुत्वमाचके कामयते सः "गिरौ पर्वते "अप्सो "न दर्शनीयो गज इव "योधिषत् योधयति ॥ ॥ ४२ ॥

उ॒त त्वं मंघवञ्छृणु॒ यस्ते॒ वष्टिं व॒वक्षि॒ तत् ।

यद्वी॒ळयांसि वी॒ळु तत् ॥६

उ॒त । त्वम् । म॒घ॒ऽव॒न् । शृ॒णु॒ । यः । ते॒ । वष्टिं । व॒वक्षिं । तत् ।

यत् । वी॒ळयांसि । वी॒ळु । तत् ॥६

उत । त्वम् । मघऽवन् । शृणु । यः । ते । वष्टि । ववक्षि । तत् ।

यत् । वीळयासि । वीळु । तत् ॥६

“उत अपि च हे "मघवन् "त्वं "शृणु अस्मदीयां स्तुतिम् । "ते त्वत्तो यत् “वष्टि कामयते स्तोता “तत् "ववक्षि तस्मै तत् वहसि । किंच त्वं "यत् “वीळयासि दृढीकरोषि तत् "वीळु तत् दृढमेव सर्वत्र भवति ।।

यदा॒जिं यात्यां॒जि॒कृदिंद्रः॑ स्वश्व॒युरुपं ।

र॒थीतंमो र॒थीनां ॥७

यत् । आ॒जिम् । यातिं । आ॒जि॒ऽकृत् । इन्द्रः॑ । स्व॒श्व॒ऽयुः । उपं ।

र॒थिऽतंमः । र॒थिनांम् ॥७

यत् । आजिम् । याति । आजिऽकृत् । इन्द्रः । स्वश्वऽयुः । उप ।

रथिऽतमः । रथिनाम् ॥७

“यत् यदा "आजिकृत् युद्धकृत् "इन्द्रः "स्वश्वयुः कल्याणमश्वमिच्छन् "आजिं युद्धम् "उप "याति तदा “रथीतमः अतिशयेन रथी भवति । "रथीनां सर्वान् रथिनश्च जयतीति शेषः । ।

वि षु विश्वा॑ अभि॒युजो॑ वज्रि॒न्विष्व॒ग्यथा॑ वृह ।

भवा॑ नः सु॒श्रव॑स्तमः ॥८

वि । सु । विश्वाः॑ । अ॒भि॒ऽयुजः॑ । वज्रि॑न् । विष्व॑क् । यथा॑ । वृ॒ह॒ ।

भव॑ । न॒ः । सु॒श्रवः॑ऽतमः ॥८

वि । सु । विश्वाः । अभिऽयुजः । वज्रिन् । विष्वक् । यथा । वृह ।

भव । नः । सुश्रवःऽतमः ॥८

हे "वज्रिन् त्वं "विश्वाः सर्वाः "अभियुजः अभियोक्त्रीः प्रजाः "यथा “विष्वक् भवन्ति तथा "सु सुष्ठु "वि "वृह । "नः अस्माकं "सुश्रवस्तमः शोभनान्नवत्तमश्च "भव ॥

अ॒स्माक॒ं सु रथं॑ पु॒र इंद्रः॑ कृणोतु सा॒तये॑ ।

न यं धूर्वं॑ति धू॒र्तयः॑ ॥९

अ॒स्माक॑म् । सु । रथ॑म् । पु॒रः । इन्द्रः॑ । कृ॒णो॒तु॒ । सा॒तये॑ ।

न । यम् । धूर्व॑न्ति । धू॒र्तयः॑ ॥९

अस्माकम् । सु । रथम् । पुरः । इन्द्रः । कृणोतु । सातये ।

न । यम् । धूर्वन्ति । धूर्तयः ॥९

“यम् इन्द्रं "धूर्तयः हिंसकाः "न “धूर्वन्ति न हिंसन्ति सः "इन्द्रः "अस्माकं "सातये अभीष्टलाभाय "सु "रथं कल्याणं रथं "पुरः "कृणोतु पुरस्करोतु ।।

वृ॒ज्याम॑ ते॒ परि॒ द्विषोऽरं॑ ते शक्र दा॒वने॑ ।

ग॒मेमेदिं॑द्र॒ गोम॑तः ॥१०

वृ॒ज्याम॑ । ते॒ । परि॑ । द्विषः॑ । अर॑म् । ते॒ । श॒क्र॒ । दा॒वने॑ ।

ग॒मेम॑ । इत् । इ॒न्द्र॒ । गोऽम॑तः ॥१०

वृज्याम । ते । परि । द्विषः । अरम् । ते । शक्र । दावने ।

गमेम । इत् । इन्द्र । गोऽमतः ॥१०

हे शक्र "इन्द्र याचमाना वयं "ते तव "द्विषः द्वेष्टॄन् "परि "वृज्याम नोपगच्छेम । किंतु "ते तव "गोमतः पशुमतः "दावने अभीष्टदानाय "अरं पर्याप्तं "गमेमेत् गच्छेमैव ॥ ॥४३॥

शनै॑श्चि॒द्यंतो॑ अद्रि॒वोऽश्वा॑वंतः शत॒ग्विनः॑ ।

वि॒वक्ष॑णा अ॒ने॒हसः॑ ॥११

शनैः॑ । चि॒त् । यन्तः॑ । अ॒द्रि॒ऽव॒ः । अश्व॑ऽवन्तः । श॒त॒ऽग्विनः॑ ।

वि॒वक्ष॑णाः । अ॒ने॒हसः॑ ॥११

शनैः । चित् । यन्तः । अद्रिऽवः । अश्वऽवन्तः । शतऽग्विनः ।

विवक्षणाः । अनेहसः ॥११

हे "अद्रिवः वज्रिन् वयं "शनैः मन्दं मन्दं "यन्तः गच्छन्तः "अश्वावन्तः अश्ववन्तः "शतग्विनः बहुधनाः "विवक्षणाः वोढव्यं वहन्तः "अनेहसः उपद्रवरहिताश्च सन्तो गमेमेदिति संबन्धः ।।

ऊ॒र्ध्वा हि ते॑ दि॒वेदि॑वे स॒हस्रा॑ सू॒नृता॑ श॒ता ।

ज॒रि॒तृभ्यो॑ वि॒मंह॑ते ॥१२

ऊ॒र्ध्वा । हि । ते॒ । दि॒वेऽदि॑वे । स॒हस्रा॑ । सू॒नृता॑ । श॒ता ।

ज॒रि॒तृऽभ्यः॑ । वि॒ऽमंह॑ते ॥१२

ऊर्ध्वा । हि । ते । दिवेऽदिवे । सहस्रा । सूनृता । शता ।

जरितृऽभ्यः । विऽमंहते ॥१२

हे इन्द्र "ते तव "जरितृभ्यः स्तोतृभ्यः "सहस्रा सहस्राणि "शता शतानि च "ऊर्ध्वा ऊर्ध्वानि मुख्यानि "सूनृता सूनृतानि साधनानि "दिवेदिवे अन्वहं "विमंहते यजमानः प्रयच्छति । मंहतिर्दानकर्मा ।।।

वि॒द्मा हि त्वा॑ धनंज॒यमिंद्र॑ दृ॒ळ्हा चि॑दारु॒जं ।

आ॒दा॒रिणं॒ यथा॒ गयं॑ ॥१३

वि॒द्म । हि । त्वा॒ । ध॒न॒म्ऽज॒यम् । इन्द्र॑ । दृ॒ळ्हा । चि॒त् । आ॒ऽरु॒जम् ।

आ॒दा॒रिण॑म् । यथा॑ । गय॑म् ॥१३

विद्म । हि । त्वा । धनम्ऽजयम् । इन्द्र । दृळ्हा । चित् । आऽरुजम् ।

आदारिणम् । यथा । गयम् ॥१३

हे "इन्द्र “त्वा त्वां “धनंजयं धनानां जेतारं "दृढा "चित् दृढानामपि शत्रूणाम् "आरुजम् आभिमुख्येन भङ्क्तारम् "आदारिणम् आदर्तारं च "यथा “गयं गृहमिवोपद्रवेभ्यो रक्षकं च “विद्म जानीम ॥

क॒कु॒हं चि॑त्त्वा कवे॒ मंद॑तु धृष्ण॒विंद॑वः ।

आ त्वा॑ प॒णिं यदीम॑हे ॥१४

क॒कु॒हम् । चि॒त् । त्वा॒ । क॒वे॒ । मन्द॑न्तु । धृ॒ष्णो॒ इति॑ । इन्द॑वः ।

आ । त्वा॒ । प॒णिम् । यत् । ईम॑हे ॥१४

ककुहम् । चित् । त्वा । कवे । मन्दन्तु । धृष्णो इति । इन्दवः ।

आ । त्वा । पणिम् । यत् । ईमहे ॥१४

हे "कवे क्रान्तकर्मन् “धृष्णो धर्षकेन्द्र “यत् यदा “पणिं पणमानं “त्वा त्वाम् “आ आभिमुख्येन "ईमहे अभीष्टं याचामहे तदा “ककुहम्' उच्छ्रितं "त्वा त्वाम् "इन्दवः “चित् सोमा अपि “मन्दन्तु मादयन्तु ।।

यस्ते॑ रे॒वाँ अदा॑शुरिः प्रम॒मर्ष॑ म॒घत्त॑ये ।

तस्य॑ नो॒ वेद॒ आ भ॑र ॥१५

यः । ते॒ । रे॒वान् । अदा॑शुरिः । प्र॒ऽम॒मर्ष॑ । म॒घत्त॑ये ।

तस्य॑ । नः॒ । वेदः॑ । आ । भ॒र॒ ॥१५

यः । ते । रेवान् । अदाशुरिः । प्रऽममर्ष । मघत्तये ।

तस्य । नः । वेदः । आ । भर ॥१५

हे इन्द्र "मघत्तये धनदानाय "ते तुभ्यं "यः पुमान् "रेवान् धनवान् सन् "अदाशुरिः अदानशीलः “प्रममर्ष अभ्यसूयति "तस्य पुंसः "वेदः धनं "नः अस्मभ्यम् "आ “भर आहर ॥ ॥ ४४ ।।

इ॒म उं त्वा॒ वि चं॑क्षते॒ सखा॑य इंद्र सो॒मिनः॑ ।

पु॒ष्टावं॑तो॒ यथा॑ प॒शुं ॥१६

इ॒मे । ऊं॒ इतिं । त्वा॒ । वि । च॒क्ष॒ते॒ । सखा॑यः । इ॒न्द्र॒ । सो॒मिनः॑ ।

पु॒ष्टऽवं॑न्तः । यथा॑ । प॒शुम् ॥१६

इमे । ऊं इति । त्वा । वि । चक्षते । सखायः । इन्द्र । सोमिनः ।

पुष्टऽवन्तः । यथा । पशुम् ॥१६

हे "इन्द्र “त्वा त्वां “सोमिनः अभिषुतसोमाः "सखायः “इम "उ इम एव खल्वस्मदीया जनाः "पुष्टावन्तः संभृतघासाः "यथा "पशुं पशुमिव "वि “चक्षते विपश्यन्ति ।

उ॒त त्वाबं॑धिरं व॒यं श्रुत्कं॑र्णं॒ संतं॑मू॒तयें ।

दू॒रादि॒ह हं॑वामहे ॥१७

उ॒त । त्वा॒ । अबं॑धिरम् । व॒यम् । श्रुत्ऽकं॑र्णम् । सन्तं॑म् । ऊ॒तयें ।

दू॒रात् । इ॒ह । ह॒वा॒म॒हे॒ ॥१७

उत । त्वा । अबधिरम् । वयम् । श्रुत्ऽकर्णम् । सन्तम् । ऊतये ।

दूरात् । इह । हवामहे ॥१७

"उत अपि च हे इन्द्र “अबधिरम् अनुपहतश्रोत्रेन्द्रियमत एव “श्रुत्कर्णं श्रवणपरकर्णं "सन्तं “त्वा त्वां "वयं त्रिशोकाः “इह यज्ञे “ऊतये रक्षणाय "दूरात् "हवामहे ह्वयामः ॥

यच्छुं॑श्रू॒या इ॒मं हवं॑ दु॒र्मर्षं॑ चक्रिया उ॒त ।

भवें॑रा॒पिर्नो॒ अंतं॑मः ॥१८

यत् । शु॒श्रु॒याः । इ॒मम् । हवं॑म् । दुः॒ऽमर्षं॑म् । च॒क्रि॒या॒ः । उ॒त ।

भवेः । आपिः । नः । अन्तमः ॥१८

यत् । शुश्रुयाः । इमम् । हवम् । दुःऽमर्षम् । चक्रियाः । उत ।

भवेः । आपिः । नः । अन्तमः ॥१८

हे इन्द्र "यत् यदि "इमम् अस्मदीयं "हवम् आह्वानं "शुश्रुयाः शृणुयाः तर्हि "दुर्मर्षं शत्रूणां दुःसहं बलं "चक्रियाः कुर्याः । "उत अपि च "नः अस्माकम् "अन्तमः अन्तिकतमः “आपिः बन्धुः "भवेः ॥

यच्चिद्धि ते अपि व्यथिर्जगन्वांसो अमन्महि ।

गोदा इदिंद्र बोधि नः ॥१९

यत् । चित् । हि । ते । अपि । व्यथिः । जगन्वांसः । अमन्महि ।

गोऽदाः । इत् । इन्द्र । बोधि । नः ॥१९

यत् । चित् । हि । ते । अपि । व्यथिः । जगन्वांसः । अमन्महि ।

गोऽदाः । इत् । इन्द्र । बोधि । नः ॥१९

“अपि “चित् अपि च हे "इन्द्र "ते तुभ्यं "यत् यदा हि "व्यथिः दारिद्र्येण व्यथिताः “जगन्वांसः गन्तारो वयम् "अमन्महि विष्टुमः तदा “नः अस्माकं "गोदा “इत् गवां दातैव भवामीति “बोधि बुध्यस्व ।।

आ त्वां रंभं न जिव्रंयो ररभ्मा शंवसस्पते ।

उश्मसिं त्वा सधस्थ आ ॥२०

आ । त्वा । रम्भम् । न । जिव्रंयः । ररभ्म । शवसः । पते ।

उश्मसिं । त्वा । सधऽस्थें । आ ॥२०

आ । त्वा । रम्भम् । न । जिव्रयः । ररभ्म । शवसः । पते ।

उश्मसि । त्वा । सधऽस्थे । आ ॥२०

हे "शवसस्पते बलस्य पते “त्वा त्वां वयं “जिव्रयः क्षीणा वृद्धाः "रम्भं "न दण्डमिव “ररभ्म रभामहे । तथा च यास्कः-’आरभामहे वा जीर्णा इव दण्डम्' (निरु. ३. २१) इति । अपि च “त्वा त्वां "सधस्थे यज्ञे "उश्मसि कामयामहे ॥ ॥ ४५ ॥

स्तोत्रमिंद्रांय गायत पुरुनृम्णाय सत्वंने ।

नकिर्यं वृंण्वते युधि ॥२१

स्तोत्रम् । इन्द्रांय । गायत । पुरुऽनृम्णायं । सत्वंने ।

नकिः । यम् । वृण्वते । युधि ॥२१

स्तोत्रम् । इन्द्राय । गायत । पुरुऽनृम्णाय । सत्वने ।

नकिः । यम् । वृण्वते । युधि ॥२१

"यम् इन्द्रं "युधि युद्धे "नकिः "वृण्वते केऽपि न वारयन्ति तस्मै "सत्वने दानशीलाय “पुरुनृम्णाय बहुधनाय "इन्द्राय "स्तोत्रं "गायत पठत ॥

अभि त्वां वृषभा सुते सुतं सृंजामि पीतयें ।

तृंपा व्यंश्नुही मदं ॥२२

अभि । त्वा । वृषभ । सुते । सुतम् । सृजामि । पीतयें ।

तृम्प । वि । अश्नुहि । मदंम् ॥२२

अभि । त्वा । वृषभ । सुते । सुतम् । सृजामि । पीतये ।

तृम्प । वि । अश्नुहि । मदम् ॥२२

हे "वृषभ इन्द्र “त्वा त्वां "सुते सोमेऽभिषुते सति "सुतम् अभिषुतं सोमं "पीतये पानाय “अभि "सृजामि । "तृम्प तृप्य "मदं मदकरं “व्यश्नुहि च ॥

मा त्वां मूरा अंविष्यवो मोपहस्वांन आ दंभन् ।

माकीं ब्रह्मद्विषों वनः ॥२३

मा । त्वा । मूराः । अविष्यवः । मा । उपऽहस्वांनः । आ । दभन् ।

माकींम् । ब्रह्मऽद्विषः । वनः ॥२३

मा । त्वा । मूराः । अविष्यवः । मा । उपऽहस्वानः । आ । दभन् ।

माकीम् । ब्रह्मऽद्विषः । वनः ॥२३

हे इन्द्र “त्वा त्वां "मूराः मूरका मूढा मनुष्याः "अविष्यवः पालनकामाः "मा “आ “दभन्' मा हिंसन्तु। "उपहस्वानः उपहसनपराश्च “मा भवन्तु । “ब्रह्मद्विषः ब्राह्मणानां द्वेष्टॄन् “माकीं “वनः मा भजेथाः ।।

इ॒ह त्वा॒ गोप॑रीणसा म॒हे म॑दंतु॒ राध॑से ।

सरों गौ॒रो यथा॑ पिब ॥२४

इ॒ह । त्वा॒ । गोऽप॑रीणसा । म॒हे । म॒न्द॒न्तु॒ । राध॑से ।

सरः॑ । गौ॒रः । यथा॑ । पि॒ब॒ ॥२४

इह । त्वा । गोऽपरीणसा । महे । मन्दन्तु । राधसे ।

सरः । गौरः । यथा । पिब ॥२४

हे इन्द्र “त्वा त्वाम् "इह यज्ञे "गोपरीणसा गव्येन पयसा संमिश्रितेन सोमेन “महे महते “राधसे धनाय “मन्दन्तु मनुष्या मादयन्तु । त्वं च तं सोमं "यथा “गौरः मृगः “सरः पिबति तथा “पिब ।

या वृ॑त्र॒हा प॑रा॒वति॒ सना॒ नवा॑ च चुच्यु॒वे ।

ता सं॒सत्सु॒ प्र वो॑चत ॥२५

या । वृ॒त्र॒ऽहा । प॒रा॒ऽवति॑ । सना॑ । नवा॑ । च॒ । चु॒च्यु॒वे ।

ता । सं॒सत्ऽसु॑ । प्र । वो॒च॒त॒ ॥२५

या । वृत्रऽहा । पराऽवति । सना । नवा । च । चुच्युवे ।

ता । संसत्ऽसु । प्र । वोचत ॥२५

“वृत्रहा इन्द्रः "परावति दूरे "या यानि “सना सनातनानि "नवा नवानि नूतनानि "च धनानि "चुच्युवे प्रेरितवान् तानि धनानि “संसत्सु यज्ञेषु सभासु वा “प्र “वोचत प्रब्रूते विद्वज्जनः ॥ ॥ ४६ ॥

अपि॑बत्क॒द्रुवः॑ सु॒तमिंद्रः॑ स॒हस्र॑बाह्वे ।

अत्रा॑देदिष्ट॒ पौंस्यं॑ ॥२६

अपि॑बत् । क॒द्रुवः॑ । सु॒तम् । इन्द्रः॑ । स॒हस्र॑ऽबाह्वे ।

अत्र॑ । अ॒दे॒दि॒ष्ट॒ । पौंस्य॑म् ॥२६

अपिबत् । कद्रुवः । सुतम् । इन्द्रः । सहस्रऽबाह्वे ।

अत्र । अदेदिष्ट । पौंस्यम् ॥२६

“इन्द्रः "कद्रुवः कद्रुनामकस्यर्षेः संबन्धिनं "सुतम् अभिषुतं सोमम् "अपिबत् पीतवान् । “सहस्रबाह्वे सहस्रबाहोः शत्रूंश्चाहन्निति शेषः । "अत्र अस्मिन्नवसरे “पौंस्यम् इन्द्रस्य वीर्यम् “अदेदिष्ट अदीप्यत ।।

स॒त्यं तत्तु॒र्वशे॒ यदौ॒ विदा॑नो अह्नवा॒य्यं ।

व्या॑नट् तु॒र्वणे॒ शमि॑ ॥२७

स॒त्यम् । तत् । तु॒र्वशे॑ । यदौ॑ । विदा॑नः । अ॒ह्न॒वा॒य्यम् ।

वि । आ॒न॒ट् । तु॒र्वणे॑ । शमि॑ ॥२७

सत्यम् । तत् । तुर्वशे । यदौ । विदानः । अह्नवाय्यम् ।

वि । आनट् । तुर्वणे । शमि ॥२७

“तुर्वशे राज्ञि “यदौ च यदुनामके च राज्ञि “तत् प्रसिद्धं यागादिलक्षणं “शमि कर्म । शची शमी' इति कर्मनामसु पाठात् । "सत्यं परमार्थं "विदानः जानंस्तयोः प्रीत्यर्थम् अह्नवाय्यम् अह्नवाय्यनामकं तयोः शत्रुं “तुर्वणे संग्रामे “व्यानट् व्याप्तवान् ।।

त॒रणिं॑ वो॒ जना॑नां त्र॒दं वाज॑स्य॒ गोम॑तः ।

स॒मा॒नमु॒ प्र शं॑सिषं ॥२८

त॒रणि॑म् । वः॒ । जना॑नाम् । त्र॒दम् । वाज॑स्य । गोऽम॑तः ।

स॒मा॒नम् । ऊं॒ इति॑ । प्र । शं॒सि॒ष॒म् ॥२८

तरणिम् । वः । जनानाम् । त्रदम् । वाजस्य । गोऽमतः ।

समानम् । ऊं इति । प्र । शंसिषम् ॥२८

हे अस्मदीयाः पुरुषाः "वः युष्माकं "जनानां पुत्रपौत्रादीनां “तरणिं तारकं "त्रदं शत्रूणां तर्दयितारं "गोमतः पशुमतोऽन्नस्य दातारं चेन्द्रं "समानमु साधारणमेव “प्र “शंसिषं स्तौमि ।।

ऋ॒भु॒क्षणं॒ न वर्त॑व उ॒क्थेषु॑ तुग्र्या॒वृधं॑ ।

इंद्रं॒ सोमे॒ सचा॑ सु॒ते ॥२९

ऋ॒भु॒क्षण॑म् । न । वर्त॑वे । उ॒क्थेषु॑ । तु॒ग्र्य॒ऽवृध॑म् ।

इन्द्र॑म् । सोमे॑ । सचा॑ । सु॒ते ॥२९

ऋभुक्षणम् । न । वर्तवे । उक्थेषु । तुग्र्यऽवृधम् ।

इन्द्रम् । सोमे । सचा । सुते ॥२९

“ऋभुक्षणं महान्तं "तुग्र्यावृधम् उदकस्य वर्धयितारम् । “तुग्र्या बुर्बुरम्' इत्युदकनामसु पाठात् । "इन्द्रं "सोमे “सचा स्तोत्रेण सह "सुते अभिषुते सति “उक्थेषु शस्त्रेषु वर्तवे धनं वरितुं प्रशंसामीति शेषः । "न इति संप्रत्यर्थे ।

यः कृ॒न्तदिद्वि यो॒न्यं त्रि॒शोका॑य गि॒रिं पृ॒थुं ।

गोभ्यो॑ गा॒तुं निरे॑तवे ॥३०

यः । कृ॒न्तत् । इत् । वि । यो॒न्यम् । त्रि॒ऽशोका॑य । गि॒रिम् । पृ॒थुम् ।

गोभ्यः॑ । गा॒तुम् । निःऽए॑तवे ॥३०

यः । कृन्तत् । इत् । वि । योन्यम् । त्रिऽशोकाय । गिरिम् । पृथुम् ।

गोभ्यः । गातुम् । निःऽएतवे ॥३०

"यः "इत् य एवेन्द्रः "योन्यम् उदकनिर्गमनद्वारं "पृथुं विस्तीर्णं “गिरिं मेघम्। 'गिरिः व्रजः । इति मेघनामसु पाठात् । "त्रिशोकाय त्रिशोकनामर्ष्यर्थं “वि “कृन्तत् व्यच्छिनत् सः "गोभ्यः गमनवद्भ्य उदकेभ्यः "निरेतवे निर्गमनाय “गातुं भूमिम् । ‘भूमिः गातुः' इति तन्नामसु पाठात् । मार्गमित्यर्थः । करोतीति शेषः ॥ ॥ ४७ ॥

यद्द॑धि॒षे म॑न॒स्यसि॑ मंदा॒नः प्रेदिय॑क्षसि ।

मा तत्क॑रिंद्र मृ॒ळय॑ ॥३१

यत् । द॒धि॒षे । म॒न॒स्यसि॑ । म॒न्दा॒नः । प्र । इत् । इय॑क्षसि ।

मा । तत् । कः॒ । इ॒न्द्र॒ । मृ॒ळय॑ ॥३१

यत् । दधिषे । मनस्यसि । मन्दानः । प्र । इत् । इयक्षसि ।

मा । तत् । कः । इन्द्र । मृळय ॥३१

हे “इन्द्र "मन्दानः मोदमानस्त्वं "यत् शुभं वस्तु "दधिषे धारयसि यच्च "मनस्यसि पूजयसि यदपि च “प्रेदियक्षसि प्रयच्छस्येव “तत् सर्वं “मा “कः किं नाकार्षीः । अस्माकं कृतवानेव । किंचास्मान् "मृळय सुखय ॥

द॒भ्रं चि॒द्धि त्वाव॑तः कृ॒तं शृ॒ण्वे अधि॒ क्षमि॑ ।

जिगा॑त्विंद्र ते॒ मनः॑ ॥३२

द॒भ्रम् । चि॒त् । हि । त्वाऽव॑तः । कृ॒तम् । शृ॒ण्वे । अधि॑ । क्षमि॑ ।

जिगा॑तु । इ॒न्द्र॒ । ते॒ । मनः॑ ॥३२

दभ्रम् । चित् । हि । त्वाऽवतः । कृतम् । शृण्वे । अधि । क्षमि ।

जिगातु । इन्द्र । ते । मनः ॥३२

हे "इन्द्र "त्वावतः त्वत्सदृशस्य "दभ्रं "चित् अल्पमपि "कृतं कर्म "अधि "क्षमि क्षमायाम् । अधीति सप्तम्यर्थानुवादः । "शृण्वे विश्रुतं भवति हि । तथा सति "ते तव "मनः "जिगातु मयि गच्छतु ॥

तवेदु॒ ताः सु॑की॒र्तयोऽस॑न्नु॒त प्रश॑स्तयः ।

यदिं॑द्र मृ॒ळया॑सि नः ॥३३

तव॑ । इत् । उँ॒ इति॑ । ताः । सु॒ऽकी॒र्तयः॑ । अस॑न् । उ॒त । प्रऽश॑स्तयः ।

यत् । इ॒न्द्र॒ । मृ॒ळया॑सि । नः॒ ॥३३

तव । इत् । ऊं इति । ताः । सुऽकीर्तयः । असन् । उत । प्रऽशस्तयः ।

यत् । इन्द्र । मृळयासि । नः ॥३३

हे इन्द्र त्वं "नः अस्मान् "यत् याभिः "मृळयासि सुखयसि "ताः "सुकीर्तयः शोभनाख्यातयः "तवेत् तवैव "असन् भवेयुः । "उत अपि च ताः "प्रशस्तयः स्तुतयश्च तवैव भवेयुः ॥

मा न॒ एक॑स्मि॒न्नाग॑सि॒ मा द्वयो॑रु॒त त्रि॒षु ।

वधी॒र्मा शू॑र॒ भूरि॑षु ॥३४

मा । न॒ः । एक॑स्मिन् । आग॑सि । मा । द्वयोः॑ । उ॒त । त्रि॒षु ।

वधीः॑ । मा । शू॒र॒ । भूरि॑षु ॥३४

मा । नः । एकस्मिन् । आगसि । मा । द्वयोः । उत । त्रिषु ।

वधीः । मा । शूर । भूरिषु ॥३४

हे “शूर इन्द्र “नः अस्मान् “एकस्मिन्नागसि अपराधे “मा “वधीः मा हिंसीः । “द्वयोः आगसोरपि “मा वधीः । “उत अपि च “त्रिषु आगःस्वपि “मा हिंसीः । “भूरिषु असंख्यातेष्वप्यागःसु मा च वधीः ॥

बि॒भया॒ हि त्वाव॑त उ॒ग्राद॑भिप्रभ॒ंगिणः॑ ।

द॒स्माद॒हमृ॑ती॒षहः॑ ॥३५

बि॒भय॑ । हि । त्वाऽव॑तः । उ॒ग्रात् । अ॒भि॒ऽप्र॒भ॒ङ्गिनः॑ ।

द॒स्मात् । अ॒हम् । ऋ॒ति॒ऽसहः॑ ॥३५

बिभय । हि । त्वाऽवतः । उग्रात् । अभिऽप्रभङ्गिनः ।

दस्मात् । अहम् । ऋतिऽसहः ॥३५

हे इन्द्र “त्वावतः त्वत्सदृशात् "उग्रात् उद्गूर्णात् अभिप्रभङ्गिणः शत्रूणामभिप्रहर्तुः “दस्मात् पापानामुपक्षपयितुः “ऋतीषहः शत्रुकृतां हिंसां सहतः “अहं “बिभय “हि ॥ ॥ ४८ ॥

मा सख्यु॒ः शून॒मा विं॑दे॒ मा पु॒त्रस्य॑ प्रभूवसो ।

आ॒वृत्व॑द्भूतु ते॒ मनः॑ ॥३६

मा । सख्युः॑ । शून॑म् । आ । वि॒दे॒ । मा । पु॒त्रस्य॑ । प्र॒भु॒व॒सो॒ इति॑ प्रभुऽवसो ।

आ॒ऽवृत्व॑त् । भू॒तु॒ । ते॒ । मनः॑ ॥३६

मा । सख्युः । शूनम् । आ । विदे । मा । पुत्रस्य । प्रभुवसो इति प्रभुऽवसो ।

आऽवृत्वत् । भूतु । ते । मनः ॥३६

हे “प्रभूवसो प्रभूतधनेन्द्र “ते तव “सख्युः “शूनं वृद्धं “मा “आ “विदे मावेदयामि । “पुत्रस्य अपि शूनं “मा विदे। तव “मनः अस्मासु “आवृत्वत् आवर्तनवत् "भूतु भवतु । पुनःपुनः सुखं करोत्वित्यर्थः ।।

को नु मं॑र्या॒ अमि॑थितः॒ सखा॒ सखा॑यमब्रवीत् ।

ज॒हा को अ॒स्मदी॑षते ॥३७

कः । नु । म॒र्याः॒ । अमि॑थितः । सखा॑ । सखा॑यम् । अ॒ब्र॒वी॒त् ।

ज॒हा । कः । अ॒स्मत् । ई॒ष॒ते॒ ॥३७

कः । नु । मर्याः । अमिथितः । सखा । सखायम् । अब्रवीत् ।

जहा । कः । अस्मत् । ईषते ॥३७

“को “नु कः खलु हे “मर्याः मनुष्याः "अमिथितः । मेथतिराक्रोशकर्मा । अनाक्रुष्ट इन्द्रादन्यः “सखा “सखायं प्रति “जहा अहं कं जघान “कः को वा “अस्मत् अस्मत्तो भीतः “ईषते पलायत इति “अब्रवीत् वदति । इन्द्र एवैतादृशस्य वचनस्य वक्तेत्यभिप्रायः । तथा च यास्कः- मेथतिराक्रोशकर्मा। अपापकं जघान कमहं जातु कोऽस्मद्भीतः पलायते ' (निरु. ४. २) इति । ‘मा न एकस्मिन्नागसि' इत्यादिकया श्रुत्या नूनमृषिमिन्द्र आजहारेत्यर्षिर्विस्मयत इति ।

ए॒वारे॑ वृषभा सु॒तेऽसि॑न्व॒न्भूर्या॑वयः ।

श्व॒घ्नीव॑ नि॒वता॒ चर॑न् ॥३८

ए॒वारे॑ । वृ॒ष॒भ॒ । सु॒ते । असि॑न्वन् । भूरि॑ । आ॒व॒यः॒ ।

श्व॒घ्नीऽइ॑व । नि॒ऽवता॑ । चर॑न् ॥३८

एवारे । वृषभ । सुते । असिन्वन् । भूरि । आवयः ।

श्वघ्नीऽइव । निऽवता । चरन् ॥३८

हे “वृषभ कामानां वर्षकेन्द्र “एवारे । एवारो नाम कश्चित् । तस्मिन् “सुते अभिषुते सोमे सति “भूरि बहूनि धनानि "असिन्वन् न बध्नन् “श्वघ्नी । श्वघ्नी कितवः । तथा च यास्कः - ’श्वघ्नी कितवो भवति स्वं हन्ति---' (निरु. ५, २२ )॥

आ त॑ ए॒ता व॑चो॒युजा॒ हरी॑ गृभ्णे सु॒मद्र॑था ।

यदीं॑ ब्र॒ह्मभ्य॒ इद्दद॑ः ॥३९

आ । ते॒ । ए॒ता । व॒चः॒ऽयुजा॑ । हरी॒ इति॑ । गृ॒भ्णे॒ । सु॒मत्ऽर॑था ।

यत् । ई॒म् । ब्र॒ह्मऽभ्य॑ः । इत् । दद॑ः ॥३९

आ । ते । एता । वचःऽयुजा । हरी इति । गृभ्णे । सुमत्ऽरथा ।

यत् । ईम् । ब्रह्मऽभ्यः । इत् । ददः ॥३९

“ते तव “सुमद्रथा कल्याणरथौ “वचोयुजा मन्त्रेण युज्यमानौ “एता एतौ “हरी अश्वौ “आ “गृभ्णे । अस्मदभिमुखं यातुं हस्ताभ्यामाकर्षामीत्यर्थः । “यत् यस्मात् त्वं “ब्रह्मभ्य “इत् ब्राह्मणेभ्य एव “ईम् इदं धनं “ददः ददासि ॥

भि॒ंधि विश्वा॒ अप॒ द्विष॒ः परि॒ बाधो॑ ज॒ही मृध॑ः ।

वसु॑ स्पा॒र्हं तदा भ॑र ॥४०

भि॒न्धि । विश्वा॑ः । अप॑ । द्विष॑ः । परि॑ । बाध॑ः । ज॒हि । मृध॑ः ।

वसु॑ । स्पा॒र्हम् । तत् । आ । भ॒र॒ ॥४०

भिन्धि । विश्वाः । अप । द्विषः । परि । बाधः । जहि । मृधः ।

वसु । स्पार्हम् । तत् । आ । भर ॥४०

हे इन्द्र त्वं “विश्वाः सर्वाः “द्विषः द्वेष्ट्रीः शत्रुसेनाः "अप “भिन्धि विदारय । “बाधः हिंसित्रीः “मृधः संग्रामान् । 'स्पृधः मृधः' इति संग्रामनामसु पाठात् । “परि “जहि हिन्धि। अतस्तासां "स्पार्हं स्पृहणीयं “तत् प्रसिद्धं “वसु “आ “भर अस्मभ्यमाहर ।।

यद्वी॒ळावि॑ंद्र॒ यत्स्थि॒रे यत्पर्शा॑ने॒ परा॑भृतं ।

वसु॑ स्पा॒र्हं तदा भ॑र ॥४१

यत् । वी॒ळौ । इ॒न्द्र॒ । यत् । स्थि॒रे । यत् । पर्शा॑ने । परा॑ऽभृतम् ।

वसु॑ । स्पा॒र्हम् । तत् । आ । भ॒र॒ ॥४१

यत् । वीळौ । इन्द्र । यत् । स्थिरे । यत् । पर्शाने । पराऽभृतम् ।

वसु । स्पार्हम् । तत् । आ । भर ॥४१

हे “इन्द्र त्वया च "वीळौ दृढे परैः कम्पयितुमशक्ये “यत् धनं “पराभृतं विन्यस्तं “यत् च “स्थिरे स्वयमचले पराभृतं “यत् चापि "पर्शाने विमर्शनक्षमे पराभृतं “तत् “स्पार्हं "वसु “आ “भर ॥

यस्य॑ ते वि॒श्वमा॑नुषो॒ भूरे॑र्द॒त्तस्य॒ वेद॑ति ।

वसु॑ स्पा॒र्हं तदा भ॑र ॥४२

यस्य॑ । ते॒ । वि॒श्वऽमा॑नुषः । भूरे॑ः । द॒त्तस्य॑ । वेद॑ति ।

वसु॑ । स्पा॒र्हम् । तत् । आ । भ॒र॒ ॥४२

यस्य । ते । विश्वऽमानुषः । भूरेः । दत्तस्य । वेदति ।

वसु । स्पार्हम् । तत् । आ । भर ॥४२

हे इन्द्र “ते त्वया । विभक्तिव्यत्ययः । "दत्तस्य दत्तं "भूरेः बहु यस्य यद्धनम् । कर्मणि षष्ठी । “विश्वमानुषः सर्वो मनुष्यः “वेदति जानाति “तत् "स्पार्हं स्पृहणीयं "वसु “आ “भर ॥ ॥ ४९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।।

पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टके तृतीयोऽध्यायः ॥

---

**टिप्पणी**

८.४५.१ आ घा ये इति

आ घा ये अग्निमिन्धत इति सदः। अनेन मन्त्रेण सुत्यादिने महारात्रे बुद्ध्वा सदोभिमृशेत् इति सूत्रकारेण(आप.श्रौ.सू. १२.१.२ (https://sa.wikisource.org/s/24r1) ) - तै.ब्रा. २.४.५.७ (https://sa.wikisource.org/s/nl4) सायणभाष्य

द्र. ऐध्मवाहानि (https://sa.wikisource.org/s/2abt)

८.४५.३७

सामान्यवाचिनः शब्दा विशेषे स्थापिताः क्वचित् । पलायने यथा वृत्तिः को नु मर्या इतीषते ।।बृहद्देवता २.१०९।।

**मण्डल ८**



---

८.४५.३७

सामान्यवाचिनः शब्दा विशेषे स्थापिताः क्वचित् । पलायने यथा वृत्तिः को नु मर्या इतीषते ।।बृहद्देवता २.१०९।।

# ऋग्वेदः सूक्तं ८.४६

ऋग्वेदः - मण्डल ८
← सूक्तं ८.४५ सूक्तं ८.४६ सूक्तं ८.४७ →
वशोऽश्व्यः

दे. इन्द्रः, २१-२४ कानीतः पृथुश्रवाः, २५-२८, ३२ वायुः । गायत्री, १ - - - - - - - - - - ।

---

त्वावतः पुरूवसो वयमिन्द्र प्रणेतः ।

स्मसि स्थातर्हरीणाम् ॥१॥

त्वां हि सत्यमद्रिवो विद्म दातारमिषाम् ।

विद्म दातारं रयीणाम् ॥२॥

आ यस्य ते महिमानं शतमूते शतक्रतो ।

गीर्भिर्गृणन्ति कारवः ॥३॥

सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा ।

मित्रः पान्त्यद्रुहः ॥४॥

दधानो गोमदश्ववत्सुवीर्यमादित्यजूत एधते ।

सदा राया पुरुस्पृहा ॥५॥

तमिन्द्रं दानमीमहे शवसानमभीर्वम् ।

ईशानं राय ईमहे ॥६॥

तस्मिन्हि सन्त्यूतयो विश्वा अभीरवः सचा ।

तमा वहन्तु सप्तयः पुरूवसुं मदाय हरयः सुतम् ॥७॥

यस्ते मदो वरेण्यो य इन्द्र वृत्रहन्तमः ।

य आददिः स्वर्नृभिर्यः पृतनासु दुष्टरः ॥८॥

यो दुष्टरो विश्ववार श्रवाय्यो वाजेष्वस्ति तरुता ।

स नः शविष्ठ सवना वसो गहि गमेम गोमति व्रजे ॥९॥

गव्यो षु णो यथा पुराश्वयोत रथया ।

वरिवस्य महामह ॥१०॥

नहि ते शूर राधसोऽन्तं विन्दामि सत्रा ।

दशस्या नो मघवन्नू चिदद्रिवो धियो वाजेभिराविथ ॥११॥

य ऋष्वः श्रावयत्सखा विश्वेत्स वेद जनिमा पुरुष्टुतः ।

तं विश्वे मानुषा युगेन्द्रं हवन्ते तविषं यतस्रुचः ॥१२॥

स नो वाजेष्वविता पुरूवसुः पुरस्थाता मघवा वृत्रहा भुवत् ॥१३॥

अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम् ।

इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा ॥१४॥

ददी रेक्णस्तन्वे ददिर्वसु ददिर्वाजेषु पुरुहूत वाजिनम् ।

नूनमथ ॥१५॥

विश्वेषामिरज्यन्तं वसूनां सासह्वांसं चिदस्य वर्पसः ।

कृपयतो नूनमत्यथ ॥१६॥

महः सु वो अरमिषे स्तवामहे मीळ्हुषे अरंगमाय जग्मये ।

यज्ञेभिर्गीर्भिर्विश्वमनुषां मरुतामियक्षसि गाये त्वा नमसा गिरा ॥१७॥

ये पातयन्ते अज्मभिर्गिरीणां स्नुभिरेषाम् ।

यज्ञं महिष्वणीनां सुम्नं तुविष्वणीनां प्राध्वरे ॥१८॥

प्रभङ्गं दुर्मतीनामिन्द्र शविष्ठा भर ।

रयिमस्मभ्यं युज्यं चोदयन्मते ज्येष्ठं चोदयन्मते ॥१९॥

सनितः सुसनितरुग्र चित्र चेतिष्ठ सूनृत ।

प्रासहा सम्राट् सहुरिं सहन्तं भुज्युं वाजेषु पूर्व्यम् ॥२०॥

आ स एतु य ईवदाँ अदेवः पूर्तमाददे ।

यथा चिद्वशो अश्व्यः पृथुश्रवसि कानीतेऽस्या व्युष्याददे ॥२१॥

षष्टिं सहस्राश्व्यस्यायुतासनमुष्ट्रानां विंशतिं शता ।

दश श्यावीनां शता दश त्र्यरुषीणां दश गवां सहस्रा ॥२२॥

दश श्यावा ऋधद्रयो वीतवारास आशवः ।

मथ्रा नेमिं नि वावृतुः ॥२३॥

दानासः पृथुश्रवसः कानीतस्य सुराधसः ।

रथं हिरण्ययं ददन्मंहिष्ठः सूरिरभूद्वर्षिष्ठमकृत श्रवः ॥२४॥

आ नो वायो महे तने याहि मखाय पाजसे ।

वयं हि ते चकृमा भूरि दावने सद्यश्चिन्महि दावने ॥२५॥

यो अश्वेभिर्वहते वस्त उस्रास्त्रिः सप्त सप्ततीनाम् ।

एभिः सोमेभिः सोमसुद्भिः सोमपा दानाय शुक्रपूतपाः ॥२६॥

यो म इमं चिदु त्मनामन्दच्चित्रं दावने ।

अरट्वे अक्षे नहुषे सुकृत्वनि सुकृत्तराय सुक्रतुः ॥२७॥

उचथ्ये वपुषि यः स्वराळुत वायो घृतस्नाः ।

अश्वेषितं रजेषितं शुनेषितं प्राज्म तदिदं नु तत् ॥२८॥

अध प्रियमिषिराय षष्टिं सहस्रासनम् ।

अश्वानामिन्न वृष्णाम् ॥२९॥

गावो न यूथमुप यन्ति वध्रय उप मा यन्ति वध्रयः ॥३०॥

अध यच्चारथे गणे शतमुष्ट्राँ अचिक्रदत् ।

अध श्वित्नेषु विंशतिं शता ॥३१॥

शतं दासे बल्बूथे विप्रस्तरुक्ष आ ददे ।

ते ते वायविमे जना मदन्तीन्द्रगोपा मदन्ति देवगोपाः ॥३२॥

अध स्या योषणा मही प्रतीची वशमश्व्यम् ।

अधिरुक्मा वि नीयते ॥३३॥

**सायणभाष्यम्**

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

षष्ठे तृतीयमध्यायं व्याख्याय श्रीमतीसुतः ।

श्रीसायणार्यः संगृह्य चतुर्थं व्याकरोत्यथ ।

तत्र ‘त्वावतः' इति त्रयस्त्रिंशदृचं चतुर्थं सूक्तमश्वपुत्रस्य वशाख्यस्यार्षम् । प्राग्वत्सप्रपरिभाषयाद्याश्चतस्रो गायत्र्यः । तत्राद्या पादनिचृत् ‘त्रयः सप्तकाः पादनिचृत्' (अनु. ४. ४ ) इत्युक्तलक्षणोपेतत्वात् । ‘दधानो गोमदश्ववत्' इत्येषा पञ्चमी ककुप् अष्टकद्वादशाष्टकैः पादैरुपेतत्वात् ।' मध्यमश्चेत् ककुप्' (अनु. ५. ३) इति हि तल्लक्षणम् । 'तमिन्द्रम्' इति षष्ठी गायत्री । तस्मिन् हि सन्ति' इति सप्तमी बृहती। ' यस्ते मदः' इत्यष्टम्यनुष्टुप् । यो दुष्टरः' इति नवमी सतोबृहती। ‘ अयुजौ जागतौ सतोबृहती ' ( अनु. ८. ४) इति ह्युक्तम् । ‘गव्यो षु णः' इति दशमी गायत्री । नहि ते शूर' इत्येकादशी बृहती। ‘य ऋष्वः' इति द्वादशी विपरीता सतोबृहती प्रथमतृतीययोरष्टाक्षरा द्वितीयचतुर्थयोर्द्वादशाक्षरा च । ‘युजौ चेद्विपरीता' (अनु. ८.५) इत्युक्तत्वात् । स नो वाजेषु' इति त्रयोदशी चतुर्विंशत्यक्षरा द्विपदा । “ अभि वो वीरम्' इति चतुर्दशी पिपीलिकमध्या बृहती । त्रयोदशिनोर्मध्येऽष्टकः पिपलिकमध्या' (अनु. ७. ७ ) इत्युक्तत्वात् । ‘ददी रेक्णः' इति पञ्चदशी ककुम्न्यङ्कुशिरा • त्रैष्टुभजागतचतुष्काः ककुम्न्यङ्कुशिरा' (अनु. ५. ४ ) इत्युक्तत्वात् । विश्वेषाम्' इति षोडशी विराट् । “महः सु वः' इति सप्तदशी जगती । ये पातयन्ते' इत्यष्टादश्युपरिष्टाद्बृहती चतुर्थपादस्य द्वादशाक्षरत्वात् । ‘प्रभङ्गम्' इत्येकोनविंशी बृहती। ‘सनितः सुसनितः' इति विंशी विषमपदा बृहती नवकाष्ट्येकादश्यष्टिनो विषमपदा' (अनु. ७. ८) इत्युक्तत्वात् । ‘आ स एतु' ‘षष्टिं सहस्रा' इत्येकविंशीद्वाविंश्यौ पङ्क्ती । “दश श्यावाः' इति त्रयोविंशी गायत्री । “दानासः' इति चतुर्विंशी पङ्क्तिः । पञ्चविंशीसप्तविंश्यौ बृहत्यौ। षड्विंश्यष्टाविंश्यौ सतोबृहत्यौ। एकोनत्रिंशी गायत्री । “गावो न यूथम् ' इति त्रिंशी विंशत्यक्षरा द्विपदा विराट्। एकत्रिंश्युष्णिक् । द्वात्रिंशी पङ्क्तिः । त्रयस्त्रिंशी गायत्री। ' आ स एतु' इत्यादिभिश्चतसृभिः कनीतपुत्रस्य पृथुश्रवसो दानं स्तूयते । अतस्तदेवताकाः। ‘आ नो वायो' इत्यादीनां चतसृणां द्वात्रिंश्याश्च वायुर्देवता । शिष्टा अनादेशपरिभाषयेन्द्रदेवताकाः । एतत्सर्वमनुक्रमण्यामुक्तं-- ‘त्वावतस्त्रयस्त्रिंशद्वशोऽश्व्य आ स आदि कानीतस्य पृथुश्रवसो दानस्तुतिराद्या पादनिचृत् पञ्चम्यादि ककुब्गायत्री बृहत्यनुष्टुप् सतो बृहती गायत्री विपरीतोत्तरः प्रगाथो द्विपदा चतुर्विंशिका बृहती पिपीलिकमध्या ककुम्न्यङ्कुशिरा विराड्जगत्युपरिष्टाद्बृहतीबृहत्यौ विषमपदोत्तरे पङ्क्ती गायत्री पङ्क्तिः प्रगाथौ च वायव्यौ गायत्री द्विपदोष्णिक् पङ्क्तिर्वायव्या गायत्री' इति । महाव्रते निष्केवल्ये ‘सनितः सुसनितः' इत्यन्तमेव सूक्तम् । तथा च पञ्चमारण्यके शौनकेन सूत्रितं - ’त्वावतः पुरूवसविति वशः सनितः सुसनितरित्येतदन्तः' (ऐ. आ. ५. २. ५) इति ॥

त्वाव॑तः पुरूवसो व॒यमिं॑द्र प्रणेतः ।

स्मसिं स्थातर्हरीणां ॥१

त्वाऽव॑तः । पु॒रु॒व॒सो॒ इतिं पुरुऽवसो । व॒यम् । इ॒न्द्र॒ । प्र॒ने॒त॒रितिं प्रऽनेतः ।

स्मसिं । स्था॒त॒: । ह॒री॒णा॒म् ॥१

त्वाऽवतः । पुरुवसो इति पुरुऽवसो । वयम् । इन्द्र । प्रनेतरिति प्रऽनेतः ।

स्मसि । स्थातः । हरीणाम् ॥१

हे “पुरूवसो बहुधनेन्द्र “प्रणेतः कर्मणां पारं प्रकर्षेण प्रापयितः “इन्द्र “त्वावतः त्वत्सदृशस्य । इन्द्रसमानस्यान्यस्याभावात्तवेत्यर्थः । तव स्वभूताः “वयं “स्मसि स्मः । हे “हरीणाम् एतत्संज्ञकानामश्वानां “स्थातः अधिष्ठातः ॥

त्वां हि स॒त्यमं॑द्रिवो वि॒द्म दा॒तार॑मि॒षां ।

वि॒द्म दा॒तारं॑ रयी॒णां ॥२

त्वाम् । हि । स॒त्यम् । अ॒द्रि॒ऽव॒: । वि॒द्म । दा॒तार॑म् । इ॒षाम् ।

वि॒द्म । दा॒तार॑म् । र॒यी॒णाम् ॥२

त्वाम् । हि । सत्यम् । अद्रिऽवः । विद्म । दातारम् । इषाम् ।

विद्म । दातारम् । रयीणाम् ॥२

हे अद्रिवः । अत्ति शत्रुमित्यद्रिर्वज्रः । तद्वन्निन्द्र “त्वां “सत्यं निश्चयम् “इषाम् अन्नानां “दातारं “विद्म जानीमः । तथा “रयीणां धनानां “दातारं विद्म ।

आ यस्य॑ ते महि॒मान॒ं शत॑मूते॒ शत॑क्रतो ।

गी॒र्भिर्गृ॒णंतिं का॒रव॑: ॥३

आ । यस्य॑ । ते॒ । म॒हि॒मान॑म् । शत॑म्ऽऊते । शत॑क्रतो॒ इति॒ शत॑ऽक्रतो ।

गी॒:ऽभिः । गृ॒णन्तिं । का॒रव॑: ॥३

आ । यस्य । ते । महिमानम् । शतम्ऽऊते । शतक्रतो इति शतऽक्रतो ।

गीःऽभिः । गृणन्ति । कारवः ॥३

हे “शतमूते अपरिमितरक्षण हे "शतक्रतो बहुकर्मयुक्तेन्द्र “यस्य “ते "महिमानं माहात्म्यं “कारवः स्तोतारः “गीर्भिः स्तुतिभिः “गृणन्ति स्तुवन्ति स्वाभीष्टाय ॥

सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा ।

मित्रः पांत्यद्रुहः ॥४

सुऽनीथः । घ । सः । मर्त्यः । यम् । मरुतः । यम् । अर्यमा ।

मित्रः । पान्ति । अद्रुहः ॥४

सुऽनीथः । घ । सः । मर्त्यः । यम् । मरुतः । यम् । अर्यमा ।

मित्रः । पान्ति । अद्रुहः ॥४

“स “मर्त्यः मनुष्यो यजमानः “सुनीथः सुयज्ञः सुनयनो वा भवति । “घ इति प्रसिद्धौ । स इत्युक्तं कमित्याह । “यं यजमानं “मरुतः देवाः "पान्ति रक्षन्ति “अद्रुहः अद्रोहकर्तारः । तथा “यमर्यमा पाति । यं च "मित्रः पाति । स एवं भवतीति ॥

दधानो गोमदश्ववत्सुवीर्यमादित्यजूत एधते ।

सदा राया पुरुस्पृहा ॥५

दधानः । गोऽमत् । अश्वऽवत् । सुऽवीर्यम् । आदित्यऽजूतः । एधते ।

सदा । राया । पुरुऽस्पृहा ॥५

दधानः । गोऽमत् । अश्वऽवत् । सुऽवीर्यम् । आदित्यऽजूतः । एधते ।

सदा । राया । पुरुऽस्पृहा ॥५

“आदित्यजूतः आदित्यप्रेरित आदित्यानुगृहीतो यजमानः “गोमत् गोभिरुपेतम् “अश्ववत् अश्वैरुपेतं “सुवीर्यं शोभनवीर्योपेतं पुत्रं “दधानः धारयन् “एधते वर्धते “सदा सर्वदा । किंच “पुरुस्पृहा बहुभिः स्पृहणीयेन “राया धनेन सदैधते ॥ ॥ १ ॥

तमिंद्रं दानमीमहे शवसानमभीर्वं ।

ईशानं राय ईमहे ॥६

तम् । इन्द्रम् । दानम् । ईमहे । शवसानम् । अभीर्वम् ।

ईशा॑नम् । रा॒यः । ई॒म॒हे॒ ॥६

तम् । इन्द्रम् । दानम् । ईमहे । शवसानम् । अभीर्वम् ।

ईशानम् । रायः । ईमहे ॥६

“तं प्रसिद्धम् “इन्द्रं “दानं देयं “रायः धनम् “ईमहे याचामहे । कीदृशमिन्द्रम् । “शवसानं बलमाचरन्तम् “अभीर्वम् अभीरुम् “ईशानं सर्वस्य स्वामिनम् ॥

तस्मि॒न्हि संत्यू॒तयो॒ विश्वा॒ अभी॑रवः॒ सचा॑ ।

तमा व॑हंतु॒ सप्त॑यः पुरू॒वसुं॒ मदा॑य॒ हर॑यः सु॒तं ॥७

तस्मि॑न् । हि । सन्ति॑ । ऊ॒तयः॑ । विश्वाः॑ । अभी॑रवः । सचा॑ ।

तम् । आ । व॒ह॒न्तु॒ । सप्त॑यः । पु॒रु॒ऽवसु॑म् । मदा॑य । हर॑यः । सु॒तम् ॥७

तस्मिन् । हि । सन्ति । ऊतयः । विश्वाः । अभीरवः । सचा ।

तम् । आ । वहन्तु । सप्तयः । पुरुऽवसुम् । मदाय । हरयः । सुतम् ॥७

“तस्मिन् इन्द्रे “ऊतयः गन्त्र्यः “विश्वाः सर्वाः "अभीरवः अकातराः "सचा सहायभूता मरुद्रूपाः सेनाः “सन्ति भवन्ति । अथवा तस्मिन् सर्वा रक्षणाः सह संभवन्ति। “तम् इन्द्रं “सप्तयः सर्पणशीलाः “हरयः अश्वाः पुरूवसुं बहुधनम् । बहुधनप्रदमित्यर्थः। तं "मदाय “सुतम् अभिषुतं सोमं प्रति “आ “वहन्तु आगमयन्तु ॥

यस्ते॒ मदो॒ वरे॑ण्यो॒ य इं॑द्र वृत्र॒हंत॑मः ।

य आ॑द॒दिः स्व१॒॑र्नृभि॒र्यः पृत॑नासु दु॒ष्टरः॑ ॥८

यः । ते॒ । मदः॑ । वरे॑ण्यः । यः । इ॒न्द्र॒ । वृ॒त्र॒हन्ऽत॑मः ।

यः । आ॒ऽद॒दिः । स्वः॑ । नृऽभिः॑ । यः । पृत॑नासु । दु॒स्तरः॑ ॥८

यः । ते । मदः । वरेण्यः । यः । इन्द्र । वृत्रहन्ऽतमः ।

यः । आऽददिः । स्वः । नृऽभिः । यः । पृतनासु । दुस्तरः ॥८

पूर्वमन्त्रे मदाय हरय इत्युक्तं स मदः स्तूयते । हे “इन्द्र “ते तव “यः “मदः “वरेण्यः वरणीयः । “यः च मदः संग्रामे “वृत्रहन्तमः शत्रूणामतिशयेन हन्ता । “यः च “आददिः आदाता “स्वः स्वरणं धनं “नृभिः नृभ्यः शत्रुभ्यः । “यः च “पृतनासु संग्रामेषु “दुष्टरः अनभिभाव्यः । तस्मै मदाय हरयो वहन्त्विति ॥

यो दु॒ष्टरो॑ विश्ववार श्र॒वाय्यो॒ वाजे॒ष्वस्ति॑ तरु॒ता ।

स नः॑ शविष्ठ सव॒ना व॑सो गहि ग॒मेम॒ गोम॑ति व्र॒जे ॥९

यः । दु॒स्तरः॑ । वि॒श्व॒ऽवा॒र॒ । श्र॒वाय्यः॑ । वाजे॑षु । अस्ति॑ । त॒रु॒ता ।

सः । नः॒ । श॒वि॒ष्ठ॒ । सव॑ना । आ । व॒सो॒ इति॑ । ग॒हि॒ । ग॒मेम॑ । गोऽम॑ति । व्र॒जे ॥९

यः । दुस्तरः । विश्वऽवार । श्रवाय्यः । वाजेषु । अस्ति । तरुता ।

सः । नः । शविष्ठ । सवना । आ । वसो इति । गहि । गमेम । गोऽमति । व्रजे ॥९

हे “विश्ववार विश्वैर्वरणीयेन्द्र “वाजेषु युद्धेषु “यः तव “दुष्टरः दुःखेन तरीतुं शक्यः “तरुता शत्रूणां तारकः “अस्ति भवति हे “वसो वासक हे “शविष्ठ अतिशयेन बलवन्निन्द्र “सः त्वं “नः “सवना अस्माकं सवनानि “आ “गहि आगच्छ । वयं च “गोमति “व्रजे गोमन्तं व्रजं “गमेम गच्छेम ।।

ग॒व्यो षु णो॒ यथा॑ पु॒राश्व॒योत र॑थ॒या ।

व॒रि॒व॒स्य म॑हामह ॥१०

ग॒व्यो इति॑ । सु । नः॒ । यथा॑ । पु॒रा । अ॒श्व॒ऽया । उ॒त । र॒थ॒ऽया ।

व॒रि॒व॒स्य । म॒हा॒ऽम॒ह॒ ॥१०

गव्यो इति । सु । नः । यथा । पुरा । अश्वऽया । उत । रथऽया ।

वरिवस्य । महाऽमह ॥१०

हे “महामह महाधनेन्द्र “गव्या । गव्या उ इति निपातानिपातद्वयसमुदायस्यादिवद्भावेन निपातवद्भावात् प्रकृतिभावः । अस्माकं गवामिच्छया अस्माकं गा दातुं “यथा “पुरा पूर्वं यथास्माकं गवादिदानाय वरिवस्यसि तद्वदद्यापि “सु सुष्ठु वरिवस्य परिचर । आगच्छेत्यर्थः । न केवलं गवेच्छथा किंतु “अश्वया अश्वप्रदानेच्छया । “उत अपि च “रथया रथेच्छया च वरिवस्येति ॥ ॥ २ ॥

न॒हि ते॑ शू॒र॒ राध॒सोऽन्तं॑ वि॒ंदामि॑ स॒त्रा ।

द॒श॒स्या नो॑ मघव॒न्नू चि॑दद्रिवो॒ धियो॒ वाजे॑भिराविथ ॥११

न॒हि । ते॒ । शू॒र॒ । राध॑सः । अन्त॑म् । वि॒न्दामि॑ । स॒त्रा ।

द॒श॒स्य । नः॒ । म॒घ॒ऽव॒न् । नु । चि॒त् । अ॒द्रि॒ऽवः॒ । धियः॑ । वाजे॑भिः । आ॒वि॒थ॒ ॥११

नहि । ते । शूर । राधसः । अन्तम् । विन्दामि । सत्रा ।

दशस्य । नः । मघऽवन् । नु । चित् । अद्रिऽवः । धियः । वाजेभिः । आविथ ॥११

हे "शूर विक्रान्तेन्द्र "ते तव "राधसः धनस्य "अन्तम् इयत्तां "सत्रा सत्यं "नहि विन्दामि न लभे। यस्मादेवं तस्मात् हे "मघवन् धनवन् हे "अद्रिवः वज्रवन्निन्द्र "नः अस्माकं "नू "चित् क्षिप्रमेव "दशस्य देहि तद्धनम् । किंच "वाजेभिः वाजैरन्नैः "धियः अस्मदीयानि कर्माणि "आविथ रक्षः ।।

य ऋ॒ष्वः श्रा॑व॒यत्स॑खा॒ विश्वेत्स वेद॒ जनि॑मा पुरुष्टु॒तः ।

तं विश्वे॒ मानु॑षा यु॒गेंद्रं॑ हवंते तवि॒षं य॒तस्रु॑चः ॥१२

यः । ऋ॒ष्वः । श्र॒व॒यत्ऽसं॑खा । विश्वा॑ । इत् । सः । वे॒द॒ । जनि॑म । पु॒रु॒ऽस्तु॒तः ।

तम् । विश्वे॑ । मानु॑षा । यु॒गा । इन्द्र॑म् । ह॒व॒न्ते॒ । त॒वि॒षम् । य॒तऽस्रु॑चः ॥१२

यः । ऋष्वः । श्रवयत्ऽसखा । विश्वा । इत् । सः । वेद । जनिम । पुरुऽस्तुतः ।

तम् । विश्वे । मानुषा । युगा । इन्द्रम् । हवन्ते । तविषम् । यतऽस्रुचः ॥१२

"यः इन्द्रः "ऋष्वः दर्शनीयः "श्रावयत्सखा । श्रावयन्तः सखाय ऋत्विजो यस्य स तादृशः श्रावयत्सखा । "पुरुष्टुतः बहुभिर्यजमानैः स्तुतो य इन्द्रः "सः "विश्वेत् सर्वाण्यपि "जनिमा जन्मानि प्राणिनां "वेद जानाति । "तं "तविषं बलवन्तम् "इन्द्रं "विश्वे सर्वेऽप्यध्वर्य्वादयः "यतस्रुचः स्वीकृतहविष्काः सन्तः "मानुषा मनुष्यसंबन्धिनः "युगा युगानि कालान् सर्वेषु कालेषु "हवन्ते आह्वयन्ति स्तुवन्ति ।

स नो॒ वाजे॑ष्ववि॒ता पु॑रू॒वसुः॑ पुरःस्था॒ता म॒घवा॑ वृत्र॒हा भु॑वत् ॥१३

सः । नः॒ । वाजे॑षु । अ॒वि॒ता । पु॒रु॒ऽवसुः॑ । पु॒रः॒ऽस्था॒ता । म॒घऽवा॑ । वृ॒त्र॒ऽहा । भु॒व॒त् ॥१३

सः । नः । वाजेषु । अविता । पुरुऽवसुः । पुरःऽस्थाता । मघऽवा । वृत्रऽहा । भुवत् ॥१३

एषा द्विपदा जगती । "सः "पुरूवसुः बहुधनः "मघवा धनवान् "वृत्रहा शत्रूणां हन्तेन्द्रः "नः अस्माकं "वाजेषु संग्रामेषु "अविता रक्षिता "पुरःस्थाता तदर्थं पुरतो वर्तमानः भुवत् भवतु ॥

अ॒भि वो॑ वी॒रमंध॑सो॒ मदे॑षु गाय गि॒रा म॒हा विचे॑तसं ।

इंद्र॒ नाम॒ श्रुत्यं॑ शा॒किनं॒ वचो॒ यथा॑ ॥१४

अ॒भि । व॒ः । वी॒रम् । अन्ध॑सः । मदे॑षु । गा॒य॒ । गि॒रा । म॒हा । विऽचे॑तसम् ।

इन्द्रं॑म् । नाम॑ । श्रुत्य॑म् । शा॒किन॑म् । वचः॑ । यथा॑ ॥१४

अभि । वः । वीरम् । अन्धसः । मदेषु । गाय । गिरा । महा । विऽचेतसम् ।

इन्द्रम् । नाम । श्रुत्यम् । शाकिनम् । वचः । यथा ॥१४

हे उद्गात्रादयः “वः । यूयमित्यर्थः । अथवा हे यजमानाः वो युष्माकं हिताय “अन्धसः सोमस्य “मदेषु उत्पाद्यमानेषु सत्सु “वीरं शत्रूणामीरयितारं “नाम शत्रूणां नामकं “विचेतसं विशिष्टप्रज्ञं “श्रुत्यं सर्वत्र श्रोतव्यं “शाकिनं शक्तमीदृशम् “इन्द्रं “महा महत्या “गिरा स्तुत्या “वचः वाग्युष्मदीया “यथा येन प्रकारेण प्रवर्तते गायत्र्या त्रिष्टुभा वा तथा “गाय गायत । स्तुतिं कुरुत ।

द॒दी रेक्ण॑स्त॒न्वे॑ द॒दिर्वसु॑ द॒दिर्वाजे॑षु पुरुहूत वा॒जिन॑ं ।

नू॒नमथ॑ ॥१५

द॒दिः । रेक्णः॑ । त॒न्वे॑ । द॒दिः । वसु॑ । द॒दिः । वाजे॑षु । पु॒रु॒ऽहू॒त॒ । वा॒जिन॑म् ।

नू॒नम् । अथ॑ ॥१५

ददिः । रेक्णः । तन्वे । ददिः । वसु । ददिः । वाजेषु । पुरुऽहूत । वाजिनम् ।

नूनम् । अथ ॥१५

हे “पुरुहूत बहुभिराहूतेन्द्र त्वं “तन्वे मह्यं शरीराय “रेक्णः धनं “ददिः दाता भव । कदेति उच्यते । “नूनं क्षिप्रम् अद्येदानीमेव। एवं प्रतिवाक्यं योज्यम् । तथा “वसु धनं पुत्रादिभ्यः "ददिः दाता भव । तथा “वाजेषु संग्रामेषु “वाजिनम् अन्नवन्तं रयिं “ददिः दाता भवेति । 'अत्र सर्वेष्वपि वाक्येषु ददिः इत्यस्य लिड्भावात् ‘न लोकाव्यय°' इति षष्ठीप्रतिषेधः ॥ ॥ ३ ॥

विश्वे॑षामिर॒ज्यंत॒ं वसू॑नां सास॒ह्वांस॑ं चिद॒स्य वर्प॑सः ।

कृ॒प॒य॒तो नू॒नमत्यथ॑ ॥१६

विश्वे॑षाम् । इ॒र॒ज्यन्त॑म् । वसू॑नाम् । स॒स॒ह्वांस॑म् । चि॒त् । अ॒स्य । वर्प॑सः ।

कृ॒प॒ऽय॒तः । नू॒नम् । अति॑ । अथ॑ ॥१६

विश्वेषाम् । इरज्यन्तम् । वसूनाम् । ससह्वांसम् । चित् । अस्य । वर्पसः ।

कृपऽयतः । नूनम् । अति । अथ ॥१६

हे इन्द्र त्वां “विश्वेषां सर्वेषां “वसूनां धनानाम् “इरज्यन्तम् ईशानम् “अस्य “वर्पसः वारकस्य “कृपयतः युद्धं कल्पयतः शत्रोः सासह्वांसम् अभिभवितारं स्तुवत इति शेषः । स त्वं “नूनं क्षिप्रमद्यापीदानीमपि धनं प्रयच्छेत्यर्थः ॥

म॒हः सु वो॒ अर॑मिषे॒ स्तवा॑महे मी॒ळ्हुषे॑ अरंग॒माय॒ जग्म॑ये ।

य॒ज्ञेभि॑र्गी॒र्भिर्वि॒श्वम॑नुषां म॒रुता॑मियक्षसि॒ गाये॑ त्वा॒ नम॑सा गि॒रा ॥१७

म॒हः । सु । व॒ः । अर॑म् । इ॒षे॒ । स्तवा॑महे । मी॒ळ्हुषे॑ । अ॒र॒म्ऽग॒माय॑ । जग्म॑ये ।

य॒ज्ञेभि॑ः । गी॒ःऽभिः । वि॒श्वऽम॑नुषाम् । म॒रुता॑म् । इ॒य॒क्ष॒सि॒ । गाये॑ । त्वा॒ । नम॑सा । गि॒रा ॥१७

महः । सु । वः । अरम् । इषे । स्तवामहे । मीळ्हुषे । अरम्ऽगमाय । जग्मये ।

यज्ञेभिः । गीःऽभिः । विश्वऽमनुषाम् । मरुताम् । इयक्षसि । गाये । त्वा । नमसा । गिरा ॥१७

हे इन्द्र “महः महतः “वः । तवेत्यर्थः। व्यत्ययेन बहुवचनम् । “अरं गमनमस्मद्विषयमिच्छामि । अर्तेररमिति रूपम् । तदर्थं “मीळ्हुषे सेक्त्रे “अरंगमाय संपूर्णगमनाय "जग्मये गमनशीलाय यज्ञं प्रति एवंभूताय देवाय “स्तवामहे । त्वां स्तुम इत्यर्थः । केन साधनेनेति तदुच्यते । “यज्ञेभिः यजनसाधनैर्हविर्भिर्यज्ञैरेव वा “गीर्भिः स्तुतिभिः । हे देव “विश्वमनुषां विश्वेषां मनुष्याणां यष्टॄणाम् “इयक्षसि एतैरिज्यसे । “मरुतां संबन्धी त्वम् । किंच “त्वा त्वां “नमसा नमस्कारेण “गिरा स्तुत्या च "गाये स्तुवे ।।

ये पा॒तयं॑ते॒ अज्म॑भिर्गि॒री॒णां स्नुभि॑रेषां ।

य॒ज्ञं म॑हि॒ष्वणी॑नां सु॒म्नं तु॑वि॒ष्वणी॑ना॒ं प्राध्व॒रे ॥१८

ये । पा॒तय॑न्ते । अज्म॑ऽभिः । गि॒री॒णाम् । स्नुऽभि॑ः । ए॒षा॒म् ।

य॒ज्ञम् । म॒हि॒ऽस्वनी॑नाम् । सु॒म्नम् । तु॒वि॒ऽस्वनी॑नाम् । प्र । अ॒ध्व॒रे ॥१८

ये । पातयन्ते । अज्मऽभिः । गिरीणाम् । स्नुऽभिः । एषाम् ।

यज्ञम् । महिऽस्वनीनाम् । सुम्नम् । तुविऽस्वनीनाम् । प्र । अध्वरे ॥१८

“ये मरुतः “गिरीणां मेघानां “स्नुभिः प्रस्नवद्भिः “अज्मभिः बलैः बलकरैरुदकैः सह “पातयन्ते पतन्ति गच्छन्ति “एषां मरुतां “महिष्वणीनां प्रभूतध्वनीनां “यज्ञं कुर्म इति शेषः । कृत्वा च “तुविष्वणीनां बहुध्वनीनां “सुम्नं सुखं तैः कृतम् “अध्वरे यज्ञे “प्र प्राप्नुयाम । अथवा चतुर्थ्यर्थे षष्ठी । प्रभूतस्वनेभ्यः सुम्नमुक्तलक्षणं हविः प्र प्राप्नुयामाध्वरे यज्ञे ।।

प्र॒भ॒ंगं दु॑र्मती॒नामिंद्र॑ शवि॒ष्ठा भ॑र ।

र॒यिम॒स्मभ्य॒ं युज्यं॑ चोदयन्मते॒ ज्येष्ठं॑ चोदयन्मते ॥१९

प्र॒ऽभ॒ङ्गम् । दु॒ःऽम॒ती॒नाम् । इन्द्र॑ । श॒वि॒ष्ठ॒ । आ । भ॒र॒ ।

र॒यिम् । अ॒स्मभ्य॑म् । युज्य॑म् । चो॒द॒य॒त्ऽम॒ते॒ । ज्येष्ठ॑म् । चो॒द॒य॒त्ऽम॒ते॒ ॥१९

प्रऽभङ्ग॑म् । दुः॒ऽमतीनाम् । इन्द्र । शविष्ठ । आ । भर ।

रयिम् । अस्मभ्यम् । युज्यम् । चोदयत्ऽमते । ज्येष्ठम् । चोदयत्ऽमते ॥१९

“दुर्मतीनां दुष्टमनस्कानां वृत्रादीनां “प्रभङ्गं प्रकर्षेण भञ्जकं त्वां याचामह इति शेषः । हे “इन्द्र “शविष्ठ अतिशयेन बलवन् स्तुतस्त्वम् “अस्मभ्यं “रयिं धनं “युज्यं योग्यमस्माकमुचितं धनम् “आ “भर आहर। हे “चोदयन्मते । चोदयन्ती धनं प्रेरयन्ती मतिर्यस्य स तथोक्तः । हे तादृश देव । किंच हे "चोदयन्मते उक्तार्थ “ज्येष्ठं धनमा भर ॥

सनि॑तः॒ सुस॑नित॒रुग्र॒ चित्र॒ चेति॑ष्ठ॒ सूनृ॑त ।

प्रा॒सहा॑ सम्रा॒ट् सहु॑रिं॒ सह॑न्तं भु॒ज्युं वाजे॑षु॒ पूर्व्य॑॑म् ॥२०

सनि॑त॒रिति॑ । सुऽस॑नितः । उग्र॑ । चित्र॑ । चेति॑ष्ठ । सूनृ॑त ।

प्र॒ऽसहा॑ । स॒म्ऽरा॒ट् । सहु॑रिम् । सह॑न्तम् । भु॒ज्युम् । वाजे॑षु । पूर्व्य॑म् ॥२०

सनितरिति । सुऽसनितः । उग्र । चित्र । चेतिष्ठ । सूनृत ।

प्रऽसहा । सम्ऽराट् । सहुरिम् । सहन्तम् । भुज्युम् । वाजेषु । पूर्व्यम् ॥२०

हे "सनितः संभक्तर्दातर्वा “उग्र उद्गूर्णबल “चित्र चायनीय “चेतिष्ठ अत्यन्तं चेतयितः "सूनृत सुसत्य “प्रासहा प्रसह्य हे "सम्राट् सर्वस्य स्वामिन् सम्यग्राजमान वा त्वं “सहुरिं सहनशीलं “भुज्युं भोजयितारं "पूर्व्यं प्रवृद्धम् । मुख्यमित्यर्थः । ईदृशं धनं “वाजेषु संग्रामेष्वाभरेति शेषः ॥ ॥ ४ ॥

आ स ए॑तु॒ य ईव॒दाँ अदे॑वः पू॒र्तमा॑द॒दे ।

यथा॑ चि॒द्वशो॑ अ॒श्व्यः पृ॑थु॒श्रव॑सि कानी॒ते॒३॒ऽस्या व्युष्या॑द॒दे ॥२१

आ । सः । ए॒तु॒ । यः । ईव॑त् । आ । अदे॑वः । पू॒र्तम् । आ॒ऽद॒दे ।

यथा॑ । चि॒त् । वशः॑ । अ॒श्व्यः । पृ॒थु॒ऽश्रव॑सि । कानी॒ते । अ॒स्याः । वि॒ऽउषि॑ । आ॒ऽद॒दे ॥२१

आ । सः । एतु । यः । ईवत् । आ । अदेवः । पूर्तम् । आऽददे ।

यथा । चित् । वशः । अश्व्यः । पृथुऽश्रवसि । कानीते । अस्याः । विऽउषि । आऽददे ॥२१

अत्र शौनकः-‘वशायाश्व्याय यत्प्रादात्कानीतस्तु पृथुश्रवाः । तदत्र स्तूयते दानमा स एत्वेवमादिभिः' (बृहद्दे ६.७९-८०)। “एतु आगच्छतु “सः “यः “अदेवः देवादन्यो मनुष्यो वशः “ईवत् गमनवत् गवादिलक्षणं “पूर्तं पूर्णम् “आददे आदत्ते । स्वीकृतवानित्यर्थः

। देवश्चेन्माययाप्यागन्तुमर्हति । अतः प्रकाशेनैवागच्छत्वित्यर्थः । कथमस्य धनावाप्तिप्रसङ्ग आगमनप्रसङ्गश्चेति तदुच्यते । “यथा “चित् । चिदिति पूरणः । येन कारणेन यस्माद्वा “वशः एतत्संज्ञकः “अश्व्यः अश्वपुत्रः “पृथुश्रवसि एतन्नामके राज्ञि “कानीते कनीतपुत्रे कन्यायाः पुत्रे “अस्याः उषसः “व्युषि व्युष्टौ “आददे आदत्ते तेन कारणेन तस्माद्वा कारणादायात्विति । एवमश्वो बन्धुवर्गो वा ब्रूते ॥

षृष्टिं सृहस्राश्व्यंस्यायुतासन्मुष्ट्रांनां विंशृतिं शृता ।

दशृ श्यावींनां शृता दशृ त्र्यंरुषीणां दशृ गवां सृहस्रा ॥२२

षृष्टिम् । सृहस्रा । अश्व्यंस्य । अयुता । असृनृम् । उष्ट्रांनाम् । विंशृतिम् । शृता ।

दशं । श्यावींनाम् । शृता । दशं । त्रिऽअंरुषीणाम् । दशं । गवांम् । सृहस्रा ॥२२

षष्टिम् । सहस्रा । अश्व्यस्य । अयुता । असनम् । उष्ट्रानाम् । विंशतिम् । शता ।

दश । श्यावीनाम् । शता । दश । त्रिऽअरुषीणाम् । दश । गवाम् । सहस्रा ॥२२

स वश आगत्य व्रूते । “अश्व्यस्य अश्वसंबन्धिनः “षष्टिं “सहस्रा सहस्राणि "अयुता अयुतानि च “असनम् अभजम् । "उष्ट्राणां “विंशतिं “शता शतानि चासनम्। “श्यावीनां श्याववर्णानां वडवानां “दश “शता शतानि चासनम् । “त्र्यरुषीणां त्रीण्यारोचमानानि शुभ्राणि ककुप्पृष्ठपार्श्वादिस्थानानि यासां तादृशीनां “गवां “दश “सहस्रा सहस्राण्यभजम् ॥

दशं श्यावा ऋधद्रंयो वीतवांरास आशवंः ।

मृथ्रा नेमिं नि वांवृतुः ॥२३

दशं । श्यावाः । ऋधत्ऽरंयः । वीतऽवांरासः । आशवंः ।

मृथ्राः । नेमिम् । नि । वृवृतुः ॥२३

दश । श्यावाः । ऋधत्ऽरयः । वीतऽवारासः । आशवः ।

मथ्राः । नेमिम् । नि । ववृतुः ॥२३

"दश दशसंख्याकाः “श्यावाः श्याववर्णाः “आशवः अश्वाः “नेमिं रथनेमिं “नि “वावृतुः निवर्तयन्ति । रथं वहन्तीत्यर्थः । ईदृशास्ते “ऋधद्रयः प्रवृद्धवेगाः “वीतवारासः क्रान्तबलाः प्राप्तबला वा आशवः “मथ्राः' मथनशीलाः ॥

दानांसः पृथुश्रवंसः कानीतस्यं सुराधंसः ।

रथं हिरृण्ययं ददृन्मंहिंष्ठः सूरिरंभूद्वर्षिंष्ठमकृत श्रवंः ॥२४

दाना॑सः । पृ॒थु॒ऽश्रव॑सः । का॒नी॒तस्य॑ । सु॒ऽराध॑सः ।

रथ॑म् । हि॒र॒ण्यय॑म् । दद॑त् । मंहि॑ष्ठः । सू॒रिः । अ॒भू॒त् । वर्षि॑ष्ठम् । अ॒कृ॒त॒ । श्रवः॑ ॥२४

दानासः । पृथुऽश्रवसः । कानीतस्य । सुऽराधसः ।

रथम् । हिरण्ययम् । ददत् । मंहिष्ठः । सूरिः । अभूत् । वर्षिष्ठम् । अकृत । श्रवः ॥२४

पूर्वमन्त्रैः प्रतिपादितानि धनानि बन्धूनां पितुर्वा पुरस्तान्निर्दिशन्नाशास्ते । “पृथुश्रवसः “कानीतस्य “सुराधसः शोभनधनस्य । यतस्तस्य धनं दानाय कल्पितमतः स सुराधाः । तस्य “दानासः दाना दत्तानि धनानीमानि । स च पृथुश्रवाः पूर्वमुक्तानि “हिरण्ययं हिरण्मयं “रथं च “ददत् प्रयच्छन् “मंहिष्ठः अतिशयेन दाता “सूरिः सर्वस्य प्रेरकः प्राज्ञो वा “अभूत् भवति भवतु वा । “वर्षिष्ठम् अतिशयेन प्रवृद्धां “श्रवः कीर्तिम् “अकृत करोति करोतु वा ।।

‘आ नो वायो' इत्येषा पञ्चमेऽहनि प्रउगशस्त्रे वायव्यतृचे तृतीया । ‘आ नो वायो महे तन इत्येका रथेन पृथुपाजसा' (आश्व. श्रौ. ७. १२) इति हि सूत्रितम् ॥

आ नो॑ वायो म॒हे तने॑ या॒हि म॒खाय॒ पाज॑से ।

व॒यं हि ते॑ चकृ॒मा भूरि॑ दा॒वने॑ स॒द्यश्चि॒न्महि॑ दा॒वने॑ ॥२५

आ । न॒ः । वा॒यो॒ इति॑ । म॒हे । तने॑ । या॒हि । म॒खाय॑ । पाज॑से ।

व॒यम् । हि । ते॒ । च॒कृ॒म । भूरि॑ । दा॒वने॑ । स॒द्यः । चि॒त् । महि॑ । दा॒वने॑ ॥२५

आ । नः । वायो इति । महे । तने । याहि । मखाय । पाजसे ।

वयम् । हि । ते । चकृम । भूरि । दावने । सद्यः । चित् । महि । दावने ॥२५

हे “वायो त्वं “नः अस्मान् प्रति “आ “याहि आगच्छ । किमर्थम् । “महे महते “तने धनाय “मखाय महनीयाय “पाजसे बलाय च । उभयं प्रदातुमित्यर्थः । किमत्रास्तीति तदुच्यते । “वयं “हि वयं खलु “ते “भूरि “दावने प्रभूतधनदात्रे “चकृम स्तुतिं हविर्वा । “सद्यश्चित् तदानीमेव तवागमनानन्तरमेव चकृम “महि महतो धनस्य “दावने दात्रे ॥ ॥ ५ ॥

यो अश्वे॑भि॒र्वह॑ते॒ वस्त॑ उ॒स्रास्त्रिः स॒प्त स॑प्तती॒नां ।

ए॒भिः सोमे॑भिः सोम॒सुद्भिः॑ सोमपा दा॒नाय॑ शुक्रपूतपाः ॥२६

यः । अश्वे॑भिः । वह॑ते । वस्ते॑ । उ॒स्राः । त्रिः । स॒प्त । स॒प्त॒ती॒नाम् ।

ए॒भिः । सोमे॑भिः । सो॒म॒सुत्ऽभिः॑ । सो॒म॒ऽपा॒ः । दा॒नाय॑ । शु॒क्र॒पू॒त॒ऽपा॒ः ॥२६

यः । अश्वेभिः । वहते । वस्ते । उस्राः । त्रिः । सप्त । सप्ततीनाम् ।

एभिः । सोमेभिः । सोमसुत्ऽभिः । सोमऽपाः । दानाय । शुक्रपूतऽपाः ॥२६

"यः पृथुश्रवाः "अश्वेभिः अश्वैः "वहते गृहं "वस्ते च "उस्राः गाः । ताभिश्च गच्छतीत्यर्थः । त्रिः सप्तति तासां गवां संख्योक्ता । सा संख्या विशेष्यते । "सप्ततीनां "त्रिः "सप्त । उक्तसंख्याकाभिर्गोभिरश्वैश्च यो गच्छति स पृथुश्रवाः "एभिः "सोमेभिः सोमैः "सोमसुद्भिः सोममभिषुण्वद्भिश्च हे "सोमपाः । सोमस्य पातरिति वायोः संबोधनम् । हे शुक्रपूतपाः दीप्तपूतस्य च सोमस्य पातर्वायो "दानाय तुभ्यं सोमं दातुं सोमैर्युक्तो भवतीति शेषः ॥

यो म॑ इ॒मं चि॑दु॒ त्मनाम॑न्दच्चि॒त्रं दा॒वने॑ ।

अ॒र॒ट्वे अक्षे॒ नहु॑षे सु॒कृत्व॑नि सु॒कृत्त॑राय सु॒क्रतुः॑ ॥२७

यः । मे॒ । इ॒मम् । चि॒त् । ऊं॒ इति॑ । त्मना॑ । अम॑न्दत् । चि॒त्रम् । दा॒वने॑ ।

अ॒र॒ट्वे । अक्षे॑ । नहु॑षे । सु॒ऽकृत्व॑नि । सु॒कृत्ऽत॑राय । सु॒ऽक्रतुः॑ ॥२७

यः । मे । इमम् । चित् । ऊं इति । त्मना । अमन्दत् । चित्रम् । दावने ।

अरट्वे । अक्षे । नहुषे । सुऽकृत्वनि । सुकृत्ऽतराय । सुऽक्रतुः ॥२७

"यः पृथुश्रवाः "मे मह्यम् "इमं पुरतो वर्तमानं "चित्रं चायनीयं गवाश्वादिकं "दावने दानाय "त्मना आत्मना स्वबुद्ध्यैव "अमन्दत् अमन्दत अमाद्यत । स च "सुक्रतुः शोभनकर्मा राजा "सुकृत्तराय सुकृतकर्तृत्वाय "अरट्वे "अक्षे "नहुषे सुकृत्वनि च । एते तस्य राज्ञोऽध्यक्षाः । तेष्वन्वशात् अस्मै गवादिकान् संयोजयतेति । यद्वा । अरट्वादयोऽन्ये राजानः । तेषु मध्ये सुकृत्तरायामन्ददिति ॥

उ॒च॒थ्ये॒३॒ वपु॑षि॒ यः स्व॒राळु॒त वा॑यो घृ॒तस्नाः ।

अश्वे॑षितं॒ रजे॑षितं॒ शुने॑षितं॒ प्राज्म॒ तदि॒दं नु तत् ॥२८

उ॒च॒थ्ये॑ । वपु॑षि । यः । स्व॒ऽराट् । उ॒त । वा॒यो॒ इति॑ । घृ॒त॒ऽस्नाः ।

अश्व॑ऽइषितम् । रजः॑ऽइषितम् । शुना॑ऽइषितम् । प्र । अज्म॑ । तत् । इ॒दम् । नु । तत् ॥२८

उचथ्ये । वपुषि । यः । स्वऽराट् । उत । वायो इति । घृतऽस्नाः ।

अश्वऽइषितम् । रजःऽइषितम् । शुनाऽइषितम् । प्र । अज्म । तत् । इदम् । नु । तत् ॥२८

"उचथ्ये वक्तव्ये स्तुत्ये "वपुषि शरीरे "यः "स्वराट् स्वयं राजते । यद्वा । उचथ्यो वपुश्चोभौ राजानौ । तयोरपि यः स्वराट् स्वाराज्यं करोति अतिशयेन वर्तते । हे "वायो यश्च "घृतस्नाः घृतवच्छुद्धः स राजा "अश्वेषितम् अश्वैः प्रापितं "रजेषितम् । रजःशब्देनोष्ट्रो

गर्दभो वोच्यते । तेनाप्यानीतं “शुनेषितं च “अज्म अन्नं “प्र अदात् । तत् अन्नमश्वाद्यानीतम् “इदं पुरतो दृश्यते । “तत् तवैवानुग्रहादित्यर्थः । अथवैकस्तच्छब्दः पूरणः । अश्वाद्यानीतं यदस्ति तदिदं खल्विति ॥

अध॑ प्रि॒यमि॑षि॒राय॑ ष॒ष्टिं स॒हस्रा॑सनं ।

अश्वा॑ना॒मिन्न वृष्णा॑ ॥२९

अध॑ । प्रि॒यम् । इ॒षि॒राय॑ । ष॒ष्टिम् । स॒हस्रा॑ । अ॒स॒न॒म् ।

अश्वा॑नाम् । इत् । न । वृष्णा॑म् ॥२९

अध । प्रियम् । इषिराय । षष्टिम् । सहस्रा । असनम् ।

अश्वानाम् । इत् । न । वृष्णाम् ॥२९

“अध अधुना "इषिराय धनादिप्रेरयित्रे राज्ञे “प्रियं श्रद्धेयमश्वानामिव “वृष्णां सेक्तॄणां गवां “सहस्रा सहस्राणां “षष्टिं षष्टिसहस्रसंख्याकं प्रियभूतम् "असनम् अभजम् ॥

गावो॒ न यू॒थमुप॑ यंति॒ वध्र॑य॒ उप॒ मा यँति॒ वध्र॑यः ॥३०

गावः॑ । न । यू॒थम् । उप॑ । य॒न्ति॒ । वध्र॑यः । उप॑ । मा॒ । आ । य॒न्ति॒ । वध्र॑यः ॥३०

गावः । न । यूथम् । उप । यन्ति । वध्रयः । उप । मा । आ । यन्ति । वध्रयः ॥३०

“गावो “न गाव इव ता यथा संगवे “ यूथमुप “ यन्ति उपगच्छन्ति तद्वत् “ वध्रयः छिन्नमुष्का वृषभाः पृथुश्रवसा दत्ताः “मा माम् “उप “यन्ति समीपं प्राप्नुवन्ति । मा मां “वध्रयः उपा यन्तीति पुनरुक्तिरादरार्था ॥

अध॒ यच्चार॑थे ग॒णे श॒तमुष्ट्राँ॒ अचि॑क्रदत् ।

अध॒ श्वित्ने॑षु विंश॒तिं श॒ता ॥३१

अध॑ । यत् । चार॑थे । ग॒णे । श॒तम् । उष्ट्रा॑न् । अचि॑क्रदत् ।

अध॑ । श्वित्ने॑षु । विं॒श॒तिम् । श॒ता ॥३१

अध । यत् । चारथे । गणे । शतम् । उष्ट्रान् । अचिक्रदत् ।

अध । श्वित्नेषु । विंशतिम् । शता ॥३१

“अध अथ “यत् यदा “चारथे। चरथं चरणं गमनम्। तत्संबन्धिनि चार्यमाणे । वनाय प्रेर्यमाण इत्यर्थः। तादृशे “गणे उष्ट्रसंघे “उष्ट्रान् शतम् उष्ट्राणां शतम् “अचिक्रदत् अस्मभ्यं प्रदानायाजुहाव । “अध अपि चास्मदर्थमेव “श्वित्नेषु श्वेतवर्णेषु गोयूथेषु “विंशतिं च "शता शतानि च अथवा शतानां विंशतिमचिक्रदत् ॥

श॒तं दा॒से ब॑ल्बू॒थे विप्र॒स्तरु॑क्ष॒ आ द॑दे ।

ते तें वायवि॒मे जना॒ मद॑ती॑द्र॑गोपा॒ मद॑ति दे॒वगो॑पाः ॥३२

श॒तम् । दा॒से । ब॒ल्बू॒थे । विप्रः॑ । तरु॑क्षे । आ । द॒दे॒ ।

ते । ते॒ । वा॒यो॒ इति॑ । इ॒मे । जनाः॑ । मद॑न्ति । इन्द्र॑ऽगोपाः । मद॑न्ति । दे॒वऽगो॑पाः ॥३२

शतम् । दासे । बल्बूथे । विप्रः । तरुक्षे । आ । ददे ।

ते । ते । वायो इति । इमे । जनाः । मदन्ति । इन्द्रऽगोपाः । मदन्ति । देवऽगोपाः ॥३२

अयं “विप्रः मेधावी वशो जनोऽहं “बल्बूथे एतन्नामके “दासे “तरुक्षे गवाश्वादीनां तारके गवाद्यधिकृते राज्ञास्माकं प्रदिष्टधनदातरि “आ “ददे । किं दानम् । गवाश्वादीनां “शतम् । शतशब्दोऽपरिमितवचनः । हे “वायो “ते तव स्वभूताः “ते स्तोतारः “इमे “जनाः । वयमित्यर्थः । आत्मन एव परोक्षत्वेन वादः । त्वयानुगृहीतत्वात् “इन्द्रगोपाः । इन्द्रो गोपायिता येषां ते तथोक्ताः । इन्द्रेण रक्षिताः “मदन्ति । तथा “देवगोपाः “मदन्ति । इन्द्रं देवांश्च राज्ञो लब्धेन धनेन यजन्तो मदन्तीत्यर्थः ॥

अध॒ स्या योष॑णा म॒ही प्र॑ती॒ची वश॑म॒श्व्यं ।

अधि॑रुक्मा॒ वि नी॑यते ॥३३

अध॑ । स्या । योष॑णा । म॒ही । प्र॒ती॒ची । वश॑म् । अ॒श्व्यम् ।

अधि॑ऽरुक्मा । वि । नी॒य॒ते॒ ॥३३

अध । स्या । योषणा । मही । प्रतीची । वशम् । अश्व्यम् ।

अधिऽरुक्मा । वि । नीयते ॥३३

“अध अधुना “स्या सा “योषणा योषा राज्ञा प्रदत्ता “मही महती पूज्या “प्रतीची अस्मदभिमुखी “अश्व्यम् अश्वपुत्रं “वशं मां प्रति साधिरुक्माभरणा सती “वि “नीयते । तां कन्यां मां प्रत्यानयन्तीत्यर्थः । अत्र वायव्यास्वृक्षु यत्र वायुर्न स्तूयते परं दानप्रशंसैव तासु सर्वासु हे वायो त्वदनुग्रहादेवमिति योज्यं वायुपरत्वमवगन्तव्यम् ॥ ॥ ६ ॥

## मण्डल ८

# ऋग्वेदः सूक्तं ८.४७

ऋग्वेदः - मण्डल ८
← सूक्तं ८.४६ | सूक्तं ८.४७ | सूक्तं ८.४८ →
त्रित आप्त्यः

दे. आदित्याः, १४-१८ आदित्योषसः(दुःस्वप्नघ्नं) । महापङ्क्तिः

महि वो महतामवो वरुण मित्र दाशुषे ।

यमादित्या अभि द्रुहो रक्षथा नेमघं नशदनेहसो व ऊतयः सुऊतयो व ऊतयः ॥१॥

विदा देवा अघानामादित्यासो अपाकृतिम् ।

पक्षा वयो यथोपरि व्यस्मे शर्म यच्छतानेहसो व ऊतयः सुऊतयो व ऊतयः ॥२॥

व्यस्मे अधि शर्म तत्पक्षा वयो न यन्तन ।

विश्वानि विश्ववेदसो वरूथ्या मनामहेऽनेहसो व ऊतयः सुऊतयो व ऊतयः ॥३॥

यस्मा अरासत क्षयं जीवातुं च प्रचेतसः ।

मनोर्विश्वस्य घेदिम आदित्या राय ईशतेऽनेहसो व ऊतयः सुऊतयो व ऊतयः ॥४॥

परि णो वृणजन्नघा दुर्गाणि रथ्यो यथा ।

स्यामेदिन्द्रस्य शर्मण्यादित्यानामुतावस्यनेहसो व ऊतयः सुऊतयो व ऊतयः ॥५॥

परिह्वृतेदना जनो युष्मादत्तस्य वायति ।

देवा अदभ्रमाश वो यमादित्या अहेतनानेहसो व ऊतयः सुऊतयो व ऊतयः ॥६॥

न तं तिग्मं चन त्यजो न द्रासदभि तं गुरु ।

यस्मा उ शर्म सप्रथ आदित्यासो अराध्वमनेहसो व ऊतयः सुऊतयो व ऊतयः ॥७॥

युष्मे देवा अपि ष्मसि युध्यन्त इव वर्मसु ।

यूयं महो न एनसो यूयमर्भादुरुष्यतानेहसो व ऊतयः सुऊतयो व ऊतयः ॥८॥

अदितिर्न उरुष्यत्वदितिः शर्म यच्छतु ।

माता मित्रस्य रेवतोऽर्यम्णो वरुणस्य चानेहसो व ऊतयः सुऊतयो व ऊतयः ॥९॥

यद्देवाः शर्म शरणं यद्भद्रं यदनातुरम् ।

त्रिधातु यद्वरूथ्यं तदस्मासु वि यन्तनानेहसो व ऊतयः सुऊतयो व ऊतयः ॥१०॥

आदित्या अव हि ख्यताधि कूलादिव स्पशः ।

सुतीर्थमर्वतो यथानु नो नेषथा सुगमनेहसो व ऊतयः सुऊतयो व ऊतयः ॥११॥

नेह भद्रं रक्षस्विने नावयै नोपया उत ।

गवे च भद्रं धेनवे वीराय च श्रवस्यतेऽनेहसो व ऊतयः सुऊतयो व ऊतयः ॥१२॥

यदाविर्यदपीच्यं देवासो अस्ति दुष्कृतम् ।

त्रिते तद्विश्वमाप्त्य आरे अस्मद्दधातनानेहसो व ऊतयः सुऊतयो व ऊतयः ॥१३॥

यच्च गोषु दुष्वप्न्यं यच्चास्मे दुहितर्दिवः ।

त्रिताय तद्विभावर्याप्त्याय परा वहानेहसो व ऊतयः सुऊतयो व ऊतयः ॥१४॥

निष्कं वा घा कृणवते स्रजं वा दुहितर्दिवः ।

त्रिते दुष्वप्न्यं सर्वमाप्त्ये परि दद्मस्यनेहसो व ऊतयः सुऊतयो व ऊतयः ॥१५॥

तदन्नाय तदपसे तं भागमुपसेदुषे ।

त्रिताय च द्विताय चोषो दुष्वप्न्यं वहानेहसो व ऊतयः सुऊतयो व ऊतयः ॥१६॥

यथा कलां यथा शफं यथ ऋणं संनयामसि ।*

एवा दुष्वप्न्यं सर्वमाप्त्ये सं नयामस्यनेहसो व ऊतयः सुऊतयो व ऊतयः ॥१७॥

अजैष्माद्यासनाम चाभूमानागसो वयम् ।

उषो यस्माद्दुष्वप्न्यादभैष्माप तदुच्छत्वनेहसो व ऊतयः सुऊतयो व ऊतयः ॥१८॥

**सायणभाष्यम्**

‘ महि वः' इत्यष्टादशर्चं पञ्चमं सूक्तमाप्त्यस्य त्रितस्यार्षम् । षडष्टका महापङ्क्तिश्छन्दः । आद्यास्त्रयोदशर्चं आदित्यदेवताकाः । यच्च गोषु' इत्याद्याः पञ्चर्चं उषोदेवताका आदित्यदेवताकाश्च । तथा चानुक्रमणिका-’ महि वो यूना त्रित आप्त्य आदित्येभ्योऽन्त्याः पञ्चोषसेऽपि महापाङ्क्तम्' इति । सूक्तविनियोगो लैङ्गिकः ॥

महिं वो मह॒तामवो॒ वरुं॑ण॒ मित्रं॑ दा॒शुषें ।

यमा॑दित्या अ॒भि द्रु॒हो रक्षं॑था॒ नेम॒घं नं॑शदने॒हसों व ऊ॒तयः॑ सुऊ॒तयों व ऊ॒तयः॑ ॥१

महिं । व॒ः । म॒ह॒ताम् । अवः॑ । वरुं॑ण । मित्रं॑ । दा॒शुषें ।

यम् । आ॒दि॒त्या॒ः । अ॒भि । द्रु॒हः । रक्षं॑थ । न । ई॒म् । अ॒घम् । न॒श॒त् । अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥१

महि । वः । महतान् । अवः । वरुण । मित्र । दाशुषे ।

यम् । आदित्याः । अभि। द्रुहः । रक्षथ । न । ईम् । अघम् । नशत्। अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १ ॥

हे "वरुण हे "मित्र । एतद्द्वयमर्यम्णोऽप्युपलक्षणम् । ६ वरुणादयः "महतां वः युष्माकम् “अवः रक्षणं “महि महत् । कस्मै । "दाशुषे हविर्दात्रे यजमानाय क्रियमाणम् । किंच हे आदित्याः “यं यजमानं "द्रुहः द्रोग्धुः सकाशात् "अभि "रक्षथ "ईम् एनं यजमानम् "अव "पापं न "नशत् न प्राप्नोति । कुत एवमिति तत्रोच्यते । “वः युष्माकम् ऊतयः रक्षणानि "अनेहसः अपापान्यनुपद्रवाणि च । “ऊतयः युष्माकं रक्षणानि सुऊतयः शोभनरक्षणानि । पुनरुक्तिरादरार्था ।

वि॒दा देंवा अ॒घाना॒मादिं॑त्यासो अ॒पाकृं॑तिम् ।

प॒क्षा वयो॒ यथो॒परि॒ व्य१॒॑स्मे शर्मं यच्छताने॒हसों व ऊ॒तयः॑ सुऊ॒तयों व ऊ॒तयः॑ ॥२

वि॒द । दे॒वा॒ः । अ॒घानां॑म् । आदिं॑त्यासः । अ॒प॒ऽआकृं॑तिम् ।

प॒क्षा । वयः॑ । यथा॑ । उ॒परिं॑ । वि । अ॒स्मे इतिं॑ । शर्मं॑ । य॒च्छ॒त॒ । अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥२

विद। देवाः । अघानाम् । आदित्यासः । अपऽआकृतिम् ।

पक्षा । वयः । यथा । उपरि । वि । अस्मे इति । शर्म । यच्छत । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ।।२।।

हे “देवाः "आदित्यासः आदित्याः यूयम् "अघानां दुःखानाम् "अपाकृतिम् अपाकरणं परिहारप्रकारं "विद जानीथ। यस्मादेवं तस्मात् "वयः पक्षिणः "यथा पक्षा पक्षौ उपरि स्वशिशुकानामुपरि कुर्वन्ति सुखाय तद्वत् "अस्मे अधि अस्मासु "शर्म सुखं यच्छत कुरुत । अधीति सप्तम्यर्थानुवादी । अस्मे अस्माकमुपरीति वा ॥

व्य१॒स्मे अधि॒ शर्म॒ तत्प॒क्षा वयो॒ न यन्तन ।

विश्वा॑नि विश्ववेदसो वरू॒थ्या॑ मनामहेऽने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥३

वि । अ॒स्मे इति॑ । अधि॑ । शर्म॑ । तत् । प॒क्षा । वयः॑ । न । य॒न्त॒न॒ ।

विश्वा॑नि । वि॒श्व॒ऽवे॒द॒सः॒ । व॒रू॒थ्या॑ । म॒ना॒म॒हे॒ । अ॒ने॒हसः॑ । वः॒ । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । वः॒ । ऊ॒तयः॑ ॥३

वि । अस्मे इति । अधि। शर्म । तत् । पक्षा । वयः । न । यन्तन ।

विश्वानि । विश्वऽवेदसः । वरूथ्या । मनामहे ।। अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ३ ॥

हे आदित्याः यूयम् "अस्मे "अधि अस्मासु "तत् । युष्मास्वेवासाधारणं यत् "शर्म अस्ति तदित्यर्थः । तत् "वि "यन्तन विशेषेण प्रापयत । हे "विश्ववेदसः सर्वधनाः युष्मान् "विश्वानि सर्वाणि "वरूथ्या । वरूथं गृहम् । तदुचितानि धनानि "मनामहे याचामहे ॥

यस्मा॒ अरा॑सत॒ क्षय॑ं जी॒वातु॑ं च॒ प्रचे॑तसः ।

मनो॒र्विश्व॑स्य॒ घेदि॒म आ॑दि॒त्या रा॒य ईश॑तेऽने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥४

यस्मै॑ । अरा॑सत । क्षय॑म् । जी॒वातु॑म् । च॒ । प्रऽचे॑तसः ।

मनोः॑ । विश्व॑स्य । घ॒ । इत् । इ॒मे । आ॒दि॒त्याः । रा॒यः । ई॒श॒ते॒ । अ॒ने॒हसः॑ । वः॒ । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । वः॒ । ऊ॒तयः॑ ॥४

यस्मै । अरासत । क्षयम् । जीवातुम् । च। प्रऽचेतसः ।

मनोः । विश्वस्य । घ । इत् । इमे । आदित्याः । रायः । ईशते । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ४ ॥

"यस्मै मनुष्याय "क्षयं निवासं जीवातुं जीवनसाधनमन्नं "च "प्रचेतसः प्रकृष्टमतयः "अरासत प्रयच्छन्ति तस्मै यजमानाय तदर्थम् "इमे "आदित्याः "विश्वस्य "घेत् सर्वस्याप्ययष्टुः "मनोः मनुष्यस्य धनिकस्य "रायः धनस्य "ईशते स्वामिनो भवन्त्यपहृत्य यजमानाय प्रदातुम् ॥

परि॑ णो वृणजन्न॒घा दु॒र्गाणि॑ र॒थ्यो॑ यथा ।

स्यामेदिन्द्र॑स्य॒ शर्म॑ण्यादि॒त्याना॑मु॒ताव॑स्यने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥५

परि॑ । नः॒ । वृ॒ण॒ज॒न् । अ॒घा । दुः॒ऽगानि॑ । र॒थ्यः॑ । य॒था॒ ।

स्याम॑ । इत् । इन्द्र॑स्य । शर्म॑णि । आ॒दि॒त्याना॑म् । उ॒त । अव॑सि । अ॒ने॒हसः॑ । वः॒ । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । वः॒ । ऊ॒तयः॑ ॥५

परि । नः । वृणजन् । अघा। दुःऽगानि । रथ्यः । यथा ।

स्याम् । इत् । इन्द्रस्य । शर्मणि । आदित्यानाम् । उत । अवसि । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ५ ॥

"परि “वृणजन् परिवर्जयन्तु "नः अस्माकम् "अघा अघानि पापानि । तत्र दृष्टान्तः । “दुर्गाणि दुर्गमनान् प्रदेशानवटधिष्ण्यादिकान् यथा परिवर्जयन्ति तद्वत् । "इन्द्रस्य “शर्मणि "स्याम भवेम वयम् । "उत अपि च आदित्यानाम् "अवसि रक्षणे च स्याम ॥ ॥ ७ ॥

परि॒ह्वृतेद॒ना जनो॑ यु॒ष्माद॑त्तस्य वायति ।

देवा॒ अद॑भ्रमाश वो॒ यमा॑दित्या॒ अहे॑तनाने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥६

प॒रि॒ऽह्वृ॒ता । इत् । अ॒ना । जनः॑ । यु॒ष्माऽद॑त्तस्य । वा॒य॒ति॒ ।

देवाः॑ । अद॑भ्रम् । आ॒श॒ । व॒ः । यम् । आ॒दि॒त्या॒ः । अहे॑तन । अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥६

परिऽह्वृता । इत् । अना। जनः । युष्माऽदत्तस्य । वायति ।

देवाः । अदभ्रम् । आश । वः। यम् । आदित्याः । अहेतन । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ६ ॥

"परिह्वृतेत् परिपीडितेनैव तपोनियमादिना "अना प्राणयुक्तः "जनः "युष्मादत्तस्य युष्माभिर्दत्तं धनम् । कर्मणि षष्ठी । “वायति गच्छति । हे "देवाः हे "आशवः शीघ्रगमनाः यूयं "यं यजमानम् “अहेतन प्राप्नुथः स जनः “अदभ्रम् अनल्पं धनं वायति प्राप्नोतीति संबन्धः ।।

न तं ति॒ग्मं च॒न त्यजो॒ न द्रा॑सद॒भि तं गु॒रु ।

यस्मा॑ उ॒ शर्म॑ स॒प्रथ॒ आदि॑त्यासो॒ अरा॑ध्वमने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥७

न । तम् । ति॒ग्मम् । च॒न । त्यजः॑ । न । द्रा॒स॒त् । अ॒भि । तम् । गु॒रु ।

यस्मै॑ । ऊं॒ इति॑ । शर्म॑ । स॒ऽप्रथः॑ । आदि॑त्यासः । अरा॑ध्वम् । अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥७

न । तम् । तिग्मम् । चन। त्यजः । न । द्रासत् । अभि । तम् । गुरु ।

यस्मै । ॐ इति । शर्म । सऽप्रथः । आदित्यासः । अराध्वम् । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥७॥

“तं मनुष्यं "तिग्मं "चन तीक्ष्णमेव सन्तं "त्यजः । क्रोधनामैतत् । अत्र क्रोधात् प्रयुज्यमानमायुधमुच्यते । "न "द्रासत् । 'द्रा कुत्सायां गतौ । कुत्सितं नागच्छति । न हिनस्तीत्यर्थः । तथा “तं जनं "गुरु प्रवृद्धमपरिहारार्हं दुःखं "न द्रासत् न गच्छति । हे आदित्यासः आदित्याः "सप्रथः समानप्रथनाः सर्वतः पृथुभूता वा यूयं "यस्मा "उ यस्मै यजमानाय । उशब्दः पूरणः । "शर्म सुखम् “अराध्वम् अदत्त तं न द्रासदिति ॥

यु॒ष्मे दे॑वा॒ अपि॑ ष्मसि॒ युध्य॑न्त इ॒व वर्म॑सु ।

यूयं म॒हो न॒ एन॑सो यू॒यमर्भा॑दुरुष्यताने॒हसो॑ व ऊ॒तय॑: सुऊ॒तयो॑ व ऊ॒तय॑: ॥८

यु॒ष्मे इति॑ । दे॒वा॒: । अपि॑ । स्म॒सि॒ । युध्य॑न्तःऽइव । वर्म॑ऽसु ।

यू॒यम् । म॒हः । न॒: । एन॑सः । यू॒यम् । अर्भा॑त् । उ॒रु॒ष्य॒त॒ । अ॒ने॒हस॑: । व॒: । ऊ॒तय॑: । सु॒ऽऊ॒तय॑: । व॒: । ऊ॒तय॑: ॥८

युष्मे इति । देवाः । अपि । स्मसि । युध्यन्तःऽइव । वर्मऽसु ।

यूयम् । महः । नः । एनसः । यूयम् । अर्भात् । उरुष्यत । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ८ ॥

हे देवाः आदित्याः "युष्मे युष्मासु वयम् अपि "स्मसि अपि भवेम । युष्माभिरपिहिताः स्मेत्यर्थः । तत्र दृष्टान्तः । "युध्यन्तः शूराः “वर्मसु कवचेषु यथा भवन्ति तद्वत् । "यूयं "नः अस्मान् “महः महतः “एनसः पापात् “उरुष्यत रक्षत । तथा "यूयम् अस्मान् "अर्भात् अल्पादप्येनसः उरुष्यत ॥

अदि॑तिर्न उरुष्य॒त्वदि॑ति॒: शर्म॑ यच्छतु ।

मा॒ता मि॒त्रस्य॑ रे॒वतो॑ऽर्य॒म्णो वरु॑णस्य चाने॒हसो॑ व ऊ॒तय॑: सुऊ॒तयो॑ व ऊ॒तय॑: ॥९

अदि॑तिः । न॒: । उ॒रु॒ष्य॒तु॒ । अदि॑तिः । शर्म॑ । य॒च्छ॒तु॒ ।

मा॒ता । मि॒त्रस्य॑ । रे॒वत॑: । अ॒र्य॒म्णः । वरु॑णस्य । च॒ । अ॒ने॒हस॑: । व॒: । ऊ॒तय॑: । सु॒ऽऊ॒तय॑: । व॒: । ऊ॒तय॑: ॥९

अदितिः । नः । उरुष्यतु । अदितिः । शर्म । यच्छतु ।।

माता । मित्रस्य । रेवतः । अर्यम्णः । वरुणस्य । च ।। अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ९ ॥

“नः अस्मान् "अदितिः अखण्डनीया देवमाता "उरुष्यतु रक्षतु । तथा “अदितिः "शर्म सुखं “यच्छतु । अदितिर्विशेष्यते । या "माता निर्मात्री । कस्य । मित्रस्य "रेवतः धनवतः "अर्यम्णः “वरुणस्य च । सा न उरुष्यत्विति ॥

यद्दे॒वा॒: शर्म॑ शर॒णं यद्भ॒द्रं यद॑नातु॒रम् ।

त्रि॒धातु॒ यद्व॑रू॒थ्यं१॒ तद॒स्मासु॒ वि य॑न्तनाने॒हसो॑ व ऊ॒तय॑: सुऊ॒तयो॑ व ऊ॒तय॑: ॥१०

यत् । दे॒वा॒: । शर्म॑ । श॒र॒णम् । यत् । भ॒द्रम् । यत् । अ॒ना॒तु॒रम् ।

त्रि॒ऽधातु॑ । यत् । व॒रू॒थ्य॑म् । तत् । अ॒स्मासु॑ । वि । य॒न्त॒न॒ । अ॒ने॒हस॑: । व॒: । ऊ॒तय॑: । सु॒ऽऊ॒तय॑: । व॒: । ऊ॒तय॑: ॥१०

यत् । देवाः । शर्म । शरणम् । यत् । भद्रम् । यत् । अनातुरम् ।

त्रिऽधातु । यत् । वरूथ्यम् । तत् । अस्मासु । वि। यन्तन । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १० ॥

हे "देवाः आदित्याः "यत् शर्म सुखं "शरणं शरणीयम् । "यत् "भद्रं सर्वैर्भजनीयम् । “यत् "अनातुरं रोगरहितम् । यत् "त्रिधातु त्रिगुणम् । "यद्वरूथ्यम् । वरूथं गृहम् । तदर्हम् । “तत् उक्तगुणकं शर्म "अस्मासु "वि "यन्तन वियच्छत ॥ ॥ ८ ॥

आदि॑त्या॒ अव॒ हि ख्यताधि॒ कूला॑दिव॒ स्पशः॑ ।

सु॒ती॒र्थमर्व॑तो य॒थानु॑ नो नेषथा सु॒गमं॑ने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥११

आदि॑त्याः । अव॑ । हि । ख्यत॑ । अधि॑ । कूला॑त्ऽइव । स्पशः॑ ।

सु॒ऽती॒र्थम् । अर्व॑तः । य॒था॒ । अनु॑ । नः॒ । ने॒ष॒थ॒ । सु॒ऽगम् । अ॒ने॒हसः॑ । वः॒ । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । वः॒ । ऊ॒तयः॑ ॥११

आदित्याः । अव । हि । ख्यत । अधि । कूलात्ऽइव । स्पशः ।

सुऽतीर्थम् । अर्वतः । यथा । अनु । नः । नेपथ । सुऽगम् ।। अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ ११ ॥

हे "आदित्याः यूयम् "अव "हि “ख्यत अव हि पश्यताधस्तास्थितानस्मान् । तत्र दृष्टान्तः । “कूलात् "अधि कूले "स्पशः स्पष्टाः । स्थिता इत्यर्थः । यथा कूलस्थः पुरुषोऽधोगतमुदकं जिज्ञासुस्तत्रस्थं मनुष्यं वा विलोकयितुमवाक्पश्यति तद्वत् । तथा कृत्वा "सुतीर्थं शोभनावतारप्रदेशम् “अर्वतः अश्वान् “यथा प्रापयन्त्यश्वरक्षकास्तद्वत् "नः अस्मान् "सुगं सुपन्थानम् अनु “नेषथ अनुनयथ ॥

नेह भ॒द्रं र॑क्ष॒स्विने॒ नाव॒यै नोप॒या उ॒त ।

गवे॑ च भ॒द्रं धे॒नवे॑ वी॒राय॑ च श्रवस्य॒ते॑ऽने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥१२

न । इ॒ह । भ॒द्रम् । र॒क्ष॒स्विने॑ । न । अ॒व॒ऽयै । न । उ॒प॒ऽयै । उ॒त ।

गवे॑ । च॒ । भ॒द्रम् । धे॒नवे॑ । वी॒राय॑ । च॒ । श्र॒व॒स्य॒ते । अ॒ने॒हसः॑ । वः॒ । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । वः॒ । ऊ॒तयः॑ ॥१२

न । इह । भद्रम् । रक्षस्विने । न । अवऽयै । न । उपऽयै । उत।

गवे । च । भद्रम् । धेनवे । वीराय । च । श्रवस्यते ।। अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १२ ॥

हे आदित्याः “इह भूमौ "भद्रं कल्याणं सुखं "रक्षस्विने । रक्षो बलम् । बलवतेऽस्मद्द्वेष्ट्रे “न भवत्विति शेषः ।"अवयै अस्मान् हिंसितुमवगच्छते "न भवतु भद्रम् । तथा “उपयै उपगच्छते “न भवतु । तर्हि कस्य भवत्वित्युच्यते । “गवे “च "भद्रं युष्मदीयं भवतु । चशब्दो वक्ष्यमाणधेन्वाद्यपेक्षः। किंच “धेनवे नवप्रसूतिकायै भद्रं भवतु । "वीराय अस्मत्पुत्रादिकाय भद्रं भवतु । कीदृशाय वीराय । "श्रवस्यते अन्नमिच्छते । अथवोत्तरार्धेऽपि नेत्यनुवर्तते । अस्मद्विरोधिनो गवादिकाय भद्रं न भवत्विति तस्यार्थः ॥

यदा॒विर्यद॑पी॒च्यं१॒॑ देवा॑सो॒ अस्ति॑ दुष्कृ॒तम् ।

त्रि॒ते तद्विश्वं॑मा॒प्त्य आ॒रे अ॒स्मद्दं॑धातनाने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥१३

यत् । आ॒विः । यत् । अ॒पी॒च्यं॑म् । देवा॑सः । अस्ति॑ । दुः॒ऽकृ॒तम् ।

त्रि॒ते । तत् । विश्वं॑म् । आ॒प्त्ये । आ॒रे । अ॒स्मत् । द॒धा॒त॒न॒ । अ॒ने॒हसः॑ । वः॒ । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । वः॒ । ऊ॒तयः॑ ॥१३

यत् । आविः । यत् । अपीच्यम् । देवासः । अस्ति । दुःऽकृतम् ।

त्रिते । तत् । विश्वम् । आप्त्ये । आरे । अस्मत् । दधातन । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १३ ॥

हे देवासः देवा आदित्याः यदाविः यत् पापमाविर्भूतम् "अस्ति । "दुष्कृतं "यत् च “अपीच्यम् अन्तर्हितमस्ति । ‘ अपीच्यम्' इत्यन्तर्हितनाम । "तद्विश्वं तदुभयम् "आप्त्ये “त्रिते मयि मा भूत्। किंतु “अस्मत् "आरे दूरे "दधातन स्थापयत ॥

‘यञ्च गोषु' इत्यादिसूक्तशेषेण दुःस्वप्नं दृष्ट्वादित्यमुपतिष्ठेत । तथा च स्वप्नममनोज्ञं दृष्ट्वा' इत्युपक्रम्य ' यच्च गोषु दुष्वप्न्यमिति पञ्चभिरादित्यमुपतिष्ठेत' (आश्व. गृ. ३. ६. ६) इति सूत्रितम् ॥

यच्च॒ गोषु॑ दु॒ष्ष्वप्न्यं॒ यच्चा॒स्मे दु॑हितर्दिवः ।

त्रि॒ताय॒ तद्विं॑भावर्या॒प्त्याय॒ परा॑ वहाने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥१४

यत् । च॒ । गोषु॑ । दुः॒ऽस्वप्न्यं॑म् । यत् । च॒ । अ॒स्मे इति॑ । दु॒हि॒तः॒ । दि॒वः॒ ।

त्रि॒ताय॑ । तत् । वि॒भा॒ऽव॒रि॒ । आ॒प्त्याय॑ । परा॑ । व॒ह॒ । अ॒ने॒हसः॑ । वः॒ । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । वः॒ । ऊ॒तयः॑ ॥१४

यत् । च । गोषु । दुःस्वप्न्यम् । यत् । च । अस्मे इति । दुहितः । दिवः ।

त्रिताय । तत् । विभाऽवरि । आप्त्याय । परा । वह ।। अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः । ॥ १४ ॥

हे "दिवः “दुहितः उषः उषोदेवते "यच्च गोषु अस्मदीयासु “दुष्वप्न्यम् अनर्थसूचकं दृष्टम् । स्वार्थिको यत् । किंच “यच्च दुष्वप्न्यम् "अस्मे अस्मासु दृष्टम् । गोपीडानिमित्तकमस्माकं पीडानिमित्तकं च यद्दुःस्वप्नं पश्याम इत्यर्थः । तत् सर्वं हे "विभावरि । उषोनामैतत् । हे व्युच्छनवति देवि “आप्त्याय "त्रिताय "परा “वह दूरे परिहर ।।।

नि॒ष्कं वा॑ घा कृ॒णव॑ते॒ स्रजं॑ वा दुहितर्दिवः ।

त्रि॒ते दु॒ष्ष्वप्न्यं॒ सर्वं॑मा॒प्त्ये परिं॑ दद्मस्यने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥१५

नि॒ष्कम् । वा॒ । घ॒ । कृ॒णव॑ते । स्रजं॑म् । वा॒ । दु॒हि॒तः॒ । दि॒वः॒ ।

त्रि॒ते । दुः॒ऽस्वप्न्यं॑म् । सर्वं॑म् । आ॒प्त्ये । परिं॑ । द॒द्म॒सि॒ । अ॒ने॒हसः॑ । वः॒ । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । वः॒ । ऊ॒तयः॑ ॥१५

निष्कम् । वा । घ । कृणवते । स्रजम् । वा। दुहितः । दिवः ।।

त्रिते । दुःस्वप्न्यम् । सर्वम् । आप्त्ये । परि । दद्मसि । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १५ ॥

हे "दिवः "दुहितः उषः "निष्कं वा "घ आभरणविशेषं वा "कृणवते कुर्वते स्वर्णकाराय यत् "दुष्वप्न्यं दृष्टम् । स्वर्णकारेण निर्माणसमये दृष्टमित्यर्थः । घेति पूरणः । वाशब्दश्चार्थे । "वा अथवा "स्रजं माल्यं कृणवते । कुर्वाण इत्यर्थः । तस्मिन्नपि मालाकारे मालानिर्माणसमये यद्दुष्वप्न्यं दृष्टं तदुभयविषयं दुःस्वप्नम् "आप्त्ये अपां पुत्रे "त्रिते वर्तमानं "परि "दद्मसि उपरि दद्मः । वयं त्रिताः परित्यजामेत्यर्थः । अथवा । त्रिते मयि यत् दुष्वप्न्यं दृष्टं तत् स्वर्णकाराय मालाकाराय वा परि दद्मसि । अस्मत्तोऽपि निष्कृष्य तयोरुपरि स्थापयामः ॥ ॥ ९ ॥

तद॑न्नाय॒ तद॑पसे॒ तं भा॒गमु॑पसे॒दुषे॑ ।

त्रि॒ताय॑ च द्वि॒ताय॒ चोषो॑ दु॒ष्ष्वप्न्यं॑ वहाने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥१६

तत्ऽअ॑न्नाय । तत्ऽअ॑पसे । तम् । भा॒गम् । उ॒प॒ऽसे॒दुषे॑ ।

त्रि॒ताय॑ । च॒ । द्वि॒ताय॑ । च॒ । उषः॑ । दु॒ःऽस्वप्न्य॑म् । व॒ह॒ । अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥१६

तत्ऽअन्नाय । तत्ऽअपसे । तम् । भागम् । उपऽसेदुषे ।।

त्रिताय । च। द्विताय । च । उषः । दुःऽस्वप्न्यम् । वह ।। अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १६ ॥

"तदन्नाय । यदेव जागरावस्थायां भोज्यत्वेन प्रसिद्धं मधुपयसादि स्वप्नेऽपि तदेवान्नं यस्य सः । तादृशाय । प्रत्यक्षभोजनवत् स्वप्नेऽपि भोक्त्र इत्यर्थः। तथा "तदपसे । यदेवापः कर्म निन्दितं जाग्रदवस्थायां क्रियते तदेव कर्म स्वप्ने यस्य स तत्कर्मा । तादृशाय देवाय "तं "भागं दुःस्वप्नस्यांशम् "उपसेदुषे प्राप्नुवते "त्रिताय "द्विताय "च हे "उषः देवि "दुष्वप्न्यम् अन्नकर्मविषयं "वह अन्यत्र प्रापय । स्वप्ने दृष्टं मधुभोजनादिकं जाग्रदवस्थानुभूतवत् सुखकरं भवत्वित्यर्थः ॥

यथा॑ क॒लां यथा॑ श॒फं यथ॑ ऋ॒णं सं॒नया॑मसि ।

ए॒वा दु॒ष्ष्वप्न्यं॒ सर्वं॑मा॒प्त्ये सं नं॑यामस्यने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥१७

यथा॑ । क॒लाम् । यथा॑ । श॒फम् । यथा॑ । ऋ॒णम् । स॒म्ऽनया॑मसि ।

ए॒व । दु॒ःऽस्वप्न्य॑म् । सर्व॑म् । आ॒प्त्ये । सम् । न॒या॒म॒सि॒ । अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥१७

यथा । कलाम् । यथा । शफम् । यथा । ऋणम् । सम्ऽनयामसि ।

एव । दुःस्वप्न्यम् । सर्वम् । आप्त्ये । सम् । नयामसि । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १७ ॥

संज्ञपितं पशुं दानार्थं संस्कुर्वन्तः यथा येन प्रकारेण "कलां "शफम् इति संदायान्यत्र संनयन्ति । अथापरो यथाशब्दः पूरणः । अथवा । यथा कलां हृदयाद्यवयवमवदानार्हं संनयन्ति यथा च शफं शफोपलक्षितमनवदानार्हं शफास्थ्यादिकं संनयन्ति । यथा वा “ऋणं शनैः संनयन्ति “एव एवं "दुष्ष्वप्न्यं "सर्वमाप्त्ये वर्तमानं “सं "नयामसि संनयामः अपसारयामः ।।

अजैष्मा॒द्यास॑नाम॒ चाभू॒माना॑गसो व॒यम् ।

उषो॒ यस्मा॑द्दु॒ष्ष्वप्न्या॒दभै॒ष्माप॒ तदु॑च्छत्वने॒हसो॑ व ऊ॒तयः॑ सुऊ॒तयो॑ व ऊ॒तयः॑ ॥१८

अजै॑ष्म । अ॒द्य । अस॑नाम । च॒ । अभू॑म । अना॑गसः । व॒यम् ।

उषः॑ । यस्मा॑त् । दुः॒ऽस्वप्न्या॑त् । अभै॑ष्म । अप॑ । तत् । उ॒च्छ॒तु॒ । अ॒ने॒हसः॑ । व॒ः । ऊ॒तयः॑ । सु॒ऽऊ॒तयः॑ । व॒ः । ऊ॒तयः॑ ॥१८

अजैष्म । अद्य । असनाम । च । अभूम । अनागसः । वयम् ।

उषः । यस्मात् । दुःऽस्वप्न्यात् । अभैष्म । अप । तत् । उच्छतु । अनेहसः । वः । ऊतयः । सुऽऊतयः । वः । ऊतयः ॥ १८ ॥

“वयं त्रिताः अद्य अजैष्म जयेम । "असनाम "च संभजेम च सुस्वप्नं सुखं वा । "अनागसः अपापाः "अभूम भवेम । हे "उषः "यस्मात् दुष्वप्न्यात् "अभैष्म भीताः स्म "तत् पापम् "अप “उच्छतु अपगच्छतु ॥ ॥ १० ॥

---

- ८.४७.१७ कला उपरि टिप्पणी (https://vedastudy.weebly.com/kalaa.html)

# ऋग्वेदः सूक्तं ८.४८

ऋग्वेदः - मण्डल ८
← सूक्तं ८.४७ सूक्तं ८.४८ सूक्तं ८.४९ →
प्रगाथो घौरः काण्वः।

दे. सोमः। त्रिष्टुप्, ५ जगती

स्वादोरभक्षि वयसः सुमेधाः स्वाध्यो वरिवोवित्तरस्य ।

विश्वे यं देवा उत मर्त्यासो मधु ब्रुवन्तो अभि संचरन्ति ॥१॥

अन्तश्च प्रागा अदितिर्भवास्यवयाता हरसो दैव्यस्य ।

इन्दविन्द्रस्य सख्यं जुषाणः श्रौष्टीव धुरमनु राय ऋध्याः ॥२॥

अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान् ।

किं नूनमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥३॥

शं नो भव हृद आ पीत इन्दो पितेव सोम सूनवे सुशेवः ।

सखेव सख्य उरुशंस धीरः प्र ण आयुर्जीवसे सोम तारीः ॥४॥

इमे मा पीता यशस उरुष्यवो रथं न गावः समनाह पर्वसु ।

ते मा रक्षन्तु विस्रसश्चरित्रादुत मा स्रामाद्यवयन्त्विन्दवः ॥५॥

अग्निं न मा मथितं सं दिदीपः प्र चक्षय कृणुहि वस्यसो नः ।

अथा हि ते मद आ सोम मन्ये रेवाँ इव प्र चरा पुष्टिमच्छ ॥६॥

इषिरेण ते मनसा सुतस्य भक्षीमहि पित्र्यस्येव रायः ।

सोम राजन्प्र ण आयूंषि तारीरहानीव सूर्यो वासराणि ॥७॥

सोम राजन्मृळया नः स्वस्ति तव स्मसि व्रत्यास्तस्य विद्धि ।

अलर्ति दक्ष उत मन्युरिन्दो मा नो अर्यो अनुकामं परा दाः ॥८॥

त्वं हि नस्तन्वः सोम गोपा गात्रेगात्रे निषसत्था नृचक्षाः ।

यत्ते वयं प्रमिनाम व्रतानि स नो मृळ सुषखा देव वस्यः ॥९॥

ऋदूदरेण सख्या सचेय यो मा न रिष्येद्धर्यश्व पीतः ।

अयं यः सोमो न्यधाय्यस्मे तस्मा इन्द्रं प्रतिरमेम्यायुः ॥१०॥

अप त्या अस्थुरनिरा अमीवा निरत्रसन्तमिषीचीरभैषुः ।

आ सोमो अस्माँ अरुहद्विहाया अगन्म यत्र प्रतिरन्त आयुः ॥११॥

यो न इन्दुः पितरो हृत्सु पीतोऽमर्त्यो मर्त्याँ आविवेश ।

तस्मै सोमाय हविषा विधेम मृळीके अस्य सुमतौ स्याम ॥१२॥

त्वं सोम पितृभिः संविदानोऽनु द्यावापृथिवी आ ततन्थ ।

तस्मै त इन्दो हविषा विधेम वयं स्याम पतयो रयीणाम् ॥१३॥

त्रातारो देवा अधि वोचता नो मा नो निद्रा ईशत मोत जल्पिः ।

वयं सोमस्य विश्वह प्रियासः सुवीरासो विदथमा वदेम ॥१४॥

त्वं नः सोम विश्वतो वयोधास्त्वं स्वर्विदा विशा नृचक्षाः ।

त्वं न इन्द ऊतिभिः सजोषाः पाहि पश्चातादुत वा पुरस्तात् ॥१५॥

**सायणभाष्यम्**

‘ स्वादोरभक्षि' इति पञ्चदशर्चं षष्ठं सूक्तं काण्वस्य प्रगाथस्यार्षं सोमदेवताकं त्रैष्टुभम् । पञ्चमी जगती । सोमो देवता । तथा चानुकान्तं- स्वादोः पञ्चोना प्रगाथः सौम्यं त्रैष्टुभं पञ्चमी जगती' इति । सूक्तविनियोगो लैङ्गिकः ॥

स्वा॒दोर॑भक्षि॒ वय॑सः सुमे॒धाः स्वा॒ध्यो॑ वरिवो॒वित्त॑रस्य ।

विश्वे॒ यं दे॒वा उ॒त मर्त्या॑सो॒ मधु॑ ब्रु॒वन्तो॑ अ॒भि सं॒चर॑न्ति ॥१

स्वा॒दोः । अ॒भ॒क्षि॒ । वय॑सः । सु॒ऽमे॒धाः । सु॒ऽआ॒ध्यः॑ । व॒रि॒वो॒वित्ऽत॑रस्य ।

विश्वे॑ । यम् । दे॒वाः । उ॒त । मर्त्या॑सः । मधु॑ । ब्रु॒वन्तः॑ । अ॒भि । स॒म्ऽचर॑न्ति ॥१

स्वादोः । अभक्षि । वयसः । सुऽमेधाः । सुऽआध्यः । वरिवोवित्ऽतरस्य ।

विश्वे । यम् । देवाः । उत । मर्त्यासः । मधु । ब्रुवन्तः । अभि । सम्ऽचरन्ति ॥१

अहं प्रगाथः "सुमेधाः शोभनप्रज्ञः "स्वाध्यः स्वाध्ययनः सुकर्मा वरिवोवित्तरस्य अतिशयेन पूजां लभमानस्य "स्वादोः सुष्ठ्वदनीयस्य स्वादुभूतस्य "वयसः अन्नस्य । एताः कर्मणि षष्ठ्यः । उक्तलक्षणं वयोऽन्नं सोमाख्यम् "अभक्षि भक्षयेयः। "यं यदन्नं "विश्वे "देवाः सर्वेऽपीन्द्रादयः "उत अपि च "मर्त्यासः मर्त्या मनुष्याः "मधु "ब्रुवन्तः मनोहरमेतदिति शब्दायन्तः "अभि "संचरन्ति अभिसंगच्छन्ते प्राप्नुवन्ति तदन्नमभक्षीति ।।

अग्नीषोमप्रणयने ' अन्तश्च ' इत्येषा । तथा च सूत्रितम् - ' अन्तश्च प्रागा अदितिर्भवासि श्येनो न योनिं सदनं धिया कृतम् ' ( आश्व. श्रौ. ४. १०) इति ॥

अ॒न्तश्च॒ प्रागा॒ अदि॑तिर्भवास्यवया॒ता हर॑सो॒ दैव्य॑स्य ।

इन्द॒विन्द्र॑स्य स॒ख्यं जु॑षा॒णः श्रौष्टी॑व॒ धुर॒मनु॑ रा॒य ऋ॑ध्याः ॥२

अ॒न्तरिति॑ । च॒ । प्र । अगाः॑ । अदि॑तिः । भ॒वा॒सि॒ । अ॒व॒ऽया॒ता । हर॑सः । दैव्य॑स्य ।

इन्दो॒ इति॑ । इन्द्र॑स्य । स॒ख्यम् । जु॒षा॒णः । श्रौष्टी॑ऽइव । धुर॑म् । अनु॑ । रा॒ये । ऋ॒ध्या॒ः ॥२

अन्तरिति । च । प्र । अगाः । अदितिः । भवासि । अवऽयाता । हरसः । दैव्यस्य ।

इन्दो इति । इन्द्रस्य । सख्यम् । जुषाणः । श्रौष्टीऽइव । धुरम् । अनु । राये । ऋध्याः ॥२

हे सोम त्वम् "अन्तश्च "प्रागाः । हृदयस्य यागागारस्य वान्तर्गच्छसि । गत्वा च "अदितिः अदीनस्त्वं "दैव्यस्य "हरसः क्रोधस्य "अवयाता पृथक्कर्ता "भवासि भवसि । हर इति क्रोधनाम । हे "इन्दो सोम त्वम् "इन्द्रस्य "सख्यं जुषाणः सेवमानः "श्रौष्टी । श्रुष्टीति क्षिप्रनाम । तत्संबन्धी श्रौष्टी । क्षिप्रगाम्यश्वः "धुरम् "इव "राये अस्माकं धनलाभाय "अनु "ऋध्याः अनुगच्छसि । अथवाश्वो यथा धुरं वृत्त्वाभिमतदेशं प्रापयति तद्वदस्मान् प्रापय। अनुपूर्वं ऋधिर्गत्यर्थः।।

'अपाम सोमम्' इत्यादिके द्वे सोमपानोत्तरकालीनस्याभिमर्शने हृदयाभिमर्शने च क्रमेण विनियुक्ते । तथा च सूत्रितम् - ' अपाम सोमममृता अभूम शं नो भव हृद आ पीत इन्दविति मुखहृदये अभिमृशेरन् ' (आश्व. श्रौ ५, ६) इति ॥

अपा॑म॒ सोम॑म॒मृता॑ अभू॒माग॑न्म॒ ज्योति॒रवि॑दाम दे॒वान् ।

किं नू॒नम॒स्मान्कृ॑णव॒दरा॑ति॒ः किमु॑ धू॒र्तिर॑मृत॒ मर्त्य॑स्य ॥३

अपा॑म । सोम॑म् । अ॒मृताः॑ । अ॒भू॒म॒ । अग॑न्म । ज्योतिः॑ । अवि॑दाम । दे॒वान् ।

किम् । नू॒नम् । अ॒स्मान् । कृ॒ण॒व॒त् । अरा॑तिः । किम् । ऊं॒ इति॑ । धू॒र्तिः । अ॒मृ॒त॒ । मर्त्य॑स्य ॥३

अपाम । सोमम् । अमृताः । अभूम । अगन्म । ज्योतिः । अविदाम । देवान् ।

किम् । नूनम् । अस्मान् । कृणवत् । अरातिः । किम् । ऊं इति । धूर्तिः । अमृत । मर्त्यस्य ॥३

हे अमृत अमरण सोम त्वाम् "अपाम पानं करवाम। कुर्मः। ततः "अमृताः "अभूम भवेम । यस्मात्त्वममृतः अतस्तव पानाद्वयमप्यमृताः स्याम । पश्चात् "ज्योतिः द्योतमानं स्वर्गम् “अगन्म। "अविदाम ज्ञातवन्तः "देवान् । तथाभूतान् "अस्मान् "नूनम् इदानीम् "अरातिः शत्रुः "किं "कृणवत् कुर्यात् । "किमु किं वा “मर्त्यस्य इदानीं मनुष्यभूतस्य मम “धूर्तिः हिंसकः किं कृणवत् कुर्यात् ॥

शं नो॑ भव हृ॒द आ पी॒त इ॑न्दो पि॒तेव॑ सोम सू॒नवे॑ सु॒शेवः॑ ।

सखे॑व॒ सख्य॑ उरुशं॒स॒ धीर॒ः प्र ण॒ आयु॑र्जी॒वसे॑ सोम तारीः ॥४

शम् । न॒ः । भ॒व॒ । हृ॒दे । आ । पी॒तः । इ॒न्दो॒ इति॑ । पि॒ताऽइ॑व । सो॒म॒ । सू॒नवे॑ । सु॒ऽशेवः॑ ।

सखा॑ऽइव । सख्ये॑ । उ॒रु॒ऽश॒ंस॒ । धीरः॑ । प्र । न॒ः । आयुः॑ । जी॒वसे॑ । सो॒म॒ । ता॒री॒ः ॥४

शम् । नः । भव । हृदे । आ । पीतः । इन्दो इति । पिताऽइव । सोम । सूनवे । सुऽशेवः ।

सखाऽइव । सख्ये । उरुऽशंस । धीरः । प्र । नः । आयुः । जीवसे । सोम । तारीः ॥४

हे “इन्दो "सोम अस्माभिः “पीतः त्वं "नः अस्माकं हृदे हृदयाय “शं सुखम् "आ “भव। सुखभवने दृष्टान्तद्वयम् । “पिता “सूनवे स्वात्मजाय यथा सुखाय भवति यथा वा "सखा अहितान्निवर्त्य हिते स्थापयिता सखा स स्वसख्ये यथा "सुशेवः सुसुखो भवति । शेवमिति सुखनाम । तद्वत्वमपि भव । किंच हे उरुशंस बहुभिर्बहुधा वा शंसनीय बहुकीर्ते “सोम “धीरः। धीमांस्त्वं "नः अस्माकं "जीवसे जीवनाय "आयुः आयुष्यं “प्र “तारीः प्रवर्धय ॥

इ॒मे मा॑ पी॒ता य॒शस॑ उरु॒ष्यवो॒ रथ॒ं न गाव॒ः सम॑नाह॒ पर्व॑सु ।

ते मा॑ रक्षन्तु वि॒स्रसं॑श्च॒रित्रा॑दु॒त मा॒ स्रामा॑द्यवय॒न्त्विन्द॑वः ॥५

इ॒मे । मा॒ । पी॒ताः । य॒शसः॑ । उ॒रु॒ष्यवः॑ । रथ॑म् । न । गावः॑ । सम् । अ॒ना॒ह॒ । पर्व॑ऽसु ।

ते । मा॒ । र॒क्ष॒न्तु॒ । वि॒ऽस्रसः॑ । च॒रित्रा॑त् । उ॒त । मा॒ । स्रामा॑त् । य॒व॒य॒न्तु॒ । इन्द॑वः ॥५

इमे । मा । पीताः । यशसः । उरुष्यवः । रथम् । न । गावः । सम् । अनाह । पर्वऽसु ।

ते । मा । रक्षन्तु । विऽस्रसः । चरित्रात् । उत । मा । स्रामात् । यवयन्तु । इन्दवः ॥५

“इमे “पीताः "यशसः यशस्कराः "उरुष्यवः अस्माकं रक्षाकामाः सोमाः “गावः गोविकारभूता वध्र्यः "रथं "न रथमिव ता यथा रथं विस्रस्तं “पर्वसु “समनाह संदधते तद्वत् मां पीताः सोमाः पर्वसु संनह्यन्तु । किंच "ते सोमाः “मा मां “विस्रसः विस्रस्तात् "चरित्रात् चरणादनुष्ठानात् "रक्षन्तु । सोमः पीतश्चेत् कर्म ह्यविस्रस्तं भवति । “उत अपि च “मा मां “स्रामात् व्याधेः सकाशात् "इन्दवः पीताः "यवयन्तु पृथक्कुर्वन्तु ॥ ॥ ११ ॥

अ॒ग्निं न मा॑ मथि॒तं सं दि॑दीप॒ः प्र च॑क्षय कृणु॒हि वस्य॑सो नः ।

अथा॒ हि ते॒ मद॒ आ सो॑म॒ मन्ये॑ रे॒वाँ इ॑व॒ प्र च॑रा पु॒ष्टिमच्छ॑ ॥६

अ॒ग्निम् । न । मा॒ । म॒थि॒तम् । सम् । दि॒दी॒पः॒ । प्र । च॒क्ष॒य॒ । कृ॒णु॒हि । वस्य॑सः । नः॒ ।

अथ॑ । हि । ते॒ । मदे॑ । आ । सो॒म॒ । मन्ये॑ । रे॒वान्ऽइ॑व । प्र । च॒र॒ । पु॒ष्टिम् । अच्छ॑ ॥६

अग्निम् । न । मा । मथितम् । सम् । दिदीपः । प्र । चक्षय । कृणुहि । वस्यसः । नः ।

अथ । हि । ते । मदे । आ । सोम । मन्ये । रेवान्ऽइव । प्र । चर । पुष्टिम् । अच्छ ॥६

हे सोम पीतस्त्वं “मा मां "मथितम् "अग्निं "न अग्निमिव "सं “दिदीपः संदीपय । “प्र “चक्षय च चक्षुषः संधुक्षणेन । “नः अस्मान् “वस्यसः अतिशयेन वसुमतः "कृणुहि कुरु । “अथ अधुना “हि खलु “ते त्वां हे “सोम “मदे मदाय “मन्ये स्तौमि । तथा सति “रेवानिव धनवानिह । इवेति संप्रत्यर्थे। “पुष्टिम् अस्मत्पोषम् "अच्छ “प्र “चर अभिगच्छ ॥

इ॒षि॒रेण॑ ते॒ मन॑सा सु॒तस्य॑ भक्षी॒महि॒ पित्र्य॑स्येव रा॒यः ।

सोम॑ राज॒न्प्र ण॒ आयूं॑षि तारी॒रहा॑नीव॒ सूर्यो॑ वास॒राणि॑ ॥७

इ॒षि॒रेण॑ । ते॒ । मन॑सा । सु॒तस्य॑ । भ॒क्षी॒महि॑ । पित्र्य॑स्यऽइव । रा॒यः ।

सोम॑ । रा॒ज॒न् । प्र । नः॒ । आयूं॑षि । ता॒री॒ः । अहा॑निऽइव । सूर्यः॑ । वा॒स॒राणि॑ ॥७

इषिरेण । ते । मनसा । सुतस्य । भक्षीमहि । पित्र्यस्यऽइव । रायः ।

सोम । राजन् । प्र । नः । आयूंषि । तारीः । अहानिऽइव । सूर्यः । वासराणि ॥७

“इषिरेण इच्छावता "मनसा "सुतस्य “ते सुतमभिषुतं त्वां “भक्षीमहि । "पित्र्यस्य पितृसंबन्धिनो धनस्येव धनमिव । पित्र्यं धनं यथैषणेन मनसोपभुञ्जते तद्वत् । भक्षित हे "सोम “राजन स्वामिन् "नः अस्माकम् “आयूंषि “प्र “तारीः प्रवर्धय । “वासराणि जगद्वासकानि "अहानि "सूर्यः इव । अत्र ‘ईषणेन वैषणेन वार्षणेन वा ’ (निरु. ४, ७) इत्यादि निरुक्तं ज्ञातव्यम् ॥

सोम॑ राजन्मृ॒ळया॑ नः स्व॒स्ति तव॑ स्मसि व्र॒त्या३॒॑स्तस्य॑ विद्धि ।

अल॑र्ति॒ दक्ष॑ उ॒त म॒न्युरि॑न्दो॒ मा नो॑ अ॒र्यो अ॑नुका॒मं परा॑ दाः ॥८

सोम॑ । रा॒ज॒न् । मृ॒ळय॑ । न॒ः । स्व॒स्ति । तव॑ । स्म॒सि॒ । व्र॒त्याः॑ । तस्य॑ । वि॒द्धि॒ ।

अल॑र्ति । दक्षः॑ । उ॒त । म॒न्युः । इ॒न्दो॒ इति॑ । मा । न॒ः । अ॒र्यः । अ॒नु॒ऽका॒मम् । परा॑ । दा॒ः ॥८

सोम । राजन् । मृळय । नः । स्वस्ति । तव । स्मसि । व्रत्याः । तस्य । विद्धि ।

अलर्ति । दक्षः । उत । मन्युः । इन्दो इति । मा । नः । अर्यः । अनुऽकामम् । परा । दाः ॥८

हे "सोम "राजन् "नः अस्मान् "स्वस्ति अविनाशाय "मृळय सुखय च । “व्रत्याः व्रतिनो वयं "तव "स्मसि स्वभूताः स्मः । "तस्य तं स्वकीयं तव "विद्धि जानीहि । अथवा तव त्वमित्यर्थः । त्वं जानीहि । किंच हे "इन्दो "दक्षः प्रवृद्धोऽस्मच्छत्रुः “अलर्ति गच्छति । "उत अपि च "मन्युः क्रोधः क्रुद्धो वा अलर्ति । तादृशस्योभयविधस्य "अर्यः अरेः "अनुकामं थथाकामं “नः अस्मान् “मा "परा "दाः परादेहि ॥

त्वं हि न॑स्त॒न्वः॑ सोम गो॒पा गात्रे॑गात्रे निष॒सत्था॑ नृ॒चक्षाः॑ ।

यत्ते॑ व॒यं प्र॑मि॒नाम॑ व्र॒तानि॒ स नो॑ मृळ सुष॒खा दे॑व॒ वस्यः॑ ॥९

त्वम् । हि । न॒ः । त॒न्वः॑ । सो॒म॒ । गो॒पाः । गात्रे॑ऽगात्रे । नि॒ऽस॒सत्थ॑ । नृ॒ऽचक्षाः॑ ।

यत् । ते॒ । व॒यम् । प्र॒ऽमि॒नाम॑ । व्र॒तानि॑ । सः । न॒ः । मृ॒ळ॒ । सु॒ऽस॒खा । दे॒व॒ । वस्यः॑ ॥९

त्वम् । हि । नः । तन्वः । सोम । गोपाः । गात्रेऽगात्रे । निऽससत्थ । नृऽचक्षाः ।

यत् । ते । वयम् । प्रऽमिनाम । व्रतानि । सः । नः । मृळ । सुऽसखा । देव । वस्यः ॥९

हे "सोम देव “त्वं "नः अस्माकं "तन्वः तनोरङ्गस्य "गोपाः “हि रक्षिता खलु । अतः “गात्रेगात्रे सर्वेष्वङ्गेषु "नृचक्षाः नृणां कर्मनेतॄणां द्रष्टा त्वं “निषसत्थ निषीदसि । "यत् यद्यपि “ते तव “व्रतानि कमणि “वयं “प्रमिनाम हिंस्मः तथापि हे "देव "सः त्वं वस्यः श्रेष्ठान “नः अस्मान् "सुषखा शोभनसखा सन् "मृळ सुखय ॥

ऋ॒दू॒दरे॑ण॒ सख्या॑ सचेय॒ यो मा॒ न रिष्ये॑द्धर्यश्व पी॒तः ।

अ॒यं यः सोमो॒ न्यधा॑य्य॒स्मे तस्मा॒ इन्द्रं॑ प्र॒तिर॑मे॒म्यायुः॑ ॥१०

ऋ॒दू॒दरे॑ण । सख्या॑ । स॒चे॒य॒ । यः । मा॒ । न । रिष्ये॑त् । ह॒रि॒ऽअ॒श्व॒ । पी॒तः ।

अ॒यम् । यः । सोमः॑ । नि । अधा॑यि । अ॒स्मे इति॑ । तस्मै॑ । इन्द्र॑म् । प्र॒ऽतिर॑म् । ए॒मि॒ । आयुः॑ ॥१०

ऋदूदरेण । सख्या । सचेय । यः । मा । न । रिष्येत् । हरिऽअश्व । पीतः ।

अयम् । यः । सोमः । नि । अधायि । अस्मे इति । तस्मै । इन्द्रम् । प्रऽतिरम् । एमि । आयुः ॥१०

अहं प्रगाथः "ऋदूदरेण उदराबाधकेन सोमेन "सख्या "सचेय संगच्छेय । संगतो भवामि । ' ऋदूदरः सोमो मृदूदरः' (निरु. ६. ४) इति यास्कः । "यः सोमः "पीतः सन् "मा मां "न "रिष्येत् न हिंस्येत् हे "हर्यश्व इन्द्र । सौम्ये सूक्त इन्द्रस्य कीर्तनं सोमस्येन्द्रस्वामिकत्वान्न विरुद्धम् । "यः "अयं "सोमः "अस्मे अस्मासु "न्यधायि निहितोऽभूत् "तस्मै सोमाय "प्रतिरम् "आयुः जठरे चिरकालावस्थानम् "इन्द्रम् "एमि याचे ॥ ॥ १२ ॥

अप॒ त्या अ॑स्थु॒रनि॑रा॒ अमी॑वा॒ निर॑त्रस॒न्तमि॑षीची॒रभै॑षुः ।

आ सोमो॑ अ॒स्माँ अ॑रुह॒द्विहा॑या॒ अग॑न्म॒ यत्र॑ प्रति॒रन्त॒ आयुः॑ ॥११

अप॑ । त्याः । अ॒स्थुः॒ । अनि॑राः । अमी॑वाः । निः । अ॒त्र॒स॒न् । तमि॑षीचीः । अभै॑षुः ।

आ । सोमः॑ । अ॒स्मान् । अ॒रु॒ह॒त् । विऽहा॑याः । अग॑न्म । यत्र॑ । प्र॒ऽति॒रन्ते॑ । आयुः॑ ॥११

अप । त्याः । अस्थुः । अनिराः । अमीवाः । निः । अत्रसन् । तमिषीचीः । अभैषुः ।

आ । सोमः । अस्मान् । अरुहत् । विऽहायाः । अगन्म । यत्र । प्रऽतिरन्ते । आयुः ॥११

"त्याः ताः "अनिराः प्रेरयितुमशक्याः "अमीवाः बलवत्यः पीडाः "अप "अस्थुः अपगच्छन्तु । याः "तमिषीचीः बलवत्योऽस्मान् "निः नितराम् "अत्रसन प्राप्नुवन् कम्पयन्ति तथा "अभैषुः । अपगमे कारणमाह । यस्मात् "सोमः "विहायाः महान् सन् "अस्मान् "आ "अरुहत् आगमत् प्राप्तवान् अतोऽपास्थुरिति भावः । "यत्र यस्मिन् सोमे पीते "आयुः आयुष्यं "प्रतिरन्ते वर्धयन्ति मनुष्यास्तं सोमम् "अगन्म इति ॥

यो न॒ इन्दुः॑ पितरो हृ॒त्सु पी॒तोऽम॑र्त्यो॒ मर्त्याँ॑ आवि॒वेश॑ ।

तस्मै॒ सोमा॑य ह॒विषा॑ विधेम मृळी॒के अ॑स्य सुम॒तौ स्या॑म ॥१२

यः । न॒ः । इन्दुः॑ । पि॒त॒र॒ः । हृ॒त्ऽसु । पी॒तः । अम॑र्त्यः । मर्त्या॑न् । आ॒ऽवि॒वेश॑ ।

तस्मै॑ । सोमा॑य । ह॒विषा॑ । वि॒धे॒म॒ । मृ॒ळी॒के । अ॒स्य॒ । सु॒ऽम॒तौ । स्या॒म॒ ॥१२

यः । नः । इन्दुः । पितरः । हृत्ऽसु । पीतः । अमर्त्यः । मर्त्यान् । आऽविवेश ।

तस्मै । सोमाय । हविषा । विधेम । मृळीके । अस्य । सुऽमतौ । स्याम ॥१२

हे "पितरः “यः इन्दुः "हृत्सु "पीतः सन् "अमर्त्यः मृतिरहितः सन् “आविवेश "मर्त्यान् “नः अस्मान् "तस्मै "सोमाय "हविषा "विधेम परिचरेम । "अस्य सोमस्य "मृळीके सुखे "सुमतौ चानुग्रहबुद्धौ च "स्याम भवेम ॥

महापितृयज्ञे ‘सोमाय पितृमते पुरोडाशम्' इत्यत्र ‘ त्वं सोम' इति याज्या । सूत्रितं च – ‘ त्वं सोम पितृभिः संविदानो बर्हिषदः पितर ऊत्यर्वाक्' ( आश्व. श्रौ. २. १९) इति । तृतीयसवने सौम्यस्य चरोपीयं याज्या ।' त्वं सोम पितृभिः संविदान इति सौम्यस्य' (आश्व. श्रौ. ५, १९ ) इति हि सूत्रितम् ।।

त्वं सो॑म पि॒तृभिः॑ संविदा॒नोऽनु॒ द्यावा॑पृथि॒वी आ त॑तन्थ ।

तस्मै॑ त इन्दो ह॒विषा॑ विधेम व॒यं स्या॑म॒ पत॑यो रयी॒णाम् ॥१३

त्वम् । सो॒म॒ । पि॒तृऽभिः॑ । स॒म्ऽवि॒दा॒नः । अनु॑ । द्यावा॑पृथि॒वी इति॑ । आ । त॒त॒न्थ॒ ।

तस्मै॑ । ते॒ । इ॒न्दो॒ इति॑ । ह॒विषा॑ । वि॒धे॒म॒ । व॒यम् । स्या॒म॒ । पत॑यः । र॒यी॒णाम् ॥१३

त्वम् । सोम । पितृऽभिः । सम्ऽविदानः । अनु । द्यावापृथिवी इति । आ । ततन्थ ।

तस्मै । ते । इन्दो इति । हविषा । विधेम । वयम् । स्याम । पतयः । रयीणाम् ॥१३

हे "सोम "त्वं "पितृभिः सह "संविदानः संगच्छमानः "द्यावापृथिवी द्यावापृथिव्यौ "अनु “आ “ततन्थ क्रमेण विस्तारयसि । "तस्मै सोमाय “हविषा “विधेम परिचरेम । "वयं "रयीणां धनानां "पतयः "स्याम भवेम ॥

त्राता॑रो देवा॒ अधि॑ वोचता नो॒ मा नो॑ नि॒द्रा ई॑शत॒ मोत जल्पिः॑ ।

व॒यं सोम॑स्य वि॒श्वह॑ प्रि॒यासः॑ सु॒वीरा॑सो वि॒दथ॒मा व॑देम ॥१४

त्राता॑रः । दे॒वाः॒ । अधि॑ । वो॒च॒त॒ । नः॒ । मा । नः॒ । नि॒ऽद्रा । ई॒श॒त॒ । मा । उ॒त । जल्पिः॑ ।

व॒यम् । सोम॑स्य । वि॒श्वह॑ । प्रि॒यासः॑ । सु॒ऽवीरा॑सः । वि॒दथ॑म् । आ । व॒दे॒म॒ ॥१४

त्रातारः । देवाः । अधि । वोचत । नः । मा । नः । निऽद्रा । ईशत । मा । उत । जल्पिः ।

वयम् । सोमस्य । विश्वह । प्रियासः । सुऽवीरासः । विदथम् । आ । वदेम ॥१४

हे “त्रातारः रक्षितारो हे "देवाः "नः अस्मान् "अधि "वोचत अधिवचनं कुरुत । किंच “नः अस्मान् "निद्राः स्वप्नाः “मा “ईशत ईश्वरा मा भूवन् बाधितुम् । “उत अपि च “जल्पिः निन्दकः अस्मान् मा निन्दतु । "वयं "सोमस्य “प्रियासः प्रियाः स्याम “विश्वह सर्वेष्वप्यहःसु । सर्वदेत्यर्थः । “सुवीरासः शोभनपुत्राः सन्तः “विदथं स्तोत्रम् “आ “वदेम आभिमुख्येन वदेम । अथवा सुपुत्रा विदथं गृहमा वदेम । आवदनं पुत्रपौत्राणां धनेनोपच्छन्दनम् ॥

‘ त्वं नः सोम विश्वतः' इति सौम्ये पशौ हविषोऽनुवाक्या । सूत्रितं च -- ‘ त्वं नः सोम विश्वतो वयोधा था ते धामानि दिवि या पृथिव्याम् ' (आश्व. श्रौ. ३. ७) इति ॥

त्वं नः॑ सोम वि॒श्वतो॑ वयो॒धास्त्वं स्व॒र्विदा॑ विंशा नृ॒चक्षाः॑ ।

त्वं न॑ इन्द ऊ॒तिभिः॑ स॒जोषाः॑ पा॒हि प॒श्चाता॑दु॒त वा॑ पु॒रस्ता॑त् ॥१५

त्वम् । नः॒ । सो॒म॒ । वि॒श्वतः॑ । व॒यः॒ऽधाः । त्वम् । स्व॒ःऽवित् । आ । वि॒श॒ । नृ॒ऽचक्षाः॑ ।

त्वम् । नः॒ । इ॒न्दो॒ इति॑ । ऊ॒तिऽभिः॑ । स॒ऽजोषाः॑ । पा॒हि । प॒श्चाता॑त् । उ॒त । वा॒ । पु॒रस्ता॑त् ॥१५

त्वम् । नः । सोम । विश्वतः । वयःऽधाः । त्वम् । स्वःऽवित् । आ । विश । नृऽचक्षाः ।

त्वम् । नः । इन्दो इति । ऊतिऽभिः । सऽजोषाः । पाहि । पश्चातात् । उत । वा । पुरस्तात् ॥१५

हे “सोम “त्वं "नः अस्माकं "विश्वतः सर्वाभ्यो दिग्भ्यः "वयोधाः अन्नदाता । तथा “त्वं “स्वर्वित् स्वर्गलम्भकः "नृचक्षाः सर्वमनुष्यद्रष्टा त्वम् "आ “विश । हे “इन्दो “त्वं "सजोषाः सह प्रीयमाणः सन् “ऊतिभिः सह । अथवीतयो गन्तारो मरुतः । तैः सहितः सन् “पश्चात्तात् पश्चात् “उत वा “पुरस्तात् च पाहि ॥ ॥ १३ ॥ ॥ ६ ॥

---

**टिप्पणी**

८.४८.३

अपा॑म॒ सोम॑म॒मृता॑ अभू॒माग॑न्म॒ ज्योति॒रवि॑दाम दे॒वान् ।

द्र. सत्रस्य ऋद्धिः साम (https://sa.wikisource.org/s/1sjv)

# ऋग्वेदः सूक्तं ८.४९

ऋग्वेदः - मण्डल ८
← सूक्तं ८.४८ सूक्तं ८.४९ सूक्तं ८.५० →
प्रस्कण्वः काण्वः।

दे. इन्द्रः। प्रगाथः - विषमा बृहती, समा सतोबृहती

अथ वालखिल्यम् (सूक्ताः ८.४९ - ८.५९)। तु. अथर्ववेदः २०.५१

---

अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।

यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥१॥

शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।

गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः ॥२॥

आ त्वा सुतास इन्दवो मदा य इन्द्र गिर्वणः ।

आपो न वज्रिन्नन्वोक्यं सरः पृणन्ति शूर राधसे ॥३॥

अनेहसं प्रतरणं विवक्षणं मध्वः स्वादिष्ठमीं पिब ।

आ यथा मन्दसानः किरासि नः प्र क्षुद्रेव त्मना धृषत् ॥४॥

आ न स्तोममुप द्रवद्धियानो अश्वो न सोतृभिः ।

यं ते स्वधावन्स्वदयन्ति धेनव इन्द्र कण्वेषु रातयः ॥५॥

उग्रं न वीरं नमसोप सेदिम विभूतिमक्षितावसुम् ।

उद्रीव वज्रिन्नवतो न सिञ्चते क्षरन्तीन्द्र धीतयः ॥६॥

यद्ध नूनं यद्वा यज्ञे यद्वा पृथिव्यामधि ।

अतो नो यज्ञमाशुभिर्महेमत उग्र उग्रेभिरा गहि ॥७॥

अजिरासो हरयो ये त आशवो वाता इव प्रसक्षिणः ।

येभिरपत्यं मनुषः परीयसे येभिर्विश्वं स्वर्दृशे ॥८॥

एतावतस्त ईमह इन्द्र सुम्नस्य गोमतः ।

यथा प्रावो मघवन्मेध्यातिथिं यथा नीपातिथिं धने ॥९॥

यथा कण्वे मघवन्त्रसदस्यवि यथा पक्थे दशव्रजे ।

यथा गोशर्ये असनोरृजिश्वनीन्द्र गोमद्धिरण्यवत् ॥१०॥

- वाराणसीस्थराजकीयसंस्कृतपाठशालायाः प्राप्ते ज्ञ-संज्ञकलिखितपुस्तके वालखिल्यसूक्तानां भाष्यं लिखितमुपलभ्यते । परं त्वितरेषु सर्वेष्वपि पुस्तकेष्वनुपलम्भात् व्याख्याशैल्या विभिन्नत्वाच्च नैतत्सायणाचार्यकृतमिति व्यक्तं प्रतीयते । तथाप्येतद्विदुषामुपयोगाय स्यादिति मत्वात्र दीयते । एतस्मिन् विषयेऽस्माभिः पृष्टा एतत्पाठशालाधिकारिणः एवं लिखन्ति- एतद्धस्तलिखितं पाठशालायाः कृते रेवानगरे क्रीतमासीत् । तस्य लेखनं पुण्यपत्तन एवाभूदिति श्रूयते । एतल्लिखितपुस्तकगतवालखिल्यसूक्तभाष्यं केन विरचितमिति निश्चितं वक्तुमशक्यम् । न केनापि वाराणसीस्थेन पण्डितेनैतद्विरचितमिति निश्चितमेव'।

**भाष्यम्**

श्रीगणेशाय नमः । श्रुतिकञ्जार्थलक्ष्मीं यो विकासयति हृद्गतम्( १ °ताम् ) । स पायात्सच्चिदानन्दः सूर्यमण्डलगो हरिः । 'अभि प्र वः' इति दशर्चं प्रथमं सूक्तं प्रस्कण्वस्यार्षमैन्द्रम् । अनुक्रान्तं च--- अभि प्र दश प्रस्कण्वः प्रागाथं तत्' इति । अयुजां बृहती छन्दः । युजां सतोबृहती छन्दः । विनियोगः सूत्रादवगन्तव्यः ।।

अ॒भि प्र वः॑ सु॒राध॑स॒मिन्द्र॑मर्च॒ यथा॑ वि॒दे ।

यो ज॑रि॒तृभ्यो॑ म॒घवा॑ पुरू॒वसुः॑ स॒हस्रे॑णेव॒ शिक्ष॑ति ॥१

अ॒भि । प्र । वः॒ । सु॒ऽराध॑सम् । इन्द्र॑म् । अ॒र्च॒ । यथा॑ । वि॒दे ।

यः । ज॒रि॒तृऽभ्यः॑ । म॒घऽवा॑ । पु॒रु॒ऽवसुः॑ । स॒हस्रे॑णऽइव । शिक्ष॑ति ॥१

अभि । प्र। वः । सुऽराधसम् । इन्द्रम् । अर्च। यथ । विदे।।

यः । जरितृऽभ्यः । मघऽवा। पुरुऽवसुः । सहस्रेणऽइव । शिक्षति ॥ १ ॥

ऋषिरात्मानं ब्रूते । हे प्रस्कण्व वः युष्माकम् । बहुवचनं पुत्रपौत्राभिप्रायेण । युष्मत्स्वामिभूतमिन्द्रमभिलक्ष्य प्रार्च प्रकर्षेण पूजय । तत्र दृष्टान्तः । यथा विदे विद्वांसं स्वगुरुं पूजयसि तद्वत् । कीदृशम् । सुराधसम् । शोभनं राधो धनं यस्य तम् । कोऽसाविन्द्र इत्युच्यते । य इन्द्रः मघवा धनवान् पुरूवसुः बहूनां वासयिता जरितृभ्यः स्तोतृभ्यः सहस्रेणेव अपरिमितमेव शिक्षति ददाति । धनादिकमिति शेषः । अत्र योशब्दोऽवधारणार्थः । सहस्रेणेव ( इवशब्दोऽवधारणार्थः । सहस्रेणैव ) ।।

श॒तानी॑केव॒ प्र जि॑गाति धृष्णु॒या हन्ति॑ वृ॒त्राणि॑ दा॒शुषे॑ ।

गि॒रेरि॑व॒ प्र रसा॑ अस्य पिन्विरे॒ दत्रा॑णि पुरु॒भोज॑सः ॥२

श॒तानी॑काऽइव । प्र । जि॒गा॒ति॒ । धृ॒ष्णु॒ऽया । हन्ति॑ । वृ॒त्राणि॑ । दा॒शुषे॑ ।

गि॒रेःऽइ॑व । प्र । रसाः॑ । अ॒स्य॒ । पि॒न्वि॒रे॒ । दत्रा॑णि । पु॒रु॒ऽभोज॑सः ॥२

शतानीकाऽइव । प्र। जिगाति । धृष्णुऽया । हन्ति । वृत्राणि । दाशुषे ।

गिरेःऽइव । प्र । रसाः । अस्य । पिन्विरे । दत्राणि । पुरुऽभोजसः ॥ २ ॥

धृष्णुया शत्रुधर्षणशील इन्द्रः शतानीकेव अपरिमितान्येव रिपुसैन्यानि प्र जिगाति प्रकर्षेण गच्छति । स्ववशीकरोति । किंच य इन्द्रः दाशुषे हविर्दत्तवतो यजमानस्य वृत्राणि पापानि शत्रून् वा हन्ति नाशयति । तस्यास्य पुरुभोजसः बहुपालकस्येन्द्रस्य दत्राणि हिरण्यादीनि धनानि । दत्रमत्र हिरण्यं 'मरुत् दत्रम्' इति हिरण्यनामसु पाठात् । प्र पिन्विरे प्रकर्षेण प्रीणयन्ति तर्पयन्ति जगत् । अत्र दृष्टान्तः । गिरेरिव पर्वतस्य मेघस्य वा संबन्धिनो यथा रसाः जलानि जगत् प्रणयन्ति तद्वत् ॥

आ त्वा॑ सु॒तास॒ इन्द॑वो॒ मदा॒ य इ॑न्द्र गिर्वणः ।

आपो॒ न व॑ज्रि॒न्नन्वो॒क्यं१॒ सरः॑ पृ॒णन्ति॑ शूर॒ राध॑से ॥३

आ । त्वा॒ । सु॒तासः॑ । इन्द॑वः । मदाः॑ । ये । इ॒न्द्र॒ । गि॒र्व॒णः॒ ।

आपः॑ । न । व॒ज्रि॒न् । अनु॑ । ओ॒क्य॑म् । सरः॑ । पृ॒णन्ति॑ । शू॒र॒ । राध॑से ॥३

आ। त्वा । सुतासः । इन्दवः । मदाः । ये । इन्द्र । गिर्वणः ।

आपः । न । वज्रिन् । अनु । ओक्यम् । सरः । पृणन्ति । शूर । राधसे ।। ३ ।।

हे गिर्वणः गीर्भिर्वननीयेन्द्र मदाः हर्षकराः ये इन्दवः सोमाः सुतासः अभिषुताः सन्ति ते हे वज्रिन् वज्रोपेत हे शूर शौर्ययुक्तेन्द्र ओक्यं समवयितुमर्हं ( समवेतुमर्हं) वा त्वामापृणन्ति सर्वतः पूरयन्ति । स्वरसप्रदानेन त्वां तर्पयन्तीत्यर्थः

। कथम् । आपो न सरः । ता यथा महाजलाशयं पूरयन्ति तद्वत् । किमर्थम् । राधसे यजमानस्य धनलाभाय ।

अ॒ने॒हसं॑ प्र॒तर॑णं वि॒वक्ष॑णं॒ मध्व॒ः स्वादि॑ष्ठमीं पिब ।

आ यथा॑ मन्दसा॒नः कि॒रासि॑ न॒ः प्र क्षु॒द्रेव॒ त्मना॑ धृ॒षत् ॥४

अ॒ने॒हस॑म् । प्र॒ऽतर॑णम् । वि॒वक्ष॑णम् । मध्वः॑ । स्वादि॑ष्ठम् । ई॒म् । पि॒ब॒ ।

आ । यथा॑ । म॒न्द॒सा॒नः । कि॒रासि॑ । नः॒ । प्र । क्षु॒द्राऽइ॑व । त्मना॑ । धृ॒षत् ॥४

अनेहसम् । प्रऽतरणम् । विवक्षणम् । मध्वः । स्वादिष्ठम् । ईम् । पिब ।

आ। यथा । मन्दसानः । किरासि । नः । प्र । क्षुद्राऽइव । त्मना । धृषत् ॥ ४ ॥

हे इन्द्र अनेहसं यथाकालम् ईम् एनं सोमं पिब । कीदृशम् । प्रतरणं प्रवर्धनम् । प्रपूर्वस्तिरतिर्वर्धनार्थः । विवक्षणम् अतिशयेन स्तुत्यं मध्वः मधुनः सकाशादपि स्वादिष्ठं स्वादुतमम् । कमेतम् । यस्य पानेन मन्दसानः हवींषि संभजमानस्त्वं नोऽस्मभ्यं यजमानेभ्यः यथा यथावत् फलमाकिरासि कात्स्न्र्येन विक्षिपसि । ददासीत्यर्थः । केभ्य इव । धृषत् शत्रुधर्षकस्त्वं त्मना आत्मना स्वयमेव क्षुद्रेव दीनेभ्य इव तेभ्यो यथा प्र ददासि तद्वत् । उपसर्गवशाद्योग्याक्रियाध्याहारः ॥

आ न॒ः स्तोम॒मुप॑ द्र॒वद्धि॑या॒नो अश्वो॒ न सोतृ॑भिः ।

यं ते॑ स्वधावन्स्व॒दय॑न्ति धे॒नव॒ इन्द्र॒ कण्वे॑षु रा॒तयः॑ ॥५

आ । नः॒ । स्तोम॑म् । उप॑ । द्र॒वत् । हि॒या॒नः । अश्वः॑ । न । सोतृ॑ऽभिः ।

यम् । ते॒ । स्व॒धा॒ऽव॒न् । स्व॒दय॑न्ति । धे॒नवः॑ । इन्द्र॑ । कण्वे॑षु । रा॒तयः॑ ॥५

आ। नः । स्तोमम् । उप । द्रवत् । हियानः । अश्वः । न । सोतृऽभिः ।।

यम् । ते। स्वधाऽवन् । स्वदयन्ति । धेनवः। इन्द्र । कण्वेषु । रातयः ॥ ५ ॥ ॥ १४ ॥

हे इन्द्र स भवान् नोऽस्मदीयैः सोतृभिः सोमाभिषवकर्तृभिरध्वदिभिर्ऋत्विग्भिः कृतं स्तोत्रविशेषम् आ आभिमुख्येन उप द्रवत् उपगच्छतु समीपं प्राप्नोतु । क इव । हियानः प्रेर्यमाणः अश्वो न अश्व इव । स यथा अभिलषितं देशं प्राप्नोति तद्वत् । हे स्वधावन् अन्नवन्निन्द्र ते तव स्वभूतानि धेनवः तर्पकाणि कण्वेषु अस्मासु वर्तमानानि रातयः हविर्दानानि यं त्वां स्वदयन्ति स्वादयन्ति । त्वदुदरे प्रविश्य त्वां तर्पयन्तीत्यर्थः । स भवान् उप द्रवत् इति पूर्वेण संबन्धः ॥ ॥ १४ ॥

उ॒ग्रं न वी॒रं नम॒सोप॑ सेदिम॒ विभू॑ति॒मक्षि॑तावसुम् ।

उ॒द्रीवं॑ वज्रिन्नव॒तो न सिं॑ञ्च॒ते क्षरं॑न्तीन्द्र धी॒तयः॑ ॥६

उ॒ग्रम् । न । वी॒रम् । नमं॑सा । उपं॑ । से॒दि॒म॒ । वि॒ऽभूं॑तिम् । अक्षि॑तऽवसुम् ।

उ॒द्रीऽइं॑व । व॒ज्रि॒न् । अ॒व॒तः । न । सि॒ञ्च॒ते । क्षरं॑न्ति । इ॒न्द्र॒ । धी॒तयः॑ ॥६

उग्रम् । न । वीरम् । नमसा। उप । सेदिम । विऽभूतिम् । अक्षितऽवसुम् ।।

उद्रीऽइव । वज्रिन्। अवतः । न । सिञ्चते । क्षरन्ति । इन्द्र । धीतयः ॥ ६ ॥

हे इन्द्र वीरं विशेषेण शत्रुभटान् प्रेरयन्तं त्वां नमसी हविर्लक्षणेनान्नेन सह । यद्वा नमसा प्रह्वीभावेन सह उप सेदिम शरणं प्राप्नुमो वयम् । कमिव । उग्रं न उद्गूर्णबलमिव । तं यथा केचन दीनाः शरणं प्राप्नुवन्ति तद्वत् । कीदृशं त्वाम् । विभूतिं विविधैश्वर्योपेतम् । अथवा विविधभवनस्वभावम् । 'इन्द्रो मायाभिः पुरुरूप ईयते ' इति श्रुतेः । 'रूपंरूपं प्रतिरूपो बभूव' इति श्रुत्यन्तरात् । अक्षितवसुम् अक्षीणधनम् । किंच हे वज्रिन् वज्रवन्निन्द्र सिञ्चते स्वर्गादिफलसेक्त्रे तुभ्यं त्वदर्थं धीतयः अस्मदङ्गुल्यः क्षरन्ति स्रवन्ति सोमरसम् । क इव । उद्रीव । उदकान् ( उदकवान्) अवतो न कूप इव । स यथा सस्यादिसेक्त्रे जलं क्षरति तद्वत् । अत्र इवशब्दोऽनर्थकः ।।

यद्ध॑ नू॒नं यद्वा॑ य॒ज्ञे यद्वा॑ पृथि॒व्यामधि॑ ।

अतो॑ नो य॒ज्ञमा॒शुभि॑र्महेमत उ॒ग्र उ॒ग्रेभि॒रा ग॑हि ॥७

यत् । ह॒ । नू॒नम् । यत् । वा॒ । य॒ज्ञे । यत् । वा॒ । पृ॒थि॒व्याम् । अधि॑ ।

अतः॑ । न॒ः । य॒ज्ञम् । आ॒शुऽभिः॑ । म॒हे॒ऽम॒ते॒ । उ॒ग्रः । उ॒ग्रेभिः॑ । आ । ग॒हि॒ ॥७

यत् । ह । नूनम् । यत् । वा । यज्ञे । यत् । वा । पृथिव्याम् । अधि ।

अतः । नः । यज्ञम् । आशुऽभिः । महेऽमते । उग्रः । उग्रेभिः । आ । गहि ॥ ७ ॥

हे महेमते पूजासक्तबुद्धे इन्द्र यद्ध यत्र क्वचित् स्थानविशेषे नूनं निश्चितं वर्तसे । यत् यत्र वा यज्ञे अध्वरे वर्तसे । यत् यत्र वा पृथिव्याम् अधि अधिकं वर्तसे । अतः अस्मात्स्थानविशेषात् उग्रः उद्गूर्णबलस्त्वम् उग्रेभिः उद्गूर्णबलैः आशुभिः शीघ्रगामिभिरश्वैः नोऽस्माकं यज्ञम् आ गहि आगच्छ ॥

अ॒जि॒रासो॒ हरं॑यो॒ ये त॑ आ॒शवो॒ वाता॑ इव प्रस॒क्षिणः॑ ।

येभि॒रपं॑त्यं॒ मनुं॑षः प॒रीयं॑से॒ येभि॒र्विश्वं॒ स्व॑र्दृ॒शे ॥८

अ॒जि॒रासः॑ । हरं॑यः । ये । ते॒ । आ॒शवः॑ । वाताः॑ऽइव । प्र॒ऽस॒क्षिणः॑ ।

येभिः॑ । अपं॑त्यम् । मनुं॑षः । प॒रि॒ऽईयं॑से । येभिः॑ । विश्वं॑म् । स्वः॑ । दृ॒शे ॥८

अजिरासः । हरयः । ये। ते। आशवः । वाताःऽइव । प्रऽसक्षिणः ।।

येभिः । अपत्यम् । मनुषः । परिऽईयसे । येभिः । विश्वम् । स्वः। दृशे ।। ८ ॥

हे इन्द्र ते तव स्वभूताः ये हरयः अश्वाः वाताइव वायव इव प्रसक्षिणः प्रकर्षेण संगच्छमानाः सन्ति । कीदृशास्ते पुनः । अजिरासः शत्रून् क्षिपन्तः आशवः शीघ्रगामिनश्च । येभिः यैरश्वैः मनुषः मनोः अपत्यम् अपतनहेतुं यजमानं परीयसे सर्वत आगच्छसि येभिः यैश्वाश्वैः विश्वं स्वः सर्वं स्वर्लोकं दृशे द्रष्टुमिच्छसि तैरा गहि इति पूर्वेणान्वयः ॥

ए॒तावं॑तस्त ईमह॒ इन्द्र॑ सु॒म्नस्य॒ गोमं॑तः ।

यथा॒ प्रावो॑ मघव॒न्मेध्या॑तिथिं॒ यथा॒ नीपा॑तिथिं॒ धने॑ ॥९

ए॒तावं॑तः । ते॒ । ई॒म॒हे॒ । इन्द्र॑ । सु॒म्नस्य॑ । गोऽमं॑तः ।

यथा॑ । प्र । आवः॑ । म॒घ॒ऽव॒न् । मेध्यं॑ऽअतिथिम् । यथा॑ । नीपं॑ऽअतिथिम् । धने॑ ॥९

एतावतः । ते । ईमहे । इन्द्र । सुम्नस्य । गोऽमतः ।।

यथा । प्र । आवः । मघवन् । मेध्यऽअतिथिम् । यथा । नीपऽअतिथिम् । धने ॥ ९ ॥

हे मघवन् धनवन्निन्द्र धने निमित्तभूते सति यथा येन प्रकारेण मेध्यातिथिम् एतन्नामकऋषिं प्रावः प्रकर्षेण रक्षितवानसि यथा येन च प्रकारेण नीपातिथिम् एतन्नामानमृषिं प्रावः एतावतः इयदेव ते तव स्वभूतं गोमतः गवाश्वाद्युपेतं सुम्नस्य सुखम् ईमहे याचामहे वयं कण्वाः । सर्वत्र कर्मणि षष्ठ्यः ।।

यथा॒ कण्वे॑ मघवन्त्र॒सद॑स्यवि॒ यथा॑ प॒क्थे दश॑व्रजे ।

यथा॒ गोश॑र्ये॒ अस॑नोरृ॒जिश्व॒नीन्द्र॒ गोम॒द्धिर॑ण्यवत् ॥१०

यथा॑ । कण्वे॑ । म॒घ॒ऽव॒न् । त्र॒सद॑स्यवि । यथा॑ । प॒क्थे । दश॑ऽव्रजे ।

यथा॑ । गोऽश॑र्ये । अस॑नोः । ऋ॒जिश्व॑नि । इन्द्र॑ । गोऽमं॑त् । हिर॑ण्यऽवत् ॥१०

यथा । कण्वे । मघवन् । त्रसदस्यवि । यथा । पक्थे । दशऽव्रजे।

यथा । गोऽशर्ये । असनोः । ऋजिश्वनि । इन्द्र । गोऽमत् । हिरण्यऽवत् ॥ १० ॥ ॥१५॥

हे मघवन् धनवन्निन्द्र यथा येन प्रकारेण कण्वे एतन्नाम्नि मत्पितरि गोमत् गवोपेतं हिरण्यवत् काञ्चनोपेतं च सुम्नम् असनोः दत्तवानसि । यथा च त्रसदस्यवि एतन्नामके राज्ञि यथा च पक्थे एतत्संज्ञे राज्ञि यथा च दशव्रजे एतत्संज्ञके नृपे यथा च गोशर्ये एतन्नाम्नि क्षत्रिये यथा च ऋजिश्वनि एतत्संज्ञके राजनि गवाद्युपेतं सुम्नमसनोः एतावदीमहे इति पूर्वेण संबन्धः ॥ ॥ १५ ॥

**टिप्पणी**

८.४९.१ अभि प्र वः सुराधसम् इति

सान्नते द्वे - श्यैतम् (https://sa.wikisource.org/s/2i8a) (ग्रामगेयः)

श्यैतम् (https://sa.wikisource.org/s/1z7k)

वृषा (https://sa.wikisource.org/s/2ll7)



*सूर्यस्य परितः पृथिव्याः भ्रमणम्*

वालखिल्य

वालशब्दस्य प्रयोगं वृक्षमूलस्य परितः जलसिंचनहेतुनिर्मितस्य वृत्ताकारस्य स्थलाय भवति। अन्यथा, यत्र ऊर्जा विरला अस्ति, न सघना, तस्य हेतोरपि वालशब्दस्य प्रयोगं भवति। आधुनिक विज्ञाने, ऊर्जायाः संदर्भे अव्यवस्था, एण्ट्रांपी शब्दस्य प्रयोगं भवति। यदा ऊर्जायाः अव्यवस्था अधिकं भवति, तदा उच्च एण्ट्रांपी भवति। अयं प्रतीयते यत् वालखिल्यानां प्रसंगः संवत्सरनिर्माणतः सम्बद्धमस्ति। संवत्सरस्य निर्माणं सूर्य(प्राण), पृथिवी(आत्मा) एवं चन्द्रमा(मन),

**सायणभाष्यम्**

‘ उभयं शृणवत्’ इत्यष्टादशर्चं द्वितीयं सूक्तं प्रागाथस्य भर्गस्यार्षम् । अत्रानुक्रमणिका -- ‘ उभयं द्व्यूना' इति । पूर्वसूक्ते ‘प्रागाथं तु ' इत्युक्तत्वादिदमपि प्रागाथम् । अत्रायुजो बृहत्यो युजः सतोबृहत्यः । अनुक्तत्वादिन्द्रो देवता । महाव्रते निष्केवल्ये बार्हततृचाशीतावेतत्सूक्तं सप्तम्यष्टमीवर्जम् । तथैव पञ्चमारण्यके सूत्रितं शौनकेन - उभयं शृणवच्च न इति सप्तमीं चाष्टमीं चोद्धरति । ( ऐ. आ. ५. २. ४ ) इति । चातुर्विंशिकेऽहनि निष्केवल्ये 'उभयम्' इति बृहत्सामप्रगाथः । सूत्रितं च -‘उभयं शृणवच्च नः' ( आश्व. श्रौ. ७. ३ ) इति । चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽच्छावाकस्यायमेव स्तोत्रियः प्रगाथः। तथा च सूत्रितम् -' उभयं शृणवच्च न आ वृषस्व पुरूवसो' ( आश्व. श्रौ. ७. ४ ) इति । एवमन्यत्रापि यस्मिन्नहनि पृष्ठस्तोत्रे बृहत्साम क्रियते तस्मिन्नहनि निष्केवल्येऽयं प्रगाथः ॥

उ॒भयं॑ शृ॒णव॑च्च न॒ इन्द्रो॑ अ॒र्वागि॒दं वचः॑ ।

स॒त्राच्या॑ म॒घवा॒ सोम॑पीतये धि॒या शवि॑ष्ठ॒ आ ग॑मत् ॥१

उ॒भय॑म् । शृ॒णव॑त् । च॒ । न॒: । इन्द्रः॑ । अ॒र्वाक् । इ॒दम् । वचः॑ ।

स॒त्राच्या॑ । म॒घऽवा॑ । सोम॑ऽपीतये । धि॒या । शवि॑ष्ठः । आ । ग॒म॒त् ॥१

उभयम् । शृणवत् । च । नः । इन्द्रः । अर्वाक् । इदम् । वचः ।

सत्राच्या । मघऽवा । सोमऽपीतये । धिया । शविष्ठः । आ । गमत् ॥१

"उभयं स्तोत्रात्मकं शस्त्रात्मकं चोभयविधम् "इदं "वचः अर्वाक् अस्मदभिमुखम् "इन्द्रः “शृणवत् शृणोतु । श्रुत्वा च "सत्राच्या अस्माकं सहाञ्चन्त्या "धिया युक्तः सन् “मघवा "शविष्ठः अतिशयेन बलवान् “आ “गमत् आगच्छतु "सोमपीतये सोमपानाय ॥

तं हि स्व॒राजं॑ वृष॒भं तमोज॑से धि॒षणे॑ निष्टत॒क्षतुः॑ ।

उ॒तोप॒मानां॑ प्रथ॒मो नि षी॑दसि॒ सोम॑काम॒ं हि ते॒ मनः॑ ॥२

तम् । हि । स्व॒ऽराज॑म् । वृ॒ष॒भम् । तम् । ओज॑से । धि॒षणे॒ इति॑ । निः॒ऽत॒त॒क्षतुः॑ ।

उ॒त । उ॒प॒ऽमाना॑म् । प्र॒थ॒मः । नि । सी॒द॒सि॒ । सोम॑ऽकामम् । हि । ते॒ । मनः॑ ॥२

तम् । हि । स्वऽराजम् । वृषभम् । तम् । ओजसे । धिषणे इति । निःऽततक्षतुः ।

उत । उपऽमानाम् । प्रथमः । नि । सीदसि । सोमऽकामम् । हि । ते । मनः ॥२

“तं “हि तं खल्विन्द्रं "स्वराजं स्वयमेव राजमानं “धिषणे द्यावापृथिव्यौ “वृषभं जगदुपकारिकाया वृष्टेर्वर्षकं “निष्टतक्षतुः संचस्करतुः । “तं तमेवेन्द्रम् “ओजसे बलाय निष्टतक्षतुः । "उत यस्मादेवं तस्मात् हे इन्द्र "उपमानाम् उपमानभूतानामन्येषां देवानां मध्ये "प्रथमः मुख्यः सन् “नि “षीदसि वेद्याम् । सोमकामं “हि खलु “ते "मनः ॥

पूर्वोक्तेऽच्छावाकशस्त्रे ‘आ वृषस्व' इति प्रगाथो वैकल्पिकोऽनुरूपः । सूत्रमुक्तम् ॥

आ वृ॑षस्व पुरूवसो सु॒तस्ये॒न्द्रान्ध॑सः ।

वि॒द्मा हि त्वा॑ हरिवः पृ॒त्सु सा॑स॒हिमधृ॑ष्टं चिद्दधृ॒ष्वणि॑म् ॥३

आ । वृ॒ष॒स्व॒ । पु॒रु॒व॒सो॒ इति॑ पुरुऽवसो । सु॒तस्य॑ । इ॒न्द्र॒ । अन्ध॑सः ।

वि॒द्म । हि । त्वा॒ । ह॒रि॒ऽव॒ः । पृ॒त्ऽसु । स॒स॒हिम् । अधृ॑ष्टम् । चि॒त् । द॒धृ॒ष्वणि॑म् ॥३

आ । वृषस्व । पुरुवसो इति पुरुऽवसो । सुतस्य । इन्द्र । अन्धसः ।

विद्म । हि । त्वा । हरिऽवः । पृत्ऽसु ।ससहिम् । अधृष्टम् । चित् । दधृष्वणिम् ॥३

हे “पुरूवसो बहुधन “इन्द्र त्वम् "आ "वृषस्व आसिञ्चस्व । किम् । "सुतस्य “अन्धसः सुतमन्धः सोमं जठरे । हे "हरिवः हरिभ्यां तद्वन्निन्द्र “त्वा त्वां विद्म "हि जानीमः खलु। कीदृशम् । “पृत्सु संग्रामेषु "सासहिम् अभिभवितारं शत्रूणाम् "अधृष्टं “चित् कैरप्यधर्षणीयं "दधृष्वणिम् अन्येषां धर्षकम् ॥

अप्रा॑मिसत्य मघव॒न्तथेद॑स॒दिन्द्र॒ क्रत्वा॒ यथा॒ वश॑ः ।

स॒नेम॒ वाज॒ं तव॑ शिप्रि॒न्नव॑सा म॒क्षू चि॒द्यन्तो॑ अद्रिवः ॥४

अप्रा॑मिऽसत्य । म॒घ॒ऽव॒न् । तथा॑ । इत् । अ॒स॒त् । इन्द्र॑ । क्रत्वा॑ । यथा॑ । वशः॑ ।

स॒नेम॑ । वाज॑म् । तव॑ । शि॒प्रि॒न् । अव॑सा । म॒क्षु । चि॒त् । यन्तः॑ । अ॒द्रि॒ऽव॒ः ॥४

अप्रामिऽसत्य । मघऽवन् । तथा । इत् । असत् । इन्द्र । क्रत्वा । यथा । वशः ।

सनेम । वाजम् । तव । शिप्रिन् । अवसा । मक्षु । चित् । यन्तः । अद्रिऽवः ॥४

हे "अप्रामिसत्य अहिंसितसत्य हे "मघवन् इन्द्र “तथेदसत् तथैव भवति । हे “इन्द्र "क्रत्वा कर्मणा प्रज्ञानेन "यथा येन प्रकारेण "वशः कामयेः । हे “शिप्रिन् “अवसा रक्षणेन निमित्तेन “वाजम् अन्नं “सनेम संभजेम वयं "तव त्वदनुग्रहात् । कीदृशा वयम् । “मधु “चित् शीघ्रमेव “यन्तः शत्रून् गच्छन्तोऽभिभवन्तः । हे "अद्रिवः । अद्रिर्वज्रः । तद्वन्निन्द्रेति ॥

श॒ग्ध्यू॒३॒ षु श॑चीपत॒ इन्द्र॒ विश्वा॑भिरू॒तिभि॑ः ।

भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥५

शग्धि । ऊं इति । सु । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।

भगम् । न । हि । त्वा । यशसम् । वसुऽविदम् । अनु । शूर । चरामसि ॥५

शग्धि । ऊं इति । सु । शचीऽपते । इन्द्र । विश्वाभिः । ऊतिऽभिः ।

भगम् । न । हि । त्वा । यशसम् । वसुऽविदम् । अनु । शूर । चरामसि ॥५

हे “शचीपते “इन्द्र "शग्धि देह्यभिमतम् । "विश्वाभिः सर्वाभिः “ऊतिभिः मरुद्भिः सह । हे "शूर “भगं “न भाग्यमिव "यशसं यशस्विनं "वसुविदं धनस्य लम्भकं “त्वा त्वाम् "अनु “चरामसि अनुचरामः । परिचरामेत्यर्थः ॥ ॥ ३६ ।।

पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः ।

नकिर्हि दानं परिमर्धिषत्त्वे यद्यद्यामि तदा भर ॥६

पौरः । अश्वस्य । पुरुऽकृत् । गवाम् । असि । उत्सः । देव । हिरण्ययः ।

नकिः । हि । दानम् । परिऽमर्धिषत् । त्वे इति । यत्ऽयत् । यामि । तत् । आ । भर ॥६

पौरः । अश्वस्य । पुरुऽकृत् । गवाम् । असि । उत्सः । देव । हिरण्ययः ।

नकिः । हि । दानम् । परिऽमर्धिषत् । त्वे इति । यत्ऽयत् । यामि । तत् । आ । भर ॥६

हे इन्द्र त्वम् "अश्वस्य "पौरः पूरयिता "असि भवसि । तथा "गवां “पुरुकृत् बहुकर्तासि । हे “देव "हिरण्ययः हिरण्मयशरीरस्त्वम् "उत्सः उत्ससदृशोऽसि । हे इन्द्र “त्वे त्वयि वर्तमानं “दानम् अस्मद्विषयं देयं धनं वा "नकिः “परिमर्धिषत् न कश्चिद्धिनस्ति । अतः "यद्यद्यामि याचे “तदा “भर आहर मह्यम् ॥

यद्यग्निष्टोमे बृहत्साम तदानीं निष्केवल्ये प्रगाथोऽनुरूपः । सूत्रितं च –' त्वं ह्येहि चेरव इति प्रगाथा एते भवन्ति' (आश्व. श्रौ. ५. १५) इति । महाव्रते निष्केवल्य उत्तरपक्षेऽयं प्रगाथः । तथैव पञ्चमारण्यके सूत्रितं– त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहतः स्तोत्रियानुरूपौ प्रगाथौ । (ऐ. आ. ५. २. २) इति ॥

त्वं ह्येहि चेरवे विदा भगं वसुत्तये ।

उद्वावृषस्व मघवन्गविष्टय उदिन्द्राश्वमिष्टये ॥७

त्वम् । हि । आ । इहि । चेरवे । विदाः । भगम् । वसुत्तये ।

उत् । ववृषस्व । मघऽवन् । गोऽइष्टये । उत् । इन्द्र । अश्वम्ऽइष्टये ॥७

त्वम् । हि । आ । इहि । चेरवे । विदाः । भगम् । वसुत्तये ।

उत् । ववृषस्व । मघऽवन् । गोऽइष्टये । उत् । इन्द्र । अश्वम्ऽइष्टये ॥७

हे इन्द्र “त्वं "हि त्वं खलु । सामर्थ्याद्दातेति गम्यते । अतः “एहि आगच्छ । आगत्य चास्मभ्यं "भगं भजनीयं धनं "विदाः लभस्व दत्स्व । किमर्थम् । "वसुत्तये अस्माकं वसुदानाय । हे “मघवन् "गविष्टये गा इच्छते मह्यं “उद्ववृषस्व उत्सिञ्चस्व गामिति शेषः । तथा हे “इन्द्र “अश्वमिष्टये अश्वैषणवते मह्यमश्वान् "उत् ववृषस्व उत्सिञ्चस्व देहि ।।

त्वं पु॒रू स॒हस्रा॑णि श॒तानि॑ च यू॒था दा॒नाय॑ मंहसे ।

आ पु॑रं॒द॒रं च॑कृ॒म विप्र॑वचस॒ इन्द्रं॒ गाय॒न्तोऽव॑से ॥८

त्वम् । पु॒रु । स॒हस्रा॑णि । श॒तानि॑ । च॒ । यू॒था । दा॒नाय॑ । मं॒ह॒से॒ ।

आ । पु॒र॒म्ऽद॒रम् । च॒कृ॒म॒ । विप्र॑ऽवचसः । इन्द्रं॑म् । गाय॑न्तः । अव॑से ॥८

त्वम् । पुरु । सहस्राणि । शतानि । च । यूथा । दानाय । मंहसे ।

आ । पुरम्ऽदरम् । चकृम । विप्रऽवचसः । इन्द्रम् । गायन्तः । अवसे ॥८

हे इन्द्र “त्वं "पुरु पुरूणि बहूनि "सहस्राणि "शतानि "च "यूथा गवादियूथानि “दानाय यजमानविषयाय “मंहसे अनुमन्यसे । यद्वा । दानाय दात्रे यजमानाय मंहसे प्रयच्छसि । मंहतिर्दानकर्मा । अथ परोक्षेण ब्रवीति । "पुरंदरं शत्रुपुराणां दारयितारम् "इन्द्रम् "अवसे रक्षणाय प्रीतये वा “गायन्तः स्तुवन्तः “विप्रवचसः विविधप्रकृष्टवचना वयम् "आ आगन्तारमभिमुखं वा “चकृम कुर्मः ॥

अ॒वि॒प्रो वा॒ यदवि॑ध॒द्विप्रो॑ वेन्द्र ते॒ वच॑ः ।

स प्र म॑मन्दत्त्वा॒या श॑तक्रतो॒ प्राचा॑मन्यो॒ अहं॑सन ॥९

अ॒वि॒प्रः । वा॒ । यत् । अवि॑धत् । विप्रः॑ । वा॒ । इ॒न्द्र॒ । ते॒ । वचः॑ ।

सः । प्र । म॒म॒न्द॒त् । त्वा॒ऽया । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । प्राचा॑मन्यो॒ इति॒ प्राचा॑ऽमन्यो । अहं॑म्ऽसन ॥९

अविप्रः । वा । यत् । अविधत् । विप्रः । वा । इन्द्र । ते । वचः ।

सः । प्र । ममन्दत् । त्वाऽया । शतक्रतो इति शतऽक्रतो । प्राचामन्यो इति प्राचाऽमन्यो । अहम्ऽसन ॥९

हे "इन्द्र "ते तव "वचः स्तोत्रं "यत् यः "अविप्रो "वा अमेधाव्यस्तुतिकुशलो वा “विप्रः मेधावी स्तुतिकुशलः “वा "अविधत् कुर्यात् । त्वां स्तौतीत्यर्थः । "सः स्तोता “त्वाया त्वयीच्छया साधनेन “प्र “ममन्दत् प्रकर्षेण मोदते । हे "शतक्रतो बहुकर्मन् हे "प्राचामन्यो प्राचीनक्रोध ! अप्रतिहतक्रोधेत्यर्थः । न हीन्द्रक्रोधं प्रतिहन्ति कश्चित् । हे "अहंसन । संग्रामेऽहमित्यात्मनो महत्त्वं प्रकाशयन् यः शत्रुं संभजते स तथोक्तः । तादृशेन्द्र ॥

उ॒ग्रबा॑हुर्म्रक्ष॒कृत्वा॑ पुरंद॒रो यदि॑ मे शृ॒णव॒द्धव॑म् ।

व॒सू॒यवो॒ वसु॑पतिं श॒तक्र॑तुं॒ स्तोमै॒रिन्द्रं॑ हवामहे ॥१०

उ॒ग्रऽबा॑हुः । म्र॒क्ष॒ऽकृत्वा॑ । पु॒र॒म्ऽद॒रः । यदि॑ । मे॒ । शृ॒णव॑त् । हव॑म् ।

व॒सु॒ऽयवः॑ । वसु॑ऽपतिम् । श॒तऽक्र॑तुम् । स्तोमैः॑ । इन्द्र॑म् । ह॒वा॒म॒हे॒ ॥१०

उग्रऽबाहुः । म्रक्षऽकृत्वा । पुरम्ऽदरः । यदि । मे । शृणवत् । हवम् ।

वसुऽयवः । वसुऽपतिम् । शतऽक्रतुम् । स्तोमैः । इन्द्रम् । हवामहे ॥१०

"उग्रबाहुः उद्गूर्णभुजः "म्रक्षकृत्वा वधकर्ता शत्रूणां “पुरंदरः पुराणां दारयितेन्द्रः "यदि "मे “हवं “शृणवत् शृणुयात् तर्हि "वसूयवः वसुकामा वयं "वसुपतिं' बहुधनस्वामिनं शतक्रतुम् अपरिमितप्रज्ञम् "इन्द्रं "स्तोमैः स्तोत्रैः "हवामहे आह्वयामः ॥ ॥ ३७॥

न पा॒पासो॑ मनामहे॒ नारा॑यासो॒ न जळ्ह॑वः ।

यदिन्न्विन्द्रं॒ वृष॑णं॒ सचा॑ सु॒ते सखा॑यं कृ॒णवा॑महै ॥११

न । पा॒पासः॑ । म॒ना॒म॒हे॒ । न । अरा॑यासः । न । जळ्ह॑वः ।

यत् । इत् । नु । इन्द्र॑म् । वृष॑णम् । सचा॑ । सु॒ते । सखा॑यम् । कृ॒णवा॑महै ॥११

न । पापासः । मनामहे । न । अरायासः । न । जळ्हवः ।

यत् । इत् । नु । इन्द्रम् । वृषणम् । सचा । सुते । सखायम् । कृणवामहै ॥११

वयमिन्द्रं "पापासः पापा अकृतपुण्या ब्रह्मचर्यव्रतादिरहिताः “न “मनामहे न मन्यामहे । तथा “अरायासः अराया अधना वा अहविष्का वा “न मनामहे । “न “जल्हवः अज्वलनाः अनग्नयो न मनामहे । कृतव्रतनियमादिपुण्या दानवन्तोऽग्निसहितास्तं स्तुम इत्यृषिरात्मानमाह। "यदित् यस्मादेव कारणात् "नु इदानीं "वृषणं वर्षकम् "इन्द्रं “सुते सोमेऽभिषुते "सचा सहिताः "सखायं "कृणवामह कुर्मः तस्मात् पापादिरहिता मनामहे । पापादिविशिष्टानामिन्द्रसाहाय्यकरणासंभवात् । अत्र ‘न पापा मन्यामहे ' (निरु. ६. २५) इत्यादि निरुक्तं द्रष्टव्यम् ॥

उ॒ग्रं यु॑युज्म॒ पृत॑नासु सास॒हिमृ॒णका॑ति॒मदा॑भ्यम् ।

वेदा॑ भृ॒मं चि॒त्सनि॑ता र॒थीत॑मो वा॒जिनं॒ यमिदू॒ नश॑त् ॥१२

उ॒ग्रम् । यु॒यु॒ज्म॒ । पृत॑नासु । स॒स॒हिम् । ऋ॒णऽका॑तिम् । अदा॑भ्यम् ।

वेदं । भृमम् । चित् । सनिता । रथिऽतमः । वाजिनम् । यम् । इत् । ऊं इति । नशत् ॥१२

उग्रम् । युयुज्म । पृतनासु । ससहिम् । ऋणऽकातिम् । अदाभ्यम् ।

वेद । भृमम् । चित् । सनिता । रथिऽतमः । वाजिनम् । यम् । इत् । ऊं इति । नशत् ॥१२

"उग्रम् उद्गूर्णबलमिन्द्रं "युयुज्म योजयामः । कीदृशमिन्द्रम् । "पृतनासु संग्रामेषु "सासहिं शत्रूणामभिभवितारम् "ऋणकातिम् ऋणभूतस्तुतिम् । यस्मै स्तुतिर्ऋणवदवश्यं क्रियते तं तादृशम् । अथवा ऋणवदवश्यफलप्रदस्तुतिकम् । "अदाभ्यं केनाप्यहिंस्यम् । य इन्द्रः "भ्रमं "चित् बहुष्वश्वेषु भ्रमणशीलमेव "वाजिनं बलवन्तमश्वं "रथीतमः रथस्वामी "वेद वेत्ति गृह्णाति तद्वत् "सनिता इन्द्रो वाजिनं हविष्मन्तं "यमित् यमेव जनं बहूनां यजमानानां मध्ये "नशत् व्याप्नोति तमिन्द्रमिति । ते वयमिति वा योज्यम् । वयं युयुज्मेति पक्षे व्यत्ययेन बहुवचनम् ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽच्छावाकस्य ' यत इन्द्र' इति वैकल्पिकः स्तोत्रियस्तृचः । सूत्रितं च -- यत इन्द्र भयामहे यथा गौरो अपा कृतम्' ( आश्व. श्रौ. ७. ४ ) इति । दुःस्वप्नदर्शनेऽप्येतदादिसूक्तशेषो जप्यः (आश्व. गृ. ३. ११. २) ॥

यत इन्द्र भयामहे ततो नो अभयं कृधि ।

मघवञ्छग्धि तव तन्न ऊतिभिर्वि द्विषो वि मृधो जहि ॥१३

यतः । इन्द्र । भयामहे । ततः । नः । अभयम् । कृधि ।

मघऽवन् । शग्धि । तव । तम् । नः । ऊतिऽभिः । वि । द्विषः । वि । मृधः । जहि ॥१३

यतः । इन्द्र । भयामहे । ततः । नः । अभयम् । कृधि ।

मघऽवन् । शग्धि । तव । तम् । नः । ऊतिऽभिः । वि । द्विषः । वि । मृधः । जहि ॥१३

हे "इन्द्र "यतः हिंसकात् "भयामहे वयं "ततः "नः अस्मभ्यम् "अभयं "कृधि कुरु । हे "मघवन् "शग्धि शक्तो भवसि "नः अस्मभ्यमभयं कर्तुं "तव "तत् तैः "ऊतिभिः रक्षणैः रक्षकैः पुरुषैः । किंच "वि "जहि "द्विषः अस्मद्द्वेष्टॄन् । "वि जहि "मृधः अस्मद्धिंसकान् ॥

त्वं हि राधस्पते राधसो महः क्षयस्यासि विधतः ।

तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥१४

त्वम् । हि । राधःऽपते । राधसः । महः । क्षयस्य । असि । विधतः ।

तम् । त्वा । वयम् । मघऽवन् । इन्द्र । गिर्वणः । सुतऽवन्तः । हवामहे ॥१४

त्वम् । हि । राधःऽपते । राधसः । महः । क्षयस्य । असि । विधतः ।

तम् । त्वा । वयम् । मघऽवन् । इन्द्र । गिर्वणः । सुतऽवन्तः । हवामहे ॥१४

हे “राधस्पते धनस्वामिन् "त्वं "हि त्वं खलु "महः महतः “राधसः धनस्य "क्षयस्य च गृहस्य' च वर्धयिता “असि हि खलु। सामर्थ्यादेवं लभ्यते । कस्य राधसो गृहस्य च वर्धक इत्युच्यते । “विधतः परिचरतो यजमानस्य । "तं तादृशं "त्वा त्वां “वयं हे “मघवन्निन्द्र "गिर्वणः गीर्भिर्वननीय "सुतावन्तः अभिषुतसोमाः “हवामहे आह्वयामः ।।

इन्द्र॒ः स्पळु॒त वृ॑त्र॒हा प॑र॒स्पा नो॒ वरे॑ण्यः ।

स नों रक्षिषच्चर॒मं स मं॑ध्य॒मं स प॒श्चात्पा॑तु नः पु॒रः ॥१५

इन्द्रः॑ । स्पट् । उ॒त । वृ॒त्र॒ऽहा । प॒रः॒ऽपाः । न॒ः । वरे॑ण्यः ।

सः । न॒ः । र॒क्षि॒ष॒त् । च॒र॒मम् । सः । म॒ध्य॒मम् । सः । प॒श्चात् । पा॒तु॒ । न॒ः । पु॒रः ॥१५

इन्द्रः । स्पट् । उत । वृत्रऽहा । परःऽपाः । नः । वरेण्यः ।

सः । नः । रक्षिषत् । चरमम् । सः । मध्यमम् । सः । पश्चात् । पातु । नः । पुरः ॥१५

अयम् "इन्द्रः “स्पट् सर्वस्य ज्ञाता । स्पशतिर्ज्ञानकर्मा । "उत अयं "वृत्रहा वृत्रहन्ता “परस्पाः परपालयिता "नः अस्माकं "वरेण्यः वरणीयः । "सः इन्द्रः "नः अस्माकम् । पुत्रमिति शेषः । "रक्षिषत् रक्षतु । "चरमं पुत्रं तथा स रक्षिषत् । "सः "मध्यमं पुत्रं रक्षिषत् । "सः "नः अस्मान् "पश्चात् रक्षिषत् । "नः “पुरः पुरस्तात् रक्षिषत् ॥ ॥ ३८ ॥

त्वं न॑ः प॒श्चाद॑ध॒राद॑त्त॒रात्पु॒र इन्द्र॒ नि पा॑हि वि॒श्वत॑ः ।

आ॒रे अ॒स्मत्कृ॑णुहि॒ दैव्यं॑ भ॒यमा॒रे हे॒तीरदे॑वीः ॥१६

त्वम् । न॒ः । प॒श्चात् । अ॒ध॒रात् । उ॒त्त॒रात् । पु॒रः । इन्द्र॑ । नि । पा॒हि॒ । वि॒श्वतः॑ ।

आ॒रे । अ॒स्मत् । कृ॒णु॒हि॒ । दैव्य॑म् । भ॒यम् । आ॒रे । हे॒तीः । अदे॑वीः ॥१६

त्वम् । नः । पश्चात् । अधरात् । उत्तरात् । पुरः । इन्द्र । नि । पाहि । विश्वतः ।

आरे । अस्मत् । कृणुहि । दैव्यम् । भयम् । आरे । हेतीः । अदेवीः ॥१६

हे “इन्द्र “त्वं "नः अस्मान् "पश्चात् पश्चाद्भागात् "पुरः पूर्वभागात् "अधरात् अधोभागात् । एतदुपरिभागस्योपलक्षणम् । "उत्तरात् उत्तरभागात् । एतद्दक्षिणस्याप्युपलक्षणम् । किं बहुना “विश्वतः सर्वस्मात् प्रदेशात् "नि "पाहि । हे इन्द्र “दैव्यं “भयम् "अस्मत् अस्मत्तः “आरे दूरे “कृणुहि कुरु । तथा "अदेवीः असुराणि "हेतीः आयुधानि "आरे कृणुहि ॥

अ॒द्याद्या॒ श्वःश्व॒ इन्द्र॒ त्रास्व॑ प॒रे च॑ नः ।

विश्वां च नो जरितॄन्त्संपते अहा दिवा नक्तं च रक्षिषः ॥१७

अद्यऽअंद्य । श्वःऽश्वः । इन्द्रं । त्रास्वं । परे । च । नः ।

विश्वां । च । नः । जरितॄन् । सत्ऽपते । अहां । दिवां । नक्तम् । च । रक्षिषः ॥१७

अद्यऽअद्य । श्वःऽश्वः । इन्द्र । त्रास्व । परे । च । नः ।

विश्वा । च । नः । जरितॄन् । सत्ऽपते । अहा । दिवा । नक्तम् । च । रक्षिषः ॥१७

“अद्याद्य यदद्यशब्दवाच्यमहरस्ति तत्र सर्वत्र एवं “श्वःश्वः "त्रास्व रक्ष। तथा “परे “च परस्मिंस्तृतीयेऽहनि च त्रास्व । हे "सत्पते सतां पालक “विश्वा सर्वाण्यपि “अहा अहानि सर्वेष्वप्यहःसु "नः अस्मान् "जरितॄन् "रक्षिषः रक्षसि । तथा 'दिवा "नक्तं "च रक्षिषः रक्षसि रक्ष वा ॥

प्रभङ्गी शूरों मघवां तुवीमंघः सम्मिंश्लो विर्याय कम् ।

उभा ते बाहू वृषंणा शतक्रतो नि या वज्रं मिमिक्षतुः ॥१८

प्रऽभङ्गी । शूरः । मघऽवां । तुविऽमंघः । सम्ऽमिंश्लः । वीर्याय । कम् ।

उभा । ते । बाहू इतिं । वृषंणा । शतक्रतो इतिं शतऽक्रतो । नि । या । वज्रंम् । मिमिक्षतुः ॥१८

प्रऽभङ्गी । शूरः । मघऽवा । तुविऽमघः । सम्ऽमिश्लः । वीर्याय । कम् ।

उभा । ते । बाहू इति । वृषणा । शतक्रतो इति शतऽक्रतो । नि । या । वज्रम् । मिमिक्षतुः ॥१८

अयं "मघवा इन्द्रः "प्रभङ्गी प्रभञ्जनशीलः "शूरः "तुवीमघः प्रभूतधनः "संमिश्लः सम्यक् मिश्रयिता । किमर्थम् । "वीर्याय शत्रूणां वीर्यकरणाय । "कम् इति पादपूरणः । एवंमहानुभावो भवति । अथ प्रत्यक्षवादः । हे इन्द्र “ते “उभा उभावपि “बाहू “वृषणा वर्षकौ कामानां हे "शतक्रतो बहुप्रज्ञ “या यौ “वज्रम् आयुधं "नि "मिमिक्षतुः परिगृह्णीतः ॥ ॥ ३९ ॥

---

**टिप्पणी**

८.६१.१ उभयं शृणवच्च न इति

वैयश्वम् (https://sa.wikisource.org/s/2gvd)

८.६१.७ त्वं ह्येहि चेरवे इति

कौल्मलबर्हिषे द्वे (https://sa.wikisource.org/s/2htl) (ग्रामगेयः)

८.६१.१३ यत इन्द्र भयामहे इति

समन्तम् (https://sa.wikisource.org/s/2gv0)

८.६१.१९ यस्ते मदो वरेण्यः

हाविष्मतम् (https://sa.wikisource.org/s/1zmg)

# ऋग्वेदः सूक्तं ८.६२

ऋग्वेदः - मण्डल ८
← सूक्तं ८.६१ सूक्तं ८.६२ सूक्तं ८.६३ →
प्रगाथो घौरः काण्वः ।

दे. इन्द्रः । पंक्तिः, ७-९ बृहती ।

प्रो अस्मा उपस्तुतिं भरता यज्जुजोषति ।

उक्थैरिन्द्रस्य माहिनं वयो वर्धन्ति सोमिनो भद्रा इन्द्रस्य रातयः ॥१॥

अयुजो असमो नृभिरेकः कृष्टीरयास्यः ।

पूर्वीरति प्र वावृधे विश्वा जातान्योजसा भद्रा इन्द्रस्य रातयः ॥२॥

अहितेन चिदर्वता जीरदानुः सिषासति ।

प्रवाच्यमिन्द्र तत्तव वीर्याणि करिष्यतो भद्रा इन्द्रस्य रातयः ॥३॥

आ याहि कृणवाम त इन्द्र ब्रह्माणि वर्धना ।

येभिः शविष्ठ चाकनो भद्रमिह श्रवस्यते भद्रा इन्द्रस्य रातयः ॥४॥

धृषतश्चिद्धृषन्मनः कृणोषीन्द्र यत्त्वम् ।

तीव्रैः सोमैः सपर्यतो नमोभिः प्रतिभूषतो भद्रा इन्द्रस्य रातयः ॥५॥

अव चष्ट ऋचीषमोऽवताँ इव मानुषः ।

जुष्ट्वी दक्षस्य सोमिनः सखायं कृणुते युजं भद्रा इन्द्रस्य रातयः ॥६॥

विश्वे त इन्द्र वीर्यं देवा अनु क्रतुं ददुः ।

भुवो विश्वस्य गोपतिः पुरुष्टुत भद्रा इन्द्रस्य रातयः ॥७॥

गृणे तदिन्द्र ते शव उपमं देवतातये ।

यद्धंसि वृत्रमोजसा शचीपते भद्रा इन्द्रस्य रातयः ॥८॥

समनेव वपुष्यतः कृणवन्मानुषा युगा ।

विदे तदिन्द्रश्चेतनमध श्रुतो भद्रा इन्द्रस्य रातयः ॥९॥

उज्जातमिन्द्र ते शव उत्त्वामुत्तव क्रतुम् ।

भूरिगो भूरि वावृधुर्मघवन्तव शर्मणि भद्रा इन्द्रस्य रातयः ॥१०॥

अहं च त्वं च वृत्रहन्सं युज्याव सनिभ्य आ ।

अरातीवा चिदद्रिवोऽनु नौ शूर मंसते भद्रा इन्द्रस्य रातयः ॥११॥

सत्यमिद्वा उ तं वयमिन्द्रं स्तवाम नानृतम् ।

महाँ असुन्वतो वधो भूरि ज्योतींषि सुन्वतो भद्रा इन्द्रस्य रातयः ॥१२॥

**सायणभाष्यम्**

'प्रो अस्मै' इति द्वादशर्चं तृतीयं सूक्तं काण्वस्य प्रगाथस्यार्षम् । पञ्चपदा पङ्क्तिः । सप्तम्याद्यास्तिस्रो बृहत्यः । इन्द्रो देवता । अत्रानुक्रमणिका- प्रो अस्मै द्वादश प्रगाथः पाङ्क्तं सप्तम्याद्याश्च तिस्रो बृहत्यः' इति । विनियोगो लैङ्गिकः ।।

प्रो अ॑स्मा॒ उप॑स्तुतिं॒ भर॑ता॒ यज्जुजो॑षति ।

उ॒क्थैरिन्द्र॑स्य॒ माहि॑नं॒ वयो॑ वर्धन्ति सो॒मिनो॑ भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥१

प्रो इति॑ । अ॒स्मै॒ । उप॑ऽस्तुतिम् । भर॑त । यत् । जुजो॑षति ।

उ॒क्थैः । इन्द्र॑स्य । माहि॑नम् । वयः॑ । व॒र्धन्ति॒ । सो॒मिनः॑ । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥१

प्रो इति । अस्मै । उपऽस्तुतिम् । भरत। यत् । जुजोषति ।।

उक्थैः । इन्द्रस्य । माहिनम् । वयः । वर्धन्ति । सोमिनः । भद्राः । इन्द्रस्य । रातयः ॥१॥

“अस्मै इन्द्राय उपस्तुतिम् उपेत्य क्रियमाणां स्तुतिं “प्रो “भरत प्रकर्षेण संपादयत हे ऋत्विजः । यत् यदि अयमिन्द्रः “जुजोषति सेवते तर्हि भरतेति । सोमिनः सोमप्रियस्य “इन्द्रस्य स्वभूतं "माहिनं महत् वयः अन्नं सोमलक्षणम् उक्थैः शस्त्रैः "वर्धन्ति वर्धयन्ति । “भद्राः स्तुत्यानि खलु “इन्द्रस्य रातयः दानानि ।।।

अ॒यु॒जो अस॑मो॒ नृभि॒रेकः॑ कृ॒ष्टीर॒यास्यः॑ ।

पू॒र्वीरति॒ प्र वा॑वृधे॒ विश्वा॑ जा॒तान्योज॑सा भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥२

अ॒यु॒जः । अस॑मः । नृऽभिः॑ । एकः॑ । कृ॒ष्टीः । अ॒यास्यः॑ ।

पू॒र्वीः । अति॑ । प्र । व॒वृ॒धे॒ । विश्वा॑ । जा॒तानि॑ । ओज॑सा । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥२

अयुजः । असमः । नृऽभिः । एकः । कृष्टीः । अयास्यः ।

पूर्वीः । अति । प्र । ववृधे । विश्वा । जातानि । ओजसा । भद्राः । इन्द्रस्य । रातयः ॥२॥

“अयुजः असहायः "असमः असदृशोऽन्यैः "नृभिः देवैः "एकः मुख्यः “अयास्यः उपक्षपयितुमशक्यः "पूर्वीः कृष्टीः पूर्वतन्यः प्रजाः "अति “प्र “ववृधे अतिप्रवर्धते । किंच “विश्वा सर्वाणि “जातानि इदानीमुत्पन्नानि "ओजसा बलेनाति प्र वावृधे । “भद्राः हि "इन्द्रस्य "रातयः । अथवा । अयमृषिरयुजोऽसहायोऽन्यैरसदृश एक एव सन् पूर्वीः प्रजा जातानि सर्वाण्यप्यतिक्रम्य वर्धते । शिष्टं समानम् ॥

अहि॑तेन चि॒दर्व॑ता जी॒रदा॑नुः सिषासति ।

प्र॒वाच्य॑मिन्द्र॒ तत्तव॑ वी॒र्या॑णि करिष्य॒तो भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥३

अहि॑तेन । चि॒त् । अर्व॑ता । जी॒रऽदा॑नुः । सि॒सा॒स॒ति॒ ।

प्र॒ऽवाच्य॑म् । इ॒न्द्र॒ । तत् । तव॑ । वी॒र्या॑णि । क॒रि॒ष्य॒तः । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥

अहितेन । चित् । अर्वता । जीरऽदानुः । सिसासति ।। ३

प्रऽवाच्यम् । इन्द्र । तत् । तव । वीर्याणि । करिष्यतः । भद्राः । इन्द्रस्य । रातयः ॥ ३ ॥

अयं "जीरदानुः क्षिप्रप्रदान इन्द्रः "अहितेन अयोजितेनाप्रेरितेन' “चित् "अर्वता अरणवताश्वेन "सिषासति संभक्तुमिच्छति । तस्माद्धे “इन्द्र वीर्याणि सामर्थ्यानि "करिष्यतः तव महत्त्वं “प्रवाच्यम् । स्तुत्यमित्यर्थः ।।

आ या॑हि कृ॒णवा॑म त॒ इन्द्र॒ ब्रह्मा॑णि॒ वर्ध॑ना ।

येभिः॑ शविष्ठ चा॒कनो॑ भ॒द्रमि॒ह श्र॑वस्य॒ते भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥४

आ । या॒हि॒ । कृ॒णवा॑म । ते॒ । इन्द्र॑ । ब्रह्मा॑णि । वर्ध॑ना ।

येभिः॑ । श॒वि॒ष्ठ॒ । चा॒कनः॑ । भ॒द्रम् । इ॒ह । श्र॒व॒स्य॒ते । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥४

आ। याहि । कृणवाम । ते । इन्द्र । ब्रह्माणि । वर्धना।

येभिः । शविष्ठ । चाकनः । भद्रम् । इह । श्रवस्यते । भद्राः । इन्द्रस्य । रातयः ॥ ४ ॥

हे "इन्द्र "आ "याहि आगच्छ । "ते "कृणवाम । किम् । ब्रह्माणि परिवृढानि स्तुतिलक्षणानि कर्माणि । कीदृशानि । "वर्धना उत्साहवर्धकानि । "येभिः यैः कर्मभिः हे शविष्ठ अतिशयेन बलवन्निन्द्र "चाकनः कामयसे । किम् । "भद्रं कर्तुम् । कस्मै । "श्रवस्यते अन्नमिच्छते स्तोत्रे ।।

धृ॒षतश्चि॑द्धृ॒षन्मनः॑ कृ॒णोषी॑न्द्र॒ यत्त्वम् ।

ती॒व्रैः सोमैः॑ सपर्य॒तो नमो॑भिः प्रति॒भूष॑तो भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥५

धृ॒ष॒तः । चि॒त् । धृ॒षत् । मनः॑ । कृ॒णोषि॑ । इ॒न्द्र॒ । यत् । त्वम् ।

ती॒व्रैः । सोमैः॑ । स॒प॒र्य॒तः । नमः॑ऽभिः । प्र॒ति॒ऽभूष॑तः । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥५

धृषतः । चित् । धृषत् । मनः । कृणोषि । इन्द्र । यत् । त्वम् ।

तीव्रैः । सोमैः । सपर्यतः । नमःऽभिः । प्रतिऽभूषतः । भद्राः । इन्द्रस्य । रातयः ॥ ५ ॥

हे इन्द्र "धृषतश्चित् धृष्टादपि "धृषत् धृष्टं "मनः "कृणोषि । अत्यन्तं धृष्टं करोषि । "यत् यस्मात् "त्वं "तीव्रैः मदजनकैः "सोमैः "सपर्यतः पूजयतः "नमोभिः नमस्कारैश्च "प्रतिभूषतः अलंकुर्वतो यजमानस्याभिमतं दित्ससीति शेषः ॥

अव॑ चष्ट ऋची॑षमोऽव॒ताँ इ॑व॒ मानु॑षः ।

जु॒ष्ट्वी दक्ष॑स्य सो॒मिनः॑ सखा॑यं कृणुते॒ युजं॑ भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥६

अव॑ । च॒ष्टे॒ । ऋची॑षमः । अ॒व॒तान्ऽइ॑व । मानु॑षः ।

जु॒ष्ट्वी । दक्ष॑स्य । सो॒मिनः॑ । सखा॑यम् । कृ॒णु॒ते॒ । युज॑म् । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥६

अव । चष्टे । ऋचीषमः । अवतान्ऽइव । मानुषः ।

जुष्ट्वी । दक्षस्य । सोमिनः । सखायम् । कृणुते । युजम् । भद्राः । इन्द्रस्य । रातयः ॥ ६॥

अयमिन्द्रः "ऋचीषमः ऋचा स्तुत्या समस्तथा परिच्छिन्नः सन् "अव "चष्टे पश्यत्यनुग्रहेणास्मान् । तत्र दृष्टान्तः । "मानुषः मनुष्यः "अवतान् अवटान् कूपादिप्रदेशान् "इव । दृष्ट्वा च जुष्वी ् प्रीतोऽयं "दक्षस्य प्रवृद्धस्य "सोमिनः यजमानस्य युजं युज्यमात्मानं "सखायं "कृणुते करोति । तस्याभिमतं साधयतीत्यर्थः । अथवा । तृषितो मनुष्यो जलपूर्णानवटानिव स्तुतः सन् पश्यति सोमं पातुम् । पश्चादवेक्षितं तं युज्यमानं सोमं जुष्ट्वी सेवित्वा दक्षस्य सोमिनः सखायं कुरुते ॥ ॥ ४० ॥

विश्वे॑ त इन्द्र वी॒र्यं॑ दे॒वा अनु॒ क्रतुं॑ ददुः ।

भुवो॒ विश्व॑स्य॒ गोप॑तिः पुरुष्टुत भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥७

विश्वे॑ । ते॒ । इ॒न्द्र॒ । वी॒र्य॑म् । दे॒वाः । अनु॑ । क्रतु॑म् । द॒दुः॒ ।

भुवः॑ । विश्व॑स्य । गोऽप॑तिः । पु॒रु॒ऽस्तु॒त॒ । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥७

विश्वे । ते । इन्द्र। वीर्यम् । देवाः । अनु ।। क्रतुम् । ददुः ।

भुवः । विश्वस्य । गोऽपतिः । पुरुऽस्तुत । भद्राः । इन्द्रस्य । रातयः ॥ ७ ॥

हे “इन्द्र ते तव वीर्यं सामर्थ्यं "क्रतुं प्रज्ञां च "अनु अनुसृत्य "विश्वे सर्वे देवाः "ददुः। दधुः । धारयन्ति वीर्यं प्रज्ञा च । तव बलेन प्रज्ञया च तेऽपि बलिनः प्रज्ञावन्तश्च भवन्तीत्यर्थः । तादृशस्त्वं "गोपतिः प्रसिद्धानां गवामुदकानां स्तुतिवचसो वा पतिः “भुवः भवसि । विश्वस्य इत्येतत् पदान्तर्गतस्यापि गोशब्दस्य विशेषः । हे "पुरुष्टुत बहुभिः स्तुतेन्द्र भवसीति समन्वयः ॥

गृ॒णे तदि॑न्द्र ते॒ शव॑ उप॒मं दे॒वता॑तये ।

यद्धंसि॑ वृ॒त्रमोज॑सा शचीपते भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥८

गृ॒णे । तत् । इ॒न्द्र॒ । ते॒ । शवः॑ । उ॒प॒ऽमम् । दे॒वऽता॑तये ।

यत् । हंसि॑ । वृ॒त्रम् । ओज॑सा । श॒ची॒ऽप॒ते॒ । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥८

गृणे । तत् । इन्द्र । ते । शवः । उपऽमम् । देवऽतातये ।।

यत् । हंसि । वृत्रम्। ओजसा । शचीपते । भद्राः । इन्द्रस्य । रातयः ॥ ८ ॥

हे "इन्द्र "ते तव तत् "शवः बलम् "उपमम् अन्तिकं "देवतातये यजमानाय यज्ञार्थं वा “गृणे स्तुवे । "यत् यस्माद्धे “शचीपते "वृत्रम् "ओजसा बलेन हंसि तस्मात्ते शवो गृणे ॥

सम॑नेव वपुष्य॒तः कृ॒णव॒न्मानु॑षा यु॒गा ।

वि॒दे तदिन्द्र॒श्चेत॑न॒मध॑ श्रु॒तो भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥९

सम॑नाऽइव । व॒पु॒ष्य॒तः । कृ॒णव॑त् । मानु॑षा । यु॒गा ।

वि॒दे । तत् । इन्द्रः॑ । चेत॑नम् । अध॑ । श्रु॒तः । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥९

समनाऽइव । वपुष्यतः । कृणवत् । मानुषा । युगा।

विदे। तत् । इन्द्रः । चेतनम् । अध । श्रुतः । भद्राः । इन्द्रस्य । रातयः ॥ ९ ॥

“समनेव समानमनस्का योषिदिव सा यथा “वपुष्यतः वपुरिच्छतः पुरुषान् कृणवत् करोति स्ववशान् एवमयमिन्द्रः "मानुषा मनुष्यान् "युगा युगानि कालान् संवत्सरायनर्तुमासादीन् "विदे लम्भयति । "तत् युगनिर्माणात्मकं कर्म “इन्द्रः चेतनं सर्वस्य प्रज्ञापकं कृतवानिति शेषः । "अध अथैवं कृत्वा "श्रुतः सर्वत्र ख्यातोऽभूत् ॥

उज्जा॒तमि॑न्द्र ते॒ शव॒ उत्त्वामुत्तव॒ क्रतु॑म् ।

भूरि॑गो॒ भूरि॑ वावृधु॒र्मघ॑व॒न्तव॒ शर्म॑णि भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥१०

उत् । जा॒तम् । इ॒न्द्र॒ । ते॒ । शवः॑ । उत् । त्वाम् । उत् । तव॑ । क्रतु॑म् ।

भूरि॑गो॒ इति॒ भूरि॑ऽगो । भूरि॑ । व॒वृ॒धुः॒ । मघ॑ऽवन् । तव॑ । शर्म॑णि । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥१०

उत् । जातम् । इन्द्र । ते । शवः । उत् । त्वाम् । उत् । तव । क्रतुम् ।

भूरिगो इति भूरिऽगो। भूरि । ववृधुः । मघऽवन् । तव । शर्मणि । भद्राः । इन्द्रस्य । रातयः ॥१०॥

हे "इन्द्र "उत् । अयं व्यवहितेनापि "वावृधुः इत्यनेन संबध्यते । उद्वर्धयन्ति सोमेन । किम् । “ते "शवः बलम् । न केवलं बलं किंतु "त्वाम् उत् वर्धयन्ति स्तुत्यादिना । पश्चात् "तव “क्रतुं प्रज्ञां स्वानुकूलाम् "उत् वर्धयन्ति। "भूरि इत्येतत् प्रत्याख्यातं संबध्यते । अतिप्रभूतमुद्वर्धयन्तीत्यर्थः । क एवं कुर्वन्तीति उच्यते । हे भूरिगो बहुपशो हे "मघवन् धनवन्निन्द्र "तव "शर्मणि त्वदीये सुखे ये वर्तन्ते ते च कुर्वन्तीति ।।

अ॒हं च॒ त्वं च॑ वृत्रह॒न्सं यु॑ज्याव स॒निभ्य॒ आ ।

अ॒रा॒ती॒वा चि॑दद्रि॒वोऽनु॑ नौ शूर मंसते भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥११

अ॒हम् । च॒ । त्वम् । च॒ । वृ॒त्र॒ऽह॒न् । सम् । यु॒ज्या॒व॒ । स॒निऽभ्यः॑ । आ ।

अ॒रा॒ति॒ऽवा । चि॒त् । अ॒द्रि॒ऽव॒ः । अनु॑ । नौ॒ । शू॒र॒ । मं॒स॒ते॒ । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥११

अहम् । च । त्वम् । च । वृत्रऽहन् । सम् । युज्याव । सनिऽभ्यः । आ।

अरातिऽवा । चित् । अद्रिवः । अनु। नौ । शूर। मंसते। भद्राः । इन्द्रस्य । रातयः ॥११॥

हे वृत्रहन् इन्द्र “त्वं च "अहं "च "सं "युज्याव संगतौ भवाव । कियदवधीति उच्यते । “सनिभ्य “आ यावता कालेन धनानि लभ्यन्ते तावत्कालम् । "नौ संगतयोश्चावयोर्हे “अद्रिवः वज्रवन् इन्द्र "अरातीवा अदानोऽपि जनस्त्वद्दत्तधनस्य “अनु "मंसते अनुमतिं करोति ॥

स॒त्यमिद्वा उ॒ तं व॒यमिन्द्रं॑ स्तवाम॒ नानृ॑तम् ।

म॒हाँ असु॑न्वतो व॒धो भूरि॒ ज्योतीं॑षि सुन्व॒तो भ॒द्रा इन्द्र॑स्य रा॒तयः॑ ॥१२

स॒त्यम् । इत् । वै । ऊं॒ इति॑ । तम् । व॒यम् । इन्द्र॑म् । स्त॒वा॒म॒ । न । अनृ॑तम् ।

म॒हान् । असु॑न्वतः । व॒धः । भूरि॑ । ज्योतीं॑षि । सु॒न्व॒तः । भ॒द्राः । इन्द्र॑स्य । रा॒तयः॑ ॥१२

सत्यम् । इत् । वै। ऊँ इति । तम् । वयम् । इन्द्रम् । स्तवाम । न । अनृतम् ।।

महान् । असुन्वतः । वधः । भूरि । ज्योतींषि । सुन्वतः । भद्राः । इन्द्रस्य । रातयः ॥१२॥

“वयं प्रगाथाः "तम् इन्द्रं "सत्यमित् सत्यमेव "स्तवाम । "नानृतम् असत्यं न स्तवाम । अस्माभिरुक्ता गुणाः सत्या एवं सन्तु नानृता इत्यर्थः । स्तुत्यस्येन्द्रस्य संबन्धि “असुन्वतः अयष्टुः । “वधः "महान् प्रभूतो भवति । "भूरि “ज्योतींषि बहून् सोमान् "सुन्वतः अभिषवं कुर्वतो यजमानस्येन्द्रकृतोऽनुग्रहो महान् भवतीत्यर्थः ॥ ॥ ११ ॥

**मण्डल ८**

# ऋग्वेदः सूक्तं ८.६३



दे. इन्द्रः, १२ देवाः। १, ४-५, ७ अनुष्टुप्, १२ त्रिष्टुप् ।

---

स पूर्व्यो महानां वेनः क्रतुभिरानजे ।

यस्य द्वारा मनुष्पिता देवेषु धिय आनजे ॥१॥

दिवो मानं नोत्सदन्सोमपृष्ठासो अद्रयः ।

उक्था ब्रह्म च शंस्या ॥२॥

स विद्वाँ अङ्गिरोभ्य इन्द्रो गा अवृणोदप ।

स्तुषे तदस्य पौंस्यम् ॥३॥

स प्रत्नथा कविवृध इन्द्रो वाकस्य वक्षणिः ।

शिवो अर्कस्य होमन्यस्मत्रा गन्त्ववसे ॥४॥

आदू नु ते अनु क्रतुं स्वाहा वरस्य यज्यवः ।

श्वात्रमर्का अनूषतेन्द्र गोत्रस्य दावने ॥५॥

इन्द्रे विश्वानि वीर्या कृतानि कर्त्वानि च ।

यमर्का अध्वरं विदुः ॥६॥

यत्पाञ्चजन्यया विशेन्द्रे घोषा असृक्षत ।

अस्तृणाद्बर्हणा विपोऽर्यो मानस्य स क्षयः ॥७॥

इयमु ते अनुष्टुतिश्चकृषे तानि पौंस्या ।

प्रावश्चक्रस्य वर्तनिम् ॥८॥

अस्य वृष्णो व्योदन उरु क्रमिष्ट जीवसे ।

यवं न पश्व आ ददे ॥९॥

तद्दधाना अवस्यवो युष्माभिर्दक्षपितरः ।

स्याम मरुत्वतो वृधे ॥१०॥

बळृत्वियाय धाम्न ऋक्वभिः शूर नोनुमः ।

जेषामेन्द्र त्वया युजा ॥११॥

अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भरहूतौ सजोषाः ।

यः शंसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्माँ अवन्तु देवाः ॥१२॥

**सायणभाष्यम्**

'स पूर्व्यः' इति द्वादशर्चं चतुर्थं सूक्तम् । अत्रानुक्रमणिका - 'स पूर्व्यो गायत्रमाद्या चतुर्थ्यादिद्वे सप्तमी चानुष्टुभो गायत्रेऽन्त्या दैवी त्रिष्टुप्' इति । प्रथमाचतुर्थीपञ्चमीसप्तम्यश्चतस्रोऽनुष्टुभः 'अस्मे रुद्राः' इत्यन्त्या त्रिष्टुबवशिष्टा गायत्र्यः । अन्त्याया देवा देवता शिष्टा ऐन्द्र्यः । षष्ठेऽहनि मरुत्वतीयस्याद्यस्तृचः प्रतिपत् । सूत्रितं च – स पूर्व्यो महानां त्रय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ' (आश्व. श्रौ. ८. १) इति ॥

स पू॒र्व्यो म॒हानां॑ वे॒नः क्रतु॑भिरानजे ।

यस्य॒ द्वारा॒ मनु॑ष्पि॒ता दे॒वेषु॒ धिय॑ आन॒जे ॥१

सः । पू॒र्व्यः । म॒हाना॑म् । वे॒नः । क्रतु॑ऽभिः । आ॒न॒जे॒ ।

यस्य॑ । द्वारा॑ । मनुः॑ । पि॒ता । दे॒वेषु॑ । धियः॑ । आ॒न॒जे ॥१

सः । पूर्व्यः । महानाम् । वेनः । क्रतुऽभिः । आनजे ।

यस्य । द्वारा । मनुः । पिता । देवेषु । धियः । आनजे ॥१

“सः “पूर्व्यः मुख्यः “महानां पूज्यानां यजमानानां “क्रतुभिः कर्मभिर्निमित्तभूतैः "वेनः (http://puranastudy.byethost14.com/pur_index27/vena1.htm) कान्तस्तेषां हविः कामयमानः “आनजे आगच्छति । “यस्य इन्द्रस्य “द्वारा द्वाराणि प्राप्त्युपायानि “धियः कर्माणि “देवेषु एतेषु मध्ये “पिता सर्वेषां पालकः “मनुः "आनजे प्राप । आनजिः प्राप्तिकर्मा ॥

दि॒वो मान॒ं नोत्सं॑द॒न्त्सोम॑पृष्ठासो॒ अद्र॑यः ।

उ॒क्था ब्रह्म॑ च॒ शंस्या॑ ॥२

दि॒वः । मान॑म् । न । उत् । स॒द॒न् । सोम॑ऽपृष्ठासः । अद्र॑यः ।

उ॒क्था । ब्रह्म॑ । च॒ । शंस्या॑ ॥२

दिवः । मानम् । न । उत् । सदन् । सोमऽपृष्ठासः । अद्रयः ।

उक्था । ब्रह्म । च । शंस्या ॥२

“दिवः द्युलोकस्य “मानं निर्मातारमिन्द्रं “नोत्सदन् नोत्सृजन्तु। के। “सोमपृष्ठासः सोमस्प्रष्टारः सोमाभिषवकर्तारः “अद्रयः ग्रावाणः । किंच “उक्था उक्थानि शस्त्राणि “ब्रह्म “च ब्रह्माणि स्तोत्राणि “शंस्या शंसनीयानि भवन्तीति शेषः । यद्वा । यानि स्तोत्राणि शस्त्राणि च सन्ति तानीन्द्रं नोत्सृजन्विति समन्वयः ॥

स वि॒द्वाँ अंगि॑रोभ्य॒ इंद्रो॒ गा अ॑वृणो॒दप॑ ।

स्तु॒षे तद॑स्य॒ पौंस्य॑ं ॥३

सः । वि॒द्वान् । अङ्गि॑रःऽभ्यः । इन्द्रः॑ । गाः । अ॒वृ॒णो॒त् । अप॑ ।

स्तु॒षे । तत् । अ॒स्य॒ । पौंस्य॑म् ॥३

सः । विद्वान् । अङ्गिरःऽभ्यः । इन्द्रः । गाः । अवृणोत् । अप ।

स्तुषे । तत् । अस्य । पौंस्यम् ॥३

“सः “विद्वान् उपायज्ञः “इन्द्रः “अङ्गिरोभ्यः तेषामर्थाय “गाः पणिभिरपहृताः पिहिताः “अप "अवृणोत् अपवारितवान् । “तत् तादृशम् “अस्य पौंस्यं पुंस्त्वं सामर्थ्यं “स्तुषे स्तौमि ।।

स प्र॒त्नथा॑ कविवृ॒ध इंद्रो॑ वा॒कस्य॑ व॒क्षणिः॑ ।

शि॒वो अ॒र्कस्य॒ होम॑न्यस्म॒त्रा ग॒न्त्वव॑से ॥४

सः । प्र॒त्नऽथा॑ । क॒वि॒ऽवृ॒धः । इन्द्रः॑ । वा॒कस्य॑ । व॒क्षणिः॑ ।

शि॒वः । अ॒र्कस्य॑ । होम॑नि । अ॒स्म॒ऽत्रा । ग॒न्तु॒ । अव॑से ॥४

सः । प्रत्नऽथा । कविऽवृधः । इन्द्रः । वाकस्य । वक्षणिः ।

शिवः । अर्कस्य । होमनि । अस्मऽत्रा । गन्तु । अवसे ॥४

“सः इन्द्रः “प्रत्नथा प्रत्नवत् पूर्वस्मिन् काले यथा तद्वदिदानीमपि “कविवृधः मेधाविनां स्तोतॄणां वर्धयिता “वाकस्य स्तोतुः “वक्षणिः वोढा “शिवः सुखकरः “अंर्कस्य । अर्कमन्नमर्चनीयत्वादर्चनसाधनत्वाद्वा । तादृशस्य सोमस्य "होमनि होमे सः “अस्मत्रा अस्मासु निमित्तभूतेषु “अवसे रक्षणाय “गन्तु गच्छतु ॥

आदू॒ नु ते॒ अनु॒ क्रतुं॒ स्वाहा॒ वर॑स्य॒ यज्य॑वः ।

श्वा॒त्रम॒र्का अ॑नूष॒तेंद्रं॑ गो॒त्रस्य॑ दा॒वनें॑ ॥५

आत् । ऊं॒ इति॑ । नु । ते॒ । अनु॑ । क्रतु॑म् । स्वाहा॑ । वर॑स्य । यज्य॑वः ।

श्वा॒त्रम् । अ॒र्काः । अ॒नू॒ष॒त॒ । इन्द्र॑ं । गो॒त्रस्य॑ । दा॒वनें॑ ॥५

आत् । ऊं इति । नु । ते । अनु । क्रतुम् । स्वाहा । वरस्य । यज्यवः ।

श्वात्रम् । अर्काः । अनूषत । इन्द्र । गोत्रस्य । दावने ॥५

"आदु अनन्तरमेव “नु अद्य हे “इन्द्र “ते तव "क्रतुं कर्म “अनु क्रमेण “अनूषत इति संबन्धः । अनुक्रमेण स्तुवन्ति । के। “स्वाहावरस्य स्वाहादेव्याः पतेरग्नेः "यज्यवः यष्टारः । त्वदर्थमग्नौ यागं कुर्वन्त इत्यर्थः । तादृशाः “अर्काः अर्चयितारः स्तोतारः। “श्वात्रम् (http://vipin110012.tripod.com/pur_index28/shvaa.htm) इति क्षिप्रनाम । अन्यदेवतास्तुतिरूपविलम्बमकृत्वातिशीघ्रमतिदीर्घं स्तुवन्तीत्यभिप्रायः । किमर्थं स्तुवन्तीति उच्यते । “गोत्रस्य “दावने धनस्य दानाय ॥

इंद्रे॒ विश्वा॑नि वी॒र्या॑ कृ॒तानि॒ कर्त्वा॑नि च ।

यम॒र्का अ॑ध्व॒रं वि॒दुः ॥६

इन्द्रें । विश्वा॑नि । वी॒र्या॑ । कृ॒तानि॑ । कर्त्वा॑नि । च॒ ।

यम् । अ॒र्काः । अ॒ध्व॒रम् । वि॒दुः ॥६

इन्द्रे । विश्वानि । वीर्या । कृतानि । कर्त्वानि । च ।

यम् । अर्काः । अध्वरम् । विदुः ॥६

अस्मिन् "इन्द्रे "विश्वानि सर्वाणि "वीर्या वीर्याणि सामर्थ्यानि "कृतानि "कर्त्वानि ""च कर्तव्यानि च वर्तन्त इति शेषः । "यम् इन्द्रम् "अर्काः स्तोतारः "अध्वरम् अहिंसकं "विदुः जानन्ति तस्मिन्निन्द्र इति ॥ ॥ ४२ ॥

पञ्चमेऽहनि मरुत्वतीये 'यत्पाञ्चजन्यया ' इति तृचः प्रतिपत् । सूत्रितं च --यत्पाञ्चजन्यया विशेन्द्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ' ( आश्व. श्रौ. ७. १२) इति ॥

यत्पांचंजन्यया वि॒शेंद्रे॒ घोषा॒ असृंक्षत ।

अस्तृंणाद्ब॒र्हणां वि॒पो॒३॒ऽर्यो मानंस्य॒ स क्षयः ॥७

यत् । पाञ्चंऽजन्यया । वि॒शा । इन्द्रें । घोषाः । असृंक्षत ।

अस्तृंणात् । ब॒र्हणां । वि॒पः । अ॒र्यः । मानंस्य । सः । क्षयः ॥७

यत् । पाञ्चऽजन्यया । विशा । इन्द्रे । घोषाः । असृक्षत ।

अस्तृणात् । बर्हणा । विपः । अर्यः । मानस्य । सः । क्षयः ॥७

"यत् यदा "पाञ्चजन्यया । निषादपञ्चमाश्चत्वारो वर्णाः पञ्चजनाः। तत्र भवया "विशा प्रजया "इन्द्रे "घोषाः स्तुतयः "असृक्षत सृज्यन्ते तदानीमयमिन्द्रः "अस्तृणात् हिनस्ति शत्रून् "बर्हणा स्वमहत्त्वेन । अनन्यसहायेनेत्यर्थः । तादृशः "सः "अर्यः इन्द्रः "विपः मेधाविनः स्तोतुर्मम "मानस्य पूजायाः सत्कारस्य "क्षयः निवासो भवति ।

इ॒यमुं ते॒ अनुंष्टुतिश्चकृ॒षे तानि॒ पौंस्यां ।

प्रावंश्च॒क्रस्यं वर्त॒निं ॥८

इ॒यम् । ऊं इतिं । ते॒ । अनुंऽस्तुतिः । च॒कृ॒षे । तानिं । पौंस्यां ।

प्र । आ॒व॒ः । च॒क्रस्यं । व॒र्त॒निम् ॥८

इयम् । ऊं इति । ते । अनुऽस्तुतिः । चकृषे । तानि । पौंस्या ।

प्र । आवः । चक्रस्य । वर्तनिम् ॥८

"इयम् इदानीं क्रियमाणा "अनुष्टुतिः अनुकूला स्तुतिः "ते तव स्वभूता । कुतस्त इति उच्यते । "तानि प्रसिद्धानि वृत्रवधादीनि "पौंस्या पुंस्त्वानि यतः "चकृषे । अतस्त इत्यर्थः । हे इन्द्र "चक्रस्य रथाधारस्य "वर्तनिं मार्गं "प्रावः प्रारक्षः । अथास्मद्यज्ञगमनाय

रक्षःकृता चक्रमार्गबाधा यथा न भवति तथा रक्षसीत्यर्थः ॥

अ॒स्य वृष्णो॒ व्योद॑न उ॒रु क्र॑मिष्ट जी॒वसे॑ ।

यव॒ं न प॒श्व आ द॑दे ॥९

अ॒स्य । वृष्णः॑ । वि॒ऽओद॑ने । उ॒रु । क्र॒मि॒ष्ट॒ । जी॒वसे॑ ।

यव॑म् । न । प॒श्वः । आ । द॒दे॒ ॥९

अस्य । वृष्णः । विऽओदने । उरु । क्रमिष्ट । जीवसे ।

यवम् । न । पश्वः । आ । ददे ॥९

“अस्य वृष्णः वर्षितुरिन्द्रस्य “व्योदने विविधेऽन्ने लब्धे सति “जीवसे जीवनाथ “उरु विस्तीर्णं “क्रमिष्ट पदनिधानं करोति सर्वो लोकः । अथवेन्द्रस्य स्वभूतेऽन्ने लब्धे लब्धव्ये वा सति पदन्यासं करोति । तथा कृत्वा “यवं “न “पश्वः यवं पशव इव सर्वो जनः “आ “ददे आदत्ते स्तुतादस्मात् ॥

तद्दधा॑ना अव॒स्यवो॑ यु॒ष्माभि॒र्दक्ष॑पितरः ।

स्याम॑ म॒रुत्व॑तो वृ॒धे ॥१०

तत् । दधा॑नाः । अ॒व॒स्यवः॑ । यु॒ष्माभिः॑ । दक्ष॑ऽपितरः ।

स्याम॑ । म॒रुत्व॑तः । वृ॒धे ॥१०

तत् । दधानाः । अवस्यवः । युष्माभिः । दक्षऽपितरः ।

स्याम । मरुत्वतः । वृधे ॥१०

“तत् स्तोत्रं “दधानाः धारयन्तः “अवस्यवः रक्षाकामा वयं हे ऋत्विजः "युष्माभिः । सहिता इति वा योज्यम् । तादृशाः “दक्षपितरः । दक्षोऽन्नम् । तस्य पितरः पालकाः स्वामिनः “स्याम । किमर्थम् । "मरुत्वतः मरुद्भिस्तद्वत इन्द्रस्य "वृधे वर्धनाय यागाय ॥

बळृ॒त्विया॑य॒ धाम्न॒ ऋक्व॑भिः शूर नोनुमः ।

जेषा॑मेंद्र॒ त्वया॑ यु॒जा ॥११

बट् । ऋ॒त्विया॑य । धाम्ने॑ । ऋक्व॑ऽभिः । शू॒र॒ । नो॒नु॒मः॒ ।

जेषा॑म । इ॒न्द्र॒ । त्वया॑ । यु॒जा ॥११

बट् । ऋत्वियाय । धाम्ने । ऋक्वऽभिः । शूर । नोनुमः ।

जेषाम । इन्द्र । त्वया । युजा ॥११

"बट् सत्यम् "ऋत्वियाय ऋतौ भवाय । ऋतुशब्दो योगकालोपलक्षकः । यागकाले प्रादुर्भूताय “धाम्ने कल्याणतेजसे तुभ्यं हे “शूर इन्द्र “ऋक्वभिः मन्त्रैः "नोनुमः अतिशयेन स्तुमः । हे “इन्द्र स्तुतेन “त्वया युजा सहायभूतेन “जेषाम जयेम शत्रून् ॥

अ॒स्मे रु॒द्रा मे॒हना॒ पर्व॑तासो वृ॒त्रहत्ये॒ भर॑हूतौ स॒जोषाः॑ ।

यः शंस॑ते स्तुव॒ते धायि॑ प॒ज्र इंद्र॑ज्येष्ठा अ॒स्माँ अ॑वंतु दे॒वाः ॥१२

अ॒स्मे इति॑ । रु॒द्राः । मे॒हना॑ । पर्व॑तासः । वृ॒त्र॒ऽहत्ये॑ । भर॑ऽहूतौ । स॒ऽजोषाः॑ ।

यः । शंस॑ते । स्तु॒व॒ते । धायि॑ । प॒ज्रः । इन्द्र॑ऽज्येष्ठाः । अ॒स्मान् । अ॒व॒न्तु॒ । दे॒वाः ॥१२

अस्मे इति । रुद्राः । मेहना । पर्वतासः । वृत्रऽहत्ये । भरऽहूतौ । सऽजोषाः ।

यः । शंसते । स्तुवते । धायि । पज्रः । इन्द्रऽज्येष्ठाः । अस्मान् । अवन्तु । देवाः ॥१२

“अस्मे अस्मान् “रुद्राः “मेहना उदकसेचनयुक्ताः “पर्वतासः मेघाश्च “वृत्रहत्ये वृत्रहननसाधने “भरहूतौ संग्रामाह्वाने “सजोषाः अस्मत्समानप्रीतिश्च “यः इन्द्रः “शंसते शस्त्रं पठते “स्तुवते स्तोत्रं कुर्वते च यजमानाय "पज्रः बलवान् वेगवान् वा “धायि गच्छति स इन्द्रश्चेमे “इन्द्रज्येष्ठाः “देवाः “अस्मानवन्तु रक्षन्तु । अस्मानिति पूरणः । अथवैवं योज्यम् । रुद्रा रुद्रपुत्रा मेहना सेचनेन युक्ताः पर्वताः पर्वतसदृशाः पूरणवन्तः प्रीणनवन्तो वा ।' पर्व पुनः पृणातेः प्रीणातेर्वा' (निरु. १. २०) इति निरुक्तम् । वृत्रहत्ये भरहूतौ सजोषाः सजोषसः सहायभूता मरुतो देवा इन्द्रज्येष्ठा उक्तलक्षण इन्द्रश्चास्मानवन्त्विति ॥ ॥ ४३ ॥

# ऋग्वेदः सूक्तं ८.६४


प्रगाथः काण्वः।

दे. इन्द्रः। गायत्री।

---

उत्त्वा मन्दन्तु स्तोमाः कृणुष्व राधो अद्रिवः ।

अव ब्रह्मद्विषो जहि ॥१॥

पदा पणीँरराधसो नि बाधस्व महाँ असि ।

नहि त्वा कश्चन प्रति ॥२॥

त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् ।

त्वं राजा जनानाम् ॥३॥

एहि प्रेहि क्षयो दिव्याघोषञ्चर्षणीनाम् ।

ओभे पृणासि रोदसी ॥४॥

त्यं चित्पर्वतं गिरिं शतवन्तं सहस्रिणम् ।

वि स्तोतृभ्यो रुरोजिथ ॥५॥

वयमु त्वा दिवा सुते वयं नक्तं हवामहे ।

अस्माकं काममा पृण ॥६॥

क्व स्य वृषभो युवा तुविग्रीवो अनानतः ।

ब्रह्मा कस्तं सपर्यति ॥७॥

कस्य स्वित्सवनं वृषा जुजुष्वाँ अव गच्छति ।

इन्द्रं क उ स्विदा चके ॥८॥

कं ते दाना असक्षत वृत्रहन्कं सुवीर्या ।

उक्थे क उ स्विदन्तमः ॥९॥

अयं ते मानुषे जने सोमः पूरुषु सूयते ।

तस्येहि प्र द्रवा पिब ॥१०॥

अयं ते शर्यणावति सुषोमायामधि प्रियः ।

आर्जीकीये मदिन्तमः ॥११॥

तमद्य राधसे महे चारुं मदाय घृष्वये ।

एहीमिन्द्र द्रवा पिब ॥१२॥

**सायणभाष्यम्**

'उत्त्वा मन्दन्तु' इति द्वादशर्चं पञ्चमं सूक्तं प्रगाथस्यार्षम् । प्राग्वत्सप्रपरिभाषया गायत्रमैन्द्रम् । 'उत्त्वा' इत्यनुक्रमणिका । विनियोगो लैङ्गिकः ॥

उत्त्वा॑ मंदं॑तु॒ स्तोमाः॑ कृणु॒ष्व राधो॑ अद्रिवः ।

अव॑ ब्रह्म॒द्विषो॑ जहि ॥१

उत् । त्वा॒ । म॒न्द॒न्तु॒ । स्तोमाः॑ । कृ॒णु॒ष्व । राधः॑ । अ॒द्रि॒ऽव॒ः ।

अव॑ । ब्र॒ह्म॒ऽद्विषः॑ । ज॒हि॒ ॥१

उत् । त्वा । मन्दन्तु । स्तोमाः । कृणुष्व । राधः । अद्रिऽवः ।

अव । ब्रह्मऽद्विषः । जहि ॥१

हे इन्द्र “त्वा त्वां “स्तोमाः (https://puraana.tripod.com/pur_index30/stoma.htm) स्तुतयः "उत् उत्कृष्टं “मन्दन्तु मादयन्तु । “कृणुष्व कुरु “राधः अन्नं हे “अद्रिवः वज्रवन्निन्द्र अस्मभ्यम् । किंच “ब्रह्मद्विषः ब्राह्मणद्वेष्टॄन् “अव "जहि ॥

प॒दा प॒णीँर॑रा॒धसो॒ नि बा॑धस्व म॒हाँ अ॑सि ।

न॒हि त्वा॒ कश्च॒न प्रति॑ ॥२

प॒दा । प॒णीन् । अ॒रा॒धसः॑ । नि । बा॒ध॒स्व॒ । म॒हान् । अ॒सि॒ ।

न॒हि । त्वा॒ । कः । च॒न । प्रति॑ ॥२

पदा । पणीन् । अराधसः । नि । बाधस्व । महान् । असि ।

नहि । त्वा । कः । चन । प्रति ॥२

“पणीन् लुब्धात् “अराधसः यष्टव्यधनरहितान् केवलधनान् “पदा पादेन अतिक्रम्य “नि नितरां “बाधस्व । “त्वा त्वां तव "कश्चन कश्चिदपि देवोऽसुरो मनुष्यो वा “प्रति प्रतिनिधिः सदृशो “नहि अस्ति खलु ॥

त्वमी॑शिषे सु॒ताना॒मिंद्र॒ त्वमसु॑तानां ।

त्वं राजा॒ जना॑नां ॥३

त्वम् । ई॒शि॒षे॒ । सु॒ताना॑म् । इ॒न्द्र॒ । त्वम् । असु॑तानाम् ।

त्वम् । राजा॑ । जना॑नाम् ॥३

त्वम् । ईशिषे । सुतानाम् । इन्द्र । त्वम् । असुतानाम् ।

त्वम् । राजा । जनानाम् ॥३

हे इन्द्र “त्वं “सुतानाम् अभिषुतानां सोमानाम् “ईशिषे ईश्वरो भवसि । तथा “त्वम् “असुतानां वल्ल्याकारे वर्तमानानां चेशिषे । “त्वं जनानां सर्वेषां “राजा भवसि ॥

एहि॒ प्रेहि॒ क्षयो॑ दि॒व्या॒३॒॑घोषं॑चर्षणी॒नां ।

ओभे पृ॑णासि॒ रोद॑सी ॥४

आ । इ॒हि॒ । प्र । इ॒हि॒ । क्षयः॑ । दि॒वि । आ॒ऽघोष॑न् । च॒र्ष॒णी॒नाम् ।

आ । उ॒भे इति॑ । पृ॒णा॒सि॒ । रोद॑सी॒ इति॑ ॥४

आ । इहि । प्र । इहि । क्षयः । दिवि । आऽघोषन् । चर्षणीनाम् ।

आ । उभे इति । पृणासि । रोदसी इति ॥४

हे इन्द्र “एहि आगच्छ । तथा “प्रेहि प्रगच्छ । दिवि द्युलोकात् । किम् । “क्षयः निवासम् । किं कुर्वन् । “आघोषन् शब्दं कुर्वन् । किमर्थम् । “चर्षणीनां मनुष्याणामर्थाय । अथवा । हविः स्वीकृत्य प्रेहि सुखेन गच्छ । दिवमाघोषन् यजमानं स्तुवन् । “उभे रोदसी द्यावापृथिव्यौ “आ “पृणासि आपूरयसि तेजसा वृष्ट्या वा ।।

त्यं चि॒त्पर्व॑तं गि॒रिं श॒तव॑न्तं सह॒स्रिण॑ं ।

वि स्तो॒तृभ्यो॑ रुरोजिथ ॥५

त्यम् । चि॒त् । पर्व॑तम् । गि॒रिम् । श॒तऽव॑न्तम् । स॒ह॒स्रिण॑म् ।

वि । स्तो॒तृऽभ्यः॑ । रु॒रो॒जि॒थ॒ ॥५

त्यम् । चित् । पर्वतम् । गिरिम् । शतऽवन्तम् । सहस्रिणम् ।

वि । स्तोतृऽभ्यः । रुरोजिथ ॥५

हे इन्द्र त्वं “त्यं “चित् तम् । चिदिति पूरणः । “पर्वतं पर्ववन्तं “गिरिं मेघम् । उभयोर्मेघनामत्वादेको योगरूढो द्रष्टव्यः । “शतवन्तं शतोदकवन्तं तथा “सहस्रिणम् अपरिमितवृष्टिं मेघं “स्तोतृभ्यः अर्थाय “वि “रुरोजिथ विरुज वज्रेण ।।

व॒यमु॑ त्वा॒ दिवा॑ सु॒ते व॒यं नक्त॑ं हवामहे ।

अ॒स्माकं॒ काम॒मा पृ॑ण ॥६

व॒यम् । उ॒ इति॑ । त्वा॒ । दिवा॑ । सु॒ते । व॒यम् । नक्त॑म् । ह॒वा॒म॒हे॒ ।

अ॒स्माक॑म् । काम॑म् । आ । पृ॒ण॒ ॥६

वयम् । ऊं इति । त्वा । दिवा । सुते । वयम् । नक्तम् । हवामहे ।

अस्माकम् । कामम् । आ । पृण ॥६

हे इन्द्र "वयं “त्वा त्वां “दिवा अहनि “सुते सोमेऽभिषुते "हवामहे आह्वयामः । तथा “वयं “नक्त हवामहे । आहूत आगत्य "अस्माकं “काममा “पृण आपूरय ॥ ॥ ४४ ॥

क्व१॒ स्य वृ॑ष॒भो युवा॑ तुवि॒ग्रीवो॒ अना॑नतः ।

ब्र॒ह्मा कस्तं स॑पर्यति ॥७

क्वं । स्यः । वृ॒ष॒भः । युवा॑ । तु॒वि॒ऽग्रीवः॑ । अना॑नतः ।

ब्र॒ह्मा । कः । तम् । स॒प॒र्य॒ति॒ ॥७

क्व । स्यः । वृषभः । युवा । तुविऽग्रीवः । अनानतः ।

ब्रह्मा । कः । तम् । सपर्यति ॥७

“स्यः सः “वृषभः वर्षिता "युवा नित्यतरुणः “तुविग्रीवः विस्तीर्णकन्धरः "अनानतः कदाचिदप्यनवनत इन्द्रः “क्व कुत्र वर्तत इति को जानातीत्यर्थः। “कः “ब्रह्मा स्तोता त्वा त्वां “सपर्यति पूजयति ॥

कस्यं स्वि॒त्सव॑नं॒ वृषा॑ जुजु॒ष्वाँ अव॑ गच्छति ।

इंद्रं॒ क उं॑ स्वि॒दा च॑के ॥८

कस्यं । स्वि॒त् । सव॑नम् । वृषा॑ । जु॒जु॒ष्वान् । अव॑ । ग॒च्छ॒ति॒ ।

इन्द्रं॑म् । कः । ऊं॒ इति॑ । स्वि॒त् । आ । च॒के॒ ॥८

कस्य । स्वित् । सवनम् । वृषा । जुजुष्वान् । अव । गच्छति ।

इन्द्रम् । कः । ऊं इति । स्वित् । आ । चके ॥८

"कस्य “स्वित् “सवनम् । स्विदिति विचिकित्सायाम् । “वृषा वर्षितेन्द्रः “जुजुष्वान् प्रीयमाणः “अव “गच्छति । “क “उ को वा यजमानः “इन्द्रम् “आ “चके जानाति स्तोतुम् । “स्वित् इति पूरणः ॥

कं ते॑ दा॒ना अ॑सक्षत॒ वृत्र॑ह॒न्कं सु॒वीर्या॑ ।

उ॒क्थे क उ॑ स्वि॒दंत॑मः ॥९

कम् । ते॒ । दा॒नाः । अ॒स॒क्ष॒त॒ । वृत्र॑ऽहन् । कम् । सु॒ऽवीर्या॑ ।

उ॒क्थे । कः । ऊं॒ इति॑ । स्वि॒त् । अन्त॑मः ॥९

कम् । ते । दानाः । असक्षत । वृत्रऽहन् । कम् । सुऽवीर्या ।

उक्थे । कः । ऊं इति । स्वित् । अन्तमः ॥९

“ते त्वां “दानाः यजमानैर्दत्ताः “असक्षत सेवन्ते। हे “वृत्रहन् वृत्रस्य हन्तरिन्द्र “कं कीदृशं त्वाम् “उक्थे शस्त्रे सुवीर्या शोभनवीर्याणि स्तोत्राण्यसक्षत । “क “उ “स्विदन्तमः वान्तिकतमो भवति युद्धे ॥

द्वितीये पर्यये होतुः शस्त्रे ' अयं ते मानुषे ' इति तृचोऽनुरूपः । सूत्रितं च- अयं ते मानुषे जन उद्धेदभि' ( आश्व. श्रौ. ६. ४ ) इति ॥

अ॒यं ते॒ मानु॑षे॒ जने॒ सोमः॑ पू॒रुषु॑ सूयते ।

तस्येहि॒ प्र द्र॑वा॒ पिब॑ ॥१०

अ॒यम् । ते॒ । मानु॑षे । जने॑ । सोमः॑ । पू॒रुषु॑ । सू॒य॒ते॒ ।

तस्य॑ । आ । इ॒हि॒ । प्र । द्र॒व॒ । पिब॑ ॥१०

अयम् । ते । मानुषे । जने । सोमः । पूरुषु । सूयते ।

तस्य । आ । इहि । प्र । द्रव । पिब ॥१०

“अयं सोमः “ते त्वदर्थं तव स्वभूतो वा “पूरुषु मनुष्येषु मध्ये “मानुषे “जने मयि “सूयते। अथवा पूरुनामसु राजसु सूयते । “तस्य । तमित्यर्थः । तम् “एहि आगच्छ । आगत्य च “प्र “द्रव गृहसमीपम् । तथा कृत्वा “पिब तं सोमम् ॥

अ॒यं ते॑ शर्य॒णाव॑ति सु॒षोमा॑या॒मधि॑ प्रि॒यः ।

आ॒र्जी॒कीये॑ म॒दिंत॑मः ॥११

अ॒यम् । ते॒ । श॒र्य॒णाऽव॑ति । सु॒ऽसोमा॑याम् । अधि॑ । प्रि॒यः ।

आ॒र्जी॒कीये॑ । म॒दिन्ऽत॑मः ॥११

अयम् । ते । शर्यणाऽवति । सुऽसोमायाम् । अधि । प्रियः ।

आर्जीकीये । मदिन्ऽतमः ॥११

“अयम् अस्माभिरभिषुतः सोमः "ते त्वां "मदिन्तमः मादयितृतमः । अयम् “अधि श्रितः आश्रितः । कुत्रेति तदुच्यते । “शर्यणावति कुरुक्षेत्रस्य जघनार्धभवे शरतृणोपेते सरसि । तत्सरः कुत्र वर्तत इति उच्यते । “सुषोमायाम् एतन्नामिकायां नद्याम् । सा च कुत्र वर्तत इति तदुच्यते । आर्जीकीये एतन्नामके देशे। एवमुक्तप्रकारेणात्यन्तदूरदेशे वर्तते यः सोमः स एवायमभिषुतः । तं पिबेत्युत्तरत्रान्वयः ॥

तम॒द्य राध॑से म॒हे चारुं॒ मदा॑य॒ घृष्व॑ये ।

एहीमिंद्र द्रवा पिब ॥१२

तम् । अद्य । राधसे । महे । चारुम् । मदाय । घृष्वये ।

आ । इहि । ईम् । इन्द्र । द्रव । पिब ॥१२

तम् । अद्य । राधसे । महे । चारुम् । मदाय । घृष्वये ।

आ । इहि । ईम् । इन्द्र । द्रव । पिब ॥१२

“तं पूर्वमन्त्र उपवर्णितं “चारुं चरणशीलं सोमं “महे महते “राधसे अस्माकं धनाय तव “घृष्वये शत्रूणां घर्षणशीलाय "मदाय “पिब । हे "इन्द्र तदर्थं “द्रव गच्छ शीघ्रं सोमपात्रं प्रति । तदर्थम् “ईम् इदानीम् “एहि आगच्छ ॥ ॥ ४५ ॥

**टिप्पणी**

८.६४.१ उत् त्वा मन्दन्तु सोमाः इति

साम १३५४ (https://sa.wikisource.org/s/3kn)

# ऋग्वेदः सूक्तं ८.६५

ऋग्वेदः - मण्डल ८
← सूक्तं ८.६४ सूक्तं ८.६५ सूक्तं ८.६६ →
प्रगाथः काण्वः।

दे. इन्द्रः। गायत्री।

---

यदिन्द्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः ।

आ याहि तूयमाशुभिः ॥१॥

यद्वा प्रस्रवणे दिवो मादयासे स्वर्णरे ।

यद्वा समुद्रे अन्धसः ॥२॥

आ त्वा गीर्भिर्महामुरुं हुवे गामिव भोजसे ।

इन्द्र सोमस्य पीतये ॥३॥

आ त इन्द्र महिमानं हरयो देव ते महः ।

रथे वहन्तु बिभ्रतः ॥४॥

इन्द्र गृणीष उ स्तुषे महाँ उग्र ईशानकृत् ।

एहि नः सुतं पिब ॥५॥

सुतावन्तस्त्वा वयं प्रयस्वन्तो हवामहे ।

इदं नो बर्हिरासदे ॥६॥

यच्चिद्धि शश्वतामसीन्द्र साधारणस्त्वम् ।

तं त्वा वयं हवामहे ॥७॥

इदं ते सोम्यं मध्वधुक्षन्नद्रिभिर्नरः ।

जुषाण इन्द्र तत्पिब ॥८॥

विश्वाँ अर्यो विपश्चितोऽति ख्यस्तूयमा गहि ।

अस्मे धेहि श्रवो बृहत् ॥९॥

दाता मे पृषतीनां राजा हिरण्यवीनाम् ।

मा देवा मघवा रिषत् ॥१०॥

सहस्रे पृषतीनामधि श्चन्द्रं बृहत्पृथु ।

शुक्रं हिरण्यमा ददे ॥११॥

नपातो दुर्गहस्य मे सहस्रेण सुराधसः ।

श्रवो देवेष्वक्रत ॥१२॥

---

**सायणभाष्यम्**

“यदिन्द्र प्राक्' इति द्वादशर्चं षष्ठं सूक्तं प्रगाथस्यार्षं गायत्रमैन्द्रम् । “यदिन्द्र' इत्यनुक्रान्तम् । विनियोगो लैङ्गिकः ॥

यदिं॑द्र॒ प्रागपा॒गुद॒ङ्न्यं॑ग्वा हू॒यसे॒ नृभिः॑ ।

आ यां॑हि॒ तूयं॑मा॒शुभिः॑ ॥१

यत् । इ॒न्द्र॒ । प्राक् । अपा॑क् । उदं॑क् । न्यं॑क् । वा॒ । हू॒यसे॑ । नृऽभिः॑ ।

आ । या॒हि॒ । तूयं॑म् । आ॒शुऽभिः॑ ॥१

यत् । इन्द्र । प्राक् । अपाक् । उदक् । न्यक् । वा । हूयसे । नृऽभिः ।

आ । याहि । तूयम् । आशुऽभिः ॥१

हे "इन्द्र त्वं "नृभिः कर्मनेतृभिरस्मदीयैरध्वर्य्वादिभिः "प्राक् वा "अपागुदक् वा "न्यग्वा यतः कुतश्चित् "हूयसे अतः "तूयं तूर्णम् "आशुभिः आशुगामिभिरश्वैः "आ "याहि आगच्छ ॥

यद्वा॑ प्र॒स्रव॑णे दि॒वो मा॒दया॑से॒ स्व॑र्णरे ।

यद्वा॑ समु॒द्रे अन्ध॑सः ॥२

यत् । वा॒ । प्र॒ऽस्रव॑णे । दि॒वः । मा॒दया॑से । स्व॑ःऽनरे ।

यत् । वा॒ । स॒मु॒द्रे । अन्ध॑सः ॥२

यत् । वा । प्रऽस्रवणे । दिवः । मादयासे । स्वःऽनरे ।

यत् । वा । समुद्रे । अन्धसः ॥२

"यद्वा अथवा "दिवः द्युलोकस्य "प्रस्रवणे अमृतनिष्यन्दनस्थाने "मादयासे माद्यसि । यद्वा "स्वर्णरे स्वर्गनयने वा भूलोकेऽन्यस्य यागदेशे माद्यसि । "यद्वा "अन्धसः। अन्धोऽन्नम्। तेन तत्कारणमुदकं लक्ष्यते । तस्य "समुद्रे समुन्दनापादानभूतेऽन्तरिक्षे माद्यसि । तत्र तत्र वर्तमानमपि हुव इत्युत्तरत्र संबन्धः ॥

आ त्वा॑ गी॒र्भिर्म॒हामु॒रुं हु॒वे गामि॑व॒ भोज॑से ।

इंद्र॒ सोम॑स्य पी॒तये॑ ॥३

आ । त्वा॒ । गी॒ःऽभिः । म॒हाम् । उ॒रुम् । हु॒वे । गाम्ऽइ॑व । भोज॑से ।

इन्द्र॑ । सोम॑स्य । पी॒तये॑ ॥३

आ । त्वा । गीःऽभिः । महाम् । उरुम् । हुवे । गाम्ऽइव । भोजसे ।

इन्द्र । सोमस्य । पीतये ॥३

हे "इन्द्र "त्वा त्वां "गीर्भिः स्तुतिभिः "हुवे आह्वयामि । कीदृशं त्वाम् । "महां महान्तम् "उरुं प्रभूतम् । किमर्थम् । "सोमस्य "पीतये पानाय । ह्वाने दृष्टान्तः। "भोजसे भोगाय "गामिव ॥

आ त॑ इंद्र महि॒मानं॒ हर॑यो देव ते॒ महः॑ ।

रथे॑ वहंतु॒ बिभ्र॑तः ॥४

आ । ते॒ । इ॒न्द्र॒ । म॒हि॒मान॑म् । हर॑यः । दे॒व॒ । ते॒ । महः॑ ।

रथे॑ । व॒ह॒न्तु॒ । बिभ्र॑तः ॥४

आ । ते । इन्द्र । महिमानम् । हरयः । देव । ते । महः ।

रथे । वहन्तु । बिभ्रतः ॥४

हे "इन्द्र "ते तव "महिमानं माहात्म्यं "रथे "बिभ्रतः धारयन्तः "हरयः अश्वाः "आ "वहन्तु । तथा हे "देव "ते "महः तेजः रथे बिभ्रतोऽश्वा आ वहन्तु। अत्र महिम्नो महसश्च पृथगावहनासंभवात्ताभ्यां विशिष्टं वहन्त्वित्यर्थः । अथवा महिमानं बिभ्रतस्ते त्वां रथे वहन्तु महो बिभ्रतश्च त्वां वहन्विति योज्यम् ॥

इंद्रं॑ गृणी॒ष उं॑ स्तु॒षे म॒हाँ उ॒ग्र ईशा॑न॒कृत् ।

एहि॑ नः सु॒तं पिब॑ ॥५

इन्द्र॑ । गृ॒णी॒षे । उं॒ इति॑ । स्तु॒षे । म॒हान् । उ॒ग्रः । ई॒शा॒न॒ऽकृत् ।

आ । इ॒हि॒ । न॒ः । सु॒तम् । पिब॑ ॥५

इन्द्र । गृणीषे । ऊं इति । स्तुषे । महान् । उग्रः । ईशानऽकृत् ।

आ । इहि । नः । सुतम् । पिब ॥५

हे इन्द्र त्वं "गृणीषे उच्यसे । इदं देहीदं कुर्विति । तथा "स्तुषे "उ स्तूयसे च । उ इति चार्थे । कीदृशस्त्वम्। "महान् गुणैः प्रवृद्धः "उग्रः उद्गूर्णबलः "ईशानकृत् ऐश्वर्यकर्ता । तादृशस्त्वम् "एहि आगच्छ । आगत्य च "नः "सुतं सोमं "पिब ॥

सु॒ताव॑न्तस्त्वा व॒यं प्रय॑स्वन्तो हवामहे ।

इ॒दं नो॑ ब॒र्हिरा॒सदे॑ ॥६

सु॒तऽव॑न्तः । त्वा॒ । व॒यम् । प्रय॑स्वन्तः । ह॒वा॒म॒हे॒ ।

इ॒दम् । न॒ः । ब॒र्हिः । आ॒ऽसदे॑ ॥६

सुतऽवन्तः । त्वा । वयम् । प्रयस्वन्तः । हवामहे ।

इदम् । नः । बर्हिः । आऽसदे ॥६

"सुतावन्तः अभिषुतसोमवन्तः "प्रयस्वन्तः चरुपुरोडाशाद्यन्नवन्तश्च "वयं "त्वा त्वां "हवामहे आह्वयामः । किमर्थम् । "इदं "नः अस्मदीयं "बर्हिः बर्हिषि यज्ञे बर्हिषि वा "आसदे आसादनाय ॥ ॥ ४६ ॥

यच्चि॒द्धि शश्व॑ता॒मसीं॑द्र॒ साधा॑रण॒स्त्वं ।

तं त्वा॑ व॒यं ह॑वामहे ॥७

यत् । चि॒त् । हि । शश्व॑ताम् । असि॑ । इन्द्र॑ । साधा॑रणः । त्वम् ।

तम् । त्वा॒ । व॒यम् । ह॒वा॒म॒हे॒ ॥७

यत् । चित् । हि । शश्वताम् । असि । इन्द्र । साधारणः । त्वम् ।

तम् । त्वा । वयम् । हवामहे ॥७

हे “इन्द्र “त्वं “यच्चिद्धि यस्मात् खलु “शश्वतां बहूनां यजमानानां “साधारणः “असि । चिदिति पूरणः । हीति प्रसिद्धौ । “तं तादृशं साधारणं “त्वा त्वां “वयं “हवामहे आह्वयामः । इतरेभ्यः पूर्वमिति भावः ॥

प्रातःसवने 'इदं ते सोम्यम्' इति होतुः प्रस्थितयाज्या । सूत्रितं च- इदं ते सोम्यं मधु मित्रं वयं हवामहे ' ( आश्व. श्रौ. ५. ५) इति ॥

इ॒दं ते॑ सो॒म्यं मध्वधु॑क्ष॒न्नद्रि॑भि॒र्नरः॑ ।

जु॒षा॒ण इं॑द्र॒ तत्पि॑ब ॥८

इ॒दम् । ते॒ । सो॒म्यम् । मधु॑ । अधु॑क्षन् । अद्रि॑ऽभिः । नरः॑ ।

जु॒षा॒णः । इ॒न्द्र॒ । तत् । पि॒ब॒ ॥८

इदम् । ते । सोम्यम् । मधु । अधुक्षन् । अद्रिऽभिः । नरः ।

जुषाणः । इन्द्र । तत् । पिब ॥८

हे इन्द्र "ते त्वदर्थम् "इदं "सोम्यं सोमसंबन्धि "मधु “अधुक्षन् "अद्रिभिः ग्रावभिरभिषवसाधनैः "नरः अस्मदीया अध्वर्य्वादयः । हे “इन्द्र "तत् मधु "जुषाणः प्रीयमाणः "पिब ॥

विश्वाँ॑ अ॒र्यो वि॑प॒श्चितोऽति॑ ख्य॒स्तूय॒मा ग॑हि ।

अ॒स्मे धे॑हि॒ श्रवो॑ बृ॒हत् ॥९

विश्वा॑न् । अ॒र्यः । वि॒पः॒ऽचितः॑ । अति॑ । ख्यः॒ । तूय॑म् । आ । ग॒हि॒ ।

अ॒स्मे इति॑ । धे॒हि॒ । श्रवः॑ । बृ॒हत् ॥९

विश्वान् । अर्यः । विपःऽचितः । अति । ख्यः । तूयम् । आ । गहि ।

अस्मे इति । धेहि । श्रवः । बृहत् ॥९

हे इन्द्र "अर्यः स्वामी त्वं "विश्वान् "विपश्चितः स्तोतॄन् “अति “ख्यः अतिक्रम्य पश्य । तदर्थं "तूयं क्षिप्रम् "आ “गहि । आगत्य च "अस्मे अस्मासु "बृहत् "श्रवः अन्नं यशो वा “धेहि ॥

दा॒ता मे॒ पृष॑तीनां॒ राजा॑ हिरण्य॒वीना॑ं ।

मा दे॑वा म॒घवा॑ रिषत् ॥१०

दा॒ता । मे॒ । पृष॑तीनाम् । राजा॑ । हि॒र॒ण्य॒ऽवीना॑म् ।

मा । दे॒वा॒ः । म॒घऽवा॑ । रि॒ष॒त् ॥१०

दाता । मे । पृषतीनाम् । राजा । हिरण्यऽवीनाम् ।

मा । देवाः । मघऽवा । रिषत् ॥१०

"हिरण्यवीनां हिरण्यवीतानां "पृषतीनां "राजा इन्द्रः "मे “दाता भवतु । हे "देवाः "मघवा इन्द्रः “मा "रिषत् रिष्टो मा भवतु ।।

स॒हस्रे॒ पृष॑तीना॒मधि॑ श्चु॒द्रं बृ॒हत्पृ॒थु ।

शु॒क्रं हिर॑ण्य॒मा द॑दे ॥११

स॒हस्रे॑ । पृष॑तीनाम् । अधि॑ । च॒न्द्रम् । बृ॒हत् । पृ॒थु ।

शु॒क्रम् । हिर॑ण्यम् । आ । द॒दे॒ ॥११

सहस्रे । पृषतीनाम् । अधि । चन्द्रम् । बृहत् । पृथु ।

शुक्रम् । हिरण्यम् । आ । ददे ॥११

अहं "पृषतीनां गवां "सहस्रे "अधि उपरि धारितं "बृहत् महत् “पृथु विस्तृतं "चन्द्रम् आह्लादकं “शुक्रं निर्मलं "हिरण्यमा "ददे स्वीकरोमीन्द्रेणानीतम् ॥

नपा॑तो दु॒र्गह॑स्य मे स॒हस्रे॑ण सु॒राध॑सः ।

श्रवो॑ दे॒वेष्व॑क्रत ॥१२

नपा॑तः । दुः॒ऽगह॑स्य । मे॒ । स॒हस्रे॑ण । सु॒ऽराध॑सः ।

श्रवः॑ । दे॒वेषु॑ । अ॒क्र॒त॒ ॥१२

नपातः । दुःऽगहस्य । मे । सहस्रेण । सुऽराधसः ।

श्रवः । देवेषु । अक्रत ॥१२

“नपातः अरक्षितस्य "दुर्गहस्य दुःखं गाहमानस्य "मे संबन्धिनो जनाः "सहस्रेण अपरिमितेनेन्द्रदत्तेन गवादिधनेन "सुराधसः सुधनाः सन्तः “देवेषु प्रीतेषु । इन्द्रे प्रीत इत्यर्थः । “श्रवः अन्नं यशो वा “अक्रत । अलभन्तेत्यर्थः ॥ ॥ ४७ ॥

# ऋग्वेदः सूक्तं ८.६६


ऋग्वेदः - मण्डल ८

← सूक्तं ८.६५ | सूक्तं ८.६६ | सूक्तं ८.६७ →

कलिः प्रागाथः


दे. इन्द्रः। प्रगाथः - (विषमा बृहती, समा सतोबृहती), १५ अनुष्टुप्।



*तालफलः*

तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये ।

बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥१॥

न यं दुध्रा वरन्ते न स्थिरा मुरो मदे सुशिप्रमन्धसः ।

य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥२॥

यः शक्रो मृक्षो अश्व्यो यो वा कीजो हिरण्ययः ।

स ऊर्वस्य रेजयत्यपावृतिमिन्द्रो गव्यस्य वृत्रहा ॥३॥

निखातं चिद्यः पुरुसम्भृतं वसूदिद्वपति दाशुषे ।

वज्री सुशिप्रो हर्यश्व इत्करदिन्द्रः क्रत्वा यथा वशत् ॥४॥

यद्वावन्थ पुरुष्टुत पुरा चिच्छूर नृणाम् ।

वयं तत्त इन्द्र सं भरामसि यज्ञमुक्थं तुरं वचः ॥५॥

सचा सोमेषु पुरुहूत वज्रिवो मदाय द्युक्ष सोमपाः ।

त्वमिद्धि ब्रह्मकृते काम्यं वसु देष्ठः सुन्वते भुवः ॥६॥

वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् ।

तस्मा उ अद्य समना सुतं भरा नूनं भूषत श्रुते ॥७॥

वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति ।

सेमं न स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया ॥८॥

कदू न्वस्याकृतमिन्द्रस्यास्ति पौंस्यम् ।

केनो नु कं श्रोमतेन न शुश्रुवे जनुषः परि वृत्रहा ॥९॥

कदू महीरधृष्टा अस्य तविषीः कदु वृत्रघ्नो अस्तृतम् ।

इन्द्रो विश्वान्बेकनाटाँ अहर्दृश उत क्रत्वा पणीँरभि ॥१०॥

वयं घा ते अपूर्व्येन्द्र ब्रह्माणि वृत्रहन् ।

पुरूतमासः पुरुहूत वज्रिवो भृतिं न प्र भरामसि ॥११॥

पूर्वीश्चिद्धि त्वे तुविकूर्मिन्नाशसो हवन्त इन्द्रोतयः ।

तिरश्चिदर्यः सवना वसो गहि शविष्ठ श्रुधि मे हवम् ॥१२॥

वयं घा ते त्वे इद्विन्द्र विप्रा अपि ष्मसि ।

नहि त्वदन्यः पुरुहूत कश्चन मघवन्नस्ति मर्डिता ॥१३॥

त्वं नो अस्या अमतेरुत क्षुधोऽभिशस्तेरव स्पृधि ।

त्वं न ऊती तव चित्रया धिया शिक्षा शचिष्ठ गातुवित् ॥१४॥

सोम इद्धः सुतो अस्तु कलयो मा बिभीतन ।

अपेदेष ध्वस्मायति स्वयं घैषो अपायति ॥१५॥

**सायणभाष्यम्**

' तरोभिर्वः' इति पञ्चदशर्चं सप्तमं सूक्तं प्रगाथपुत्रस्य कलेरार्षम् । प्रथमातृतीयाद्ययुजो बृहत्यो द्वितीयाचतुर्थ्यादियुजः सतोबृहत्यः पञ्चदशी त्वनुष्टुप् । तथा चानुक्रमणिका--- तरोभिः पञ्चोना कलिः प्रागाथः प्रागाथमन्त्यानुष्टुप् इति । महाव्रते निष्केवल्ये बार्हततृचाशीतावेतत्सूक्तम् । तथा च पञ्चमारण्यके सूत्रितं-तरोभिर्वो विदद्वसुमित्युत्तमामुद्धरति ( ऐ. आ. ५, २. ४) इति । अग्निष्टोमेऽच्छावाकशस्त्रेऽयं प्रगाथः स्तोत्रियः । तथा च सूत्रितं--- तरोभिर्वो विदद्वसुं तरणिरित्सिषासतीति प्रगाथौ स्तोत्रियानुरूपौ' ( आश्व. श्रौ. ५, १६ ) इति । चातुर्विंशिकेऽहन्ययमेव प्रगाथः स्तोत्रियः । सूत्रितं च--- तरोभिर्वो विदद्वसुं तरणिरित्सिषासति' ( आश्व. श्रौ. ७. ४ ) इति ॥

तरो॑भिर्वो वि॒दद्व॑सु॒मिन्द्रं॑ स॒बाध॑ ऊ॒तये॑ ।

बृ॒हद्गाय॑न्तः सु॒तसो॑मे अध्व॒रे हु॒वे भरं॒ न का॒रिण॑म् ॥१

तरः॑ऽभिः । वः॒ । वि॒दत्ऽव॑सुम् । इन्द्र॑म् । स॒ऽबाधः॑ । ऊ॒तये॑ ।

बृ॒हत् । गाय॑न्तः । सु॒तऽसो॑मे । अ॒ध्व॒रे । हु॒वे । भर॑म् । न । का॒रिण॑म् ॥१

तरःऽभिः । वः । विदत्ऽव॑सुम् । इन्द्रम् । सऽबाधः । ऊतये ।

बृहत् । गायन्तः । सुतऽसोमे । अध्वरे । हुवे । भरम् । न । कारिणम् ॥ १ ॥

हे ऋत्विजः वः यूयं तरोभिः वेगैरश्वैरुपेतं वेगैरेव वा विदद्वसु वेदयद्वसुं धनावेदकम् इन्द्रं सबाधः बाधासहिताः ऊतये रक्षणाय बृहत् साम एतत्संज्ञं गायन्तः सन्तः परिचरतेति शेषः । कुत्रेति तदुच्यते । सुतसोमे सुतसोमके अध्वरे यज्ञे सोमयागे । अहं च तमिन्द्रं हुवे आह्वयामि । कमिव । भरं भर्तारं कुटुम्बपोषकं कारिणं हितकरणशीलं यथा स्वस्तिकरणायाह्वयन्ति पुत्रादयस्तद्वत्तथाभूतमिन्द्रं हुव इति ॥

न यं दु॒ध्रा वर॑न्ते॒ न स्थि॒रा मुरो॒ मदे॑ सुशि॒प्रमन्ध॑सः ।

य आ॒दृत्या॑ शशमा॒नाय॑ सुन्व॒ते दाता॑ जरि॒त्र उ॒क्थ्य॑म् ॥२

न । यम् । दु॒ध्राः । वर॑न्ते । न । स्थि॒राः । मुरः॑ । मदे॑ । सु॒ऽशि॒प्रम् । अन्ध॑सः ।

यः । आ॒ऽदृत्य॑ । श॒श॒मा॒नाय॑ । सु॒न्व॒ते । दाता॑ । ज॒रि॒त्रे । उ॒क्थ्य॑म् ॥२

न । यम् । दुध्राः । वरन्ते । न । स्थिराः । मुरः । मदे। सुऽशिप्रम् । अन्धसः ।

यः । आऽदृत्य । शशमानाय । सुन्वते । दाता । जरित्रे । उक्थ्यम् ॥ २ ॥

यं सुशिप्रम् इन्द्रं दुध्राः दुर्धरा असुरादयो न वरन्ते न वारयन्ति संग्रामे । तथा स्थिराः देवाः न वरन्ते । किंच मुरः मरणस्वभावा मनुष्या न वरन्ते । अन्धसः अन्नस्य सोमस्य मदे मदाय सोमपानजनिताय आदृत्य यः शशमानाय शंसमानाय सुन्वते अभिषवं कुर्वते जरित्रे स्तोत्रे च दाता भवति । किम् । उक्थ्यं स्तुत्यं धनम् । स रेजयतीत्युत्तरत्र संबन्धः ॥

यः श॒क्रो मृ॒क्षो अश्व्यो॒ यो वा॒ कीजो॑ हिर॒ण्ययः॑ ।

स ऊ॒र्वस्य॑ रेजय॒त्यपा॑वृति॒मिन्द्रो॒ गव्य॑स्य वृत्र॒हा ॥३

यः । श॒क्रः । मृ॒क्षः । अश्व्यः॑ । यः । वा॒ । कीजः॑ । हि॒र॒ण्ययः॑ ।

सः । ऊ॒र्वस्य॑ । रे॒ज॒य॒ति॒ । अप॑ऽवृतिम् । इन्द्रः॑ । गव्य॑स्य । वृ॒त्र॒ऽहा ॥३

यः । शक्रः । मृक्षः । अश्व्यः । यः । वा । कीजः । हिरण्ययः ।

सः । ऊर्वस्य । रेजयति । अपऽवृतिम् । इन्द्रः । गव्यंस्य । वृत्रऽहा ॥ ३ ॥

यः शक्रः इन्द्रः स्तोतॄणां मृक्षः शोधकः परिचरणीयो वा। यश्च अश्व्यः । अश्वकुशलोऽश्व्यः । अथवाश्व्य इति स्वार्थिको यत् । मृक्षोऽश्वः प्रक्षालितोऽश्व इव वर्तते । यो वा कीजः । कीज इत्यद्भुतमाह। किमस्य कथं जात इति व---। यश्च हिरण्ययः हिरण्मयशरीरः सः एवमाश्चर्यभूतः इन्द्रः वृत्रहा गव्यस्य गोसमूहस्य । कीदृशस्य । ऊर्वस्य बहुलस्य अपावृतिम् अपवरणीयं रेजयति । कम्पयतीत्यर्थः ॥

निखा॑तं चि॒द्यः पु॑रुसम्भृ॒तं वसूदिद्वप॑ति दा॒शुषे॑ ।

व॒ज्री सु॑शि॒प्रो हर्य॑श्व॒ इत्क॑र॒दिन्द्र॒ः क्रत्वा॒ यथा॒ वश॑त् ॥४

निऽखा॑तम् । चि॒त् । यः । पु॒रु॒ऽस॒म्भृ॒तम् । वसु॑ । उत् । इत् । वप॑ति । दा॒शुषे॑ ।

व॒ज्री । सु॒ऽशि॒प्रः । हरि॑ऽअश्वः । इत् । क॒र॒त् । इन्द्रः॑ । क्रत्वा॑ । यथा॑ । वश॑त् ॥४

निऽखतम् । चित् । यः । पुरुऽसंभूतम् । वसु । उत् । इत् । वपति । दाशुषे ।।

वज्री । सुऽशिप्रः । हरिऽअश्वः । इत् । करत् । इन्द्रः । क्रत्वा । यथा । वशत् ॥ ४ ॥

निखातं चित् भूमौ खात्वा स्थापितमपि संभृतं संगृहीतं यागदानादिकं कृत्वेदृशं पुरु बहु वसु धनम् उदिद्धपति उद्धपत्येव दाशुषे यजमानाय । एवं यो देवः करोति सः वज्री सुशिप्रः सुहनुः हर्यश्व इत् हरितवर्णाश्वयुक्तः इन्द्रः एव करोति । केनोपाधिना । क्रत्वा कर्मणा यागेनोपाधिना। यथा वशत् येन प्रकारेण प्रकामयते तथा स एव करोति ॥

यद्वावन्थ॑ पुरुष्टुत पुरा चिंच्छूर नृणाम् ।

व॒यं तत्त॑ इन्द्र॒ सं भ॑रामसि य॒ज्ञमु॒क्थं तु॒रं वचः॑ ॥५

यत् । व॒वन्थ॑ । पु॒रु॒ऽस्तु॒त॒ । पु॒रा । चि॒त् । शू॒र॒ । नृ॒णाम् ।

व॒यम् । तत् । ते॒ । इ॒न्द्र॒ । सम् । भ॒रा॒म॒सि॒ । य॒ज्ञम् । उ॒क्थम् । तु॒रम् । वचः॑ ॥५

यत् । ववन्थ । पुरुऽस्तुत । पुरा । चित् । शूर। नृणाम् ।

वयम् । तत् । ते । इन्द्र । सम् । भरामसि । यज्ञम् । उक्थम् । तुरम् । वचः ॥ ५ ॥

हे पुरुष्टुत बहुभिः स्तुतेन्द्र शूर विक्रान्त नृणां नेतॄणां स्तोतॄणां सकाशात् पुरा । चित् इत्युपमार्थे । तथेदानीमपि यद्ववन्थ अचीकमथाः तत् एव वयं तुरं तूर्णं ते तुभ्यम् इन्द्र सं भरामसि संभरामः । किं तदिति उच्यते । यज्ञं यागयोग्यं हविः उक्थं शस्त्रं वचः वाच्यम् । तव प्रियतमं हविः स्तोत्रं च संभराम इत्यर्थः ॥ ॥ ४८ ॥

सचा॒ सोमे॑षु पुरुहूत वज्रिवो॒ मदा॑य द्युक्ष सोमपाः ।

त्वमिद्धि ब्र॑ह्म॒कृते॒ काम्यं॒ वसु॒ देष्ठः॑ सुन्व॒ते भुवः॑ ॥६

सचा॑ । सोमे॑षु । पु॒रु॒ऽहू॒त॒ । व॒ज्रि॒ऽव॒ः । मदा॑य । द्यु॒क्ष॒ । सो॒म॒ऽपा॒ः ।

त्वम् । इत् । हि । ब्र॒ह्म॒ऽकृते॑ । काम्य॑म् । वसु॑ । देष्ठः॑ । सु॒न्व॒ते । भुवः॑ ॥६

सचा। सोमेषु । पुरुऽहूत । वज्रिऽवः । मदाय । द्युक्ष । सोमऽपाः ।।

त्वम् । इत् । हि । ब्रह्मऽकृते । काम्यम् । वसु । देष्ठः । सुन्व॒ते । भुवः ॥ ६ ॥

हे पुरुहूत बहुभिराहूत हे वज्रिवः वज्रवन् द्युक्ष घुमन् सोमपाः सोमस्य पातः त्वं सोमेषु अभिषुतेषु मदाय सचा सह भवेति शेषः । त्वमित् त्वमेव ब्रह्मकृते स्तोत्रकर्त्रे सुन्वते च काम्यं कमनीयं वसु धनं देष्ठः दातृतमः भुवः भवसि ।।

व॒यमे॑नमि॒दा ह्योऽपी॑पेमे॒ह व॒ज्रिण॑म् ।

तस्मा॑ उ अ॒द्य सम॒ना सु॒तं भ॒रा नू॒नं भू॑षत श्रु॒ते ॥७

व॒यम् । ए॒न॒म् । इ॒दा । ह्यः । अपी॑पेम । इ॒ह । व॒ज्रिण॑म् ।

तस्मै॑ । ऊं॒ इति॑ । अ॒द्य । स॒म॒ना । सु॒तम् । भ॒र॒ । आ । नू॒नम् । भू॒ष॒त॒ । श्रु॒ते ॥७

वयम् । एनम् । इदा । ह्यः । अपीपेम । इह । वज्रिणम् ।।

तस्मै । ऊँ इति । अद्य । समना । सुतम् । भर । आ । नूनम् । भूषत । श्रुते ॥ ७ ॥

वयं यजमानाः एनम् इन्द्रं वज्रिणम् इदा इदानीं ह्यः च इह अत्र अपीपेम आप्याययाम सोमेन । तस्मा उ तस्मा एव अद्य अत्र समना संग्रामार्थं सुतम् अभिषुतं सोमं भर हरत हे अध्वर्य्वादयः । नूनम् इदानीं श्रुते स्तोत्रे श्रुते सति आ भूषत आभवतु आगच्छतु ।।

वृक॑श्चिदस्य वार॒ण उ॑रा॒मथि॒रा व॒युने॑षु भूषति ।

सेमं न॒ः स्तोमं॑ जुजुषा॒ण आ ग॒हीन्द्र॒ प्र चि॒त्रया॑ धि॒या ॥८

वृक॑ः । चि॒त् । अ॒स्य॒ । वा॒र॒णः । उ॒रा॒ऽमथि॑ः । आ । व॒युने॑षु । भू॒ष॒ति॒ ।

सः । इ॒मम् । न॒ः । स्तोम॑म् । जु॒जु॒षा॒णः । आ । ग॒हि॒ । इन्द्र॑ । प्र । चि॒त्रया॑ । धि॒या ॥८

वृकः । चित् । अस्य । वारणः । उराऽमथिः । आ । वयुनेषु । भूषति ।

सः । इमम् । नः । स्तोमम् । जुजुषाणः । आ । गहि । इन्द्र । प्र । चित्रया । धिया ॥८॥

वृकश्चित् स्तेनोऽपि वारणः वारयिता सर्वस्य सन्नपि उरामथिः शत्रूणां मार्गे गच्छतां मथिता सन्नपि अस्य इन्द्रस्य वयुनेषु मार्गेषु प्रज्ञानेषु वा आ भूषति आनुकूल्यमेव भजते । अतीव हिंस्रोऽपीन्द्रस्यानुकूलो भवतीत्यर्थः । यद्वा । अस्येति कर्मणि षष्ठी । अमुमिन्द्रमुक्तरूपो वृकोऽपि वयुनेषु स्तोत्रेष्वा भूषति । सः त्वम् इमं नः स्तोमं जुजुषाणः प्रीयमाणः आ गहि आगच्छ। हे इन्द्र चित्रया धिया कर्मणा स्तुतिलक्षणेन निमित्तेन प्र प्रकर्षण आ गहि शीघ्रमागच्छ ।

चातुर्विंशिकेऽहनि माध्यंदिनसवनेऽच्छावाकशस्त्र एव कदू नु' इति कद्वत्प्रगाथः । कदू न्वस्याकृतमिति कद्वन्तः प्रगाथाः' (आश्व. श्रौ. ७. ४) इति हि सूत्रितम् ॥

कदू॒ न्व१॒॑स्याकृ॑त॒मिन्द्र॑स्यास्ति॒ पौंस्य॑म् ।

केनो॒ नु कं॒ श्रोम॑तेन॒ न शु॑श्रुवे ज॒नुष॒ः परि॑ वृत्र॒हा ॥९

कत् । ऊं॒ इति॑ । नु । अ॒स्य॒ । अकृ॑तम् । इन्द्र॑स्य । अ॒स्ति॒ । पौंस्य॑म् ।

केनो॒ इति॑ । नु । क॒म् । श्रोम॑तेन । न । शु॒श्रु॒वे॒ । ज॒नुषः॑ । परि॑ । वृ॒त्र॒ऽहा ॥९

कत् । ऊँ इति । नु । अस्य । अकृतम् । इन्द्रस्य । अस्ति । पौंस्यम् ।

केनो इति । नु। कम् । श्रोमतेन । न । शुश्रुवे । जनुषः । परि । वृत्रऽहा ॥ ९ ॥

अस्य इन्द्रस्य कदू नु किं नु खलु पौंस्यं पौरुषम् अकृतम् अनाचरितम् अस्ति । सर्वमपि वृत्रवधादिकमनेन कृतमेव इतः परं न किंच पौंस्यं कृत्यमस्तीत्यर्थः । लोके स्वल्पमपि यः पुंस्त्वं कुर्यात् स तेन स्तूयतेऽयं तु न स्तुत एतदुच्यते। केनो नु कं केन खलु श्रोमतेन श्रवणीयेन पुंस्त्वेन न शुश्रुवे न श्रूयते। किं कतिपयैरेवाहोभिः कृतेन नेत्याह । अयं वृत्रहा वृत्रस्यातिप्रबलस्य हन्तायं जनुषः परि जन्मप्रभृति क्रियमाणैः सामर्थ्यैः श्रूयते । वृत्रहत्येतत्पुंस्त्वप्रदर्शनद्योतनाय । यथा वृत्रहननं सर्वैः श्रूयते तद्वदन्यान्यपीति भावः ।।

कदू॑ म॒हीरधृ॑ष्टा अस्य॒ तवि॑षी॒ः कदु॑ वृत्र॒घ्नो अस्तृ॑तम् ।

इन्द्रो॒ विश्वा॑न्बेक॒नाटाँ॑ अह॒र्दृश॑ उ॒त क्रत्वा॑ प॒णीँर॒भि ॥१०

कत् । ऊ॒ इति॑ । म॒हीः । अधृ॑ष्टाः । अ॒स्य॒ । तवि॑षीः । कत् । ऊ॒ इति॑ । वृ॒त्र॒ऽघ्नः । अस्तृ॑तम् ।

इन्द्रः॑ । विश्वा॑न् । बे॒क॒ऽनाटा॑न् । अ॒ह॒ःऽदृशः॑ । उ॒त । क्रत्वा॑ । प॒णीन् । अ॒भि ॥१०

कत् । ऊँ इति । महीः । अधृष्टाः । अस्य । तविषीः । कत् । ॐ इति । वृत्रऽघ्नः। अस्तृतम् ।

इन्द्रः । विश्वान्। बेकऽनाटान् । अहःऽदृशः । उत । क्रत्वा । पणीन् । अभि ॥ १० ॥

कदू कदाः खलु अस्य इन्द्रस्य तविषीः बलानि महीः महान्ति अधृष्टाः अधृष्टान्यधर्षकाणि आसन् । कदु कदा नु खलु वृत्रघ्नः वृत्रहन्तुरिन्द्रस्य हन्तव्यम् अस्तृतम् अहिंसितमभवत् । न कदाचिदित्य ------ त्र्यहं अभवदित्यर्थः । अथवास्य महान्ति बलानि सेनालक्षणानि कदाप्यधृष्टान्यन्यबलैरहिंसितानि तथा वृत्रघ्नः शारीरं बलमस्तृतमन्यैरहिंस्यम् । ईदृशेन द्विविधेन बलेन इन्द्रः विश्वान् सर्वान् बेकनाटान् । अनेन कुसीदिनो वृद्धिजीविनो वार्धुषिको उच्यन्ते । कथं तद्व्युत्पत्तिः । वे इत्यपभ्रंशो द्विशब्दार्थे । एकं कार्षापणमृणिकाय प्रयच्छन् द्वौ मह्यं दातव्य - -- नयेन दर्शयन्ति ततो द्विशब्देनैकशब्देन च नाटयन्तीति बेकनाटाः । तान् अहर्दृशः। अहःशब्देन तदुत्पादक आदित्योऽभिधेयो भवति । तं पश्यन्तीत्यहर्दृशः । ननु सर्वे सूर्यं पश्यन्ति कोऽत्रातिशय इति उच्यते । इहैव जन्मनि सूर्यं पश्यन्ति न जन्मान्तरे । लुब्धका अयष्टारोऽन्धे तमसि मज्जन्ति । अथवा लौकिकान्येवाहानि पश्यन्ति न पारलौकिकान्यदृष्टानि । दृष्टप्रधाना हि नास्तिकाः । ईदृशान् पणीन् पणिसदृशान् शूद्रकल्पान् । उतशब्द एवार्थे । क्रत्वा उत कर्मणैव ताडनादिव्यापारेणैव अभि भवतीति शेषः । यद्वा । पणीनुत पणीनेवाभिभवति न यष्टारम् । पणीनां निन्दा स्मर्यते- गोरक्षकानापणिकांस्तथा कारुकुशीलवान् । प्रेष्यान् वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् । (मनु. ८. १०२ ) इति ॥ ॥ ४९ ॥

व॒यं घा॑ ते॒ अपू॒र्व्येन्द्र॒ ब्रह्मा॑णि वृत्रहन् ।

पु॒रू॒तमा॑सः पुरुहूत वज्रिवो भृ॒तिं न प्र भ॑रामसि ॥११

व॒यम् । घ॒ । ते॒ । अपू॑र्व्या । इन्द्र॑ । ब्रह्मा॑णि । वृ॒त्र॒ऽह॒न् ।

पु॒रु॒ऽतमा॑सः । पु॒रु॒ऽहू॒त॒ । व॒ज्रि॒ऽव॒ः । भृ॒तिम् । न । प्र । भ॒रा॒म॒सि॒ ॥११

वयम् । घ। ते । अपूर्व्या । इन्द्र । ब्रह्माणि । वृत्रऽहन्।

पुरुऽतमासः । पुरुऽहूत । वज्रिऽवः । भृतिम् । न । प्र । भरामसि ॥ ११ ॥

हे इन्द्र वयं घ खलु ते तव अपूर्व्या नूतनानि ब्रह्माणि परिवृढानि स्तोत्राणि प्र भरामसि संभरामः पुरूतमासः बहुतमा वयमृत्विग्यजमानरूपेण वृत्रहन् वृत्रस्य हन्तः पुरुहूत बहुभिराहूत हे वज्रिवः वज्रयुक्तेन्द्र । किमिव । भृतिं न भृतिमिव । तां यथा नियमेन प्रयच्छन्ति तद्वत् । नियमेन प्रदानतात्पर्यात् भृतिदृष्टान्तत्वमविरुद्धम् ॥

पू॒र्वीश्चि॒द्धि त्वे तु॑विकूर्मिन्ना॒शसो॑ हव॑न्त इन्द्रो॒तयः॑ ।

ति॒रश्चि॑द॒र्यः सव॒ना व॑सो गहि॒ शवि॑ष्ठ श्रु॒धि मे॒ हव॑म् ॥१२

पू॒र्वीः । चि॒त् । हि । त्वे इति॑ । तु॒वि॒ऽकू॒र्मि॒न् । आ॒ऽशसः॑ । हव॑न्ते । इ॒न्द्र॒ । ऊ॒तयः॑ ।

ति॒रः । चि॒त् । अ॒र्यः । सव॑ना । आ । व॒सो॒ इति॑ । ग॒हि॒ । शवि॑ष्ठ । श्रु॒धि । मे॒ । हव॑म् ॥

पूर्वीः । चित् । हि। त्वे इति । तुविऽकूर्मिन् । आऽशसः । हवन्ते । इन्द्र । ऊतयः ।

तिरः । चित् । अर्यः । सवना । आ । वसो इति । गहि। शविष्ठ। श्रुधि । मे। हव॑म् ॥१२॥

हे तुविकूर्मिन् बहुकर्मन् इन्द्र त्वे त्वयि पूर्वीः बहूनि आशसः आशंसनानि स्थितानि तथा ऊतयः रक्षाश्च त्वय्यवस्थिता लब्धुं हवन्ते आह्वयन्ति स्तोतारोऽन्ये । अतः अर्थः अरेः सवना सवनानि तिरश्चित् तिरस्कृत्य अरीन् वा तिरस्कृत्य अस्मत्सवनान्यभिलक्ष्य हे वसो वासकेन्द्र आ गहि आगच्छ । अतो हे शविष्ठ अतिशयेन बलवन् मे हवं श्रुधि शृणु ॥

व॒यं घा॑ ते॒ त्वे इद्विन्द्र॒ विप्रा॒ अपि॑ ष्मसि ।

न॒हि त्वद॒न्यः पु॑रुहूत॒ कश्च॒न मघ॑व॒न्नस्ति॑ मर्डि॒ता ॥१३

व॒यम् । घ॒ । ते॒ । त्वे इति॑ । इत् । ऊं॒ इति॑ । इन्द्रं॑ । विप्राः॑ । अपि॑ । स्म॒सि॒ ।

न॒हि । त्वत् । अ॒न्यः । पु॒रु॒ऽहू॒त॒ । कः । च॒न । मघ॑ऽवन् । अस्ति॑ । म॒र्डि॒ता ॥१३

वयम् । घ। ते। त्वे इति । इत् । ॐ इति । इन्द्र । विप्राः । अपि । स्मसि ।।

नहि। त्वत् । अन्यः । पुरुहूत । कः । चन । मघवन् । अस्ति । मर्डिता ॥ १३ ॥

हे इन्द्र वयं घ वयं खलु ते तव स्वभूताः । अतः त्वे इत् त्वय्येव विप्राः मेधाविनः स्तोतारः अपि स्मसि । अपिः संभावनायाम्। त्वदधीनाः स्मेत्यर्थः । अन्यान् विहायेन्द्र एव वर्तामहे । तस्मिन् कोऽतिशय इत्याह । हे पुरुहूत त्वदन्यः कश्चन हे मघवन् मर्ड़िता सुखयिता न अस्ति ।

त्वं नो॑ अ॒स्या अम॑तेरु॒त क्षु॒धो॒३॒॑ऽभिश॑स्ते॒रव॑ स्पृधि ।

त्वं नं ऊ॒ती तवं चि॒त्रयां धि॒या शिक्षां शचिष्ठ गातु॒वित् ॥१४

त्वम् । नः॒ । अ॒स्याः । अमंतेः । उ॒त । क्षु॒धः । अ॒भिऽशंस्तेः । अवं । स्पृ॒धि॒ ।

त्वम् । नः॒ । ऊ॒ती । तवं । चि॒त्रयां । धि॒या । शिक्षं । श॒चि॒ष्ठ॒ । गा॒तु॒ऽवित् ॥१४

त्वम् । नः । अस्याः । अमतेः । उत। क्षुधः । अभिऽशस्तेः । अव । स्पृधि ।

त्वम् । नः । ऊती । तव । चित्रया । धिया । शिक्ष। शचिष्ठ । गातुऽवित् ॥ १४ ॥

हे इन्द्र त्वं नः अस्मान् अस्या अमतेः दारिद्यात्मिकायाः उत अपि च क्षुधः अभिशस्तेः निन्दाथाश्च सकाशात् अव स्पृधि अवमोचय। किंच त्वं नः अस्मभ्यं तव ऊती ऊत्या चित्रया धिया विचित्रेण कर्मणा शिक्ष देह्यभिमतम् । हे शविष्ठ गातुवित् मार्गज्ञ उपायज्ञस्त्वम् ॥

सोम॒ इद्वः॑ सु॒तो अं॑स्तु॒ कलं॑यो॒ मा बिं॑भीतन ।

अपेदे॒ष ध्व॒स्मायं॑ति स्व॒यं घै॒षो अपां॑यति ॥१५

सोमः॑ । इत् । वः॒ । सु॒तः । अ॒स्तु॒ । कलं॑यः । मा । बि॒भी॒त॒न॒ ।

अपं । इत् । ए॒षः । ध्व॒स्मा । अ॒य॒ति॒ । स्व॒यम् । घ॒ । ए॒षः । अपं । अ॒य॒ति॒ ॥१५

सोमः । इत् । वः । सुतः । अस्तु । कलयः । मा । बिभीतन ।

अप । इत् । एषः । ध्वस्मा । अयति । स्वयम् । घ। एषः । अप । अयति ॥ १५ ॥

सोमः सुतः अभिषुतः वः युष्माकं संबन्धी अस्तु इत् भवत्वेवेन्द्राय । हे कलयः । कलिमहर्षेर्ज्ञातयः पुत्राश्चात्र संबोध्यन्ते । यूयं मा बिभीतन भीता मा भवत । भीत्यभावे कारणमाह । एष ध्वस्मा ध्वंसको राक्षसादिः अप अयति अपगच्छत्येवेन्द्रसामर्थ्यात् । स्वयं घ स्वयमेव एषः अपायति । उ इति पूरणः । पुनरुक्तिर्दार्यायार्था ।।५०।। ॥ ५० ॥

---

**टिप्पणी**

कालेयम् (https://sa.wikisource.org/s/1za0)

कलि-कालेय उपरि टिप्पणी (https://vedastudy.weebly.com/kali.html)

पुराणेषु सार्वत्रिकेण कृष्णबलरामाभ्यां तालवने खररूपस्य धेनुकासुरस्य (https://vedastudy.wixsite.com/puranastudy/blank-12) उद्धारस्य कथा अस्ति। अस्य कथायाः मूलं अस्मिन् सूक्ते अवगन्तव्यः।

**मण्डल ८**

# ऋग्वेदः सूक्तं ८.६७

ऋग्वेदः - मण्डल ८
← सूक्तं ८.६६ सूक्तं ८.६७ सूक्तं ८.६८ →
मत्स्यः साम्मदः, मैत्रावरुणिर्मान्यः, बहवो वा मत्स्याः जालनद्धाः

दे. आदित्याः, १०-१२ अदितिः । गायत्री

---

त्यान्नु क्षत्रियाँ अव आदित्यान्याचिषामहे ।

सुमृळीकाँ अभिष्टये ॥१॥

मित्रो नो अत्यंहतिं वरुणः पर्षदर्यमा ।

आदित्यासो यथा विदुः ॥२॥

तेषां हि चित्रमुक्थ्यं वरूथमस्ति दाशुषे ।

आदित्यानामरंकृते ॥३॥

महि वो महतामवो वरुण मित्रार्यमन् ।

अवांस्या वृणीमहे ॥४॥

जीवान्नो अभि धेतनादित्यासः पुरा हथात् ।

कद्ध स्थ हवनश्रुतः ॥५॥

यद्वः श्रान्ताय सुन्वते वरूथमस्ति यच्छर्दिः ।

तेना नो अधि वोचत ॥६॥

अस्ति देवा अंहोरुर्वस्ति रत्नमनागसः ।

आदित्या अद्भुतैनसः ॥७॥

मा नः सेतुः सिषेदयं महे वृणक्तु नस्परि ।

इन्द्र इद्धि श्रुतो वशी ॥८॥

मा नो मृचा रिपूणां वृजिनानामविष्यवः ।

देवा अभि प्र मृक्षत ॥९॥

उत त्वामदिते मह्यहं देव्युप ब्रुवे ।

सुमृळीकामभिष्टये ॥१०॥

पर्षि दीने गभीर आँ उग्रपुत्रे जिघांसतः ।

माकिस्तोकस्य नो रिषत् ॥११॥

अनेहो न उरुव्रज उरूचि वि प्रसर्तवे ।

कृधि तोकाय जीवसे ॥१२॥

ये मूर्धानः क्षितीनामदब्धासः स्वयशसः ।

व्रता रक्षन्ते अद्रुहः ॥१३॥

ते न आस्नो वृकाणामादित्यासो मुमोचत ।

स्तेनं बद्धमिवादिते ॥१४॥

अपो षु ण इयं शरुरादित्या अप दुर्मतिः ।

अस्मदेत्वजघ्नुषी ॥१५॥

शश्वद्धि वः सुदानव आदित्या ऊतिभिर्वयम् ।

पुरा नूनं बुभुज्महे ॥१६॥

शश्वन्तं हि प्रचेतसः प्रतियन्तं चिदेनसः ।

देवाः कृणुथ जीवसे ॥१७॥

तत्सु नो नव्यं सन्यस आदित्या यन्मुमोचति ।

बन्धाद्बद्धमिवादिते ॥१८॥

नास्माकमस्ति तत्तर आदित्यासो अतिष्कदे ।

यूयमस्मभ्यं मृळत ॥१९॥

मा नो हेतिर्विवस्वत आदित्याः कृत्रिमा शरुः ।

पुरा नु जरसो वधीत् ॥२०॥

वि षु द्वेषो व्यंहतिमादित्यासो वि संहितम् ।

विष्वग्वि वृहता रपः ॥२१॥

**सायणभाष्यम्**

' त्यान्नु ' इत्येकविंशत्यृचमष्टमं सूक्तम् । अत्रानुक्रमणिका -- त्यान्नु सैका मत्स्यः सांमदो मैत्रावरुणिर्मान्यो वा बहवो वा मत्स्या जालनद्धा आदित्यानस्तुवन् ' । संमदाख्यस्य महामीनस्य पुत्रो मत्स्यो यद्वा मित्रावरुणयोः पुत्रो मान्योऽथवा बहवो वा मत्स्या जालनद्धाः सन्तो बन्धनमोक्षायादित्यानस्तुवन् । अतस्त एवर्षयः । ‘ परं गायत्रं प्राग्वत्सप्रेः' इति परिभाषया गायत्री छन्दः । आदित्या देवता । सूक्तविनियोगो लैङ्गिकः ॥

त्यान्नु क्ष॒त्रिया॒ँ अव॑ आदि॒त्यान्या॑चिषामहे ।

सु॒मृ॒ळी॒काँ अ॒भिष्ट॑ये ॥१

त्यान् । नु । क्ष॒त्रिया॑न् । अवः॑ । आ॒दि॒त्यान् । या॒चि॒षा॒म॒हे॒ ।

सु॒ऽमृ॒ळी॒कान् । अ॒भिष्ट॑ये ॥१

त्यान् । नु । क्षत्रियान् । अवः । आदित्यान् । याचिषामहे ।

सुऽमृळीकान् । अभिष्टये ॥१

“त्यान् तान् “आदित्यान् “क्षत्रियान् जात्या क्षत्रियान् “अवः “रक्षणं “याचिषामहे याचामहे । कीदृशान् । “सुमृळीकान् सुष्ठु सुखयितॄन् । किमर्थम् । अभिष्टये अभिगमनायाभिमताय वा। मत्स्यपक्षे जालनिर्गमनं प्रार्थितमितरपक्षेऽभिमतमिति विवेकः ॥

मि॒त्रो नो॒ अत्यं॑ह॒तिं वरु॑णः पर्षदर्य॒मा ।

आ॒दि॒त्यासो॒ यथा॑ वि॒दुः ॥२

मि॒त्रः । न॒ः । अति॑ । अं॒ह॒तिम् । वरु॑णः । प॒र्ष॒त् । अ॒र्य॒मा ।

आ॒दि॒त्यासः॑ । यथा॑ । वि॒दुः ॥२

मित्रः । नः । अति । अंहतिम् । वरुणः । पर्षत् । अर्यमा ।

आदित्यासः । यथा । विदुः ॥२

“मित्रः “वरुणः “अर्यमा "आदित्यासः आदित्याः “नः अस्मान् अंहतिम् “अति “पर्षत् अतिनयन्तु । ते "यथा “विदुः येन प्रकारेण दुःसहं जानन्ति तथाति पर्षदिति । इतरपक्षे अंहतिं पापमति पर्षदिति ॥

तेषा॒ं हि चि॒त्रमु॒क्थ्यं१॒ वरू॑थ॒मस्ति॑ दा॒शुषे॑ ।

आ॒दि॒त्याना॑मर॒ंकृते॑ ॥३

तेषा॑म् । हि । चि॒त्रम् । उ॒क्थ्य॑म् । वरू॑थम् । अस्ति॑ । दा॒शुषे॑ ।

आ॒दि॒त्याना॑म् । अ॒र॒म्ऽकृते॑ ॥३

तेषाम् । हि । चित्रम् । उक्थ्यम् । वरूथम् । अस्ति । दाशुषे ।

आदित्यानाम् । अरम्ऽकृते ॥३

“तेषाम् आदित्यानां “हि खलु “चित्रं चायनीयम् “उक्थ्यं स्तुत्यं “वरूथं धनम् “अस्ति “दाशुषे हविर्दात्रे "अरंकृते अलंकर्त्रे पर्याप्तकारिणे यजमानाय दातव्यं धनमस्तीति ॥

महि॑ वो मह॒तामवो॒ वरु॑ण॒ मित्रार्य॑मन् ।

अवा॒ंस्या वृ॑णीमहे ॥४

महि॑ । व॒ः । म॒ह॒ताम् । अवः॑ । वरु॑ण । मित्र॑ । अर्य॑मन् ।

अवा॑ंसि । आ । वृ॒णी॒म॒हे॒ ॥४

महि । वः । महताम् । अवः । वरुण । मित्र । अर्यमन् ।

अवांसि । आ । वृणीमहे ॥४

हे वरुणादयः "मंहतां “वः “अवः रक्षणं "महि महत् दाशुषे हविर्दात्रे करणीयमस्ति । अतः “अवांसि रक्षणानि “आ “वृणीमहे ।।

जी॒वान्नो॑ अ॒भि धे॑त॒नादि॑त्यासः पु॒रा ह॒था॑त् ।

कद्ध॑ स्थ हवनश्रुतः ॥५

जी॒वान् । नः॒ । अ॒भि । धे॒त॒न॒ । आदि॑त्यासः । पु॒रा । ह॒था॑त् ।

कत् । ह॒ । स्थ॒ । ह॒व॒न॒ऽश्रु॒तः॒ ॥५

जीवान् । नः । अभि । धेतन । आदित्यासः । पुरा । हथात् ।

कत् । ह । स्थ । हवनऽश्रुतः ॥५

हे “आदित्यासः आदित्याः “नः अस्मान् “जीवान् इदानीं जीवतः सतः “अभि “धेतन अभिधावत । अभिधावनं कुरुत। "पुरा “हथात् हननात् पुरा मृतेः पूर्वम् । “कत् क्व “स्थ भवथ। हे “हवनश्रुतः आह्वानश्रोतारः । आह्वानं श्रुत्वा शीघ्रमागच्छतेति ॥ ॥ ५१ ॥

यद्व॑ः श्रा॒न्ताय॑ सुन्व॒ते वरू॑थ॒मस्ति॒ यच्छ॒र्दिः ।

तेना॑ नो॒ अधि॑ वोचत ॥६

यत् । वः॒ । श्रा॒न्ताय॑ । सु॒न्व॒ते । वरू॑थम् । अस्ति॑ । यत् । छ॒र्दिः ।

तेन॑ । नः॒ । अधि॑ । वो॒च॒त॒ ॥६

यत् । वः । श्रान्ताय । सुन्वते । वरूथम् । अस्ति । यत् । छर्दिः ।

तेन । नः । अधि । वोचत ॥६

“श्रान्ताय कर्मणः “सुन्वते अभिषुण्वते यजमानाय दातव्यं “यत् वरूथं वरणीयं धनं “वः युष्माकम् “अस्ति “यत् च “छर्दिः सुखवासयोग्यं गृहमस्ति “तेन द्वयेनास्मान् प्रीणयित्वा “नः अस्मान् “अधि “वोचत अधिवचनं कुरुत ॥

अस्ति॑ देवा अं॒होरु॒र्वस्ति॒ रत्न॒मना॑गसः ।

आदि॑त्या॒ अद्भु॑तैनसः ॥७

अस्ति॑ । दे॒वाः॒ । अं॒होः । उ॒रु । अस्ति॑ । रत्न॑म् । अना॑गसः ।

आदि॑त्याः । अद्भु॑तऽएनसः ॥७

अस्ति । देवाः । अंहोः । उरु । अस्ति । रत्नम् । अनागसः ।

आदित्याः । अद्भुतऽएनसः ॥७

हे "देवाः "अंहोः हन्तुः पापशीलस्य "उरु “अस्ति महत् पापमस्ति । “अनागसः अपापस्य “रत्नं रमणीयं सुकृतं श्रेयः “अस्ति । ततो हे “आदित्याः अद्भुतैनसः अभूतपापाः । अतोऽस्मदभिमतं कुरुतेति भावः ॥

मा न॒ः सेतुं॒ः सिषेद॒यं म॒हे वृंणक्तु न॒स्परिं ।

इन्द्र॒ इद्धि श्रु॒तो व॒शी ॥८

मा । न॒ः । सेतुः॑ । सि॒से॒त् । अ॒यम् । म॒हे । वृ॒ण॒क्तु॒ । न॒ः । परिं ।

इन्द्रः॑ । इत् । हि । श्रु॒तः । व॒शी ॥८

मा । नः । सेतुः । सिसेत् । अयम् । महे । वृणक्तु । नः । परि ।

इन्द्रः । इत् । हि । श्रुतः । वशी ॥८

“नः अस्मान् “सेतुः बन्धको जालः “मा “सिषेत् मा बध्नातु । "नः अस्मान् “महे महते कर्मणे "परि “वृणक्तु परिवर्जयतु जालात् । कः । “इन्द्र “इत् इन्द्र एव “श्रुतः विश्रुतः “वशी सर्वस्य वशीकर्ता । स परि वृणक्तु ।।

मा नों मृ॒चा रिंपू॒णां वृं॒जि॒नानां॑मविष्यवः ।

देवा॑ अ॒भि प्र मृंक्षत ॥९

मा । न॒ः । मृ॒चा । रि॒पू॒णाम् । वृ॒जि॒नाना॑म् । अ॒वि॒ष्य॒व॒ः ।

देवाः॑ । अ॒भि । प्र । मृ॒क्ष॒त॒ ॥९

मा । नः । मृचा । रिपूणाम् । वृजिनानाम् । अविष्यवः ।

देवाः । अभि । प्र । मृक्षत ॥९

हे “अविष्यवः रक्षितुमिच्छन्तः "देवाः “नः अस्मान् “वृजिनानां हिंसकानां रिपूणां “मृचा । मृचिर्हिँसाकर्मा । ' यत्क्षुरेण मर्चयता सुपेशसा ' (आश्व. गृ. १. १७. १५) इत्यादिषु तथा दृष्टत्वात् । हिंसकेन जालेन “मा अभि “प्र “मृक्षत। अभिमर्शनमुपरि जालस्य प्रेरणं मा कुरुत । यद्वा। मृचा जालेन प्राप्ता बाधा नोऽस्माकं मा भवतु । हे देवाः यूयं च परिमार्जयत परिहरत ॥

आधाने पवमानेष्टिषु ‘ उत त्वामदिते ' इत्यनुवाक्या । सूत्रितं च - ‘ उत त्वामदिते महि महीमू षु मातरम् ' (आश्व. श्रौ. २. १) इति । आदित्ये पशौ वपाया अनुवाक्येयमेव । सूत्रितं च -- ‘उत त्वामदिते मह्यनेहो न उरुव्रजे ' (आश्व. श्रौ. ३. ८) इति ॥

उ॒त त्वाम॑दिते मह्य॒हं दे॒व्युप॑ ब्रुवे ।

सु॒मृ॒ळी॒काम॒भिष्ट॑ये ॥१०

उ॒त । त्वाम् । अ॒दि॒ते॒ । म॒हि॒ । अ॒हम् । दे॒वि॒ । उप॑ । ब्रु॒वे॒ ।

सु॒ऽमृ॒ळी॒काम् । अ॒भिष्ट॑ये ॥१०

उत । त्वाम् । अदिते । महि । अहम् । देवि । उप । ब्रुवे ।

सुऽमृळीकाम् । अभिष्टये ॥१०

हे “महि महति "अदिते देवमातः “देवि “त्वाम् “अहं मत्स्यपक्षे मत्स्यप्रमुखोऽहम् “उप “ब्रुवे उपेत्य स्तौमि । कीदृशीम्। "सुमृळीकां सुष्ठु सुखयित्रीम् । किमर्थम् । “अभिष्टये अभिमताय ॥ ॥५२॥

पर्षि॑ दी॒ने ग॑भी॒र आँ उग्र॑पु॒त्रे जिघां॑सतः ।

माकिं॑स्तो॒कस्य॑ नो रिषत् ॥११

पर्षि॑ । दी॒ने । ग॒भी॒रे । आ । उग्र॑ऽपुत्रे । जिघां॑सतः ।

माकिः॑ । तो॒कस्य॑ । न॒ः । रि॒ष॒त् ॥११

पर्षि । दीने । गभीरे । आ । उग्रऽपुत्रे । जिघांसतः ।

माकिः । तोकस्य । नः । रिषत् ॥११

हे अदिते “आ “पर्षि सर्वतः पालयसि । “दीने क्षीणे “गभीरे उदके। उदकनामैतत् ' गभीरं गहनम् ' इति तन्नामसु पाठात् । "उग्रपुत्रे। उद्गूर्णाः पुत्रा यस्मिन् तत् । तस्मिन्नुदके “जिघांसतः हिंसतो जालं “तोकस्य अस्माकं तनयस्य तनयं “माकिः “रिषत् मैव हिंसां करोतु ।।

आदित्यस्य पशौ ‘अनेहो नः' इति पुरोडाशस्यानुवाक्या । सूत्रितं च - ‘ अनेहो न उरुव्रजेऽदितिर्ह्यजनिष्ट ' (आश्व. श्रौ, ३. ८) इति ॥

अ॒ने॒हो न॑ उरुव्रज॒ उरू॑चि॒ वि प्रस॑र्तवे ।

कृ॒धि तो॒काय॑ जी॒वसे॑ ॥१२

अ॒ने॒हः । न॒ः । उ॒रु॒ऽव्र॒जे॒ । उरू॑चि । वि । प्रऽस॑र्तवे ।

कृ॒धि । तो॒काय॑ । जी॒वसे॑ ॥१२

अनेहः । नः । उरुऽव्रजे । उरूचि । वि । प्रऽसर्तवे ।

कृधि । तोकाय । जीवसे ॥१२

“अनेहः अपापान् “नः अस्मान् हे “उरुव्रजे विस्तीर्णगमने। दूरमियमदितिर्भूमिरूपा गता भवत्यतिविस्तृतत्वात् । अथवोरुगमने धीरे हे “उरूचि उरुत्वं “वि “प्रसर्तवे अभिसरणाय “कृधि कुरु । कस्मै । "तोकाय पुत्राय मत्स्याय “जीवसे तस्य जीवनाय । यथा जीवेम पुत्रान्रक्षितुं तथोरुत्वं कुर्विति ॥

ये मू॒र्धानः॑ क्षि॒ती॒नामद॑ब्धास॒ः स्वय॑शसः ।

व्र॒ता रक्ष॑न्ते अ॒द्रुह॑ः ॥१३

ये । मू॒र्धानः॑ । क्षि॒ती॒नाम् । अद॑ब्धासः । स्वऽय॑शसः ।

व्र॒ता । रक्ष॑न्ते । अ॒द्रुहः॑ ॥१३

ये । मूर्धानः । क्षितीनाम् । अदब्धासः । स्वऽयशसः ।

व्रता । रक्षन्ते । अद्रुहः ॥१३

"ये "मूर्धानः सर्वेषां मूर्धस्थानीया उच्छ्रिताः “क्षितीनां मनुष्याणाम् “अदब्धासः अहिंसकाः “स्वयशसः स्वायत्तकीर्तयः “व्रता व्रतान्यस्मदीयानि कर्माणि “रक्षन्ते पालयन्ते “अद्रुहः अद्रोग्धारः सन्तः।।

ते न॑ आ॒स्नो वृका॑णा॒मादि॑त्यासो मु॒मोच॑त ।

स्ते॒नं ब॒द्धमि॑वादिते ॥१४

ते । न॒ः । आ॒स्नः । वृका॑णाम् । आदि॑त्यासः । मु॒मोच॑त ।

स्ते॒नम् । ब॒द्धम्ऽइ॑व । अ॒दि॒ते॒ ॥१४

ते । नः । आस्नः । वृकाणाम् । आदित्यासः । मुमोचत ।

स्तेनम् । बद्धम्ऽइव । अदिते ॥१४

हे "आदित्यासः आदित्याः “ते यूयं “नः अस्मान् “वृकाणां हिंसकानामादातॄणां वा "आस्नः आस्यात् सकाशात् "मुमोचत विमोचनं कुरुत "स्तेनं "बद्धमिव । हे "अदिते त्वं च मोचयास्मानिति ॥

अपो॒ षु ण॑ इ॒यं शरु॒रादि॑त्या॒ अप॑ दु॒र्म॒तिः ।

अ॒स्मदे॒त्वजं॑घ्नुषी ॥१५

अपो॒ इति॑ । सु । न॒: । इ॒यम् । शरु॑: । आदि॑त्याः । अप॑ । दु॒:ऽम॒तिः ।

अ॒स्मत् । ए॒तु॒ । अजं॑घ्नुषी ॥१५

अपो इति । सु । नः । इयम् । शरुः । आदित्याः । अप । दुःऽमतिः ।

अस्मत् । एतु । अजघ्नुषी ॥१५

हे "आदित्याः “इयं “शरुः हिंसिका प्रसितिः जालिकप्रेरिता “अजघ्नुषी अहिंसन्ती सती “अस्मत् अस्मत्तः “सु सुष्ठु “अपो “एतु अपगच्छत्वेव । तथा “दुर्मतिः दुष्टा मतिरप्यजघ्नुषी अस्मत्तः "अप गच्छतु ॥ ॥ ५३ ॥

शश्व॒द्धि व॑ः सुदानव॒ आदि॑त्या ऊ॒तिभि॑र्व॒यम् ।

पु॒रा नू॒नं बु॑भु॒ज्महे॑ ॥१६

शश्व॑त् । हि । व॒: । सु॒ऽदा॒न॒व॒: । आदि॑त्याः । ऊ॒तिऽभि॑: । व॒यम् ।

पु॒रा । नू॒नम् । बु॒भु॒ज्महे॑ ॥१६

शश्वत् । हि । वः । सुऽदानवः । आदित्याः । ऊतिऽभिः । वयम् ।

पुरा । नूनम् । बुभुज्महे ॥१६

हे "सुदानवः सुदाना हे "आदित्याः “वः युष्माकम् “ऊतिभिः रक्षाभिः “वयं "पुरा “नूनम् इदानीमपि "शश्वत् सर्वदा “बुभुज्महे । यद्वा । शश्वत् बहून् भोगान् भुञ्ज्महे ।।

शश्व॑न्त॒ं हि प्र॑चेतसः प्रति॒यन्त॑ं चि॒देन॑सः ।

देवा॑ः कृणु॒थ जी॒वसे॑ ॥१७

शश्व॑न्तम् । हि । प्र॒ऽचे॒त॒स॒: । प्र॒ति॒ऽयन्त॑म् । चि॒त् । एन॑सः ।

देवा॑: । कृ॒णु॒थ । जी॒वसे॑ ॥१७

शश्वन्तम् । हि । प्रऽचेतसः । प्रतिऽयन्तम् । चित् । एनसः ।

देवाः । कृणुथ । जीवसे ॥१७

हे "प्रचेतसः प्रकृष्टमतयो हे "देवाः "शश्वन्तं बहुमपि "प्रतियन्तं "चित् प्रतिगच्छन्तमपि शत्रुम् "एनसः पापस्य कर्तारम् । अथवैनसः पापकृतः । व्यत्ययेन बहुवचनम् । पापकर्तारं "जीवसे जीवनायास्माकं "कृणुथ कुरुत । अस्मत्तो वियुक्तमिति शेषः ॥

तत्सु नो॒ नव्यं॒ सन्यं॑स॒ आदिं॑त्या॒ यन्मुमों॑चति ।

ब॒न्धाद्ब॒द्धमिं॑वादिते ॥१८

तत् । सु । नः॒ । नव्यं॑म् । सन्यं॑से । आदिं॑त्याः । यत् । मुमों॑चति ।

ब॒न्धात् । ब॒द्धम्ऽइ॑व । अ॒दि॒ते॒ ॥१८

तत् । सु । नः । नव्यम् । सन्यसे । आदित्याः । यत् । मुमोचति ।

बन्धात् । बद्धम्ऽइव । अदिते ॥१८

"तत् बन्धकं "नः अस्माकं "सु सुष्ठु "नव्यं स्तुत्यं "सन्यसे संभजनाय भवतु । अस्माकं मोचनेन स्तुत्यं भवत्वित्यर्थः । हे "आदित्याः अदितेः पुत्रा हे "अदिते त्वदनुग्रहात् "यत् "मुमोचति मुञ्चत्यस्मान् बन्धनसाधनं पूर्वं यत् प्रतिबन्धकत्वादासीत् तदेव युष्मदनुग्रहादस्मान् मुञ्चतु । यद्वा । युष्माकं यद्रक्षणमस्मान् मुञ्चति तत् सुष्ठु स्तुत्यं संभजनाय भवत्विति योज्यम् ॥

नास्माकं॑मस्ति॒ तत्तर॒ आदिं॑त्यासो अति॒ष्कदें॑ ।

यू॒यम॒स्मभ्यं॑ मृळत ॥१९

न । अ॒स्माकं॑म् । अ॒स्ति॒ । तत् । तरः॑ । आदिं॑त्यासः । अ॒ति॒ऽस्कदें॑ ।

यू॒यम् । अ॒स्मभ्यं॑म् । मृ॒ळ॒त॒ ॥१९

न । अस्माकम् । अस्ति । तत् । तरः । आदित्यासः । अतिऽस्कदे ।

यूयम् । अस्मभ्यम् । मृळत ॥१९

हे "आदित्यासः आदित्या युष्मत्कर्तृकः "तत् "तरः वेगः "अस्माकं "न "अस्ति यो वेगो बन्धकाज्जालात् "अतिष्कदे अस्माकमतिस्कन्दनाय प्रभवति । अतः "यूयमस्मभ्यं "मृळत । तत्तादृशं तरः कुरुतेत्यर्थः ॥

मा नों हे॒तिर्वि॒वस्वं॑त॒ आदिं॑त्याः कृ॒त्रिमा॒ शरुः॑ ।

पु॒रा नु ज॒रसों वधीत् ॥२०

मा । नः॒ । हे॒तिः । वि॒वस्वं॑तः । आदिं॑त्याः । कृ॒त्रिमा॑ । शरुः॑ ।

पु॒रा । नु । ज॒रसः॑ । व॒धी॒त् ॥२०

मा । नः । हेतिः । विवस्वतः । आदित्याः । कृत्रिमा । शरुः ।

पुरा । नु । जरसः । वधीत् ॥२०

हे "आदित्याः “नः अस्मान् “विवस्वतः विवस्वत्पुत्रस्य यमस्य । पुत्रे पितृशब्दः । तस्य “हेतिः आयुधभूता “कृत्रिमा क्रियया निष्पन्ना “शरुः हिंसिका प्रसितिः “पुरा पूर्वं “नु इदानीम् । सर्वदेत्यर्थः । "जरसः इदानीं जीर्णान् “मा “वधीत् मा हिंस्यात् ॥

वि षु द्वेषो॒ व्यं॑ह॒तिमादि॑त्यासो॒ वि संहि॑तम् ।

विष्व॒ग्वि वृ॑हता॒ रपः॑ ॥२१

वि । सु । द्वेषः॑ । वि । अं॒ह॒तिम् । आदि॑त्यासः । वि । सम्ऽहि॑तम् ।

विष्वं॑क् । वि । वृ॒ह॒त॒ । रपः॑ ॥२१

वि । सु । द्वेषः । वि । अंहतिम् । आदित्यासः । वि । सम्ऽहितम् ।

विष्वक् । वि । वृहत । रपः ॥२१

हे "आदित्यासः आदित्याः “द्वेषः द्वेष्टॄन “सु सुष्ठु “वि “वृहत उन्मूलयत । नाशयतेत्यर्थः ।। तथा “अंहतिं पातकं पापं “वि वृहत । हन्तेरंह च ( उ. सू. ४.५०२) इत्यतिप्रत्ययः । तथा “संहितं जालं “वि वृहत । तथा “रपः पापं सर्वं “विष्वक् विषूचीनं“ वि वृहत ।' रपो रिप्रमिति पापनामनी भवतः ' ( निरु. ४. २१ ) इति यास्कः ॥ ॥ ५४ ।।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ।। इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टके चतुर्थोऽध्यायः ॥

---

**टिप्पणी**

अष्टमेऽहनि मत्स्यः सांमदस्तस्योदकेचरा विशस्त इम आसत इति मत्स्याः पुञ्जिष्ठा इत्युप-समानीताः स्युस्तानुपदिशति पुराणविद्यावेदः सोऽयमिति पुराणमाचक्षीत - आश्व.श्रौ.सू. १०.७.८ (https://sa.wikisource.org/s/1auw)

अश्वमेधे पारिप्लवम् -- मत्स्यः सांमद इत्यष्टमे २२। तस्योदकचरा विशस्त इम आसत इति मत्स्यान्मत्स्यविदो वोपदिशति २३ इतिहासवेदो वेदः सोऽयमितीतिहासमाचक्षीत -- शांश्रौसू. १६.२.२४ (https://sa.wikisource.org/s/149j)

ज्योतिष्टोमे अग्निचयने दीक्षणीया – त्यान्नु क्षत्रियान्धारयन्तः - शांश्रौसू. ९.२४.३ (https://sa.wikisource.org/s/1495)

अथाष्टमेऽहन् एवमेवैतास्विष्टिषु संस्थितास्वेषैवावृदध्वर्यविति हवै होतरित्येवाध्वर्युर्मत्स्यः साम्मदो राजेत्याह तस्योदकेचरा विशस्त इम आसत इति मत्स्याश्च मत्स्यहनश्चोपसमेता भवन्ति तानुपदिशतीतिहासो वेदः सोऽयमिति कंचिदितिहासमाचक्षीतैवमेवाध्वर्युः सम्प्रेष्यति न प्रक्रमान्जुहोति - शब्रा १३.४.३.१२ (https://sa.wikisource.org/s/ep2)

मत्स्योपरि टिप्पणी (https://puranastudy.wordpress.com/%e0%a4%ae%e0%a4%a4%e0%a4%99%e0%a5%8d%e0%a4%97-%e0%a4%ae%e0%a4%a4%e0%a5%8d%e0%a4%b8%e0%a5%8d%e0%a4%af%e0%a5%87%e0%a4%a8%e0%a5%8d%e0%a4%a6%e0%a5%8d%e0%a4%b0%e0%a4%a8%e0%a4%be%e0%a4%a5/%e0%a4%ae%e0%a4%a4%e0%a5%8d%e0%a4%b8%e0%a5%8d%e0%a4%af/)

# ऋग्वेदः सूक्तं ८.६८



दे. इन्द्रः, १४-१९ ऋक्षाश्वमेधौ। गायत्री, अनुष्टुम्मुखः प्रगाथः - (अनुष्टुप् + गायत्रयौ) १,४,७,१० अनुष्टुप्, १६ शंकुमती।

आ त्वा रथं यथोतये सुम्नाय वर्तयामसि ।

तुविकूर्मिमृतीषहमिन्द्र शविष्ठ सत्पते ॥१॥

तुविशुष्म तुविक्रतो शचीवो विश्वया मते ।

आ पप्राथ महित्वना ॥२॥

यस्य ते महिना महः परि ज्मायन्तमीयतुः ।

हस्ता वज्रं हिरण्ययम् ॥३॥

विश्वानरस्य वस्पतिमनानतस्य शवसः ।

एवैश्च चर्षणीनामूती हुवे रथानाम् ॥४॥

अभिष्टये सदावृधं स्वर्मीळ्हेषु यं नरः ।

नाना हवन्त ऊतये ॥५॥

परोमात्रमृचीषममिन्द्रमुग्रं सुराधसम् ।

ईशानं चिद्वसूनाम् ॥६॥

तंतमिद्राधसे मह इन्द्रं चोदामि पीतये ।

यः पूर्व्यामनुष्टुतिमीशे कृष्टीनां नृतुः ॥७॥

न यस्य ते शवसान सख्यमानंश मर्त्यः ।

नकिः शवांसि ते नशत् ॥८॥

त्वोतासस्त्वा युजाप्सु सूर्ये महद्धनम् ।

जयेम पृत्सु वज्रिवः ॥९॥

तं त्वा यज्ञेभिरीमहे तं गीर्भिर्गिर्वणस्तम ।

इन्द्र यथा चिदाविथ वाजेषु पुरुमाय्यम् ॥१०॥

यस्य ते स्वादु सख्यं स्वाद्वी प्रणीतिरद्रिवः ।

यज्ञो वितन्तसाय्यः ॥११॥

उरु णस्तन्वे तन उरु क्षयाय नस्कृधि ।

उरु णो यन्धि जीवसे ॥१२॥

उरुं नृभ्य उरुं गव उरुं रथाय पन्थाम् ।

देववीतिं मनामहे ॥१३॥

उप मा षड्द्वाद्वा नरः सोमस्य हर्ष्या ।

तिष्ठन्ति स्वादुरातयः ॥१४॥

ऋज्राविन्द्रोत आ ददे हरी ऋक्षस्य सूनवि ।

आश्वमेधस्य रोहिता ॥१५॥

सुरथाँ आतिथिग्वे स्वभीशूँरार्क्षे ।

आश्वमेधे सुपेशसः ॥१६॥

षळश्वाँ आतिथिग्व इन्द्रोते वधूमतः ।

सचा पूतक्रतौ सनम् ॥१७॥

ऐषु चेतद्वृषण्वत्यन्तरृज्रेष्वरुषी ।

स्वभीशुः कशावती ॥१८॥

न युष्मे वाजबन्धवो निनित्सुश्चन मर्त्यः ।

अवद्यमधि दीधरत् ॥१९॥

**सायणभाष्यम्**

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

षष्ठे चतुर्थमध्यायं श्रीमायणसुतः सुधीः ।।

व्याख्याय सायणाचार्यः पञ्चमं व्याकरोत्यथ ।।

तत्र 'आ त्वा रथम्' इत्येकोनविंशत्यृचं नवमं सूक्तम् । अत्रेयमनुक्रमणिका-' आ त्वैकोना प्रियमेध आदावनुष्टुम्मुखास्तृचाश्चत्वारोऽन्त्याः षळृक्षाश्वमेधयोर्दानस्तुतिः' इति । आङ्गिरसः प्रियमेध ऋषिः। प्रथमाचतुर्थीसप्तमीदशम्योऽनुष्टुभः शिष्टाः परं गायत्रम्' इति परिभाषया गायत्र्यः । अन्ततः षट्स्वृक्षु ऋक्षाश्वमेधयोर्दानं स्तूयते । अतस्तास्तद्देवताकाः । शिष्टा अनुक्तपरिभाषयैन्द्र्यः । सूक्तविनियोगो लैङ्गिकः। अद्यस्तृचो मरुत्वतीयस्य प्रतिपत्। तथा च सूत्रितम्--- ' आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ' (आश्व. श्रौ. ५. १४) इति । महाव्रतादिष्वपि यत्र तृचान्तरं न विधीयते तत्र सर्वत्रायमेव प्रतिपद्भवति ।।

आ त्वा॒ रथं॒ यथो॒तये॑ सु॒म्नाय॑ वर्तयामसि ।

तु॒वि॒कू॒र्मिमृ॑ती॒षह॒मिन्द्र॒ शवि॑ष्ठ॒ सत्प॑ते ॥१

आ । त्वा॒ । रथ॑म् । यथा॑ । ऊ॒तये॑ । सु॒म्नाय॑ । व॒र्त॒या॒म॒सि॒ ।

तु॒वि॒ऽकू॒र्मिम् । ऋ॒ति॒ऽसह॑म् । इन्द्र॑ । शवि॑ष्ठ । सत्ऽप॑ते ॥१

आ । त्वा । रथम् । यथा । ऊतये । सुम्नाय । वर्तयामसि ।

तुविऽकूर्मिम् । ऋतिऽसहम् । इन्द्र । शविष्ठ । सत्ऽपते ॥१

हे इन्द्र "त्वा त्वाम् आ "वर्तयामसि आवर्तयामः । किमर्थम् । "ऊतये अस्माकं रक्षणाय "सुम्नाय सुखाय च । किमिव । "रथं यथा । रथं यथोतये सुखाय चावर्तयन्ति तद्वत् । कीदृशं त्वाम् । "तुविकूर्मिं बहुकर्माणम् "ऋतीषहं हिंसकानामभिभवितारम् । हे "इन्द्र

"शविष्ठ अतिशयेन बलवन् हे "सत्पते सतां पालक त्वामिति समन्वयः ।।

तुविंशुष्म॒ तुविंक्रतो॒ शचींवो॒ विश्वंया मते ।

आ पंप्राथ महित्व॒ना ॥२

तुविंऽशुष्म । तुविंक्रतो॒ इति॒ तुविंऽक्रतो । शचींऽवः । विश्वंया । म॒ते॒ ।

आ । प॒प्रा॒थ॒ । म॒हि॒ऽत्व॒ना ॥२

तुविऽशुष्म । तुविक्रतो इति तुविऽक्रतो । शचीऽवः । विश्वया । मते ।

आ । पप्राथ । महिऽत्वना ॥२

हे "तुविशुष्म प्रभूतबल हे "तुविक्रतो बहुकर्मन् । अथवा बहुप्रज्ञ कर्मणः पृथगभिधानात् । हे “शचीवः बहुकर्मोपेत "मते पूजनीयेन्द्र "विश्वया विश्वव्याप्तेन "महित्वना महत्त्वेन “आ "पप्राथ आपूरितवानसि । अविशेषाद्विश्वमित्यर्थः ॥

यस्यं ते महि॒ना म॒हः परिं ज्मा॒यन्तंमी॒यतुंः ।

हस्ता॒ वज्रं हिर॒ण्ययंम् ॥३

यस्यं । ते॒ । म॒हि॒ना । म॒हः । परिं । ज्मा॒यन्तंम् । ई॒यतुः॑ ।

हस्तां । वज्रंम् । हि॒र॒ण्ययंम् ॥३

यस्य । ते । महिना । महः । परि । ज्मायन्तम् । ईयतुः ।

हस्ता । वज्रम् । हिरण्ययम् ॥३

“महः महतः "यस्य “ते तव । यच्छब्दः प्रकृतपरामर्शकः । प्रकृतं तूक्तमृग्द्वयम् । तत्रत्यतुविकूर्मिमृतीषहमित्याद्युक्तलक्षणस्य तवेत्यर्थः । “महिना महत्त्वेन “हस्ता तव हस्ता हस्तौ “ज्मायन्तं पृथिव्यां सर्वतो व्याप्नुवन्तं "हिरण्ययं हिरण्मयं "वज्रम् "ईयतुः परिगृह्णीतः । सर्वदास्माकं भयनिवारणायेति भावः ।।

पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि ‘विश्वानरस्य' इति प्रतिपत्तृचः । सूत्रितं च- ‘ विश्वानरस्य वस्पतिमिन्द्र इत्सोमपा एक इति मरुत्वतीयस्य प्रतिपदनुचरौ' (आश्व. श्रौ. ७. ६ ) इति ।।

वि॒श्वानंरस्य व॒स्पति॒मनांनतस्य॒ शवंसः ।

एवैंश्च चर्षणी॒नामू॒ती हुंवे॒ रथांनाम् ॥४

वि॒श्वान॑रस्य । वः॒ । पति॑म् । अना॑नतस्य । शव॑सः ।

एवैः॑ । च॒ । च॒र्ष॒णी॒नाम् । ऊ॒ती । हु॒वे॒ । रथा॑नाम् ॥४

विश्वानरस्य । वः । पतिम् । अनानतस्य । शवसः ।

एवैः । च । चर्षणीनाम् । ऊती । हुवे । रथानाम् ॥४

“विश्वानरस्य विश्वान् शत्रून् प्रत्यृतस्य "अनानतस्य शत्रूणामप्रह्वस्य “शवसः बलस्य “पतिं स्वामिनमिन्द्रं वा । अत्रेन्द्रसंबन्धिनो मरुतोऽपि संकीर्त्यन्ते । हे मरुतः "वः। युष्माकमित्यर्थः । यद्यपि मरुत्संशब्दनं नास्ति तथापि व इति सामर्थ्याल्लभ्यते । युष्माकं "चर्षणीनां सैनिकानाम् “एवैः गमनैः सह । यद्वा चर्षणीनाम् इन्द्रस्य सेनारूपाणां वो युष्माकं गमनैरिति सामानाधिकरण्यम् । युष्माकं “रथानां च “ऊती ऊतिभिर्गमनैश्च सह “हुवे आह्वयामि । गन्तृभी रथैर्गन्तृभिर्मरुद्भिश्च सहेन्द्रं हुव इत्यर्थः । यद्वा । हे यजमानाः युष्मदीयाः सैनिकाः सरथा यदा प्रविशन्ति युद्धाय संग्रामं तदानीं तेषां साहाय्यायेन्द्रं हुव इत्यर्थः ॥

अ॒भिष्ट॑ये स॒दावृ॑धं॒ स्व॑र्मीळ्हेषु॒ यं नरः॑ ।

नाना॒ हव॑न्त ऊ॒तये॑ ॥५

अ॒भिष्ट॑ये । स॒दाऽवृ॑धम् । स्वः॑ऽमीळ्हेषु । यम् । नरः॑ ।

नाना॑ । हव॑न्ते । ऊ॒तये॑ ॥५

अभिष्टये । सदाऽवृधम् । स्वःऽमीळ्हेषु । यम् । नरः ।

नाना । हवन्ते । ऊतये ॥५

हे यजमानाः युष्माकम् "अभिष्टये साहाय्यार्थमभिगमनायाभिष्टये वा "सदावृधं सर्वदा वर्धयन्तं सेवकान् स्वयं सर्वदा वर्धमानं वा हुव इति शेषः । "यं "स्वर्मीळ्हेषु संग्रामेषु "नरः नेतारो मनुष्याः "नाना बहुप्रकारं "हवन्ते आह्वयन्ति "ऊतये रक्षार्थं तं हुव इति शेषः ॥ ॥ १ ॥

प॒रोमा॑त्र॒मृची॑षम॒मिन्द्र॑मु॒ग्रं सु॒राध॑सम् ।

ईशा॑नं चि॒द्वसू॑नाम् ॥६

प॒रः॒ऽमा॑त्रम् । ऋचीषमम् । इन्द्र॑म् । उ॒ग्रम् । सु॒ऽराध॑सम् ।

ईशा॑नम् । चि॒त् । वसू॑नाम् ॥६

परःऽमात्रम् । ऋचीषमम् । इन्द्रम् । उग्रम् । सुऽराधसम् ।

ईशानम् । चित् । वसूनाम् ॥६

"परोमात्रम् । परा मात्रा यस्य तादृशम् । अथवा मीयत इति मात्रं दूरदेशः । ततः परस्ताद्वर्तमानमपरिमितस्वरूपम् । तथापि "ऋचीषमम् ऋचा स्तुत्या समम् । यद्यप्यपरिच्छिन्नः तथापि स्तुतिर्यावन्मात्रं विषयीकरोति तत्सम इत्यर्थः । तदेवाह। "इन्द्रं परमैश्वर्ययोगादिच्छानुकुलस्वरूपम् "उग्रम् उद्गूर्णबलं "सुराधसम् । राध इति धननाम । शोभनधनं शोभनान्नं वा "ईशानं "चित् ईश्वरं च । केषाम् । "वसूनाम् अस्मभ्यं प्रदेयानां गवादिधनानाम् । एवंमहानुभावमिन्द्रं हुव इति शेषः ॥

तृतीयेऽहनि मरुत्वतीये 'तंतमित्' इति प्रतिपत्तृचः । सूत्रितं च- ' तंतमिद्राधसे महे त्रय इन्द्रस्य सोमाः' (आश्व. श्रौ. ७. १०) इति ॥

तंत॒मिद्राध॑से म॒ह इन्द्रं॑ चोदामि पी॒तये॑ ।

यः पू॒र्व्यामनु॑ष्टुति॒मीशे॑ कृष्टी॒नां नृ॒तुः ॥७

तम्ऽत॑म् । इत् । राध॑से । म॒हे । इन्द्र॑म् । चो॒दा॒मि॒ । पी॒तये॑ ।

यः । पू॒र्व्याम् । अनु॑ऽस्तुतिम् । ईशे॑ । कृ॒ष्टी॒नाम् । नृ॒तुः ॥७

तम्ऽतम् । इत् । राधसे । महे । इन्द्रम् । चोदामि । पीतये ।

यः । पूर्व्याम् । अनुऽस्तुतिम् । ईशे । कृष्टीनाम् । नृतुः ॥७

"तंतमित् तमेव इन्द्रम् । सर्वेष्वपि यागकालेषु तमेवेन्द्रमित्यर्थः। तं प्रति "चोदामि प्रेरयामि स्तुतिं "पीतये सोमपानाय । ततः को लाभ इति उच्यते । "महे महते "राधसे धनाय प्रभूतधनलाभार्थम् । "यः "नृतुः फलस्य नेता देवः "पूर्व्यां पूर्वे भवां यज्ञमुखस्थाम् "अनुष्टुतिम् अनुक्रमेण क्रियमाणां स्तुतिं "कृष्टीनां मनुष्याणामृत्विजां संबन्धिनीम् "ईशे ईष्टे श्रोतुं तं चोदामीति संबन्धः ॥

न यस्य॑ ते शवसान स॒ख्यमा॒नंश॒ मर्त्यः॑ ।

नकि॒ः शवां॑सि ते नशत् ॥८

न । यस्य॑ । ते॒ । श॒व॒सा॒न॒ । स॒ख्यम् । आ॒नंश॑ । मर्त्यः॑ ।

नकिः॑ । शवां॑सि । ते॒ । न॒श॒त् ॥८

न । यस्य । ते । शवसान । सख्यम् । आनंश । मर्त्यः ।

नकिः । शवांसि । ते । नशत् ॥८

हे "शवसान बलवन्निन्द्र "यस्य "ते तव "सख्यं "मर्त्यः मरणधर्मा मनुष्यः "न "आनंश न व्याप्नोति "ते "शवांसि बलान्यपि "नकिः नैव "नशत् व्याप्नोति ॥

त्वोता॑स॒स्त्वा यु॒जाप्सु सूर्ये॑ म॒हद्धनं॑म् ।

जये॑म पृ॒त्सु व॑ज्रिवः ॥९

त्वाऽऊं॑तासः । त्वा । यु॒जा । अ॒प्ऽसु । सूर्ये॑ । म॒हत् । धनं॑म् ।

जये॑म । पृ॒त्ऽसु । व॒ज्रि॒ऽव॒ः ॥९

त्वाऽऊतासः । त्वा । युजा । अप्ऽसु । सूर्ये । महत् । धनम् ।

जयेम । पृत्ऽसु । वज्रिऽवः ॥९

हे इन्द्र "त्वोतासः त्वया रक्षिताः "त्वा त्वया "युजा सहायेन "अप्सु स्नातुं सूर्यं द्रष्टुं च । स्नानादिव्यवहारं कर्तुं "सूर्ये उदिते सति गमनादिव्यवहारं कर्तुमित्यर्थः। तदर्थ "पृत्सु संग्रामेषु हे "वज्रिवः वज्रवन्निन्द्र "महद्धनं "जयेम । शत्रून् संग्रामे जित्वा तेषां धनं लभेमेत्यर्थः ।।

चतुर्थेऽहनि मरुत्वतीये 'तं त्वा यज्ञेभिः' इति तृचः प्रतिपत् । सूत्रितं च -- तं त्वा यज्ञेभिरीमह इदं वसो सुतमन्ध इति मरुत्वतीयस्य प्रतिपदनुचरौ' ( आश्व. श्रौ. ७. ११) इति ।

तं त्वा॑ य॒ज्ञेभिं॑रीमहे॒ तं गी॒र्भिर्गिर्वं॑णस्तम ।

इन्द्र॒ यथा॑ चि॒दावि॑थ॒ वाजे॑षु पुरु॒माय्यं॑म् ॥१०

तम् । त्वा॒ । य॒ज्ञेभिः॑ । ई॒म॒हे॒ । तम् । गी॒ःऽभिः । गि॒र्व॒ण॒ःऽत॒म॒ ।

इन्द्रं॑ । यथा॑ । चि॒त् । आवि॑थ । वाजे॑षु । पु॒रु॒ऽमाय्यं॑म् ॥१०

तम् । त्वा । यज्ञेभिः । ईमहे । तम् । गीःऽभिः । गिर्वणःऽतम ।

इन्द्र । यथा । चित् । आविथ । वाजेषु । पुरुऽमाय्यम् ॥१०

"तं स्तुत्यत्वेन प्रसिद्धं "त्वा त्वां "यज्ञेभिः यागसाधनैः सोमादिभिः "ईमहे याचामहे । "तम् एवेन्द्रं "गीर्भिः स्तुतिभिरीमहे । हे "गिर्वणस्तम गीर्भिः स्तुतिभिर्वननीयतम इन्द्र तं त्वामिति समन्वयः । हे "इन्द्र त्वं "यथा "चिदाविथ येन प्रकारेण ररक्षिथ माम् । चिदिति पूरणः । कुत्रेति उच्यते । "वाजेषु संग्रामेषु । कीदृशं माम् । पुरुमाय्यं बहुप्रज्ञम् । बहुस्तुतिमित्यर्थः ॥ ॥ २ ॥

यस्यं ते स्वा॒दु स॒ख्यं स्वा॒द्वी प्रणी॑तिरद्रिवः ।

य॒ज्ञो वि॑तन्त॒साय्यं॑ः ॥११

यस्य॑ । ते॒ । स्वा॒दु । स॒ख्यम् । स्वा॒द्वी । प्रऽनी॑तिः । अ॒द्रि॒ऽव॒ः ।

य॒ज्ञः । वि॒त॒न्त॒साय्य॑ः ॥११

यस्य । ते । स्वादु । सख्यम् । स्वाद्वी । प्रऽनीतिः । अद्रिऽवः ।

यज्ञः । वितन्तसाय्यः ॥११

हे "अद्रिवः वज्रवन्निन्द्र “यस्य स्तुत्यत्वेन प्रसिद्धस्य “ते तव "सख्यं "स्वादु अतीवानुभवार्हम् । किंच ते “प्रणीतिः प्रणयनं धनादीनां "स्वाद्वी स्वादु सुहर्षकम् । तथोभे त्वद्विषयो "यज्ञः च "वितन्तसाय्यः विशेषेण तननीयः ॥

उ॒रु ण॑स्त॒न्वे॒३॒ तन॑ उ॒रु क्षया॑य नस्कृधि ।

उ॒रु णो॑ यन्धि जी॒वसे॑ ॥१२

उ॒रु । न॒ः । त॒न्वे॑ । तने॑ । उ॒रु । क्षया॑य । न॒ः । कृ॒धि॒ ।

उ॒रु । न॒ः । य॒न्धि॒ । जी॒वसे॑ ॥१२

उरु । नः । तन्वे । तने । उरु । क्षयाय । नः । कृधि ।

उरु । नः । यन्धि । जीवसे ॥१२

हे इन्द्र त्वं “नः अस्माकं "तन्वे आत्मजाय "उरु प्रभूतं “कृधि कुरु । सामर्थ्याद्धनं सुखं वेति गम्यते । तथा “तने तत्पुत्राय "उरु कृधि । तथा “क्षयाय निवासाय “उरु कृधि । “नः अस्माकं “जीवसे जीवनाय “यन्धि प्रयच्छाभिमतम् ॥

उ॒रुं नृभ्य॑ उ॒रुं गव॑ उ॒रुं रथा॑य॒ पन्था॑म् ।

दे॒ववी॑तिं मनामहे ॥१३

उ॒रुम् । नृऽभ्य॑ः । उ॒रुम् । गवे॑ । उ॒रुम् । रथा॑य । पन्था॑म् ।

दे॒वऽवी॑तिम् । म॒ना॒म॒हे॒ ॥१३

उरुम् । नृऽभ्यः । उरुम् । गवे । उरुम् । रथाय । पन्थाम् ।

देवऽवीतिम् । मनामहे ॥१३

हे इन्द्र "नृभ्यः अस्मदीयेभ्यो भृत्येभ्यः “उरुं हितं "मनामहे याचामहे । तथा “गवे । एतदुपलक्षणम् । गवाश्वादिकाय तथा “रथाय "पन्थां पन्थानं मार्गम् । अथवा नृप्रभृतीनां संचाराय शोभनं मार्गं मनामहे । तथा “देववीतिं यज्ञं मनामहे ॥

उप॑ मा॒ षड्द्वाद्वा॒ नर॒ः सोम॑स्य॒ हर्ष्या॑ ।

तिष्ठ॑न्ति स्वादुरा॒तय॑ः ॥१४

उप॑ । मा॒ । षट् । द्वाऽद्वा॑ । नरः॑ । सोम॑स्य । हर्ष्या॑ ।

तिष्ठ॑न्ति । स्वा॒दु॒ऽरा॒तयः॑ ॥१४

उप । मा । षट् । द्वाऽद्वा । नरः । सोमस्य । हर्ष्या ।

तिष्ठन्ति । स्वादुऽरातयः ॥१४

एतदाद्याः षड्च ऋक्षाश्वमेधयोर्दानस्तुतिरूपाः । यद्यपि बृहद्देवतानुक्रमण्याम् 'ऋक्षाश्वमेधयोरत्र पञ्च दानप्रशंसकाः' (बृहद्दे. ६. ९२ ) इत्युक्तं तथापि उप मा षट्' इत्यस्या राजदानस्तुतिशेषत्वादविरोधः । अनेनैवाशयेनानुक्रमण्याम् ' अन्त्याः षळृच ऋक्षाश्वमेधयोर्दानस्तुतिः' इत्युक्तम् । "मा मां प्रियमेधं यज्ञे प्रसर्पन्तः "षट् एतत्संख्याकाः "नरः नेतारो राजानः "सोमस्य पीतस्य "हर्ष्या हर्षेण "स्वादुरातयः सुष्ठूपभोगार्हदानाः सन्तः "द्वाद्वा द्वौ द्वौ पितृपुत्ररूपेण युग्मौ भूत्वा माम् "उप "तिष्ठन्ति । तेषां युग्मानां नाम तूत्तरत्र स्पष्टीक्रियते ॥

ऋ॒ज्राविं॑न्द्रो॒त आ द॑दे॒ हरी॒ ऋक्ष॑स्य सू॒नवि॑ ।

आ॒श्व॒मे॒धस्य॒ रोहि॑ता ॥१५

ऋ॒ज्रौ । इ॒न्द्रो॒ते । आ । द॒दे॒ । हरी॒ इति॑ । ऋक्ष॑स्य । सू॒नवि॑ ।

आ॒श्व॒ऽमे॒धस्य॑ । रोहि॑ता ॥१५

ऋज्रौ । इन्द्रोते । आ । ददे । हरी इति । ऋक्षस्य । सूनवि ।

आश्वऽमेधस्य । रोहिता ॥१५

"इन्द्रोते एतन्नामक आतिथिग्वेऽतिथिग्वनाम्नो राज्ञः पुत्रे । ' अतिथिग्वाय शम्बरम्' (ऋ. सं. १. ५१. ६) ' अतिथिग्वाय शंस्यम्' (ऋ. सं. ६. २६. ३) इत्यादिष्वतिथिग्वः प्रसिद्धः । तत्पुत्र इन्द्रोते "ऋज़ौ ऋजुगामिनावश्वौ "आ "ददे स्वीकृतवानस्मि । तथा "ऋक्षस्य "सूनवि ऋक्षनाम्नः पुत्रेऽन्यस्मिन् राजनि "हरी हरितवर्णावश्वौ आ ददे। तथा "आश्वमेधस्य अश्वमेधपुत्रे राजनि "रोहिता रोहितवर्णावश्वौ आ ददे। नन्वनुक्रमण्यामुभयोरेव दानप्रशंसारूपत्वमुक्तम् अत्र कथं त्रयाणां दानकीर्तनमिति । नैष दोषः । ऋक्षाश्वमेधपुत्रयोरेव यागेऽस्यर्षेः प्रवृत्तेस्तयोरेव दानं प्रस्तुतम्। इन्द्रोतस्तु स्वपित्रा सह तयोर्यज्ञदिदृक्षयागत्य तयोर्दानं दृष्ट्वा स्वपित्रा प्रेरितो दत्तवानश्वौ। अतस्तद्दानं प्रासङ्गिकमिति । एवमृक्षाश्वमेधयोर्दानस्तुतित्वं न व्याहन्यते । पितृपुत्रयोरभेदात्तयोः पक्षकर्तृत्वाच्च। इन्द्रोतदानस्थ प्रासङ्गिकत्वं 'षळश्वान्' इत्यत्र विस्पष्टयिष्यते ॥

सु॒रथाँ॑ आतिथि॒ग्वे स्व॑भी॒शूँ॑रा॒र्क्षे ।

आ॒श्व॒मे॒धे सु॒पेश॑सः ॥१६

सु॒ऽरथा॑न् । आ॒ति॒थि॒ऽग्वे । सु॒ऽअ॒भी॒शून् । आ॒र्क्षे ।

आ॒श्व॒ऽमे॒धे । सु॒ऽपेश॑सः ॥१६

सुऽरथान् । आतिथिऽग्वे । सुऽअभीशून् । आर्क्षे ।

आश्वऽमेधे । सुऽपेशसः ॥१६

"आतिथिग्वे इन्द्रोते "सुरथान् शोभनरथोपेतानश्वानाददे । "आर्क्षे ऋक्षपुत्रे "स्वभीशून् अश्वानाददे । "आश्वमेधे अश्वमेधपुत्रे 'सुपेशसः सुरूपानश्वान् शोभनालंकारानाददे ॥

षळश्वाँ॑ आतिथि॒ग्व इ॑न्द्रो॒ते व॒धूम॑तः ।

सचा॑ पू॒तक्र॑तौ सनम् ॥१७

षट् । अश्वा॑न् । आ॒ति॒थि॒ऽग्वे । इ॒न्द्रो॒ते । व॒धूऽम॑तः ।

सचा॑ । पू॒तऽक्र॑तौ । स॒न॒म् ॥१७

षट् । अश्वान् । आतिथिऽग्वे । इन्द्रोते । वधूऽमतः ।

सचा । पूतऽक्रतौ । सनम् ॥१७

“आतिथिग्व “इन्द्रोते "पूतक्रतौ शुद्धप्रज्ञे शुद्धकर्मोपेते वा तस्मिन् "वधूमतः वधूभिर्वडवाभिस्तद्वतः “षडश्वान् "सचा ऋक्षाश्वमेधयोः पुत्राभ्यां दत्तेनाश्वादिधनेन सचा सह “सनं लब्धवानस्मि । एतत्साहित्यवचनमिन्द्रोतदानस्य प्रासङ्गिकत्वे लिङ्गम् ।।

ऐषु॑ चेत॒द्वृष॑ण्वत्य॒न्तरृ॒ज्रेष्वरु॑षी ।

स्व॒भी॒शुः कशा॑वती ॥१८

आ । ए॒षु॒ । चे॒त॒त् । वृष॑ण्ऽवती । अ॒न्तः । ऋ॒ज्रेषु॑ । अरु॑षी ।

सु॒ऽअ॒भी॒शुः । कशा॑ऽवती ॥१८

आ । एषु । चेतत् । वृषण्ऽवती । अन्तः । ऋज्रेषु । अरुषी ।

सुऽअभीशुः । कशाऽवती ॥१८

“एषु “ऋज्रेषु ऋजुगामिष्वश्वेषु "अन्तः मध्ये “आ “चेतत् आज्ञायते । का। "वृषण्वती वर्षकैः पुमश्वैस्तद्वती "अरुषी आरोचमाना "स्वभीशुः शोभनप्रग्रहा "कशावती दृप्ता वडवा ज्ञायते ॥

न युष्मे वांजबन्धवो निनित्सुश्चन मर्त्यः ।

अवद्यमधिं दीधरत् ॥१९

न । युष्मे इतिं । वाजऽबन्धवः । निनित्सुः । चन । मर्त्यः ।

अवद्यम् । अधिं । दीधरत् ॥१९

न । युष्मे इति । वाजऽबन्धवः । निनित्सुः । चन । मर्त्यः ।

अवद्यम् । अधि । दीधरत् ॥१९

हे “वाजबन्धवः अन्नबन्धवोऽन्नप्रदाः । एवं पुत्राणां पितृपुत्ररूपाणां षण्णां वा संबोधनम् । हे राजानः "युष्मे युष्मासु "निनित्सुश्चन निन्दकोऽपि “मर्त्यः मनुष्यः "अवद्यं निन्दा “न “अधि “दीधरत् नान्वधारयत्। नारोपयति युष्मासु । अतोऽनिन्द्या यूयमिति दातॄणां स्तुतिः ॥ ॥ ४ ॥

---

**टिप्पणी**

८.६८.४ विश्वानरस्य वस्पतिं इति

अग्नेर्वैश्वानरस्य द्वे (https://sa.wikisource.org/s/2gvf)

# ऋग्वेदः सूक्तं ८.६९

ऋग्वेदः - मण्डल ८
← सूक्तं ८.६८ सूक्तं ८.६९ सूक्तं ८.७० →
प्रियमेध आङ्गिरसः।

दे. इन्द्रः, ११ (अर्धर्चस्य) विश्वे देवाः, ११(उत्तरार्धस्य)- १२ वरुणः। अनुष्टुप्, २ उष्णिक्, ४-६ गायत्री, ११, १६ पङ्क्तिः, १७-१८ बृहती

प्रप्र वस्त्रिष्टुभमिषं मन्दद्वीरायेन्दवे ।

धिया वो मेधसातये पुरंध्या विवासति ॥१॥

नदं व ओदतीनां नदं योयुवतीनाम् ।

पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ॥२॥

ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः ।

जन्मन्देवानां विशस्त्रिष्वा रोचने दिवः ॥३॥

अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे ।

सूनुं सत्यस्य सत्पतिम् ॥४॥

आ हरयः ससृज्रिरेऽरुषीरधि बर्हिषि ।

यत्राभि संनवामहे ॥५॥

इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु ।

यत्सीमुपह्वरे विदत् ॥६॥

उद्यद्ब्रध्नस्य विष्टपं गृहमिन्द्रश्च गन्वहि ।

मध्वः पीत्वा सचेवहि त्रिः सप्त सख्युः पदे ॥७॥

अर्चत प्रार्चत प्रियमेधासो अर्चत ।

अर्चन्तु पुत्रका उत पुरं न धृष्ण्वर्चत ॥८॥

अव स्वराति गर्गरो गोधा परि सनिष्वणत् ।

पिङ्गा परि चनिष्कददिन्द्राय ब्रह्मोद्यतम् ॥९॥

आ यत्पतन्त्येन्यः सुदुघा अनपस्फुरः ।

अपस्फुरं गृभायत सोममिन्द्राय पातवे ॥१०॥

अपादिन्द्रो अपादग्निर्विश्वे देवा अमत्सत ।

वरुण इदिह क्षयत्तमापो अभ्यनूषत वत्सं संशिश्वरीरिव ॥११॥

सुदेवो असि वरुण यस्य ते सप्त सिन्धवः ।

अनुक्षरन्ति काकुदं सूर्म्यं सुषिरामिव ॥१२॥

यो व्यतीँरफाणयत्सुयुक्ताँ उप दाशुषे ।

तक्वो नेता तदिद्वपुरुपमा यो अमुच्यत ॥१३॥

अतीदु शक्र ओहत इन्द्रो विश्वा अति द्विषः ।

भिनत्कनीन ओदनं पच्यमानं परो गिरा ॥१४॥

अर्भको न कुमारकोऽधि तिष्ठन्नवं रथम् ।

स पक्षन्महिषं मृगं पित्रे मात्रे विभुक्रतुम् ॥१५॥

आ तू सुशिप्र दम्पते रथं तिष्ठा हिरण्ययम् ।

अध द्युक्षं सचेवहि सहस्रपादमरुषं स्वस्तिगामनेहसम् ॥१६॥

तं घेमित्था नमस्विन उप स्वराजमासते ।

अर्थं चिदस्य सुधितं यदेतव आवर्तयन्ति दावने ॥१७॥

अनु प्रत्नस्यौकसः प्रियमेधास एषाम् ।

पूर्वामनु प्रयतिं वृक्तबर्हिषो हितप्रयस आशत ॥१८॥

**सायणभाष्यम्**

‘प्रप्र वः' इत्यष्टादशर्चं दशमं सूक्तं प्रियमेधस्याङ्गिरसस्यार्षम् । द्वितीया ‘नदं वः' इत्येषा चतुःसप्तकोष्णिक् चतुर्थ्याद्यास्तिस्रो गायत्र्य एकादशीषोडश्यौ पङ्क्ती शिष्टा दशानुष्टुभः ।‘अपादिन्द्रः इत्यर्धर्चो वैश्वदेवो ‘वरुण इदिह' इत्याद्यास्त्रयोऽर्धर्चा वरुणदेवताकाः शिष्टा ऐन्द्र्यः । तथा चानुक्रान्तं—‘प्रप्र द्व्यूनानुष्टुभं द्विबृहत्यन्तं द्वितीयोष्णिक् चतुर्थ्याद्यास्तिस्रो गायत्र्यः षोळश्येकादश्यौ पङ्क्ती अपाद्वैश्वदेवोऽर्धर्चस्त्रयो वारुणाः' इति । आद्यस्तृचः षोडशिशस्त्र आनुष्टुभः । सूत्रितं 'च- ‘ प्रप्र वस्त्रिष्टुभमिषमर्चत प्रार्चत ' (आश्व. श्रौ. ६. २) इति ॥

प्रप्रं वस्त्रि॒ष्टुभ॒मिषं॑ म॒न्दद्वी॑रा॒येन्द॑वे ।

धि॒या वो॑ मे॒धसा॑तये॒ पुरं॒ध्या विवा॑सति ॥१

प्रऽप्रं । व॒ः । त्रि॒ऽस्तुभं॑म् । इषं॑म् । म॒न्दत्ऽवी॑राय । इन्द॑वे ।

धि॒या । व॒ः । मे॒धऽसा॑तये । पुरं॑म्ऽध्या । आ । वि॒वा॒स॒ति॒ ॥१

प्रऽप्र । वः । त्रिऽस्तुभम् । इषम् । मन्दत्ऽवीराय । इन्दवे ।

धिया । वः । मेधऽसातये । पुरम्ऽध्या । आ । विवासति ॥१

हे अध्वर्य्वादयः "वः यूयम् । प्रथमार्थे द्वितीया । "त्रिष्टुभं स्तोभत्रयोपेतम् "इषम् अन्नं “प्रप्र । अपरः प्रशब्दः पूरणः । प्रभरतेति शेषः । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः । कस्मै । “मन्दद्वीराय । यो वीरान हर्षयति स मन्दद्वीरः । तस्मै “इन्दवे इन्द्राय । इन्दतेरैश्वर्यकर्मणः इदं रूपम् । अथवा फलैर्वृष्टिभिर्वोनत्तीतीन्दुरिन्द्रः । तस्मै । स चेन्द्रः "वः युष्मान “मेधसातये यज्ञसंभजनाय “पुरंध्या बहुप्रज्ञया “धिया कर्मणा “आ "विवासति । अभिमतफलयोजनेन सत्करोतीत्यर्थः ।।

महाव्रते निष्केवल्ये ‘नदं वः' इत्येषा विहरणीया । तथैव पञ्चमारण्यके सूत्रितं च – नदं व ओदतीनामित्येतयैतानि व्यतिषजति ' ( ऐ. आ. ५. १. ६ ) इति ।।

न॒दं व॒ ओद॑तीनां न॒दं योयु॑वतीनाम् ।

पतिं॑ वो॒ अघ्न्या॑नां धेनू॒नामि॑षुध्यसि ॥२

न॒दम् । व॒ः । ओद॑तीनाम् । न॒दम् । योयु॑वतीनाम् ।

पतिं॑म् । व॒ः । अघ्न्या॑नाम् । धे॒नू॒नाम् । इ॒षु॒ध्य॒सि॒ ॥२

नदम् । वः । ओदतीनाम् । नदम् । योयुवतीनाम् ।

पतिम् । वः । अघ्न्यानाम् । धेनूनाम् । इषुध्यसि ॥२

“ओदतीनाम् । ओदत्य उषसः ‘ ओदती भास्वती' इति तन्नामसु पाठात् । तासां “नदम् । उत्पादकमित्यर्थः । इन्द्रेण ह्युषस उत्पद्यन्त इन्द्रस्यैव सूर्यत्वात् । ' विवस्वदिन्द्र सुग्म्य' इति द्वादशादित्यमध्य इन्द्रः पठितः । तादृशमिन्द्रं हे यजमानाः "वः युष्मदर्थम् । आह्वयतेत्यर्थः । तथा “योयुवतीनां सर्वत्र मिश्रयन्तीनां नदीनां “नदं' शब्दयितारं "वः युष्मदर्थमाह्वयामि । "अघ्न्यानाम् अहन्तव्यानां गवां “पतिम् आह्वये । अथ प्रत्यक्षकृता । हे यजमान त्वं “धेनूनां क्षीरादिना प्रीणयित्रीणां गवाम् "इषुध्यसि अन्नमिच्छसि ।।

अग्निहोत्रे पूर्वाहुतौ हुतायां ‘ता अस्य' इत्यनयोत्तरामाहुतिं काङ्क्षमाणस्तिष्ठेत् । तथा च सूत्रितं -- ता अस्य सूददोहस इति पूर्वामाहुतिमुपोत्थायोत्तरां काङ्क्षेत ' ( आश्व. श्रौ. २. ३ ) इति । महाव्रते निष्केवल्येऽप्येषा । तथैव पञ्चमारण्यके सूत्रितं- ता अस्य सूददोहस इत्येतदादिः सूददोहाः सूददोहाः ' ( ऐ. आ. ५. १. ६ ) इति ॥

ता अ॑स्य॒ सूद॑दोहस॒ः सोमं॑ श्रीणन्ति॒ पृश्न॑यः ।

जन्म॑न्दे॒वानां॒ विश॑स्त्रि॒ष्वा रो॑च॒ने दि॒वः ॥३

ताः । अ॒स्य॒ । सूद॑ऽदोहसः । सोम॑म् । श्री॒णा॒न्ति॒ । पृश्न॑यः ।

जन्म॑न् । दे॒वाना॑म् । विशः॑ । त्रि॒षु । आ । रो॒च॒ने । दि॒वः ॥३

ताः । अस्य । सूदऽदोहसः । सोमम् । श्रीणन्ति । पृश्नयः ।

जन्मन् । देवानाम् । विशः । त्रिषु । आ । रोचने । दिवः ॥३

“ताः प्रसिद्धाः "सूददोहसः । सूद इति कूपनाम । तत्सदृशदोहनाः "पृश्नयः पृश्निवर्णा गावः “अस्य इन्द्रस्य "सोमं “श्रीणन्ति मिश्रयन्त्याशिरेण । कदा । "त्रिषु त्रिष्वपि सवनेषु । गावो विशेष्यन्ते । "देवानां "जन्मन् जन्मस्थाने । दिवीत्यर्थः । “दिवः आदित्यस्य “आ “रोचने आरोचमाने । अनेन द्यौर्विशेष्यते । तस्मिन् स्थाने “विशः निविशन्त्यः । यज्ञार्थोपयुक्तानां गवां द्युप्राप्तिः प्रसिद्धा ।।

द्वितीये पर्याये मैत्रावरुणशस्त्रे ‘ अभि प्र गोपतिम् ' इति तृचोऽनुरूपः ।. सूत्रितं च-- ‘ अभि त्वा वृषभा सुतेऽभि प्र गोपतिं गिरा ' ( आश्व. श्रौ. ६. ४ (https://sa.wikisource.org/s/1bcn) ) इति ।।

अ॒भि प्र गोप॑तिं गि॒रेन्द्र॑मर्च॒ यथा॑ वि॒दे ।

सू॒नुं स॒त्यस्य॒ सत्प॑तिम् ॥४

अ॒भि । प्र । गोऽप॑तिम् । गि॒रा । इन्द्र॑म् । अ॒र्च॒ । यथा॑ । वि॒दे ।

सू॒नुम् । स॒त्यस्य॑ । सत्ऽप॑तिम् ॥४

अभि । प्र । गोऽपतिम् । गिरा । इन्द्रम् । अर्च । यथा । विदे ।

सूनुम् । सत्यस्य । सत्ऽपतिम् ॥४

“गोपतिं गवां स्वामिनम् "इन्द्रम् "अभि “प्र “अर्च । प्रकर्षेण पूजय स्तुत्या । "यथा "विदे स यथा स्वात्मानं स्तुतप्रकारं जानाति यथा वा यागं प्रति गन्तव्यमिति जानाति तथार्चेति । कीदृशमिन्द्रम् । "सत्यस्य यज्ञस्य सत्यस्य वा "सूनुं पुत्रम् । तत्रानुरक्तत्वात् सूनुरित्युपचर्यते । “सत्पतिं सतां यजमानानां पालकम् ॥

आ हर॑यः ससृज्रि॒रेऽरु॑षी॒रधि॑ ब॒र्हिषि॑ ।

यत्रा॒भि स॒ंनवा॑महे ॥५

आ । हर॑यः । स॒सृ॒ज्रि॒रे॒ । अरु॑षीः । अधि॑ । ब॒र्हिषि॑ ।

यत्र॑ । अ॒भि । स॒म्ऽनवा॑महे ॥५

आ । हरयः । ससृज्रिरे । अरुषीः । अधि । बर्हिषि ।

यत्र । अभि । सम्ऽनवामहे ॥५

"हरयः हरितवर्णा अश्वाः "अरुषीः आरोचमानाः "अधि "बर्हिषि । अधीति सप्तम्यर्थानुवादी । बर्हिष्यास्तृते "आ ससृज्रिरे आसृजन्तु । "यत्र यस्मिन् बर्हिषि स्थितमिन्द्रम् "अभि संनवामहे अभिसंस्तुमः ॥ ॥ ५ ॥

इन्द्रा॑य॒ गाव॑ आ॒शिरं॑ दुदु॒ह्रे व॒ज्रिणे॒ मधु॑ ।

यत्सी॑मुपह्व॒रे वि॒दत् ॥६

इन्द्रा॑य । गाव॑ः । आ॒ऽशिर॑म् । दु॒दु॒ह्रे । व॒ज्रिणे॑ । मधु॑ ।

यत् । सी॒म् । उ॒प॒ऽह्व॒रे । वि॒दत् ॥६

इन्द्राय । गावः । आऽशिरम् । दुदुह्रे । वज्रिणे । मधु ।

यत् । सीम् । उपऽह्वरे । विदत् ॥६

“इन्द्राय “गावः "आशिरम् आश्रयणसाधनं पयआदिकं "मधु मदकरं "दुदुहे दुहते । कीदृशाय । "वज्रिणे वज्रयुक्तायेन्द्राय । "यत् यदा “उपह्वरे समीपे वर्तमानं मधु सोमरसं “सीं सर्वतः “विदत् लभते तदा ।।

षोडशिशस्त्रस्य 'उद्यद्ब्रध्नस्य' इत्येषान्त्या। सूत्रितं च -- उद्यद्ब्रध्नस्य विष्टपमित्येषा परिधानीया' (आश्व. श्रौ. ६. २) इति ।

उद्यद्ब्र॒ध्नस्य॑ वि॒ष्टपं॑ गृ॒हमिन्द्र॑श्च॒ गन्व॑हि ।

मध्व॑ः पी॒त्वा स॑चेवहि॒ त्रिः स॒प्त सख्यु॑ः प॒दे ॥७

उत् । यत् । ब्र॒ध्नस्य॑ । वि॒ष्टप॑म् । गृ॒हम् । इन्द्र॑ः । च॒ । गन्व॑हि ।

मध्व॑ः । पी॒त्वा । स॒चे॒व॒हि॒ । त्रिः । स॒प्त । सख्यु॑ः । प॒दे ॥७

उत् । यत् । ब्रध्नस्य । विष्टपम् । गृहम् । इन्द्रः । च । गन्वहि ।

मध्वः । पीत्वा । सचेवहि । त्रिः । सप्त । सख्युः । पदे ॥७

"यत् यदा “ब्रध्नस्य “विष्टपं सूर्यस्य स्थानं "गृहमिन्द्रश्च अहं चोभौ "उत् "गन्वहि उद्गच्छावः तदानीं "मध्वः मधुरं सोमरसं “पीत्वा “सचेवहि संसृष्टौ भवेव । कुत्र । “सख्युः सर्वेषां सखिभूतस्यादित्यस्य । "त्रिः "सप्त इत्यनेन देवलोकानामुत्तममेकविंशं स्थानमुच्यते आदित्यस्यैकविंशत्वात् । तथा च ब्राह्मणं- द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः ' (ऐ. ब्रा. १. ३०) इति । तादृश एकविंशस्थाने सचेवहीति ॥

पूर्वोक्त एव शस्त्रे ‘ अर्चत' इति द्वितीय आनुष्टुभस्तृचः । सूत्रितं च – ‘ प्रप्र वस्त्रिष्टुभमिषमर्चत प्रार्चत ' ( आश्व. श्रौ. ६. २) इति ॥

अर्च॑त॒ प्रार्च॑त॒ प्रिय॑मेधासो॒ अर्च॑त ।

अर्च॑न्तु पुत्र॒का उ॒त पुर॒ं न धृ॒ष्ण्व॑र्चत ॥८

अर्च॑त । प्र । अ॒र्च॒त॒ । प्रिय॑ऽमेधासः । अर्च॑त ।

अर्च॑न्तु । पु॒त्र॒काः । उ॒त । पुर॑म् । न । धृ॒ष्णु । अ॒र्च॒त॒ ॥८

अर्चत । प्र । अर्चत । प्रियऽमेधासः । अर्चत ।

अर्चन्तु । पुत्रकाः । उत । पुरम् । न । धृष्णु । अर्चत ॥८

हे अध्वर्य्वादयः यूयमिन्द्रम् "अर्चत पूजयत स्तुत्या। “प्रार्चत प्रकर्षेणार्चतेन्द्रमेव । हे "प्रियमेधासः प्रियमेधसंबन्धिनस्तद्गोत्रा यूयम् "अर्चत इन्द्रम् । "पुत्रकाः पुत्रा अपि “अर्चन्तु इन्द्रम् । “उत अपि च "पुरं "न “धृष्णु यथा पुरं धर्षणशीलमर्चन्ति तादृशमिन्द्रम् "अर्चत ।।

अव॑ स्वराति॒ गर्ग॑रो गो॒धा परि॑ सनिष्वणत् ।

पिङ्गा॒ परि॑ चनिष्कद॒दिन्द्रा॑य॒ ब्रह्मोद्य॑तम् ॥९

अव॑ । स्व॒रा॒ति॒ । गर्ग॑रः । गो॒धा । परि॑ । स॒नि॒स्व॒न॒त् ।

पिङ्गा॑ । परि॑ । च॒नि॒स्क॒द॒त् । इन्द्रा॑य । ब्रह्म॑ । उत्ऽय॑तम् ॥९

अव । स्वराति । गर्गरः । गोधा । परि । सनिस्वनत् ।

पिङ्गा । परि । चनिस्कदत् । इन्द्राय । ब्रह्म । उत्ऽयतम् ॥९

“गर्गरः गर्गरध्वनियुक्तो वाद्यविशेषो युद्धे “अव "स्वराति भयं शब्दयति । “गोधा हस्तघ्नः “परि परितः "सनिष्वणत् स्वनति भृशम् । "पिङ्गा पिङ्गवर्णा ज्यापि “परि “चनिष्कदत् परिस्कन्दते । यस्मादेवं युद्धः संनद्धोऽत “इन्द्राय “ब्रह्म परिवृढं कर्म स्तुतिलक्षणम् “उद्यतं भवत्विति शेषः ॥

आ यत्पत॑न्त्ये॒न्य॑ः सु॒दुघा॒ अन॑पस्फुरः ।

अ॒प॒स्फुरं॑ गृभायत॒ सोम॒मिन्द्रा॑य॒ पात॑वे ॥१०

आ । यत् । पत॑न्ति । ए॒न्य॑ः । सु॒ऽदुघा॑ः । अन॑पऽस्फुरः ।

अ॒प॒ऽस्फुर॑म् । गृ॒भा॒य॒त॒ । सोम॑म् । इन्द्रा॑य । पात॑वे ॥१०

आ । यत् । पतन्ति । एन्यः । सुऽदुघाः । अनपऽस्फुरः ।

अपऽस्फुरम् । गृभायत । सोमम् । इन्द्राय । पातवे ॥१०

"यत् यदा “एन्यः एतवर्णाः शुभ्रवर्णा नद्यः “आ “पतन्ति आगच्छन्ति सर्वतः प्रवहन्ति । कीदृश्यः। "सुदुघाः सुदोहाः "अनपस्फुरः। अपस्फुरोऽपस्फुरा अप्रवृद्धाः। अतादृश्योऽनपस्फुरः । अत्यन्तं प्रवृद्धा इत्यर्थः । यद्वा । सुदुघाः प्रवृद्धा एतवर्णा गावो यदा पयआद्यर्थाय आ पतन्ति तदा “अपस्फुरम् । अत्रापशब्दो धात्वर्थानुवादी । अत्यन्तप्रवृद्धं "सोममिन्द्राय “पातवे पातुं “गृभायत ग्रहणं कुरुत । अथवानपस्फुर इत्यत्राप्यपशब्दोऽनुवादी धात्वर्थस्य । तथा सत्ययमर्थः । यदा एन्यो नद्योऽनपस्फुरोऽप्रवृद्धोदका पतन्ति वृष्टिरल्पा यदा भवति तदा सोममिन्द्रार्थं संपादयतेति ॥ ।।६।।

अपा॒दिन्द्रो॒ अपा॑द॒ग्निर्विश्वे॑ दे॒वा अ॑मत्सत ।

वरु॑ण॒ इदि॒ह क्ष॑य॒त्तमापो॑ अ॒भ्य॑नूषत व॒त्सं सं॒शिश्व॑रीरिव ॥११

अपा॑त् । इन्द्र॑ः । अपा॑त् । अ॒ग्निः । विश्वे॑ । दे॒वाः । अ॒म॒त्स॒त॒ ।

वरु॑णः । इत् । इ॒ह । क्ष॒य॒त् । तम् । आप॑ः । अ॒भि । अ॒नू॒ष॒त॒ । व॒त्सम् । सं॒शिश्व॑रीःऽइव ॥११

अपात् । इन्द्रः । अपात् । अग्निः । विश्वे । देवाः । अमत्सत ।

वरुणः । इत् । इह । क्षयत् । तम् । आपः । अभि । अनूषत । वत्सम् । संशिश्वरीःऽइव ॥११

“इन्द्रः “अपात् अपिबत् सोमम् । “अग्निः अप्यपिबत् । “विश्वे "देवाः अपि “अमत्सत तृप्ता अभवन् सोमपानेन । "वरुण “इत् वरुणोऽपि “इह अस्मिन् यागगृहे "क्षयत् निवसतु सोमपानार्थम् । निवसन्तं “तम् "आपः अपि “अभ्यनूषत । उदकान्यापनशीला स्तुतयो वाभ्यष्टुवन् । किमिव । “वत्सं स्वीयं संशिश्वरीः संशिश्वर्यः संगच्छमाना गावः "इव । ता यथा धावन्त्यो हम्भारवं कुर्वन्ति तद्वत् ॥

सु॒दे॒वो अ॑सि वरुण॒ यस्य॑ ते स॒प्त सिन्ध॑वः ।

अ॒नु॒क्षर॑न्ति का॒कुदं॑ सू॒र्म्यं॑ सुषि॒रामि॑व ॥१२

सु॒ऽदे॒वः । अ॒सि॒ । व॒रु॒ण॒ । यस्य॑ । ते॒ । स॒प्त । सिन्ध॑वः ।

अ॒नु॒ऽक्षर॑न्ति । का॒कुद॑म् । सू॒र्म्य॑म् । सु॒षि॒राम्ऽइ॑व ॥१२

सुऽदेवः । असि । वरुण । यस्य । ते । सप्त । सिन्धवः ।

अनुऽक्षरन्ति । काकुदम् । सूर्म्यम् । सुषिराम्ऽइव ॥१२

हे वरुण जलाभिमानिन् देव त्वं "सुदेवोऽसि "यस्य सुदेवस्य "ते तव “काकुदं तालु समुद्राख्यं "सप्त "सिन्धवः गङ्गाद्याः सप्त नद्यः "अनुक्षरन्ति जिह्वायां सर्वदा स्रवन्ति ।।

षोडशिशस्त्रे ‘यो व्यतीन्’ इति तृतीय आनुष्टुभस्तृचः । सूत्रितं च – यो व्यतीरफाणयदिति तृचा आनुष्टुभाः' (आश्व. श्रौ. ६. २) इति ।।

यो व्यती॒ँरफा॑णय॒त्सुयु॑क्ताँ॒ उप॑ दा॒शुषे॑ ।

त॒क्वो ने॒ता तदिद्वपु॑रुप॒मा यो अमु॑च्यत ॥१३

यः । व्यती॑न् । अफा॑णयत् । सुऽयु॑क्तान् । उप॑ । दा॒शुषे॑ ।

त॒क्वः । ने॒ता । तत् । इत् । वपुः॑ । उ॒प॒ऽमा । यः । अमु॑च्यत ॥१३

यः । व्यतीन् । अफाणयत् । सुऽयुक्तान् । उप । दाशुषे ।

तक्वः । नेता । तत् । इत् । वपुः । उपऽमा । यः । अमुच्यत ॥१३

"यः इन्द्रः “व्यतीन् विविधगमनान् ‘सुयुक्तान् सुष्ठु रथे संबद्धानश्वान् "दाशुषे हविर्दात्रे यजमानाय गन्तुं प्राप्तुम् “उप “अफाणयत् उपगमयति । फणतिर्गतिकर्मा । यदैवं करोति "तदित् तदानीमेव “तक्वः । तकतिर्गतिकर्मा । यज्ञगमनशीलः "नेता उदकस्य फलस्य वा नायक इन्द्रः "वपुः उदकमुत्पादयतीति शेषः । "यः इन्द्रः “उपमा उपमानभूतः "अमुच्यत अन्यैर्वृष्टिनिवारकैरसुरादिभिर्मुक्तो भवति ॥

अतीदुं शुक्र ओंहत इन्द्रो विश्वा अति द्विषः ।

भिनत्कुनीनं ओदुनं पुच्यमांनं पुरो गिरा ॥१४

अतिं । इत् । ऊं इतिं । शुक्रः । ओहुते । इन्द्रः । विश्वाः । अतिं । द्विषः ।

भिनत् । कुनीनः । ओदुनम् । पुच्यमांनम् । पुरः । गिरा ॥१४

अति । इत् । ऊं इति । शक्रः । ओहते । इन्द्रः । विश्वाः । अति । द्विषः ।

भिनत् । कनीनः । ओदनम् । पच्यमानम् । परः । गिरा ॥१४

अयमिन्द्रः "शक्रः शक्तः सन् "अतीत् "ओहते । अतिक्रम्य गच्छत्येव संग्रामे निरोधकान् शत्रून् । तदेवाह । अयम् "इन्द्रः "विश्वाः "द्विषः द्वेष्टॄन् शत्रून् "अति अतिक्रम्य गच्छति । "कनीनः कमनीयः "परः मेघानां परस्ताद्वर्तमान इन्द्रः "ओदनम् । मेघनामैतत् । मेघं "भिनत् अभिनत् भिनत्ति वृष्ट्यर्थम् । कीदृशम् । "गिरा माध्यमिकया वाचा स्तनितलक्षणया "पच्यमानम्। वज्रनिर्घोषेण ताड्यमानमित्यर्थः ।।

अर्भुको न कुंमारुकोऽधिं तिष्ठन्नवुं रथंम् ।

स पंक्षन्महिषं मृगं पित्रे मात्रे विंभुक्रतुंम् ॥१५

अर्भुकः । न । कुमारुकः । अधिं । तिष्ठत् । नवंम् । रथंम् ।

सः । पुक्षत् । महिषम् । मृगम् । पित्रे । मात्रे । विभुऽक्रतुंम् ॥१५

अर्भकः । न । कुमारकः । अधि । तिष्ठत् । नवम् । रथम् ।

सः । पक्षत् । महिषम् । मृगम् । पित्रे । मात्रे । विभुऽक्रतुम् ॥१५

अयमिन्द्रः "अर्भको "न अल्पशरीरः "कुमारकः कुमारक इव "नवं स्तुत्यं "रथम् "अधि "तिष्ठत् अधितिष्ठति । "सः इन्द्रः "महिषं महान्तं "मृगं मृगवदितस्ततो धावन्तं सर्वैर्मृग्यं वा "विभुक्रतुं बहुकर्माणं मेघं "पक्षत् पचति । वृष्टयभिमुखं करोतीत्यर्थः ।।

आ तू सुंशिप्र दम्पते रथं तिष्ठा हिरुण्ययंम् ।

अधं द्युक्षं संचेवहि सुहस्रंपादमरुषं स्वस्तिगामंनेहसंम् ॥१६

आ । तु । सुऽशिप्र । दम्ऽपते । रथंम् । तिष्ठ । हिरुण्ययंम् ।

अधं । द्युक्षम् । सचेवहि । सहस्रंऽपादम् । अरुषम् । स्वस्तिऽगाम् । अनेहसंम् ॥१६

आ । तु । सुऽशिप्र । दम्ऽपते । रथम् । तिष्ठ । हिरण्ययम् ।

अध । द्युक्षम् । सचेवहि । सहस्रऽपादम् । अरुषम् । स्वस्तिऽगाम् । अनेहसम् ॥१६

हे "सुशिप्र सुहनो हे "दंपते गृहस्वामिन् । अत्र गृहो रथः। तस्य स्वामिन् । "तु त्वं तावत् "रथम् "आ “तिष्ठ। हविःस्वीकरणान्तरं पश्चादहमारोहामीति भावः । कीदृशम् । "हिरण्ययं हिरण्मयम्। "अध तवारोहणानन्तरमहमप्यारुह्योभौ "सचेवहि संगच्छेवहि । संगतौ भवेव। पुनः कीदृशम् । "द्युक्षं दीप्तं रथं "सहस्रपादं बहुपादम् "अरुषम् आरोचमानं “स्वस्तिगां कुशलगमनम् “अनेहसम् अपापम् ॥

पूर्वाह्णे प्रवर्ग्ये ‘तं घेमित्था ' इत्येषा । सूत्रितं च -- तं घेमित्था नमस्विन इति प्रागाथीं पूर्वाह्णे' (आश्व. श्रौ. ४. ७) इति ।।

तं घेँमि॒त्था नंम॒स्विन॒ उपं स्व॒राजंमासते ।

अर्थँ चिदस्य॒ सुधिंत॒ं यदेतंव आव॒र्तयंन्ति दा॒वनें ॥१७

तम् । घ॒ । ई॒म् । इ॒त्था । न॒म॒स्विनः॑ । उपं । स्व॒ऽराजंम् । आ॒स॒ते॒ ।

अर्थंम् । चि॒त् । अ॒स्य॒ । सुऽधिंतम् । यत् । एतंवे । आ॒ऽव॒र्तयंन्ति । दा॒वनें ॥१७

तम् । घ । ईम् । इत्था । नमस्विनः । उप । स्वऽराजम् । आसते ।

अर्थम् । चित् । अस्य । सुऽधितम् । यत् । एतवे । आऽवर्तयन्ति । दावने ॥१७

“तं “घ तं खलु “ईम् एनमिन्द्रम् “इत्था इत्थमनेन प्रकारेण "नमस्विनः अन्नवन्तः स्तुतिवन्तो वाध्वर्य्वादयः "स्वराजं स्वयं राजमानं वा “उप "आसते सेवन्ते । तथा कृत्वा "अर्थं “चित् अरणीयं धनं "सुधितं सुष्ठु स्थापितम् "अस्य इन्द्रस्य संबन्धिनं प्राप्नुवन्तीति शेषः । कदेति आह । "यत् यदा “एतवे अस्येन्द्रस्य गमनाय स्वयं प्राप्तुं वा “दावने हविर्दानाय “आवर्तयन्ति स्तुतयः तदेत्यर्थः । अथवाश्वा वावर्तयन्ति तदेत्यर्थः ॥

अनुं प्र॒त्नस्यौकंसः प्रि॒यमेंधास एषाम् ।

पूर्वा॒मनु॒ प्रयंतिं वृ॒क्तबंर्हिषो हि॒तप्रंयस आशत ॥१८

अनुं । प्र॒त्नस्यं । ओकंसः । प्रि॒यऽमेंधासः । ए॒षा॒म् ।

पूर्वाम् । अनुं । प्रऽयंतिम् । वृ॒क्तऽबंर्हिषः । हि॒तऽप्रंयसः । आ॒श॒त॒ ॥१८

अनु । प्रत्नस्य । ओकसः । प्रियऽमेधासः । एषाम् ।

पूर्वाम् । अनु । प्रऽयतिम् । वृक्तऽबर्हिषः । हितऽप्रयसः । आशत ॥१८

अनया स्तुतिमुपसंहरति । "एषां देवानामिन्द्रादीनां "प्रत्नस्य पुराणस्य "ओकसः स्थानस्य पुराणं स्थानं "प्रियमेधासः प्रियमेधाः "अनु "आशत अनुप्राप्ताः । कीदृशाः प्रियमेधाः । "पूर्वां मुख्यं "प्रयतिं प्रदानम् "अनु लक्षीकृत्य "वृक्तबर्हिषः स्तीर्णदर्भाः "हितप्रयसः आसादितसोमादिहविष्काः ॥ ॥ ७ ॥ ॥ ७ ॥

---

**टिप्पणी**

८.६९.२ नदं व ओदतीनामिति

श्रुध्यम् (https://sa.wikisource.org/s/2lk9)

ता नदेन विहरति पुरुषो वै नदस्तस्मात्पुरुषो वदन्त्सर्वः संनदतीव, इति । नदं व ओदतीनामितीँ३ आपो वा ओदत्यो या दिव्यास्ता हीदं सर्वमुन्दन्त्यापो वा ओदत्यो या मुख्यास्ता हीदं सर्वमन्नाद्यमुन्दन्ति, इति । नदं योयुवतीनामिती३ आपो वाव योयुवत्यो या अन्तरिक्ष्यास्ता हि पोप्लूयन्त इवाऽऽपो वाव योयुवत्यो याः स्वेदते ता हि सरीसृप्यन्त इव, इति । पतिं वो अघ्न्यानामितीँ३ आपो वा अघ्न्या या अग्नेर्धूमाज्जायन्त आपो वा अघ्न्या याः शिश्नात्प्रसृज्यन्ते, इति । धेनूनामिषुध्यसीतीँ३ आपो वाव धेनवस्ता हीदं सर्वं धिन्वन्तीषुध्यसीति यदाह पतीयसीत्येव तदाह, इति । - ऐआ १.३.५ (https://sa.wikisource.org/s/ige)

८.६९.४ अभि प्र गोपतिं गिरा

द्र. गौरीवितं साम (https://sa.wikisource.org/s/1zw9)

रात्रिपर्यायः--अभि त्वा वृषभाभि प्र गोपतिमिति ब्राह्मणाच्छंसिनः.। - शां.श्रौ.सू. ९.१३.१ (https://sa.wikisource.org/s/1495) अभि त्वा वृषभा सुत इति स्तोत्रियो ब्राह्मणाच्छंसिनः। अभि प्र गोपतिं गिरेत्यनुरूपः)

# ऋग्वेदः सूक्तं ८.७०

ऋग्वेदः - मण्डल ८
← सूक्तं ८.६९ सूक्तं ८.७० सूक्तं ८.७१ →
पुरुहन्मा आङ्गिरसः।

दे. इन्द्रः । बृहती, १-६ प्रगाथः ( ), १२ शंकुमती, १३ उष्णिक्, १४ अनुष्टुप्, १५ पुरउष्णिक्

यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।

विश्वासां तरुता पृतनानां ज्येष्ठो यो वृत्रहा गृणे ॥१॥

इन्द्रं तं शुम्भ पुरुहन्मन्नवसे यस्य द्विता विधर्तरि ।

हस्ताय वज्रः प्रति धायि दर्शतो महो दिवे न सूर्यः ॥२॥

नकिष्टं कर्मणा नशद्यश्चकार सदावृधम् ।

इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्ण्वोजसम् ॥३॥

अषाळ्हमुग्रं पृतनासु सासहिं यस्मिन्महीरुरुज्रयः ।

सं धेनवो जायमाने अनोनवुर्द्यावः क्षामो अनोनवुः ॥४॥

यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।

न त्वा वज्रिन्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥५॥

आ पप्राथ महिना वृष्ण्या वृषन्विश्वा शविष्ठ शवसा ।

अस्माँ अव मघवन्गोमति व्रजे वज्रिञ्चित्राभिरूतिभिः ॥६॥

न सीमदेव आपदिषं दीर्घायो मर्त्यः ।

एतग्वा चिद्य एतशा युयोजते हरी इन्द्रो युयोजते ॥७॥

तं वो महो महाय्यमिन्द्रं दानाय सक्षणिम् ।

यो गाधेषु य आरणेषु हव्यो वाजेष्वस्ति हव्यः ॥८॥

उदू षु णो वसो महे मृशस्व शूर राधसे ।

उदू षु मह्यै मघवन्मघत्तय उदिन्द्र श्रवसे महे ॥९॥

त्वं न इन्द्र ऋतयुस्त्वानिदो नि तृम्पसि ।

मध्ये वसिष्व तुविनृम्णोर्वोर्नि दासं शिश्नथो हथैः ॥१०॥

अन्यव्रतममानुषमयज्वानमदेवयुम् ।

अव स्वः सखा दुधुवीत पर्वतः सुघ्नाय दस्युं पर्वतः ॥११॥

त्वं न इन्द्रासां हस्ते शविष्ठ दावने ।

धानानां न सं गृभायास्मयुर्द्विः सं गृभायास्मयुः ॥१२॥

सखायः क्रतुमिच्छत कथा राधाम शरस्य ।

उपस्तुतिं भोजः सूरिर्यो अह्रयः ॥१३॥

भूरिभिः समह ऋषिभिर्बर्हिष्मद्भिः स्तविष्यसे ।

यदित्थमेकमेकमिच्छर वत्सान्पराददः ॥१४॥

कर्णगृह्या मघवा शौरदेव्यो वत्सं नस्त्रिभ्य आनयत् ।

अजां सूरिर्न धातवे ॥१५॥

**सायणभाष्यम्**

अष्टमेऽनुवाक एकादश सूक्तानि । तत्र ‘ यो राजा ' इति पञ्चदशर्चं प्रथम सूक्तम् । अत्रानुक्रमणिका-- ' यो राजा पञ्चोना पुरुहन्मा बार्हतं त्रिप्रगाथाद्युष्णिगनुष्टुप्पुरउष्णिगन्तम्' इति । पुरुहन्मा ऋषिः । स च क्वचित् कथंचिदविशेषितम्' (अनु. २, ३) इति परिभाषयाङ्गिरसः । आद्यातृतीयापञ्चम्यो बृहत्यः। द्वितीयाचतुर्थीषष्ठ्यः सतोबृहत्यः । सप्तम्याद्याः षट् बृहत्यः । त्रयोदश्युष्णिक् चतुर्दश्यनुष्टुप् पञ्चदशी पुरउष्णिगाद्यद्वादशका द्व्यष्टका । ' आद्यश्चेत्पुरउष्णिक्' (अनु. ५.२ ) इति हि तल्लक्षणम् । इन्द्रो देवता।

महाव्रते निष्केवल्ये बार्हततृचाशीतावादित एकादशर्चः । तथा च पञ्चमारण्यके सूत्रितं – यो राजा चर्षणीनामित्येकादश' (ऐ. आ. ५. २. ४) इति ॥

यो राजा॑ चर्षणी॒नां याता॒ रथे॑भि॒रध्रि॑गुः ।

विश्वा॑सां तरु॒ता पृत॑नाना॒ं ज्येष्ठो॒ यो वृ॑त्र॒हा गृ॒णे ॥१

यः । राजा॑ । च॒र्ष॒णी॒नाम् । याता॑ । रथे॑भिः । अध्रि॑ऽगुः ।

विश्वा॑साम् । त॒रु॒ता । पृत॑नानाम् । ज्येष्ठः॑ । यः । वृ॒त्र॒ऽहा । गृ॒णे ॥१

यः । राजा । चर्षणीनाम् । याता । रथेभिः । अध्रिऽगुः ।

विश्वासाम् । तरुता । पृतनानाम् । ज्येष्ठः । यः । वृत्रऽहा । गृणे ॥१

"यः इन्द्रः "चर्षणीनां मनुष्याणां "राजा स्वामी रथैः “याता गन्ता च “अध्रिगुः अधृतगमनोऽन्यैः "विश्वासां "पृतनानां सेनानां “तरुता तारकः । "यः च “ज्येष्ठः गुणैर्ज्यायान् । यश्च "वृत्रहा वृत्रं हतवान् । तं महाभागमिन्द्रं "गृणे स्तौमि ॥

इन्द्र॒ं तं शु॑म्भ पुरुहन्म॒न्नव॑से॒ यस्य॑ द्वि॒ता वि॑ध॒र्तरि॑ ।

हस्ता॑य॒ वज्र॒ः प्रति॑ धायि दर्श॒तो म॒हो दि॒वे न सूर्य॑ः ॥२

इन्द्र॑म् । तम् । शु॒म्भ॒ । पु॒रु॒ऽह॒न्म॒न् । अव॑से । यस्य॑ । द्वि॒ता । वि॒ऽध॒र्तरि॑ ।

हस्ता॑य । वज्रः॑ । प्रति॑ । धा॒यि॒ । द॒र्श॒तः । म॒हः । दि॒वे । न । सूर्यः॑ ॥२

इन्द्रम् । तम् । शुम्भ । पुरुऽहन्मन् । अवसे । यस्य । द्विता । विऽधर्तरि ।

हस्ताय । वज्रः । प्रति । धायि । दर्शतः । महः । दिवे । न । सूर्यः ॥२

हे “पुरुहन्मन् ऋषे त्वं “तम् "इन्द्रं "शुम्भ हविष्प्रदानादिनालंकुरु । किमर्थम् । “अवसे रक्षणाय । एवमात्मानं संबोध्य ब्रवीति । "यस्य तव "विधर्तरि विधारक इन्द्रे “द्विता द्वित्वमस्त्यौग्य्“मनौग्र्यम् । तव शत्रून् हन्तुमुग्रत्वं त्वदनुग्रहायानौग्र्यं चेति द्वैतमस्ति । तत्रौग्र्यचिह्नं दर्शयति । "हस्ताय कराय हननाय शत्रूणां "दर्शतः दर्शनीयः “महः महान् “वज्रः “प्रति “धायि प्रतिनिहितो भवति “दिवे प्रकाशाय दिवसाय वा अथवा दिवि दृश्यमानः "सूर्यः इव ॥

तस्मिन्नेव शस्त्रे ‘नकिष्टम्' इति प्रगाथो वैकल्पिकः स्तोत्रियः । सूत्रितं च - ‘ नकिष्टं कर्मणा नशन्न त्वा बृहन्तो अद्रयः' (आश्व. श्रौ. ७. ४) इति ॥

नकि॒ष्टं कर्म॑णा नश॒द्यश्च॒कार॑ स॒दावृ॑धम् ।

इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णवोजसम् ॥३

नकिः । तम् । कर्मणा । नशत् । यः । चकार । सदाऽवृधम् ।

इन्द्रम् । न । यज्ञैः । विश्वऽगूर्तम् । ऋभ्वसम् । अधृष्टम् । धृष्णुऽओजसम् ॥३

नकिः । तम् । कर्मणा । नशत् । यः । चकार । सदाऽवृधम् ।

इन्द्रम् । न । यज्ञैः । विश्वऽगूर्तम् । ऋभ्वसम् । अधृष्टम् । धृष्णुऽओजसम् ॥३

“तं जनमन्यो मर्षको जनः "कर्मणा हननादिव्यापारेण "नकिः "नशत् नैव व्याप्नोति । “यः “इन्द्रं "चकार इन्द्रमेवानुकूलं "यज्ञैः साधनैः । कीदृशमिन्द्रम् । "सदावृधं सदा वर्धकं "विश्वगूर्त सर्वैः स्तुत्यम् "ऋभ्वसं महान्तम् "अधृष्टम् अन्यैः “धृष्णवोजसं धर्षकबलम् ॥

अषाळ्हमुग्रं पृतनासु सासहिं यस्मिन्महीरुरुज्रयः ।

सं धेनवो जायमाने अनोनवुर्द्यावः क्षामो अनोनवुः ॥४

अषाळ्हम् । उग्रम् । पृतनासु । ससहिम् । यस्मिन् । महीः । उरुऽज्रयः ।

सम् । धेनवः । जायमाने । अनोनवुः । द्यावः । क्षामः । अनोनवुः ॥४

अषाळ्हम् । उग्रम् । पृतनासु । ससहिम् । यस्मिन् । महीः । उरुऽज्रयः ।

सम् । धेनवः । जायमाने । अनोनवुः । द्यावः । क्षामः । अनोनवुः ॥४

"अषाळ्हम् असोढम् “उग्रम् उद्गूर्णबलं "पृतनासु शत्रुसेनासु "सासहिम् अभिभवितारं स्तौमीत्यर्थः । "यस्मिन् इन्द्रे “जायमाने “महीः महत्यः “उरुज्रयः बहुवेगाः “धेनवः हविरादिना प्रीणयित्र्यः प्रजा गाव एव वा "सम् "अनोनवुः समस्तुवन् । न केवलं धेनव एव अपि तु "द्यावः द्युलोकाः “क्षामः पृथिव्यश्च सम् "अनोनवुः । तत्रत्याः सर्वे प्राणिनो नमन्त इत्यर्थः। ‘ त्रिवृतो लोकाः (ऐ. ब्रा. २. १७) इति श्रुतेर्बहुवचनम् ॥

तृतीयेऽहनि निष्केवल्ये वैरूपसामपक्षे ‘यद्द्यावः' इति प्रगाथः स्तोत्रियः । सूत्रितं च -- ‘यद्याव इन्द्र ते शतं यदिन्द्र यावतस्त्वमिति प्रगाथौ स्तोत्रियानुरूपौ' (आश्व. श्रौ. ७. १०) इति ॥

यद्द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।

न त्वा वज्रिन्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥५

यत् । द्यावः । इन्द्र । ते । शतम् । शतम् । भूमीः । उत । स्युरिति स्युः ।

न । त्वा॒ । व॒ज्रि॒न् । स॒हस्र॑म् । सूर्याः॑ । अनु॑ । न । जा॒तम् । अ॒ष्ट॒ । रोद॑सी॒ इति॑ ॥५

यत् । द्यावः । इन्द्र । ते । शतम् । शतम् । भूमीः । उत । स्युरिति स्युः ।

न । त्वा । वज्रिन् । सहस्रम् । सूर्याः । अनु । न । जातम् । अष्ट । रोदसी इति ॥५

हे “इन्द्र "ते तव प्रतिमानार्थं "यत् यदि "द्यावः द्युलोकाः "स्युः तथापि नाश्नुवन्ति । “उत अपि च "भूमीः भूम्यस्ते तव मूर्तिप्रतिबिम्बाय “शतं स्युः तथापि नाश्नुवन्ति । हे "वज्रिन् “त्वा त्वां "सहस्रं सूर्याः अगणिता अपि सूर्याः “न “अनु भवन्ति । न प्रकाशयन्तीत्यर्थः। ‘न तत्र सूर्यो भाति' ( क. उ. ५. १५) इति श्रुतेः । किं बहुना । "जातं पूर्वमुत्पन्नं किंचन “न “अष्ट नाश्नुते । तथा "रोदसी द्यावापृथिव्यौ नाश्नुवाते । सर्वेभ्योऽतिरिच्यस इत्यर्थः। ‘ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः' (छा. उ. ३. १४. ३) इति श्रुतेः ॥ ॥ ८ ॥

आ प॑प्राथ महि॒ना वृष्ण्या॑ वृष॒न्विश्वा॑ शविष्ठ॒ शव॑सा ।

अ॒स्माँ अ॑व मघव॒न्गोम॑ति व्र॒जे वज्रि॑ञ्चि॒त्राभि॑रू॒तिभिः॑ ॥६

आ । प॒प्रा॒थ॒ । म॒हि॒ना । वृष्ण्या॑ । वृ॒ष॒न् । विश्वा॑ । श॒वि॒ष्ठ॒ । शव॑सा ।

अ॒स्मान् । अ॒व॒ । म॒घ॒ऽव॒न् । गोऽम॑ति । व्र॒जे । वज्रि॑न् । चि॒त्राभिः॑ । ऊ॒तिऽभिः॑ ॥६

आ । पप्राथ । महिना । वृष्ण्या । वृषन् । विश्वा । शविष्ठ । शवसा ।

अस्मान् । अव । मघऽवन् । गोऽमति । व्रजे । वज्रिन् । चित्राभिः । ऊतिऽभिः ॥६

हे "वृषन् अभिमतवर्षकेन्द्र त्वम् "आ "पप्राथ आपूरयसि व्याप्नोषि । कानि। "विश्वा सर्वाणि "वृष्ण्या वर्षकाणि बलानि शत्रुसंबन्धीनि । केन साधनेन । "महिना महता “शवसा बलेन स्वीयेन । अथवा वृष्ण्येत्येतच्छवोविशेषणम्। तथा सति अभिमतवर्षकेण महता बलेनास्मदीयानि बलानि पूरयसीत्यर्थः । अथ तथा कृत्वा “अस्मान् "गोमति बहुभिर्गोभिर्युक्ते “व्रजे शत्रुसंबन्धिनि निमित्ते सत्यस्मान् "अव हे वज्रिन् वज्रयुक्तेन्द्र। कैः साधनैः। "चित्राभिः नानाविधैः “ऊतिभिः रक्षणैरिति ॥

न सी॒मदे॑व आप॒दिषं॑ दीर्घायो॒ मर्त्यः॑ ।

एत॑ग्वा चि॒द्य एत॑शा यु॒योज॑ते॒ हरी॒ इन्द्रो॑ यु॒योज॑ते ॥७

न । सी॒म् । अदे॑वः । आ॒प॒त् । इषम्॑ । दी॒र्घा॒यो॒ इति॑ दीर्घऽआयो । मर्त्यः॑ ।

एत॑ऽग्वा । चि॒त् । यः । एत॑शा । यु॒योज॑ते । हरी॒ इति॑ । इन्द्रः॑ । यु॒योज॑ते ॥७

न । सीम् । अदेवः । आपत् । इषम् । दीर्घायो इति दीर्घऽआयो । मर्त्यः ।

एतऽग्वा । चित् । यः । एतशा । युयोजते । हरी इति । इन्द्रः । युयोजते ॥७

हे "दीर्घायो नित्येन्द्र सः "अदेवः इन्द्राख्यदेवरहितः “मर्त्यः मरणधर्मा मनुष्यः "सीं सर्वम् "इषम् अन्नं "न “आपत् न प्राप्नोति । "यः मर्त्योऽस्येन्द्रस्य “एतग्वा “चित् । एतवर्णावेवाश्वौ भवतोऽभिमतदेशगमनाय । "एतशा एतशावश्वौ "युयोजते योजयति रथे यज्ञं गन्तुम् । यश्च “इन्द्रः "हरी "युयोजते तं न यः स्तौति । स न प्राप्नोतीति समन्वयः ॥

तं वों म॒हो म॒हाय्य॒मिन्द्रं॑ दा॒नाय॑ स॒क्षणि॑म् ।

यो गा॒धेषु॒ य आर॑णेषु॒ हव्यो॒ वाजे॒ष्वस्ति॒ हव्य॑ः ॥८

तम् । व॒ः । म॒हः । म॒हाय्य॑म् । इन्द्र॑म् । दा॒नाय॑ । स॒क्षणि॑म् ।

यः । गा॒धेषु॑ । यः । आ॒ऽअर॑णेषु । हव्यः॑ । वाजे॑षु । अस्ति॑ । हव्यः॑ ॥८

तम् । वः । महः । महाय्यम् । इन्द्रम् । दानाय । सक्षणिम् ।

यः । गाधेषु । यः । आऽअरणेषु । हव्यः । वाजेषु । अस्ति । हव्यः ॥८

हे ऋत्विजः "महः महान्तः "वः यूयं "तं "महाय्यं पूज्यम् "इन्द्र "दानाय “सक्षणिं सचमानं परिचरतेति शेषः । "यः इन्द्रः “गाधेषु उदकेषु “हव्यः "अस्ति आह्वातव्यो भवति । “यः च "आरणेषु गन्तव्येषु निम्नेषूदकेषु स्थलेषु वा हव्योऽस्ति । तथा “वाजेषु संग्रामेषु जयाय "हव्यः ह्वातव्योऽस्ति भवति ॥

उदू॒ षु णों वसो म॒हे मृ॒शस्व॑ शूर॒ राध॑से ।

उदू॒ षु म॒ह्यै म॑घवन्म॒घत्त॑य॒ उदि॑न्द्र॒ श्रव॑से म॒हे ॥९

उत् । ऊ॒ँ इति॑ । सु । न॒ः । व॒सो॒ इति॑ । म॒हे । मृ॒शस्व॑ । शू॒र॒ । राध॑से ।

उत् । ऊ॒ँ इति॑ । सु । म॒ह्यै । म॒घ॒ऽव॒न् । म॒घत्त॑ये । उत् । इ॒न्द्र॒ । श्रव॑से । म॒हे ॥९

उत् । ऊँ इति । सु । नः । वसो इति । महे । मृशस्व । शूर । राधसे ।

उत् । ऊँ इति । सु । मह्यै । मघऽवन् । मघत्तये । उत् । इन्द्र । श्रवसे । महे ॥९

हे "वसो वासयितः “शूर इन्द्र त्वं "नः अस्मान् "सु सुष्ठु "उदु "मृशस्व उन्मृशस्वैव । उत्थापय । किमर्थम्। "महे महते "राधसे अन्नाय । तथा हे शूर "मघवन् इन्द्र “उत् मृशस्व "मह्यै महते मघत्तये धनदानाय । तथा “उत् मृशस्व “इन्द्र "महे महत्यै “श्रवसे कीर्त्यै ॥

त्वं न॑ इन्द्र ऋत॒युस्त्वा॒निदो॒ नि तृ॑म्पसि ।

मध्यें वसिष्व तुविनृम्ण॒ोर्वोर्नि दा॒सं शि॑श्नथो॒ हथैः॑ ॥१०

त्वम् । नः । इन्द्र । ऋतऽयुः । त्वाऽनिदः । नि । तृम्पसि ।

मध्ये । वसिष्व । तुविऽनृम्ण । ऊर्वोः । नि । दासम् । शिश्नथः । हथैः ॥१०

त्वम् । नः । इन्द्र । ऋतऽयुः । त्वाऽनिदः । नि । तृम्पसि ।

मध्ये । वसिष्व । तुविऽनृम्ण । ऊर्वोः । नि । दासम् । शिश्नथः । हथैः ॥१०

हे “इन्द्र “ऋतयुः यज्ञकामः “त्वं “नः अस्मान् “त्वानिदः । त्वां यो निन्दति सः । अयजनमेव निन्दा तव । तस्मादयष्टुः सकाशात् "नि नितरां “तृम्पसि प्रीणयसि । तस्य धनमपहृत्येति भावः । एवं संतर्प्य हे "तुविनृम्ण प्रभूतधन स त्वं तव “ऊर्वोः “मध्ये अस्मान् "वसिष्व । ऊरुभ्यामाच्छादय रक्षार्थम् । “दासम् उपक्षपयितारमस्मद्द्वेषिणं पापं वा “हथैः हननैः “नि "शिश्नथः मारयसि । अथवा त्वद्विरोधिनं दासमसुरं नि शिश्नथो हननैः ॥ ॥ ९ ॥

अन्यव्रतममानुषमयज्वानमदेवयुम् ।

अव स्वः सखा दुधुवीत पर्वतः सुघ्नाय दस्युं पर्वतः ॥११

अन्यऽव्रतम् । अमानुषम् । अयज्वानम् । अदेवऽयुम् ।

अव । स्वः । सखा । दुधुवीत । पर्वतः । सुऽघ्नाय । दस्युम् । पर्वतः ॥११

अन्यऽव्रतम् । अमानुषम् । अयज्वानम् । अदेवऽयुम् ।

अव । स्वः । सखा । दुधुवीत । पर्वतः । सुऽघ्नाय । दस्युम् । पर्वतः ॥११

हे इन्द्र अन्यव्रतं व्यतिरिक्तकर्माणम् अत एव "अमानुषं मानुषाणामिन्द्रयाजिनामप्रियम् “अयज्वानम् अयष्टारम् "अदेवयुम् अदेवकर्मिणं पापिनं "स्वः स्वर्गात् "अव "दुधुवीत । अवचालयेदित्यर्थः । कः । “सखा “पर्वतः तव सखिभूतः पर्वत ऋषिः । यद्यप्यन्यं देवमिष्ट्वा स्वर्गं प्राप्नोति सः तथापि पातयति ऋषिः । न केवलं धूननमात्रमपि तु "सुघ्नाय सुष्ठु हन्त्रे मृत्यवे "दस्युम् उक्तलक्षणं "पर्वतः प्रेरयतीति शेषः । अत इन्द्रमेवावश्यं यजध्वमिति शेषः ॥

त्वं न इन्द्रासां हस्ते शविष्ठ दावने ।

धानानां न सं गृभायास्मयुर्द्विः सं गृभायास्मयुः ॥१२

त्वम् । नः । इन्द्र । आसाम् । हस्ते । शविष्ठ । दावने ।

धानानाम् । न । सम् । गृभाय । अस्मऽयुः । द्विः । सम् । गृभाय । अस्मऽयुः ॥१२

त्वम् । नः । इन्द्र । आसाम् । हस्ते । शविष्ठ । दावने ।

धानानाम् । न । सम् । गृभाय । अस्मऽयुः । द्विः । सम् । गृभाय । अस्मऽयुः ॥१२

हे "शविष्ठ बलवन् "इन्द्र “त्वं नः अस्मभ्यं "दावने प्रदानाय “आसां गवाम् । कर्मणि षष्ठी । एता गाः “हस्ते "गृभाय गृहाण । ग्रहणे दृष्टान्तः । “धानानां "न । धाना भृष्टयवाः । अत्रापि कर्मणि षष्ठी । धाना यथा संगृह्णाति तद्वद्गृहाण । कीदृशस्त्वम् । "अस्मयुः अस्मान् कामयमानः । गृहीत्वा च "अस्मयुः सन् "द्विः "सं "गृभाय । पुनर्द्विवारं संगृहाण ।।

सखा॑यः॒ क्रतु॑मिच्छत क॒था रा॑धाम श॒रस्य॑ ।

उप॑स्तुतिं भो॒जः सू॒रिर्यो अह्र॑यः ॥१३

सखा॑यः । क्रतु॑म् । इ॒च्छ॒त॒ । क॒था । रा॒धा॒म॒ । श॒रस्य॑ ।

उप॑ऽस्तुतिम् । भो॒जः । सू॒रिः । यः । अह्र॑यः ॥१३

सखायः । क्रतुम् । इच्छत । कथा । राधाम । शरस्य ।

उपऽस्तुतिम् । भोजः । सूरिः । यः । अह्रयः ॥१३

हे "सखायः ऋत्विजोऽध्वर्य्वादयः "क्रतुं कर्म इन्द्रसंबन्धिनम् "इच्छत कर्तुम् । हे सखायः “शरस्य । ‘शॄ हिंसायाम्' । हिंसकस्येन्द्रस्य "कथा कथं "राधाम साधयाम । किम् । उपस्तुतिं स्तोत्रम् । "यः इन्द्रः “भोजः शत्रूणां भोजयिता "सूरिः प्रेरकः "अह्रयः अनवनतः शत्रूणामिति ॥

भूरि॑भिः समह॒ ऋषि॑भिर्ब॒र्हिष्म॑द्भिः स्तविष्यसे ।

यदि॒त्थमेक॑मेक॒मिच्छर॑ व॒त्सान्प॑रा॒दद॑ः ॥१४

भूरि॑ऽभिः । स॒म॒ह॒ । ऋषि॑ऽभिः । ब॒र्हिष्म॑त्ऽभिः । स्त॒वि॒ष्य॒से॒ ।

यत् । इ॒त्थम् । एक॑म्ऽएकम् । इत् । शर॑ । व॒त्सान् । प॒रा॒ऽददः॑ ॥१४

भूरिऽभिः । समह । ऋषिऽभिः । बर्हिष्मत्ऽभिः । स्तविष्यसे ।

यत् । इत्थम् । एकम्ऽएकम् । इत् । शर । वत्सान् । पराऽददः ॥१४

हे इन्द्र "समह समानपूज। सर्वैः पूज्येत्यर्थः। "भूरिभिः बहुभिः “ऋषिभिः अतीन्द्रियज्ञैर्ऋत्विग्भिः "बर्हिष्मद्भिः यागवद्भिः “स्तविष्यसे स्तूयसे। "यत् य इन्द्रः "इत्थमेकमेकमित् एकमेकमेव वत्समित्येवं बहून् "वत्सान् स्तोतृभ्यः "पराददः प्रयच्छसि। हे "शर हिंसक शत्रोः । अत्र वत्सशब्दो वत्समातृणां गवामुपलक्षकः । गाः प्रयच्छसीति ॥

क॒र्ण॒गृह्या॑ म॒घवा॑ शौरदे॒व्यो व॒त्सं न॑स्त्रि॒भ्य आन॑यत् ।

अ॒जां सू॒रिर्न धात॑वे ॥१५

क॒र्ण॒ऽगृह्य॑ । म॒घऽवा॑ । शौ॒र॒ऽदे॒व्यः॑ । व॒त्सम् । नः॒ । त्रि॒ऽभ्यः॑ । आ । अ॒न॒य॒त् ।

अ॒जाम् । सू॒रिः । न । धात॑वे ॥१५

कर्णऽगृह्य । मघऽवा । शौरऽदेव्यः । वत्सम् । नः । त्रिऽभ्यः । आ । अनयत् ।

अजाम् । सूरिः । न । धातवे ॥१५

अयं "मघवा इन्द्रः "त्रिभ्यः हिंसकेभ्यः सकाशात् "शौरदेव्यः । दीव्यन्ति क्रीडन्त इति देवा योद्धारः। शूराश्च ते देवाश्च शूरदेवाः । तेषां हितं शौरदेवं युद्धम्। तत्संबन्धिन्यो गाः। युद्धे शत्रून् हत्वा तत्संबन्धिन्य इत्यर्थः । ताः "वत्सं "न । नेति चार्थे। वत्ससहिता अस्मभ्यं "कर्णगृह्य कर्णे गृहीत्वा "आनयत् आनयतु । "सूरिर्न प्रेरकः स्वामीव "धातवे पानाय "अजां यथा स आनयति कर्णे गृहीत्वा तद्वदिति ॥ ॥ १० ॥

---

**टिप्पणी**

८.७०.१ यो राजा चर्षणीनां इति

पौरुहन्मनम् (https://sa.wikisource.org/s/2gnb) (ग्रामगेयः)

भरद्वाजस्य पृश्नि (https://sa.wikisource.org/s/1z92)

८.७०.३ नकिष्टं कर्मणा नशत् इति वैखानसम् (https://sa.wikisource.org/s/2gn9) (ऊहगानम्)

वैखानसम् (https://sa.wikisource.org/s/2gna) (ग्रामगेयः)

८.७०.५ यद्द्याव इन्द्र ते शतं इति

वैरूपाणि (https://sa.wikisource.org/s/2doy) (आरण्यकम्)

पृष्ठ्यषडहे तृतीयमहः -- यद् द्याव इन्द्र ते शतम् इति वैरूपस्य स्तोत्रियः । शतम् भूमीर् उत स्युर् इति निनृत्तिः । अन्तस् तृतीयम् अहः । नीव वा अन्तम् गत्वा नृत्यति । कद्र्यङ् हि तत इयात् । - कौ.ब्रा. २२.४ (https://sa.wikisource.org/s/1890)

विषुवत्कालः - दुरोहणम् -- यद् द्याव इन्द्र ते शतम् इत्य् अनुरूपः सहस्रम् सूर्या इति सूर्यवान् । तद् एतस्य अह्नो रूपम् । - कौ.ब्रा २५.६ (https://sa.wikisource.org/s/189c)

यद्द्याव इन्द्र ते शतꣳ शतं भूमीः । उत स्युः । न त्वा वज्रिन्त्सहस्रꣳ सूर्याः ( ५) । अनु न जातमष्ट रोदसी इति, इति । नानालिङ्गत्वादृतूनां नानासूर्यत्वम्, इति । अष्टौ तु व्यवसिता इति, इति । सूर्यमण्डलान्यष्टात ऊर्ध्वम्, इति । - तै.आ. १.७.५ (https://sa.wikisource.org/s/h44)

यद्द्याव इन्द्र ते शतं यदिन्द्र यावतस्त्वमिति वैरूपम्पृष्ठम्भवति राथंतरेऽहनि तृतीयेऽहनि तृतीयस्याह्नो रूपं - ऐ.ब्रा. ५.१.१८ (https://sa.wikisource.org/s/w1f)

द्र. पञ्चनिधनं वैरूपम् (https://sa.wikisource.org/s/1zb6) (ऊह्यगानम्)

**मण्डल ८**

# ऋग्वेदः सूक्तं ८.७१

ऋग्वेदः - मण्डल ८
← सूक्तं ८.७० | सूक्तं ८.७१ | सूक्तं ८.७२ →
सुदीति-पुरुमीळ्हावाङ्गिरसौ, तयोर्वान्यतरः।

दे. अग्निः । गायत्री, १०-१५ प्रगाथः ( )।

---

त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः ।

उत द्विषो मर्त्यस्य ॥१॥

नहि मन्युः पौरुषेय ईशे हि वः प्रियजात ।

त्वमिदसि क्षपावान् ॥२॥

स नो विश्वेभिर्देवेभिरूर्जो नपाद्भद्रशोचे ।

रयिं देहि विश्ववारम् ॥३॥

न तमग्ने अरातयो मर्तं युवन्त रायः ।

यं त्रायसे दाश्वांसम् ॥४॥

यं त्वं विप्र मेधसातावग्ने हिनोषि धनाय ।

स तवोती गोषु गन्ता ॥५॥

त्वं रयिं पुरुवीरमग्ने दाशुषे मर्ताय ।

प्र णो नय वस्यो अच्छ ॥६॥

उरुष्या णो मा परा दा अघायते जातवेदः ।

दुराध्ये मर्ताय ॥७॥

अग्ने माकिष्टे देवस्य रातिमदेवो युयोत ।

त्वमीशिषे वसूनाम् ॥८॥

स नो वस्व उप मास्यूर्जो नपान्माहिनस्य ।

सखे वसो जरितृभ्यः ॥९॥

अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम् ।

अच्छा यज्ञासो नमसा पुरूवसुं पुरुप्रशस्तमूतये ॥१०॥

अग्निं सूनुं सहसो जातवेदसं दानाय वार्याणाम् ।

द्विता यो भूदमृतो मर्त्येष्वा होता मन्द्रतमो विशि ॥११॥

अग्निं वो देवयज्ययाग्निं प्रयत्यध्वरे ।

अग्निं धीषु प्रथममग्निमर्वत्यग्निं क्षैत्राय साधसे ॥१२॥

अग्निरिषां सख्ये ददातु न ईशे यो वार्याणाम् ।

अग्निं तोके तनये शश्वदीमहे वसुं सन्तं तनूपाम् ॥१३॥

अग्निमीळिष्वावसे गाथाभिः शीरशोचिषम् ।

अग्निं राये पुरुमीळ्ह श्रुतं नरोऽग्निं सुदीतये छर्दिः ॥१४॥

अग्निं द्वेषो योतवै नो गृणीमस्यग्निं शं योश्च दातवे ।

विश्वासु विक्ष्ववितेव हव्यो भुवद्वस्तुरृषूणाम् ॥१५॥

**सायणभाष्यम्**

'त्वं नो अग्ने ' इति पञ्चदशर्चं द्वितीयं सूक्तम् । सुदीतिपुरुमीळ्हावृषी तयोरन्यतरो वा । आदौ नव गायत्र्यो दशमीद्वादशीचतुर्दश्यो बृहत्य एकादशीत्रयोदशीपञ्चदश्यः सतोबृहत्यः । अग्निर्देवता । तथा चानुक्रान्तं - त्वं नः सुदीतिपुरुमीळ्हौ तयोर्वान्यतर आग्नेयं तु

त्रिप्रगाथान्तम् ' इति । प्रातरनुवाक आग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चादितो नवर्चः। तथा च सूत्रितं -- त्वं नो अग्ने महोभिरिति नव ' (आश्व. श्रौ. ४. १३) इति ॥

त्वं नों अग्ने॒ महोंभिः पा॒हि विश्वं॑स्या॒ अरा॑तेः ।

उ॒त द्वि॒षो मर्त्यं॑स्य ॥१

त्वम् । न॒ः । अ॒ग्ने॒ । महः॑ऽभिः । पा॒हि । विश्वं॑स्याः । अरा॑तेः ।

उ॒त । द्वि॒षः । मर्त्यं॑स्य ॥१

त्वम् । नः । अग्ने । महःऽभिः । पाहि । विश्वस्याः । अरातेः ।

उत । द्विषः । मर्त्यस्य ॥१

हे “अग्ने “त्वं “नः अस्मान् “महोभिः पूजाभिर्महद्भिर्धनैर्वा “पाहि रक्ष। “विश्वस्याः बहुविधात् “अरातेः अदातुः सकाशात् अदानाद्वा पाहि। त्वमेव महद्धनं दत्त्वादातुरदानाद्वा सकाशाद्रक्षेत्यर्थः । यद्वा । महोभिर्युक्तस्त्वमिति योज्यम् । “उत अपि च “द्विषः द्वेष्टुः मर्त्यस्य मर्त्यात् सकाशात् पाहि । अस्मभ्यं बलं दत्त्वेति भावः । अथवा मर्त्यस्य द्विषो द्वेषाद्रक्षेति संबन्धः। अरातेरित्यस्यादानादिति पक्षे तत्रापि मर्त्यस्यादानादिति संबन्धनीयम् ॥

न॒हि म॒न्युः पौरुं॑षेय॒ ईशे॒ हि व॑ः प्रियजात ।

त्वमिदं॑सि॒ क्षपा॑वान् ॥२

न॒हि । म॒न्युः । पौरुं॑षेयः । ईशें । हि । व॒ः । प्रि॒य॒ऽजा॒त॒ ।

त्वम् । इत् । अ॒सि॒ । क्षपां॑ऽवान् ॥२

नहि । मन्युः । पौरुषेयः । ईशे । हि । वः । प्रियऽजात ।

त्वम् । इत् । असि । क्षपाऽवान् ॥२

हे “प्रियजात अग्ने “वः तव “पौरुषेयः पुरुषसंवन्धी “मन्युः क्रोधः "न “ईशे नेष्टे बाधितुम् । अस्मदादिभी रक्षितत्वादिति भावः । दिवाचराः खलु पुरुषाः अतो दिवा तव हानिर्नास्तीति भावः । अथ रात्रिंचरा रक्षःप्रभृतयः । तेभ्योऽपि पीडा नास्तीत्युच्यते । “त्वमित् त्वमेव खलु “क्षपावान् रात्रिमान् “असि । रात्रौ ह्यग्निर्विशेषेण तेजस्वी भवति ॥

स नो॒ विश्वे॑भिर्दे॒वेभि॒रूर्जो॑ नपा॒द्भद्रं॑शोचे ।

र॒यिं दे॑हि वि॒श्ववा॑रम् ॥३

सः । न॒ः । विश्वे॑भिः । दे॒वेभि॑ः । ऊर्जः॑ । न॒पा॒त् । भद्र॑ऽशोचे ।

र॒यिम् । दे॒हि॒ । वि॒श्वऽवा॑रम् ॥३

सः । नः । विश्वेभिः । देवेभिः । ऊर्जः । नपात् । भद्रऽशोचे ।

रयिम् । देहि । विश्वऽवारम् ॥३

हे अग्ने “सः स्तुत्यस्त्वं “नः अस्मभ्यं वस्वो वसु धनमुप मासि प्रयच्छसि । हे “ऊर्जो “नपात् बलस्य नप्तर्न पातयितर्वा हे “भद्रशोचे स्तुत्यप्रकाश । तदेवादरार्थं पुनराह। “रयिं धनं “विश्ववारं सर्वैर्वरणीयं धनं “देहि । अथवा यद्वसूप मासि अस्मभ्यं दातुं तद्धनं गृहादिलक्षणं तच्च रयिं दानार्हं गोहिरण्यादिकं च देहीत्यपुनरुक्तिः ॥ ।

न तम॑ग्ने॒ अरा॑तयो॒ मर्तं॑ युवन्त रा॒यः ।

यं त्राय॑से दा॒श्वांस॑म् ॥४

न । तम् । अ॒ग्ने॒ । अरा॑तयः । मर्त॑म् । यु॒व॒न्त॒ । रा॒यः ।

यम् । त्राय॑से । दा॒श्वांस॑म् ॥४

न । तम् । अग्ने । अरातयः । मर्तम् । युवन्त । रायः ।

यम् । त्रायसे । दाश्वांसम् ॥४

हे अग्ने “तं स्तोतारम् “अरातयः अदानशीला द्वेषिणः “रायः रयिमन्तः “न “युवन्त न पृथक्कुर्वन्ति । रायो धनाद्वा न युवन्त । “यं "दाश्वांसं हविर्दातारं “त्रायसे पालयसे ॥

यं त्वं वि॑प्र मे॒धसा॑ता॒वग्ने॑ हि॒नोषि॒ धना॑य ।

स तवो॒ती गोषु॒ गन्ता॑ ॥५

यम् । त्वम् । वि॒प्र॒ । मे॒धऽसा॑तौ । अग्ने॑ । हि॒नोषि॑ । धना॑य ।

सः । तव॑ । ऊ॒ती । गोषु॑ । गन्ता॑ ॥५

यम् । त्वम् । विप्र । मेधऽसातौ । अग्ने । हिनोषि । धनाय ।

सः । तव । ऊती । गोषु । गन्ता ॥५

हे “अग्ने “विप्र “त्वं “यं मर्यंन "मेधसातौ यज्ञस्य संभजने “हिनोषि प्रेरयसि “धनाय गवादिधनलाभाय “सः यजमानः “तव “ऊती ऊत्या रक्षणेन “गोषु “गन्ता भवति । गोमान् भवतीत्यर्थः ॥ ॥ ११ ॥

त्वं र॒यिं पु॑रु॒वीर॒मग्ने॑ दा॒शुषे॒ मर्ता॑य ।

प्र णो॑ नय॒ वस्यो॒ अच्छ॑ ॥६

त्वम् । र॒यिम् । पु॒रु॒ऽवीर॑म् । अग्ने॑ । दा॒शुषे॑ । मर्ता॑य ।

प्र । न॒ः । न॒य॒ । वस्य॑ः । अच्छ॑ ॥६

त्वम् । रयिम् । पुरुऽवीरम् । अग्ने । दाशुषे । मर्ताय ।

प्र । नः । नय । वस्यः । अच्छ ॥६

हे “अग्ने “त्वं “दाशुषे हविर्दत्तवते मर्त्याय यजमानाय “रयिं धनं “पुरुवीरं बहुभिर्वीरैर्युक्तं प्रयच्छसि । अतः “नः अस्मानपि “वस्यः वसीयो धनम् "अच्छ अभिप्राप्तुं "प्र “णय प्रापय ।।

उ॒रु॒ष्या णो॒ मा परा॑ दा अघाय॒ते जा॑तवेदः ।

दु॒रा॒ध्ये॒३॒॑ मर्ता॑य ॥७

उ॒रु॒ष्य । न॒ः । मा । परा॑ । दा॒ः । अ॒घ॒ऽय॒ते । जा॒त॒ऽवे॒द॒ः ।

दु॒ःऽआ॒ध्ये॑ । मर्ता॑य ॥७

उरुष्य । नः । मा । परा । दाः । अघऽयते । जातऽवेदः ।

दुःऽआध्ये । मर्ताय ॥७

हे “जातवेदः जातविद्य जातधन वाग्ने “नः अस्मान् “उरुष्य रक्ष। 'उरुष्यती रक्षाकर्मा' (निरु. ५. २३) इति यास्कः । “मा “परा “दाः मा परादेह्यस्मान् । कस्मा इति स उच्यते । “अघायते अघं पापमिच्छते “दुराध्ये दुराध्यानाय दुर्विचिन्तकाय हिंसाबुद्धये “मर्ताय मनुष्याय ।।

अग्ने॒ माकि॑ष्टे दे॒वस्य॑ रा॒तिमदे॑वो युयोत ।

त्वमी॑शिषे॒ वसू॑नाम् ॥८

अग्ने॑ । माकि॑ः । ते॒ । दे॒वस्य॑ । रा॒तिम् । अदे॑वः । यु॒यो॒त॒ ।

त्वम् । ई॒शि॒षे॒ । वसू॑नाम् ॥८

अग्ने । माकिः । ते । देवस्य । रातिम् । अदेवः । युयोत ।

त्वम् । ईशिषे । वसूनाम् ॥८

हे “अग्ने “देवस्य द्योतमानस्य “ते तव “रातिं दानं दत्तं धनं वा कश्चित् “अदेवः मर्त्यादिः “माकिः "युयोत मैव पृथक्करोतु । “त्वम् एव “ईशिषे । कस्य । “वसूनां धनानामीश्वरो भवसि दातुम् । अनेनामिश्रणीयाया रातेः सद्भाव उक्तो भवति ।।

स नो॒ वस्व॒ उप॑ मा॒स्यूर्जो॑ नपा॒न्माहि॑नस्य ।

सखे॑ वसो जरि॒तृभ्यः॑ ॥९

सः । नः॒ । वस्वः॑ । उप॑ । मा॒सि॒ । ऊर्जः॑ । न॒पा॒त् । माहि॑नस्य ।

सखे॑ । व॒सो॒ इति॑ । ज॒रि॒तृऽभ्यः॑ ॥९

सः । नः । वस्वः । उप । मासि । ऊर्जः । नपात् । माहिनस्य ।

सखे । वसो इति । जरितृऽभ्यः ॥९

हे “ऊर्जो “नपात् बलस्यान्नस्य पुत्र । बलेन मध्यमानत्वादाज्यलक्षणेनान्नेन प्रवर्धनादूर्जोनपात्त्वम् । हे “सखे सखिवद्धितकारिन् “वसो वासकाग्ने “सः स्तुत्यत्वेनैव प्रसिद्धस्त्वं “जरितृभ्यः गरितृभ्यः स्तोतृभ्यः “नः अस्मभ्यं “माहिनस्य “वस्वः । माहिन इति महन्नाम । महद्धनम् “उप “मासि समीपे मासि निर्मासि । प्रयच्छसीत्यर्थः ॥

प्रातरनुवाके बार्हते छन्दसि ‘अच्छा नः' इत्याद्याः षड्ऋचः । तथा च सूत्रितम् -- अच्छा नः शीरशोचिषमिति षट् ' ( आश्व. श्रौ. ४.१३) इति । दशमेऽहनि प्रातःसवने अच्छा वो अग्निम् ' इति तृचस्य स्थाने ' अच्छा नः' इति तृचोऽच्छावाकवादः । सूत्रितं च --- अच्छा नः शीरशोचिषं प्रति श्रुताय वो धृषदिति तृचौ ' (आश्व. श्रौ. ८.१२) इति ॥

अच्छा॑ नः शी॒रशो॑चिषं॒ गिरो॑ यन्तु दर्श॒तम् ।

अच्छा॑ य॒ज्ञासो॒ नम॑सा पुरू॒वसुं॑ पुरुप्रश॒स्तमू॒तये॑ ॥१०

अच्छ॑ । नः॒ । शी॒रऽशो॑चिषम् । गिरः॑ । य॒न्तु॒ । द॒र्श॒तम् ।

अच्छ॑ । य॒ज्ञासः॑ । नम॑सा । पु॒रु॒ऽवसु॑म् । पु॒रु॒ऽप्र॒श॒स्तम् । ऊ॒तये॑ ॥१०

अच्छ । नः । शीरऽशोचिषम् । गिरः । यन्तु । दर्शतम् ।

अच्छ । यज्ञासः । नमसा । पुरुऽवसुम् । पुरुऽप्रशस्तम् । ऊतये ॥१०

“अच्छ अभिमुखं “यन्तु गच्छन्तु “नः अस्माकं “गिरः स्तुतयः । कम् । “शीरशोचिषम् अशनशीलज्वालं “दर्शतं सर्वैर्दर्शनीयमग्निम् । तथा “यज्ञासः यज्ञाश्चास्मदीयाः “नमसा हविषाज्यादिलक्षणेन “अच्छ अभिमुखं यन्तु गच्छन्तु । कीदृशम् । “पुरुवसुं प्रभूतधनं “पुरुप्रशस्तं बहुस्तुतम् । किमर्थम् । “ऊतये अस्माकं रक्षणाय ॥ ॥ १२ ॥

अ॒ग्निं सू॒नुं सह॑सो जा॒तवे॑दसं दा॒नाय॒ वार्या॑णाम् ।

द्वि॒ता यो भूद॒मृतो॒ मर्त्ये॒ष्वा होता॑ म॒न्द्रत॑मो वि॒शि ॥११

अ॒ग्निम् । सू॒नुम् । सह॑सः । जा॒तऽवे॑दसम् । दा॒नाय॑ । वार्या॑णाम् ।

द्वि॒ता । यः । भूत् । अ॒मृतः॑ । मर्त्ये॑षु । आ । होता॑ । म॒न्द्रऽत॑मः । वि॒शि ॥११

अग्निम् । सूनुम् । सहसः । जातऽवेदसम् । दानाय । वार्याणाम् ।

द्विता । यः । भूत् । अमृतः । मर्त्येषु । आ । होता । मन्द्रऽतमः । विशि ॥११

“अग्निं “सहसः “सूनुं बलस्य पुत्रं “जातवेदसं जातधनं “वार्याणां वरणीयानां गवादिधनानां “दानाय गिरः अच्छ यन्त्वित्यनुवर्तते । “यः अग्निः “अमृतः अमरणधर्मा देवेषु भवति सः “मर्त्येष्वा । आकारश्चार्थे । मनुष्येषु चाभूत् अभवदित्येवं “द्विता द्वैधं भवति । देवेष्वमृतत्वमस्य प्रसिद्धं मनुष्येषु कीदृशोऽभूदिति उच्यते । “विशि विक्षु यजमानरूपासु प्रजासु “होता होमनिष्पादकः “मन्द्रतमः मादयितृतमश्च भवति । अच्छ यन्त्विति समन्वयः । अथवा योऽमृतो द्विता द्वित्वं द्वैधं द्विप्रकारोऽभूत् । कथम् । मर्त्येषु सामान्येन दाहपाकादिसाधनोऽभवदित्येतत् प्रसिद्धं विशि यजमानरूपायां तु होता मन्द्रतमः अभवदित्येवं द्वित्वम् ।

अ॒ग्निं वो॑ देवय॒ज्यया॒ग्निं प्र॑य॒त्य॑ध्व॒रे ।

अ॒ग्निं धी॒षु प्र॑थ॒मम॒ग्निमर्व॑त्य॒ग्निं क्षैत्रा॑य॒ साध॑से ॥१२

अ॒ग्निम् । व॒ः । दे॒व॒ऽय॒ज्यया॑ । अ॒ग्निम् । प्र॒ऽय॒ति । अ॒ध्व॒रे ।

अ॒ग्निम् । धी॒षु । प्र॒थ॒मम् । अ॒ग्निम् । अर्व॑ति । अ॒ग्निम् । क्षैत्रा॑य । साध॑से ॥१२

अग्निम् । वः । देवऽयज्यया । अग्निम् । प्रऽयति । अध्वरे ।

अग्निम् । धीषु । प्रथमम् । अग्निम् । अर्वति । अग्निम् । क्षैत्राय । साधसे ॥१२

हे यजमानाः युष्माकं “देवयज्यया देवयागेन निमित्तेन देवयागार्थम् “अग्निं स्तौमीति शेषः । तथा “अग्निम् “अध्वरे यागे “प्रयति प्रकर्षेण गच्छति प्रवृत्ते सति स्तौमि “प्रथमम् इतरदेवेभ्यः । तथा “अग्निम् “अर्वति आगते भ्रातृव्ये स्तौमि यज्ञविघ्नपरिहारार्थम् । तथा “क्षैत्राय क्षेत्राय क्षेत्रसंबन्धिने “साधसे साधनाय क्षेत्रलाभाय स्तौमि । यज्ञान्ते क्षेत्रलाभरूपाय फलाय च स्तौमि । एवमादौ मध्येऽन्ते च सर्वदा स्तौमीत्यर्थः ॥

अ॒ग्निरि॒षां स॒ख्ये द॑दातु न॒ ईशे॒ यो वार्या॑णाम् ।

अ॒ग्निं तो॒के तन॑ये॒ शश्व॑दीमहे॒ वसुं॒ सन्तं॑ तनू॒पाम् ॥१३

अ॒ग्निः । इ॒षाम् । स॒ख्ये । द॒दा॒तु॒ । न॒ः । ईशे॑ । यः । वार्या॑णाम् ।

अ॒ग्निम् । तो॒के । तन॑ये । शश्व॑त् । ई॒म॒हे॒ । वसु॑म् । सन्त॑म् । त॒नू॒ऽपाम् ॥१३

अग्निः । इषाम् । सख्ये । ददातु । नः । ईशे । यः । वार्याणाम् ।

अग्निम् । तोके । तनये । शश्वत् । ईमहे । वसुम् । सन्तम् । तनूऽपाम् ॥१३

“अग्निः देवः “सख्ये समानख्यानाय “नः मह्यम् । सख्युः कर्म सख्यम् । तस्मिन् वा । नोऽस्मभ्यम् “इषाम् इषोऽन्नानि “ददातु । "यः अग्निः “वार्याणां धनानाम् “ईशे ईष्टे स ददात्विति । तमेव “अग्निं "तोके पुत्रार्थं “तनये तत्पुत्रार्थं च “शश्वत् बहु धनमन्नं वा “ईमहे याचामहे । वार्याणामीश इत्युक्तत्वादेवं लभ्यते । कीदृशमग्निम् । “वसुं वासकं “सन्तं सर्वदा वर्तमानं “तनूपाम् अङ्गानां पालयितारम् ॥

अ॒ग्निमी॑ळि॒ष्वाव॑से॒ गाथा॑भिः शी॒रशो॑चिषम् ।

अ॒ग्निं रा॒ये पु॑रुमीळ्ह श्रु॒तं नरो॒ऽग्निं सु॑दी॒तये॑ छ॒र्दिः ॥१४

अ॒ग्निम् । ई॒ळि॒ष्व॒ । अव॑से । गाथा॑भिः । शी॒रऽशो॑चिषम् ।

अ॒ग्निम् । रा॒ये । पु॒रु॒ऽमी॒ळ्ह॒ । श्रु॒तम् । नरः॑ । अ॒ग्निम् । सु॒ऽदी॒तये॑ । छ॒र्दिः ॥१४

अग्निम् । ईळिष्व । अवसे । गाथाभिः । शीरऽशोचिषम् ।

अग्निम् । राये । पुरुऽमीळ्ह । श्रुतम् । नरः । अग्निम् । सुऽदीतये । छर्दिः ॥१४

हे “पुरुमीळ्ह त्वम् “अग्निम् “अवसे आवयो रक्षणाय “ईळिष्व स्तुहि "गाथाभिः । गाथेति वाङ्नाम । मन्त्ररूपाभिर्वाग्भिः । कीदृशम् । “शीरशोचिषं शयनस्वभावरोचिष्कम् । तथा “राये धनाय ईळिष्व । “श्रुतम् एनं “नरः अन्येऽपि यजमानाः स्तुवन्ति स्वार्थम् । तस्मात् “सुदीतये मह्यम् “अग्निं “छर्दिः गृहं याचस्वेत्येवं सुदीतिः पुरुमीळ्हं ब्रूते ।।

अ॒ग्निं द्वेषो॒ योत॒वै नो॑ गृणीमस्य॒ग्निं शं योश्च॒ दात॑वे ।

विश्वा॑सु वि॒क्ष्व॑वि॒तेव॒ हव्यो॒ भुव॒द्वस्तु॑रृषू॒णाम् ॥१५

अ॒ग्निम् । द्वेषः॑ । योत॒वै । न॒ः । गृ॒णी॒म॒सि॒ । अ॒ग्निम् । शम् । योः । च॒ । दात॑वे ।

विश्वा॑सु । वि॒क्षु । अ॒वि॒ताऽइ॑व । हव्यः॑ । भुव॑त् । वस्तुः॑ । ऋ॒षू॒णाम् ॥१५

अग्निम् । द्वेषः । योतवै । नः । गृणीमसि । अग्निम् । शम् । योः । च । दातवे ।

विश्वासु । विक्षु । अविताऽइव । हव्यः । भुवत् । वस्तुः । ऋषूणाम् ॥१५

“अग्निं “नः अस्माकं “द्वेषः द्वेष्टृन् “योतवै पृथक्कर्तुं “गृणीमसि गृणीमः स्तुमः । तथा “अग्निं “शं सुखं "योश्च भयानाममिश्रणं च “दातवे दातुम् । अथवा शं सुखस्य योर्मिश्रणाय च गृणीमसि । अस्मिन् पक्षे द्वेषो योतवा इत्यनेन सह समुच्चयार्थश्चशब्दः । सोऽग्निः “विश्वासु सर्वासु “विक्षु प्रजासु “अवितेव रक्षिता राजेव “ऋषूणाम् ऋषीणामस्माकं “वस्तुः वासको देवः "हव्यो “भुवत् भवतु । अथवा सर्वासु विक्षु यजमानरूपासु प्रजासु मध्य ऋषूणामृषीणां सूक्तद्रष्टृणामस्माकमेव हव्यो भवतु वस्तुः सर्वस्य वासको देवः ॥ ॥ १३ ॥

**मण्डल ८**

# ऋग्वेदः सूक्तं ८.७२

**ऋग्वेदः - मण्डल ८**

← सूक्तं ८.७१ सूक्तं ८.७२ सूक्तं ८.७३ →

हर्यतः प्रागाथः

दे. अग्निः, हवींषि वा। गायत्री।

---

हविष्कृणुध्वमा गमदध्वर्युर्वनते पुनः ।

विद्वाँ अस्य प्रशासनम् ॥१॥

नि तिग्ममभ्यंशुं सीदद्धोता मनावधि ।

जुषाणो अस्य सख्यम् ॥२॥

अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया ।

गृभ्णन्ति जिह्वया ससम् ॥३॥

जाम्यतीतपे धनुर्वयोधा अरुहद्वनम् ।

दृषदं जिह्वयावधीत् ॥४॥

चरन्वत्सो रुशन्निह निदातारं न विन्दते ।

वेति स्तोतव अम्ब्यम् ॥५॥

उतो न्वस्य यन्महदश्वावद्योजनं बृहद् ।

दामा रथस्य ददृशे ॥६॥

दुहन्ति सप्तैकामुप द्वा पञ्च सृजतः ।

तीर्थे सिन्धोरधि स्वरे ॥७॥

आ दशभिर्विवस्वत इन्द्रः कोशमचुच्यवीत् ।

खेदया त्रिवृता दिवः ॥८॥

परि त्रिधातुरध्वरं जूर्णिरेति नवीयसी ।

मध्वा होतारो अञ्जते ॥९॥

सिञ्चन्ति नमसावतमुच्चाचक्रं परिज्मानम् ।

नीचीनबारमक्षितम् ॥१०॥

अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु ।

अवतस्य विसर्जने ॥११॥

गाव उपावतावतं मही यज्ञस्य रप्सुदा ।

उभा कर्णा हिरण्यया ॥१२॥

आ सुते सिञ्चत श्रियं रोदस्योरभिश्रियम् ।

रसा दधीत वृषभम् ॥१३॥

ते जानत स्वमोक्यं सं वत्सासो न मातृभिः ।

मिथो नसन्त जामिभिः ॥१४॥

उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि ।

इन्द्रे अग्ना नमः स्वः ॥१५॥

अधुक्षत्पिप्युषीमिषमूर्जं सप्तपदीमरिः ।

सूर्यस्य सप्त रश्मिभिः ॥१६॥

सोमस्य मित्रावरुणोदिता सूर आ ददे ।

तदातुरस्य भेषजम् ॥१७॥

उतो न्वस्य यत्पदं हर्यतस्य निधान्यम् ।

परि द्यां जिह्वयातनत् ॥१८॥

**सायणभाष्यम्**

‘ हविष्कृणुध्वम् ' इत्यष्टादशर्चं तृतीयं सूक्तम् । अत्रानुक्रमणिका – हविर्द्व्यूना हर्यतः प्रागाथो हविषां स्तुतिर्वा ' इति । प्रगाथपुत्रो हर्यत ऋषिः । परं गायत्रं प्राग्वत्सप्रेः ' इति परिभाषया गायत्री छन्दः । ‘ आग्नेयं तु ' इत्युक्तत्वादग्निर्देवता यद्वा हविषां स्तूयमानत्वात्तद्देवताकं वा । सूक्तविनियोगो लैङ्गिकः ॥

ह॒विष्कृ॑णुध्व॒मा ग॑मदध्व॒र्युर्व॑नते॒ पुन॑ः ।

वि॒द्वाँ अ॑स्य प्र॒शास॑नम् ॥१

ह॒विः । कृ॒णु॒ध्व॒म् । आ । ग॒म॒त् । अ॒ध्व॒र्युः । व॒न॒ते॒ । पुन॒रिति॑ ।

वि॒द्वान् । अ॒स्य॒ । प्र॒ऽशास॑नम् ॥१

हविः । कृणुध्वम् । आ । गमत् । अध्वर्युः । वनते । पुनरिति ।

विद्वान् । अस्य । प्रऽशासनम् ॥१

हे अध्वर्युसंबन्धिनो हविष्कर्तारः यूयं “हविः “कृणुध्वं कुरुध्वं शीघ्रम् । यतः “आ “गमत् आजगामायमग्निः अतः कृणुध्वम् । “अध्वर्युः “पुनः “वनते संभजते । किम् । सामर्थ्यादध्वरमिति गम्यते । कीदृशोऽध्वर्युः । “अस्य हविषः “प्रशासनं प्रदानं “विद्वान् ॥

नि ति॒ग्मम॒भ्यं१॒॑शुं सीद॒द्धोता॑ म॒नावधि॑ ।

जु॒षा॒णो अ॑स्य स॒ख्यम् ॥२

नि । ति॒ग्मम् । अ॒भि । अं॒शुम् । सीद॑त् । होता॑ । म॒नौ । अधि॑ ।

जु॒षा॒णः । अ॒स्य॒ । स॒ख्यम् ॥२

नि । तिग्मम् । अभि । अंशुम् । सीदत् । होता । मनौ । अधि ।

जुषाणः । अस्य । सख्यम् ॥२

“होता ऋत्विक् “तिग्मं तीक्ष्णम् “अंशुं तमग्निं “नि “षीदत् निषीदति । कीदृशो होता । “अस्य अग्नेः “सख्यं “मनावधि यजमाने "जुषाणः । अधीति सप्तम्यर्थानुवादी ॥

अ॒न्तरि॑च्छन्ति॒ तं जने॑ रु॒द्रं प॒रो म॑नी॒षया॑ ।

गृ॒भ्णन्ति॑ जि॒ह्वया॑ स॒सम् ॥३

अ॒न्तः । इ॒च्छ॒न्ति॒ । तम् । जने॑ । रु॒द्रम् । प॒रः । म॒नी॒षया॑ ।

गृ॒भ्णन्ति॑ । जि॒ह्वया॑ । स॒सम् ॥३

अन्तः । इच्छन्ति । तम् । जने । रुद्रम् । परः । मनीषया ।

गृभ्णन्ति । जिह्वया । ससम् ॥३

“तं "रुद्रम् । रुत् दुःखम् । तस्य द्रावयितारम् । अथवा रुत् स्तुतिः । तया गन्तव्यम् । स्तुत्यमित्यर्थः । तादृशमग्निं “जने यजमानार्थं “मनीषया स्वप्रज्ञानेन “परः परस्तात् पुरोदेशे “इच्छन्ति स्थापयितुम् । त एव पश्चात् “ससं स्वपन्तमग्निं "जिह्वया । जन्ये जनकशब्दः । जिह्वाप्रभवया स्तुत्या “गृभ्णन्ति गृह्णन्त्यङ्गुलिभिः । अत्र यास्कः - स्वप्नमेतन्मध्यमं ज्योतिरनित्यदर्शनम्।....द्वैधं सत्ता मध्यमे च स्थाने उत्तमे च । ' ( निरु. ५. ३ (https://sa.wikisource.org/s/6zk) ) इति ॥

जा॒म्य॑तीतपे॒ धनु॑र्वयो॒धा अ॑रुह॒द्वन॑म् ।

दृ॒षदं॑ जि॒ह्वयाव॑धीत् ॥४

जा॒मि । अ॒ती॒त॒पे॒ । धनुः॑ । व॒यः॒ऽधाः । अ॒रु॒ह॒त् । वन॑म् ।

दृ॒षद॑म् । जि॒ह्वया॑ । आ । अ॒व॒धी॒त् ॥४

जामि । अतीतपे । धनुः । वयःऽधाः । अरुहत् । वनम् ।

दृषदम् । जिह्वया । आ । अवधीत् ॥४

“वयोधाः अन्नस्य दाताग्निर्मध्यमस्थानः "जामि प्रवृद्धं सर्वमतिरिच्य वर्तमानम् । ‘ जाम्यतिरेकनाम ' (निरु. ४. २०) इति यास्कः । “धनुः धन्वान्तरिक्षम् “अतीतपे अतितपति । अथवाग्नेर्जामि गमनशीलं धनुरतितपते स्वविरोधिनम् । स च वयोधा अन्नस्य दाताग्निः “वनम् उदकम् “अरुहत् आरोहति विमोकाय । तदर्थं “जिह्वया ज्वालया “दृषदं मेघम् “अवधीत् हन्ति । दावाग्निपक्षे वनं तरुसमूहं हन्ति । जिह्वया दृषदं कठिनमपि पाषाणं भिनत्तीति ॥

चर॑न्व॒त्सो रुश॑न्नि॒ह नि॑दा॒तार॒ं न वि॑न्दते ।

वेति॒ स्तोत॑व अ॒म्ब्य॑म् ॥५

चर॑न् । व॒त्सः । रुश॑न् । इ॒ह । नि॒ऽदा॒तार॑म् । न । वि॒न्द॒ते॒ ।

वेति॑ । स्तोत॑वे । अ॒म्ब्य॑म् ॥५

चरन् । वत्सः । रुशन् । इह । निऽदातारम् । न । विन्दते ।

वेति । स्तोतवे । अम्ब्यम् ॥५

“वत्सः । वत्सवच्चापलेन धावनाद्वत्स इत्युपचर्यते । अथवा वत्स इव संचरन् । इवशब्दो लुप्यते । “रुशन श्वेतो भवन् “इह अस्मिँल्लोके “निदातारं निरोधकं “न “विन्दते न लभते । किंतु “स्तोतवे स्तोतुम् “अम्ब्यं स्तोतारं स्वयं “वेति कामयते । अथवात्र वैद्युतोऽग्निरुच्यते । वैद्युतोऽयं रुशंश्वरंश्चेहान्तरिक्षे वत्सः सर्वदा वसन् वत्सस्थानीयो वा सन्निदातारं निरोधकं न विन्दते । किंतु स्तोतुमम्ब्यं माध्यमिकां वाचं वेति ॥ ॥ १४ ॥

उ॒तो न्व॑स्य॒ यन्म॒हदश्वा॑व॒द्योज॑नं बृ॒हद् ।

दा॒मा रथ॑स्य॒ दद॑ृशे ॥६

उ॒तो इति॑ । नु । अ॒स्य॒ । यत् । म॒हत् । अश्व॑ऽवत् । योज॑नम् । बृ॒हत् ।

दा॒मा । रथ॑स्य । दद॑ृशे ॥६

उतो इति । नु । अस्य । यत् । महत् । अश्वऽवत् । योजनम् । बृहत् ।

दामा । रथस्य । ददृशे ॥६

“उतो अपि च "नु क्षिप्रमद्य “अस्य आदित्यस्य “यन्महत् माहात्म्ययुक्तम् “अश्वावत् संवृद्धाश्ववत् “बृहत् महत् स्थूलं “योजनं दृश्यते । तदेवाह। “रथस्य “दामा ददृशे दृश्यते। अन्तरिक्षे रथेऽश्वान्नियोजयतीत्यर्थः। तदा दुहन्तीत्युत्तरत्र संबन्धः ॥

"अभिष्टवे घर्मदाहे ‘ दुहन्ति सप्त ' इत्येषा । सूत्रितं च -- दुहन्ति सप्तैकां समिद्धो अग्निरश्विना' (आश्व. श्रौ. ४. ७) इति । ग्रावस्तोत्रेऽप्येषा । सूत्रितं च - ‘ दुहन्ति सप्तैकामधुक्षत्पिप्युषीमिषम् ' (आश्व. श्रौ. ५. १२) इति ॥

दु॒हन्ति॑ स॒प्तैका॒मुप॒ द्वा पञ्च॑ सृजतः ।

ती॒र्थे सिन्धो॒रधि॑ स्व॒रे ॥७

दु॒हन्ति॑ । स॒प्त । एका॑म् । उप॑ । द्वा । पञ्च॑ । सृ॒ज॒तः॒ ।

ती॒र्थे । सिन्धोः॑ । अधि॑ । स्व॒रे ॥७

दुहन्ति । सप्त । एकाम् । उप । द्वा । पञ्च । सृजतः ।

तीर्थे । सिन्धोः । अधि । स्वरे ॥७

“सप्त ऋत्विजः “एकां घर्मं “दुहन्ति । तेषां मध्ये "द्वा द्वौ प्रतिप्रस्थातारावध्वर्यू “पञ्च अन्यान् “उप "सृजतः प्रयोजयतः । के ते पञ्च त उच्यन्ते । यजमानं ब्रह्माणं होतारमाग्नीध्रं प्रस्तोतारमिति । कुत्रेति उच्यते। “सिन्धोः कस्याश्चित् सरस्वत्यादिप्रख्याताया नद्याः “तीर्थे । यत्रायमृषिर्यजति तत्र । “स्वरे “अधि। स्वरतिः शब्दकर्मा । अधीति सप्तम्यर्थानुवादी । स्वरोपेते शब्दवति । यत्तीर्थमृत्विजाम् ओ श्रावय इत्यादिशब्दैः शब्दवद्भवति तस्मिन्नित्यर्थः ॥

प्रवर्ग्येऽभिष्टवे ग्राव्णोऽभिष्टवे च “ आ दशभिः' इत्येषा । सूत्रितं च - ‘ आ दशभिर्विवस्वतो दुहन्ति सप्तैकाम्' (आश्व. श्रौ. ४. ७ (https://sa.wikisource.org/s/1auy) ; ५. १२) इति ॥

आ द॒शभि॑र्वि॒वस्व॑त॒ इन्द्र॒ः कोश॑मचुच्यवीत् ।

खेद॑या त्रि॒वृता॑ दि॒वः ॥८

आ । द॒शऽभि॑ः । वि॒वस्व॑तः । इन्द्र॑ः । कोश॑म् । अ॒चु॒च्य॒वी॒त् ।

खेद॑या । त्रि॒ऽवृता॑ । दि॒वः ॥८

आ । दशऽभिः । विवस्वतः । इन्द्रः । कोशम् । अचुच्यवीत् ।

खेदया । त्रिऽवृता । दिवः ॥८

“विवस्वतः परिचरतो यजमानस्य “दशभिः अङ्गुलीभिर्याचितः सन् “इन्द्रः “कोशम् । मेघनामैतत् । उदकसेचकं मेघं “दिवः अन्तरिक्षसंबन्धिनं तत्सकाशाद्वा “आ “अचुच्यवीत् । व्यदारयदित्यर्थः। केन साधनेनेति तदुच्यते । “त्रिवृता त्रिप्रकारवर्तनवता “खेदया रश्मिना । यद्वा । अत्रेन्द्रशब्देनाग्निरादित्यो वा गृह्यते । खेदया त्रिवृतेति लिङ्गात् ।।

परि॑ त्रि॒धातु॑रध्व॒रं जू॒र्णिरे॑ति॒ नवी॑यसी ।

मध्वा॒ होता॑रो अञ्जते ॥९

परि॑ । त्रि॒ऽधातु॑ः । अ॒ध्व॒रम् । जू॒र्णिः । ए॒ति॒ । नवी॑यसी ।

मध्वा॑ । होता॑रः । अ॒ञ्ज॒ते॒ ॥९

परि । त्रिऽधातुः । अध्वरम् । जूर्णिः । एति । नवीयसी ।

मध्वा । होतारः । अञ्जते ॥९

अयमग्निः “त्रिधातुः लोहितशुक्लकृष्णभेदेन त्रिवर्णः "जूर्णिः जवो वेगवान् "नवीयसी नवीयस्या ज्वालया “अध्वरं प्रवर्ग्यम् “एति गच्छति । “होतारः होमनिष्पादका अध्वर्य्वादयः “मध्वा आज्यादिना “परि “अञ्जते । अथवाग्नेस्त्रिस्त्रिप्रकारा क्षिप्रा जवतरा ज्वाला पर्येति महावीरम् । तं मध्वाञ्जत इति ॥

सि॒ञ्चन्ति॒ नम॑साव॒तमु॒च्चाच॑क्रं॒ परि॑ज्मानम् ।

नी॒चीन॑बार॒मक्षि॑तम् ॥१०

सि॒ञ्चन्ति॑ । नम॑सा । अ॒व॒तम् । उ॒च्चाऽच॑क्रम् । परि॑ऽज्मानम् ।

नी॒चीन॑ऽबारम् । अक्षि॑तम् ॥१०

सिञ्चन्ति । नमसा । अवतम् । उच्चाऽचक्रम् । परिऽज्मानम् ।

नीचीनऽबारम् । अक्षितम् ॥१०

"नमसा नमनेन "अवतं महावीरम् "उच्चाचक्रम् उपरिस्थितचक्रं "परिज्मानं परितो व्याप्तं "नीचीनबारं नीचीनद्वारम् "अक्षितम् अक्षीणमीदृशं क्षीराद्यवशेषयुक्तमाहवनीयस्योपरि नमनेन "सिञ्चन्ति जुह्वति । महावीरेण ह्याहवनीये हूयते ॥ ॥ १५ ॥

अ॒भ्यार॒मिदद्र॑यो॒ निषि॑क्तं॒ पुष्क॑रे॒ मधु॑ ।

अ॒व॒तस्य॑ वि॒सर्ज॑ने ॥११

अ॒भि॒ऽआर॑म् । इत् । अद्र॑यः । निऽसि॑क्तम् । पुष्क॑रे । मधु॑ ।

अ॒व॒तस्य॑ । वि॒ऽसर्ज॑ने ॥११

अभिऽआरम् । इत् । अद्रयः । निऽसिक्तम् । पुष्करे । मधु ।

अवतस्य । विऽसर्जने ॥११

"अद्रयः आद्रियमाणा अध्वर्व्यादयः "अभ्यारमित् अभिगम्यैव "निषिक्तम् अतिरिक्तं "मधु "पुष्करे वपुष्करे प्रवृद्ध उपयमनीपात्रे सिञ्चन्ति अग्निहोत्रार्थम् "अवतस्य महावीरस्य "विसर्जने विसर्जनसमये । होमानन्तरं खलु महावीरमासन्द्यामासादयन्ति ।।

गाव॒ उपा॑वताव॒तं म॒ही य॒ज्ञस्य॑ र॒प्सुदा॑ ।

उ॒भा कर्णा॑ हिर॒ण्यया॑ ॥१२

गावः॑ । उप॑ । अ॒व॒त॒ । अ॒व॒तम् । म॒ही इति॑ । य॒ज्ञस्य॑ । र॒प्सुदा॑ ।

उ॒भा । कर्णा॑ । हि॒र॒ण्यया॑ ॥१२

गावः । उप । अवत । अवतम् । मही इति । यज्ञस्य । रप्सुदा ।

उभा । कर्णा । हिरण्यया ॥१२

हे “गावः घर्मदुघा यूयम् “अवतं महावीरं प्रति “उपावत उपागच्छत । यस्मात् "यज्ञस्य घर्मयागस्य साधनभूते “रप्सुदा। रप्सुदारप्सुदे आरिप्सोः फलप्रदे । लिप्स्वोरश्विनोर्दातव्ये वा। यद्वा रपणं शब्दनम् । रप् मन्त्रः । तेन सुष्ठु दातव्ये । अथवा ‘ षूद क्षरणे '। रपा मन्त्रेण क्षारणीये दोहनीये। ईदृशे गवाजयोः पयसी “मही महती बहुले अपेक्षिते अत उपावतम् । गौरजाया अप्युपलक्षकः अजापयसोऽपि महावीरे सेचनीयत्वात्। अपि चास्य महावीरस्य “उभा उभौ "कर्णा कर्णस्थानीयौ द्वौ रुक्मौ “हिरण्यया हिरण्मयौ सुवर्णरजतमयावित्यर्थः ।।

प्रवर्ग्येऽजापयसि महावीर आनीयमाने ‘ आ सुते ' इत्येषा । सूत्रितं च - ‘ आ सुते सिञ्चत श्रियमित्याज आसिक्तयोः ' (आश्व. श्रौ. ४. ७ (https://sa.wikisource.org/s/1auy) ) इति ॥

आ सु॒ते सिं॑ञ्चत॒ श्रियं॒ रोद॑स्योरभि॒श्रिय॑म् ।

र॒सा द॑धीत वृष॒भम् ॥१३

आ । सु॒ते । सि॒ञ्च॒त॒ । श्रिय॑म् । रोद॑स्योः । अ॒भि॒ऽश्रिय॑म् ।

र॒सा । द॒धी॒त॒ । वृ॒ष॒भम् ॥१३

आ । सुते । सिञ्चत । श्रियम् । रोदस्योः । अभिऽश्रियम् ।

रसा । दधीत । वृषभम् ॥१३

“सुते दुग्धे गोपयसि “श्रियं श्रयणमाजं पयः “आ “सिञ्चत । सिञ्चत हे अध्वर्यवः । कीदृशमाजम् । “रोदस्योः । कर्मणि षष्ठ्येषा । द्यावापृथिव्यौ "अभिश्रियम् अभिश्रयन्तम् । अग्निसंयोगात्तावत्पर्यन्तं प्रवृद्धमित्यर्थः । अथवा ‘ तत्कावश्विनौ द्यावापृथिव्यावित्येके' (निरु. १२. १) इति निरुक्तत्वादश्विनोरभिश्रियमित्यर्थः । सेचनानन्तरं “रसा रस आजे पयसि “वृषभं वर्षकमग्निं “दधीत स्थापयत । अजाया आग्नेयीत्वात् क्षीरस्याप्यग्निसंयोजनमुचितम् । ‘ आग्नेयी वा एषा यदजा ' (तै. ब्रा. ३. ७. ३. १) इति ब्राह्मणम् ॥

ते जा॑नत॒ स्वमो॒क्यं१॒॑ सं व॒त्सासो॒ न मा॒तृभिः॑ ।

मि॒थो न॑सन्त जा॒मिभिः॑ ॥१४

ते । जा॒न॒त॒ । स्वम् । ओ॒क्य॑म् । सम् । व॒त्सासः॑ । न । मा॒तृऽभिः॑ ।

मि॒थः । न॒स॒न्त॒ । जा॒मिऽभिः॑ ॥१४

ते । जानत । स्वम् । ओक्यम् । सम् । वत्सासः । न । मातृऽभिः ।

मिथः । नसन्त । जामिऽभिः ॥१४

“ते ता गावः “जानत ज्ञातवत्यः । अथवा सामान्याकारेण त इति पुंनिर्देशः । किम् । “स्वं स्वकीयम् “ओक्यं निवासं महावीरम् । तत्र दोग्धुमगमन्नित्यर्थः । तदेवाह । “वत्सासः वत्साः "मातृभिः “न जननीभिः सह यथा संगच्छन्ति तद्वत् “जामिभिः बन्धुभिः सहिता गावः “मिथः प्रत्येकं “सं “नसन्त संगच्छन्ते महावीरम् ॥

उप॒ स्रक्वे॑षु बप्स॑तः कृण्व॒ते ध॒रुणं॑ दि॒वि ।

इन्द्रे॑ अ॒ग्ना नम॒ः स्व॑ः ॥१५

उप॑ । स्रक्वे॑षु । बप्स॑तः । कृ॒ण्व॒ते । ध॒रुण॑म् । दि॒वि ।

इन्द्रे॑ । अ॒ग्ना । नम॑ः । स्व॑ः ॥१५

उप । स्रक्वेषु । बप्सतः । कृण्वते । धरुणम् । दिवि ।

इन्द्रे । अग्ना । नमः । स्वः ॥१५

महावीरस्य “स्रक्केषु “बप्सतः ज्वालया भक्षयतोऽग्नेरन्नं “धरुणम् इन्द्रे अग्ना इति वक्ष्यमाणत्वादिन्द्राग्न्योर्धारकं “दिवि अन्तरिक्षे “उप “कृण्वते उपकुर्वते । यदाग्निर्महावीरं दहति तदा तस्योपर्युभयविधं क्षीरमासेचयन्तीत्यर्थः । एवं महावीर आसिच्य “इन्द्रे “अग्ना अग्नौ च “स्वः सर्वं गव्यमाजं च “नमः अन्नम् । अथवा स्वरन्तरिक्षे । योजयन्तीति शेषः ॥ ॥ १६ ॥

प्रवर्ग्ये घर्मदुहि दुग्धायाम् अधुक्षत् ' इत्येषा। सूत्रितं च – दुग्धायामधुक्षत्पिप्युषीम् ' (आश्व. श्रौ. ४. ७ (https://sa.wikisource.org/s/1auy) ) इति आह्रियमाण । ग्रावस्तोत्रेऽप्येषा ‘ अधुक्षत्पिप्युषीमिषमा कलशेषु धावति ' (आश्व. श्रौ. ५. १२ (https://sa.wikisource.org/s/1av9) ) इति सूत्रितत्वात् ।।

अधु॑क्षत्पि॒प्युषी॒मिष॒मूर्जं॑ स॒प्तप॑दीम॒रिः ।

सूर्य॑स्य स॒प्त र॒श्मिभि॑ः ॥१६

अधु॑क्षत् । पि॒प्युषी॑म् । इष॑म् । ऊर्ज॑म् । स॒प्तऽप॑दीम् । अ॒रिः ।

सूर्य॑स्य । स॒प्त । र॒श्मिऽभि॑ः ॥१६

अधुक्षत् । पिप्युषीम् । इषम् । ऊर्जम् । सप्तऽपदीम् । अरिः ।

सूर्यस्य । सप्त । रश्मिऽभिः ॥१६

“अरिः अरणशीलो वायुः “सूर्यस्य “सप्त “रश्मिभिः साधनैः “पिप्युषीम् आप्याययत् “इषम् अन्नम् “ऊर्जं रसं च “सप्तपदीं सर्पणस्वभावपादां माध्यमिकां वाचं घर्मधुग्रूपेणावस्थिताम् “अधुक्षत् दुग्धवान् । यद्यप्यध्वर्युः पात्रेण गां दुग्धे तथाप्येवंभावनया साङ्गं भवति । माध्यमिकाया वाचो मधुधुक्त्वं ' हिङ्कृण्वती, गौरमीमेत्' (ऋ. सं. १. १६४. २७, २८) इत्यादिषु प्रसिद्धम् ।।

सोम॑स्य मि॒त्राव॒रु॒णोदि॑ता॒ सूर॒ आ द॑दे ।

तदातु॑रस्य भे॒ष॒जम् ॥१७

सोम॑स्य । मि॒त्रा॒व॒रु॒णा॒ । उत्ऽइ॑ता । सूरे॑ । आ । द॒दे॒ ।

तत् । आतु॑रस्य । भे॒ष॒जम् ॥१७

सोमस्य । मित्रावरुणा । उत्ऽइता । सूरे । आ । ददे ।

तत् । आतुरस्य । भेषजम् ॥१७

हे मित्रावरुणौ "सूरे सूर्ये "उदिता उदिते “सोमस्य सोमम् “आ “ददे स्वीकरोति । तत्र हेतुमाह। “तत् स्वीकाररूपं कर्म “आतुरस्य अस्मदादेः “भेषजम् औषधम् । हितकरमित्यर्थः ॥

उ॒तो न्व॑स्य॒ यत्प॒दं ह॑र्य॒तस्य॑ निधा॒न्य॑म् ।

परि॒ द्यां जि॒ह्वया॑तनत् ॥१८

उ॒तो इति॑ । नु । अ॒स्य॒ । यत् । प॒दम् । ह॒र्य॒तस्य॑ । नि॒ऽधा॒न्य॑म् ।

परि॑ । द्याम् । जि॒ह्वया॑ । अ॒त॒न॒त् ॥१८

उतो इति । नु । अस्य । यत् । पदम् । हर्यतस्य । निऽधान्यम् ।

परि । द्याम् । जिह्वया । अतनत् ॥१८

पवमाने सोमे “उतो अपि च “अस्य सोमदातुः "हर्यतस्य प्रदानं कामयमानस्य मम “यत्पदं “निधान्यं हविषां निधानार्हमुत्तरवेदिलक्षणं तत्र स्थित्वाग्निः “द्यां “परि परितः “जिह्वया ज्वालया “अतनत् व्याप्नोत् ॥ ॥ १७ ॥

---

**टिप्पणी**

८.७२.४ दृ॒षदं॑ जि॒ह्वयाव॑धीत्

दर्शपूर्णमासयागे दृषद-उपल मिथुनं हनुस्थानीयः भवति, जिह्वा शम्यास्थानीया। शम्यायाः मिथुनं कृष्णाजिनेनसह भवति। हठयोगे, यदा जिह्वा स्वमूलबन्धनतः मुक्ता भूत्वा कपालकुहरे प्रविष्टुं समर्था भवति, तदा दिव्यरसानां

आस्वादयितुं समर्था भवति (खेचरीमुद्रा (https://hi.wikipedia.org/wiki/%E0%A4%96%E0%A5%87%E0%A4%9A%E0%A4%B0%E0%A5%80) ) ( खेचरीमुद्रा (https://en.wikipedia.org/wiki/Khecar%C4%AB_mudr%C4%81) )

दृषदोपरि टिप्पणी (http://puranastudy.freevar.com/pur_index14/drishat.htm)

जिह्वा उपरि टिप्पणी (https://vedastudy.wixsite.com/puranastudy/%E0%A4%9C-%E0%A4%B9-%E0%A4%B5-jihvaa)

# ऋग्वेदः सूक्तं ८.७३

ऋग्वेदः - मण्डल ८
← सूक्तं ८.७२ सूक्तं ८.७३ सूक्तं ८.७४ →
गोपवन आत्रेयः सप्तवध्रिर्वा।

दे. अश्विनौ। गायत्री।

---

उदीराथामृतायते युञ्जाथामश्विना रथम् ।

अन्ति षद्भूतु वामवः ॥१॥

निमिषश्चिज्जवीयसा रथेना यातमश्विना ।

अन्ति षद्भूतु वामवः ॥२॥

उप स्तृणीतमत्रये हिमेन घर्ममश्विना ।

अन्ति षद्भूतु वामवः ॥३॥

कुह स्थः कुह जग्मथुः कुह श्येनेव पेतथुः ।

अन्ति षद्भूतु वामवः ॥४॥

यदद्य कर्हि कर्हि चिच्छुश्रूयातमिमं हवम् ।

अन्ति षद्भूतु वामवः ॥५॥

अश्विना यामहूतमा नेदिष्ठं याम्याप्यम् ।

अन्ति षद्भूतु वामवः ॥६॥

अवन्तमत्रये गृहं कृणुतं युवमश्विना ।

अन्ति षद्भूतु वामवः ॥७॥

वरेथे अग्निमातपो वदते वल्ग्वत्रये ।

अन्ति षद्भूतु वामवः ॥८॥

प्र सप्तवध्रिराशसा धारामग्नेरशायत ।

अन्ति षद्भूतु वामवः ॥९॥

इहा गतं वृषण्वसू शृणुतं म इमं हवम् ।

अन्ति षद्भूतु वामवः ॥१०॥

किमिदं वां पुराणवज्जरतोरिव शस्यते ।

अन्ति षद्भूतु वामवः ॥११॥

समानं वां सजात्यं समानो बन्धुरश्विना ।

अन्ति षद्भूतु वामवः ॥१२॥

यो वां रजांस्यश्विना रथो वियाति रोदसी ।

अन्ति षद्भूतु वामवः ॥१३॥

आ नो गव्येभिरश्व्यैः सहस्रैरुप गच्छतम् ।

अन्ति षद्भूतु वामवः ॥१४॥

मा नो गव्येभिरश्व्यैः सहस्रेभिरति ख्यतम् ।

अन्ति षद्भूतु वामवः ॥१५॥

अरुणप्सुरुषा अभूदकर्ज्योतिरृतावरी ।

अन्ति षद्भूतु वामवः ॥१६॥

अश्विना सु विचाकशद्वृक्षं परशुमाँ इव ।

अन्ति षद्भूतु वामवः ॥१७॥

पुरं न धृष्णवा रुज कृष्णया बाधितो विशा ।

अन्ति षद्भूतु वामवः ॥१८॥

**सायणभाष्यम्**

‘उदीराथाम्' इत्यष्टादशर्चं चतुर्थं सूक्तमात्रेयस्य गोपवनस्य सप्तवध्रेर्वार्षं गायत्रमाश्विनम्। तथा चानुक्रमणिका – उदीराथां गोपवन आत्रेयः सप्तवध्रिर्वाश्विनम्' इति । प्रातरनुवाक आश्विने क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् ।

उदीं॑राथामृताय॒ते यु॒ंजाथा॑मश्विना॒ रथं॑ ।

अंति॒ षद्भूं॑तु वा॒मवः॑ ॥१

उत् । ई॒रा॒था॒म् । ऋ॒त॒ऽय॒ते । यु॒ञ्जाथा॑म् । अ॒श्वि॒ना॒ । रथ॑म् ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥१

उत् । ईराथाम् । ऋतऽयते । युञ्जाथाम् । अश्विना । रथम् ।

अन्ति । सत् । भूतु । वाम् । अवः ॥१

हे “अश्विना अश्विनौ “ऋतायते यज्ञमिच्छते मह्यं मदर्थम् “उदीराथाम् उद्गच्छतम् । तदर्थं हवमाह्वानं यज्ञं ता प्राप्तुं “युञ्जाथां योजयतमश्वैः “रथम् । “वां युवयोः “अवः रक्षणम् "अन्ति अस्मदन्तिके "सत् वर्तमानं “भूतु भवतु ॥

नि॒मिषं॑श्चि॒ज्जवी॑यसा रथे॒ना या॑तमश्विना ।

अंति॒ षद्भूं॑तु वा॒मवः॑ ॥२

नि॒ऽमिषः॑ । चि॒त् । जवी॑यसा । रथे॑न । आ । या॒त॒म् । अ॒श्वि॒ना॒ ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥२

निऽमिषः । चित् । जवीयसा । रथेन । आ । यातम् । अश्विना ।

अन्ति । सत् । भूतु । वाम् । अवः ॥२

“निमिषश्चित् निमेषादपि “जवीयसा अतिशयवेगेन “रथेन “आ “यातम् आगच्छतमस्मद्यज्ञं हे “अश्विना । शिष्टमुक्तम् ॥

उपं॑ स्तृणीत॒मत्र॑ये हि॒मेनं॑ घ॒र्मम॑श्विना ।

अंति षद्भूतु वामवः ॥३

उप । स्तृणीतम् । अत्रये । हिमेन । घर्मम् । अश्विना ।

अन्ति । सत् । भूतु । वाम् । अवः ॥३

उप । स्तृणीतम् । अत्रये । हिमेन । घर्मम् । अश्विना ।

अन्ति । सत् । भूतु । वाम् । अवः ॥३

"अत्रये महर्षयेऽसुरैरग्नौ प्रक्षिप्ताय तस्य हितार्थं "घर्मम् अग्निदाहकं "हिमेन उदकेन "उप "स्तृणीतम् उपस्तीर्णवन्तौ । 'हिमेनाग्निं घ्रंसमवारयेथाम्' (ऋ. सं. १. ११६. ८) इति निगमः ॥

कुह स्थः कुह जग्मथुः कुह श्येनेव पेतथुः ।

अंति षद्भूतु वामवः ॥४

कुह । स्थः । कुह । जग्मथुः । कुह । श्येनाऽइंव । पेतथुः ।

अन्ति । सत् । भूतु । वाम् । अवः ॥४

कुह । स्थः । कुह । जग्मथुः । कुह । श्येनाऽइव । पेतथुः ।

अन्ति । सत् । भूतु । वाम् । अवः ॥४

हे अश्विनौ युवां "कुह क्व "स्थः भवथः । इदानीं "कुह क्व कुत्र "जग्मथुः गच्छथः स्वेच्छया । "कुह क्व वा "श्येनेव श्येनाविव शीघ्रपतनौ सन्तौ "पेतथुः पतथः । एवमचिन्त्यस्वभावौ कृपया संनिहितौ भवतमिति शेषः । तादृशयोः "अवः अन्तिके भवतु ॥

यदद्य कर्हि कर्हि चिच्छुश्रूयातमिमं हवं ।

अंति षद्भूतु वामवः ॥५

यत् । अद्य । कर्हि । कर्हि । चित् । शुश्रुयातम् । इमम् । हवम् ।

अन्ति । सत् । भूतु । वाम् । अवः ॥५

यत् । अद्य । कर्हि । कर्हि । चित् । शुश्रुयातम् । इमम् । हवम् ।

अन्ति । सत् । भूतु । वाम् । अवः ॥५

"यत् यस्मान्न निर्धार्यतेऽतः “अद्य अस्मिन् काले “कर्हिँ कस्मिन्नपि देशे “कर्हि कस्मिन्नपि काले "इमं हवम् अस्मदीयमाह्वानं "शुश्रूयातं शृणुयातम् ॥ ॥ १८ ॥

अ॒श्विना॑ याम॒हूत॑मा॒ नेदि॑ष्ठं या॒म्याप्यँ॑ ।

अंति॒ षद्भूं॑तु वा॒मवः॑ ॥६

अ॒श्विना॑ । या॒म॒ऽहूत॑मा । नेदि॑ष्ठम् । या॒मि॒ । आप्य॑म् ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥६

अश्विना । यामऽहूतमा । नेदिष्ठम् । यामि । आप्यम् ।

अन्ति । सत् । भूतु । वाम् । अवः ॥६

“यामहूतमा अतिशयेन काले ह्वातव्यौ “अश्विना अश्विनौ "यामि । “नेदिष्ठम् अन्तिकतमम् “आप्यं बान्धवं च यामि तयोः ॥

अवँ॑त॒मत्र॑ये गृ॒हं कृ॑णु॒तं यु॒वम॑श्विना ।

अंति॒ षद्भूं॑तु वा॒मवः॑ ॥७

अव॑न्तम् । अत्र॑ये । गृ॒हम् । कृ॒णु॒तम् । यु॒वम् । अ॒श्वि॒ना॒ ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥७

अवन्तम् । अत्रये । गृहम् । कृणुतम् । युवम् । अश्विना ।

अन्ति । सत् । भूतु । वाम् । अवः ॥७

हे “अश्विना “युवं युवाम् “अत्रये अग्न्यागारे दह्यमानाय “अवन्तं रक्षन्तं “गृहं “कृणुतं कृतवन्तौ । तादृशयोः “वामवः भवतु । अवन्तमिति व्यत्ययेन पुँल्लिङ्गता ॥

वरें॑थे अ॒ग्निमा॒तपो॒ वद॑ते व॒ल्ग्वत्र॑ये ।

अंति॒ षद्भूं॑तु वा॒मवः॑ ॥८

वरें॑थे॒ इति॑ । अ॒ग्निम् । आ॒ऽतपः॑ । वद॑ते । व॒ल्गु । अत्र॑ये ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥८

वरेथे इति । अग्निम् । आऽतपः । वदते । वल्गु । अत्रये ।

अन्ति । सत् । भूतु । वाम् । अवः ॥८

हे अश्विनौ “वल्गु मनोहरं “वदते स्तुवते “अत्रये "आतपः आतपादौष्ण्यात् "अग्निं “वरेथे आवारयतम् ॥

प्र स॒प्तव॑ध्रिरा॒शसा॒ धारा॑म॒ग्नेर॑शायत ।

अंति॒ षद्भू॑तु वा॒मवः॑ ॥९

प्र । स॒प्तऽव॑ध्रिः । आ॒ऽशसा॑ । धारा॑म् । अ॒ग्नेः । अ॒शा॒य॒त॒ ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥९

प्र । सप्तऽवध्रिः । आऽशसा । धाराम् । अग्नेः । अशायत ।

अन्ति । सत् । भूतु । वाम् । अवः ॥९

“सप्तवध्रिः महर्षिर्हे अश्विनौ युवयोः “आशसा आशंसनेन स्तुत्या मञ्जूषाया निर्गत्य “अग्नेः “धारां तस्यां मञ्जूषायां “प्र “अशायत आशाययत् । स्वनिरोधिकां तां दग्धवानित्यर्थः । सप्तवध्रेः पेटिकान्तःप्रवेशोऽश्विनोरनुग्रहान्निर्गमश्च ‘वि जिहीष्व वनस्पते' (ऋ. सं. ५. ७८.५) इत्यत्र स्पष्टमुक्तम् ॥

इ॒हा ग॑तं वृषण्वसू शृणु॒तं म॑ इ॒मं हव॑ं ।

अंति॒ षद्भू॑तु वा॒मवः॑ ॥१०

इ॒ह । आ । ग॒त॒म् । वृ॒ष॒ण्व॒सू॒ इति॑ वृषण्ऽवसू । शृ॒णु॒तम् । मे॒ । इ॒मम् । हव॑म् ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥१०

इह । आ । गतम् । वृषण्वसू इति वृषण्ऽवसू । शृणुतम् । मे । इमम् । हवम् ।

अन्ति । सत् । भूतु । वाम् । अवः ॥१०

हे "वृषण्वसू वर्षणधनावश्विनौ "इह अस्मिन् यज्ञे "आ “गतम् आगच्छतम् । तदर्थं "मे मम इमं हवं “शृणुतम् ॥ ॥ १९ ॥

कि॒मि॒दं वां॑ पुरा॒णव॑ज्जर॑तोरिव शस्यते ।

अंति॒ षद्भू॑तु वा॒मवः॑ ॥११

कि॒म् । इ॒दम् । वा॒म् । पु॒रा॒ण॒ऽवत् । जर॑तोःऽइव । श॒स्य॒ते॒ ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अव॑ः ॥११

किम् । इदम् । वाम् । पुराणऽवत् । जरतोःऽइव । शस्यते ।

अन्ति । सत् । भूतु । वाम् । अवः ॥११

हे अश्विनौ “वां युवयोरर्थमागमनाय “पुराणवत् पुराणयोरतिवृद्धयोरिव । तदेवाह । "जरतोरिव “शस्यते । पुनःपुनरागच्छतमिति शस्यते । “किमिदम् । यथा लोके वृद्धो जीर्णो बहुवारमाहूतोऽपि नागच्छति तद्वद्युवामपीत्यर्थः । एवमनागमाद्ब्रवीति ॥

स॒मा॒नं वां॑ सजा॒त्यं॑ समा॒नो बंधु॑रश्विना ।

अंति॒ षद्भूं॑तु वा॒मवः॑ ॥१२

स॒मा॒नम् । वा॒म् । स॒ऽजा॒त्य॑म् । स॒मा॒नः । बन्धुः॑ । अ॒श्वि॒ना॒ ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अव॑ः ॥१२

समानम् । वाम् । सऽजात्यम् । समानः । बन्धुः । अश्विना ।

अन्ति । सत् । भूतु । वाम् । अवः ॥१२

हे “अश्विना अश्विनौ “वां युवयोः परस्परं “सजात्यं समानजातित्वं “समानम् एकमेव । उभयोरप्यश्व1रूपायाः सूर्यपत्न्या उत्पत्तेः सजात्यम् । तथा युवयोः “बन्धुः बन्धकः स्नुवः “समानः एक एव । अथवर्षिरहं समान एक एव बन्धुः ॥

यो वा॒ं रजां॑स्यश्विना॒ रथो॑ वि॒याति॒ रोद॑सी ।

अंति॒ षद्भूं॑तु वा॒मवः॑ ॥१३

यः । वा॒म् । रजां॑सि । अ॒श्वि॒ना॒ । रथः॑ । वि॒ऽयाति॑ । रोद॑सी॒ इति॑ ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अव॑ः ॥१३

यः । वाम् । रजांसि । अश्विना । रथः । विऽयाति । रोदसी इति ।

अन्ति । सत् । भूतु । वाम् । अवः ॥१३

“वां युवयोः “यः “रथः अस्ति स रथः “रजांसि लोकान् “रोदसी द्यावापृथिव्यौ च “वियाति विशेषेण गच्छति । अतस्तेन रथेन शीघ्रमागच्छतमिति शेषः ॥

आ नो॒ गव्ये॑भि॒रश्व्यैः॑ स॒हस्रै॒रुप॑ गच्छतं ।

अंति॒ षद्भू॑तु वा॒मवः॑ ॥१४

आ । नः॒ । गव्ये॑भिः । अश्व्यैः॑ । स॒हस्रैः॑ । उप॑ । ग॒च्छ॒त॒म् ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥१४

आ । नः । गव्येभिः । अश्व्यैः । सहस्रैः । उप । गच्छतम् ।

अन्ति । सत् । भूतु । वाम् । अवः ॥१४

हे अश्विनौ "नः अस्मान् "सहस्रैः अपरिमितैः "गव्येभिः गोसमूहैः "अश्व्यैः अश्वसमूहैश्च "उप "गच्छतम् ॥

मा नो॒ गव्ये॑भि॒रश्व्यैः॑ स॒हस्रे॑भि॒रति॑ ख्यतं ।

अंति॒ षद्भू॑तु वा॒मवः॑ ॥१५

मा । नः॒ । गव्ये॑भिः । अश्व्यैः॑ । स॒हस्रे॑भिः । अति॑ । ख्य॒त॒म् ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥१५

मा । नः । गव्येभिः । अश्व्यैः । सहस्रेभिः । अति । ख्यतम् ।

अन्ति । सत् । भूतु । वाम् । अवः ॥१५

हे अश्विनौ "गव्येभिः गोसमूहैः "अश्व्यैः अश्वसमूहैः "सहस्रेभिः सहस्रसंख्याकैः "मा अस्मान् "अति "ख्यतम् । अतीति प्रतीत्यस्मिन्नर्थे । मा निवारयतमित्यर्थः ॥

अ॒रु॒णप्सु॑रु॒षा अ॑भू॒दक॒र्ज्योति॑र्ऋ॒ताव॑री ।

अंति॒ षद्भू॑तु वा॒मवः॑ ॥१६

अ॒रु॒णऽप्सुः॑ । उ॒षाः । अ॒भू॒त् । अकः॑ । ज्योतिः॑ । ऋ॒तऽव॑री ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥१६

अरुणऽप्सुः । उषाः । अभूत् । अकः । ज्योतिः । ऋतऽवरी ।

अन्ति । सत् । भूतु । वाम् । अवः ॥१६

हे अश्विनौ "उषाः "अरुणप्सुः शुभ्रवर्णा "अभूत् भवति । न केवलं स्वयम् । "ज्योतिः तेजः "अकः करोति "अन्ति सर्वतः "ऋतावरी ऋतवत्युषाः ॥

अ॒श्विना॒ सु वि॒चाक॑शद्वृ॒क्षं प॑रशु॒माँ इ॑व ।

अंति॒ षद्भू॑तु वा॒मवः॑ ॥१७

अ॒श्विना॑ । सु । वि॒ऽचाक॑शत् । वृ॒क्षम् । प॒र॒शु॒मान्ऽइ॑व ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥१७

अश्विना । सु । विऽचाकशत् । वृक्षम् । परशुमान्ऽइव ।

अन्ति । सत् । भूतु । वाम् । अवः ॥१७

"सु "विचाकशत् अत्यन्तं दीप्यमानः सूर्योऽग्निर्वा "वृक्षं "परशुमानिव स यथा शकलयति तद्वत्तमो निशारयतीति शेषः । दृष्टान्तसामर्थ्यादेवं लभ्यते । यस्मादेवं तस्मात् "अश्विना अश्विनावाह्वय इति शेषः ॥

पु॒रं न धृ॑ष्ण॒वा रु॑ज कृ॒ष्णया॑ बाधि॒तो वि॒शा ।

अंति॒ षद्भू॑तु वा॒मवः॑ ॥१८

पुर॑म् । न । धृ॒ष्णो॒ इति॑ । आ । रु॒ज॒ । कृ॒ष्णया॑ । बा॒धि॒तः । वि॒शा ।

अन्ति॑ । सत् । भू॒तु॒ । वा॒म् । अवः॑ ॥१८

पुरम् । न । धृष्णो इति । आ । रुज । कृष्णया । बाधितः । विशा ।

अन्ति । सत् । भूतु । वाम् । अवः ॥१८

हे "धृष्णो धर्षक सप्तवध्रे त्वं "कृष्णया आकर्षया "विशा प्रवेशयन्त्या पेटिकया "बाधितः त्वं ततो निर्गत्य तामेव "आ "रुज पीडय अश्विनोरनुग्रहात् । एवं स्वयं स्वात्मानं प्रेष्यति । अथवा गोपवनः सप्तवध्रिमेवं ब्रवीति । "वां युवयोः "अवः रक्षणं गमनं वा समीपे । तत्र त्रिषु वर्गेषु " अन्ति षत्' इत्युत्तरोऽर्धर्चोऽन्वितपदाध्याहारेण योज्यः ॥ ॥ २० ॥

# ऋग्वेदः सूक्तं ८.७४



दे. अग्निः, १३-१५ आर्क्षः श्रुतर्वा। १-१२ अनुष्टुम्मुख प्रगाथः - ( अनुष्टुप् + गायत्र्यौ), १३-१५ अनुष्टुप् ।

विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम् ।

अग्निं वो दुर्यं वच स्तुषे शूषस्य मन्मभिः ॥१॥

यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम् ।

प्रशंसन्ति प्रशस्तिभिः ॥२॥

पन्यांसं जातवेदसं यो देवतात्युद्यता ।

हव्यान्यैरयद्दिवि ॥३॥

आगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम् ।

यस्य श्रुतर्वा बृहन्नार्क्षो अनीक एधते ॥४॥

अमृतं जातवेदसं तिरस्तमांसि दर्शतम् ।

घृताहवनमीड्यम् ॥५॥

सबाधो यं जना इमेऽग्निं हव्येभिरीळते ।

जुह्वानासो यतस्रुचः ॥६॥

इयं ते नव्यसी मतिरग्ने अधाय्यस्मदा ।

मन्द्र सुजात सुक्रतोऽमूर दस्मातिथे ॥७॥

सा ते अग्ने शंतमा चनिष्ठा भवतु प्रिया ।

तया वर्धस्व सुष्टुतः ॥८॥

सा द्युम्नैर्द्युम्निनी बृहदुपोप श्रवसि श्रवः ।

दधीत वृत्रतूर्ये ॥९॥

अश्वमिद्गां रथप्रां त्वेषमिन्द्रं न सत्पतिम् ।

यस्य श्रवांसि तूर्वथ पन्यम्पन्यं च कृष्टयः ॥१०॥

यं त्वा गोपवनो गिरा चनिष्ठदग्ने अङ्गिरः ।

स पावक श्रुधी हवम् ॥११॥

यं त्वा जनास ईळते सबाधो वाजसातये ।

स बोधि वृत्रतूर्ये ॥१२॥

अहं हुवान आर्क्षे श्रुतर्वणि मदच्युति ।

शर्धांसीव स्तुकाविनां मृक्षा शीर्षा चतुर्णाम् ॥१३॥

मां चत्वार आशवः शविष्ठस्य द्रवित्नवः ।

सुरथासो अभि प्रयो वक्षन्वयो न तुग्र्यम् ॥१४॥

सत्यमित्त्वा महेनदि परुष्ण्यव देदिशम् ।

नेमापो अश्वदातरः शविष्ठादस्ति मर्त्यः ॥१५॥

**सायणभाष्यम्**

‘विशोविशो वः' इति पञ्चदशर्चं पञ्चमं सूक्तम् । अत्रेयमनुक्रमणिका -–• विशोविशो वः पञ्चोनाग्नेयं त्वनुष्टुम्मुखास्तृचाश्चत्वारोऽन्त्यास्तिस्रोऽनुष्टुभ आर्क्षस्य श्रुतर्वणो दानस्तुतिः' इति । अनुवृत्तेर्गोपवन ऋषिः । आदितस्त्रिषु तृचेषु

सर्वाः प्रथमा अनुष्टुभो द्वितीयातृतीये प्राग्वत्सप्रपरिभाषया गायत्र्यौ त्रयोदश्याद्यास्तिस्रोऽनुष्टुभः । अस्योत्तरस्य चाग्निर्देवता । अन्त्यास्तिस्रः श्रुतर्वनाम्नो राज्ञो दानस्तुतिः । व्योमविश्वदेवस्तुत्पञ्चशारदीयेष्विदं सूक्तमाज्यशस्त्रम् । सूत्रितं च-' विशोविशो वो अतिथिमित्याज्यम्' (आश्व. श्रौ. ९. ८) इति ॥

वि॒शोवि॑शो वो॒ अति॑थिं वाज॒यंतः॑ पुरुप्रि॒यं ।

अ॒ग्निं वो॒ दु॒र्यं॒ वचः॑ स्तु॒षे शू॒षस्य॒ मन्म॑भिः ॥१

वि॒शःऽवि॑शः । वः॒ । अति॑थिम् । वा॒ज॒ऽयन्तः॑ । पु॒रु॒ऽप्रि॒यम् ।

अ॒ग्निम् । वः॒ । दु॒र्य॑म् । वचः॑ । स्तु॒षे । शू॒षस्य॑ । मन्म॑ऽभिः ॥१

विशःऽविशः । वः । अतिथिम् । वाजऽयन्तः । पुरुऽप्रियम् ।

अग्निम् । वः । दुर्यम् । वचः । स्तुषे । शूषस्य । मन्मऽभिः ॥१

हे अन्य ऋत्विजो यजमानाश्च “वः यूयं “वाजयन्तः अन्नमिच्छन्तः “विशोविशः सर्वस्याः प्रजायाः “अतिथिं पूज्यं “पुरुप्रियं बहुप्रियम् “अग्निं स्तुत्या परिचरतेति शेषः । अहं च “वः युष्मदर्थं “दुर्यं गुहा हितं “वचः “स्तुषे “शूषस्य सुखस्य लाभाय । कैः साधनैः । “मन्मभिः मननीयैः स्तोत्रैः ।।

यं जना॑सो ह॒विष्म॑तो मि॒त्रं न स॒र्पिरा॑सुतिं ।

प्र॒शंसं॑ति॒ प्रश॑स्तिभिः ॥२

यम् । जना॑सः । ह॒विष्म॑न्तः । मि॒त्रम् । न । स॒र्पिःऽआ॑सुतिम् ।

प्र॒ऽशंस॑न्ति । प्रश॑स्तिऽभिः ॥२

यम् । जनासः । हविष्मन्तः । मित्रम् । न । सर्पिःऽआसुतिम् ।

प्रऽशंसन्ति । प्रशस्तिऽभिः ॥२

“यम् अग्निं “जनासः जना यजमानाः “हविष्मन्तः सन्तः “मित्रं “न मित्रमिवादित्यमिव सखायमिव वा सर्पिरासुतिं सर्पिरासूयते हूयते यस्मिंस्तादृशं “प्रशंसन्ति स्तुवन्ति “प्रशस्तिभिः स्तुतिभिः स्तुव इति शेषः ॥

पन्यां॑सं जा॒तवे॑दसं॒ यो दे॒वता॒त्युद्य॑ता ।

ह॒व्यान्यैर॑यद्दि॒वि ॥३

पन्यांसम् । जा॒त॒ऽवे॑दसम् । यः । दे॒वऽता॑ति । उत्ऽय॑ता ।

ह॒व्यानि॑ । ऐर॑यत् । दि॒वि ॥३

पन्यांसम् । जातऽवेदसम् । यः । देवऽताति । उत्ऽयता ।

हव्यानि । ऐरयत् । दिवि ॥३

“पन्यांसम् अतिशयेन स्तोतारं साधु कृतमिति यजमानं स्तुवन्तं “जातवेदसं जातधनं जातविद्यं वा स्तुव इति शेषः । “यः अग्निः “देवताति देवतातौ यज्ञे “उद्यता उद्यतानि “हव्यानि हवींषि “दिवि “ऐरयत् प्रेरयति दिवि देवेभ्यः ॥

आग॑न्म वृत्र॒हंत॑म॒ं ज्येष्ठ॑म॒ग्निमान॑वं ।

यस्य॑ श्रु॒तर्वा॑ बृ॒हन्ना॒र्क्षो अनी॑क॒ एध॑ते ॥४

आ । अ॒ग॒न्म॒ । वृ॒त्र॒हन्ऽत॑मम् । ज्येष्ठ॑म् । अ॒ग्निम् । आन॑वम् ।

यस्य॑ । श्रु॒तर्वा॑ । बृ॒हन् । आ॒र्क्षः । अनी॑के । एध॑ते ॥४

आ । अगन्म । वृत्रहन्ऽतमम् । ज्येष्ठम् । अग्निम् । आनवम् ।

यस्य । श्रुतर्वा । बृहन् । आर्क्षः । अनीके । एधते ॥४

“वृत्रहन्तमं पापानामतिशयेन हन्तारं “ज्येष्ठं प्रशस्यम् “आनवं मनुष्यसंबन्धिनं तेषां हितकारिणम् “अग्निम् “आगन्म आगता वयम् । पूजार्थं बहुवचनम् । “यस्य अग्नेः “अनीके ज्वालासंघे “बृहन् महान् “आर्क्षः ऋक्षपुत्रः “श्रुतर्वा नाम राजा “एधते वर्धते । कर्म करोतीत्यर्थः । तमग्निमागन्मेति समन्वयः । एवं श्रुतर्वाणं भिक्षयागतो गोपवनोऽग्निं स्तौति ॥

अ॒मृतं॑ जा॒तवे॑दसं ति॒रस्तमां॑सि दर्श॒तं ।

घृ॒ताह॑वन॒मीड्यं॑ ॥५

अ॒मृत॑म् । जा॒त॒ऽवे॑दसम् । ति॒रः । तमां॑सि । द॒र्श॒तम् ।

घृ॒तऽआ॑हवनम् । ईड्य॑म् ॥५

अमृतम् । जातऽवेदसम् । तिरः । तमांसि । दर्शतम् ।

घृतऽआहवनम् । ईड्यम् ॥५

स एवागत्य स्तौति । “अमृतम् अमरणं “जातवेदसं जाततेजआद्युपलक्षणधनं “तमांसि “तिरः “दर्शतं नाशयन्तमित्यर्थः। “घृताहवनम् । घृतमाहूयते यत्र तम् । “ईड्यं स्तुत्यम्। ईदृशमागन्मेति संबन्धः ॥ ॥ २१ ॥

स॒बाधो॒ यं जना॑ इ॒मे३॒ऽग्निं ह॒व्येभि॒रीळ॑ते ।

जुह्वा॑नासो य॒तस्रु॑चः ॥६

स॒ऽबाधः॑ । यम् । जनाः॑ । इ॒मे । अ॒ग्निम् । ह॒व्येभिः॑ । ईळ॑ते ।

जुह्वा॑नासः । य॒तऽस्रु॑चः ॥६

सऽबाधः । यम् । जनाः । इमे । अग्निम् । हव्येभिः । ईळते ।

जुह्वानासः । यतऽस्रुचः ॥६

“इमे "सबाधः बाधसहिता अध्वर्य्वादयः “यम् “अग्निं “हव्येभिः हविर्भिः “ईळते स्तुवन्ति । कीदृशा जनाः। "जुह्वानासः यागं कुर्वाणाः "यतस्रुचः तदर्थं धृतस्रुग्दण्डाः । तमागन्मेति समन्वयः ॥

इ॒यं ते॒ नव्य॑सी म॒तिरग्ने॒ अधा॑य्य॒स्मदा ।

मंद्र॒ सुजा॑त॒ सुक्र॒तोऽमू॑र॒ दस्माति॑थे ॥७

इ॒यम् । ते॒ । नव्य॑सी । म॒तिः । अग्ने॑ । अधा॑यि । अ॒स्मत् । आ ।

मन्द्र॑ । सुऽजा॑त । सुक्र॑तो॒ इति॒ सुऽक्र॑तो । अमू॑र । दस्म॑ । अति॑थे ॥७

इयम् । ते । नव्यसी । मतिः । अग्ने । अधायि । अस्मत् । आ ।

मन्द्र । सुऽजात । सुक्रतो इति सुऽक्रतो । अमूर । दस्म । अतिथे ॥७

हे “अग्ने “इयम् इदानीं क्रियमाणा “नव्यसी नवतरा स्तुतिः “ते तव स्वभूता "अस्मत् अस्मासु “अधायि धृताभूत् । वयं तव स्तुतिं कुर्म इत्यर्थः । हे “मन्द्र मोदमान "सुजात शोभनजनन “सुक्रतो शोभनकर्मन् "अमूर अमूढ “दस्म दर्शनीय “अतिथे अतिथिवत् पूज्य इत्यग्नेर्विशेषणानि ॥

सा ते॑ अग्ने॒ शंत॑मा॒ चनि॑ष्ठा भवतु प्रि॒या ।

तया॑ वर्धस्व॒ सुष्टु॑तः ॥८

सा । ते॒ । अ॒ग्ने॒ । शम्ऽत॑मा । चनि॑ष्ठा । भ॒व॒तु॒ । प्रि॒या ।

तया॑ । व॒र्ध॒स्व॒ । सुऽस्तु॑तः ॥८

सा । ते । अग्ने । शम्ऽतमा । चनिष्ठा । भवतु । प्रिया ।

तया । वर्धस्व । सुऽस्तुतः ॥८

हे “अग्ने “सा अस्माभिः क्रियमाणा स्तुतिः “शंतमा अत्यन्तं सुखकरा “चनिष्ठा अतिशयेनान्नवती “ते तव “प्रिया “भवतु । “तया स्तुत्या “सुष्टुतः सुष्ठु स्तुतः सन् “वर्धस्व प्रवृद्धो भव ॥

सा द्यु॒म्नैर्द्यु॒म्निनीं बृ॒हदुपो॑प॒ श्रव॑सि॒ श्रवः॑ ।

दधी॑त वृ॒त्रतूर्ये॑ ॥९

सा । द्यु॒म्नैः । द्यु॒म्निनीं । बृ॒हत् । उप॑ऽउप । श्रव॑सि । श्रवः॑ ।

दधी॑त । वृ॒त्र॒ऽतूर्ये॑ ॥९

सा । द्युम्नैः । द्युम्निनी । बृहत् । उपऽउप । श्रवसि । श्रवः ।

दधीत । वृत्रऽतूर्ये ॥९

“सा अस्माभिः क्रियमाणा स्तुतिः “द्युम्नैः द्योतमानैरन्नैः अस्मभ्यं प्रदेयैः “द्युम्निनी अन्नवती “श्रवसि पूर्वस्मिन् विद्यमानेऽन्ने पुनरपि "बृहत् महत् “श्रवः अन्नम् “उपोप “दधीत पुनरुपरि धारयतु । कुत्रेति उच्यते । “वृत्रतूर्ये संग्रामे । शत्रोः संबन्धीति यावत् ॥

अश्व॒मिद्गां र॑थ॒प्रां त्वे॒षमिंद्रं॒ न सत्प॑तिं ।

यस्य॒ श्रवां॑सि॒ तूर्व॑थ॒ पन्यं॑पन्यं च कृ॒ष्टयः॑ ॥१०

अश्वं॑म् । इत् । गाम् । र॒थ॒ऽप्राम् । त्वे॒षम् । इन्द्रं॑म् । न । सत्ऽप॑तिम् ।

यस्यं॑ । श्रवां॑सि । तूर्व॑थ । पन्यं॑म्ऽपन्यम् । च॒ । कृ॒ष्टयः॑ ॥१०

अश्वम् । इत् । गाम् । रथऽप्राम् । त्वेषम् । इन्द्रम् । न । सत्ऽपतिम् ।

यस्य । श्रवांसि । तूर्वथ । पन्यम्ऽपन्यम् । च । कृष्टयः ॥१०

“गां गन्तारम् “अश्वमित् । इच्छब्द इवार्थे। अश्वमिव । तं यथा स्तुवते तथेत्यर्थः। “रथप्रां रथानामस्मदीयानां पूरयितारं धनैः तथा “त्वेषं दीप्तमग्निं “सत्पतिं सतां पालकम् “इन्द्रं “न इन्द्रमिवेमं “कृष्टयः मनुष्याः परिचरतेति शेषः । “यस्य अग्नेर्बलेन “श्रवांसि अन्नानि शत्रुसंबन्धीनि "तूर्वथ तथा “पन्यंपन्यं “च यद्यत् स्तुत्यं धनमस्ति तदपि तूर्वथ हिंस्थ ।। ॥ २२ ॥

यं त्वा॑ गो॒पव॑नो गि॒रा चनि॑ष्ठदग्ने अंगिरः ।

स पा॑वक श्रुधी॒ हवं॑ ॥११

यम् । त्वा॒ । गो॒पव॑नः । गि॒रा । चनि॑ष्ठत् । अ॒ग्ने॒ । अ॒ङ्गि॒रः॒ ।

सः । पा॒व॒क॒ । श्रु॒धि॒ । हव॑म् ॥११

यम् । त्वा । गोपवनः । गिरा । चनिष्ठत् । अग्ने । अङ्गिरः ।

सः । पावक । श्रुधि । हवम् ॥११

हे "अग्ने "यं "त्वा त्वां "गोपवनः ऋषिः "गिरा स्तुत्या "चनिष्ठत् अतिशयेनान्नप्रदातारमकरोत् "सः तादृशाग्ने "अङ्गिरः सर्वत्र गन्तरङ्गिरसां मध्य एक वा "पावक शोधक "हवं गोपवनस्य "श्रुधि शृणु ॥

यं त्वा॒ जना॑स॒ ईळ॑ते स॒बाधो॒ वाज॑सातये ।

स बो॑धि वृत्र॒तूर्ये॑ ॥१२

यम् । त्वा॒ । जना॑सः । ईळ॑ते । स॒ऽबाधः॑ । वाज॑ऽसातये ।

सः । बो॒धि॒ । वृ॒त्र॒ऽतूर्ये॑ ॥१२

यम् । त्वा । जनासः । ईळते । सऽबाधः । वाजऽसातये ।

सः । बोधि । वृत्रऽतूर्ये ॥१२

हे अग्ने "यं "त्वा त्वां "जनासः जनाः स्तोतारो वा "वाजसातये अन्नस्य लाभाय "सबाधः निर्बन्धरूपबाधोपेताः सन्तः "ईळते स्तुवन्ति "सः त्वं "वृत्रतूर्ये वैरिनाशनाय पापक्षयाय वा "बोधि बुध्यस्व । अथवा वृत्रतूर्ये संग्रामे बोधि ।।

अ॒हं हु॑वा॒न आ॒र्क्षे श्रु॒तर्व॑णि मद॒च्युति॑ ।

शर्धां॑सीव स्तुका॒विनां॑ मृ॒क्षा शी॒र्षा च॑तु॒र्णां ॥१३

अ॒हम् । हु॒वा॒नः । आ॒र्क्षे । श्रु॒तर्व॑णि । म॒द॒ऽच्युति॑ ।

शर्धां॑सिऽइव । स्तु॒का॒ऽविना॑म् । मृ॒क्षा । शी॒र्षा । च॒तु॒र्णाम् ॥१३

अहम् । हुवानः । आर्क्षे । श्रुतर्वणि । मदऽच्युति ।

शर्धांसिऽइव । स्तुकाऽविनाम् । मृक्षा । शीर्षा । चतुर्णाम् ॥१३

"अहम् ऋषिः "हुवानः हूयमानो यज्ञदिदृक्षार्थं "श्रुतर्वणि एतन्नाम्नि राजनि "मदच्युति शत्रूणां मदस्य च्यावयितरि "स्तुकाविनाम् । स्तुकाविन ऊर्णायवः । स्तुकः केशसंघातः । तद्वतां "शर्धांसीव उच्छ्रितानि लोमानीव तानि यथा स्पृशन्ति तद्वत् "वृक्षा वृक्षाणि ।

वृश्च्यन्त इति वृक्षाः केशाः । तद्वन्ति वृक्षाणि "शीर्षा शीर्षाणि शिरांसि । केषाम् । "चतुर्णां श्रुतर्वणा प्रदत्तानामश्वानां शिरांस्युन्मृजामीति शेषः । अथवा वृक्षा वृक्षेण । व्रश्चनसाधनत्वाद्वृक्षो हस्तः । तेनोन्मृजामि ॥

मां च॒त्वार॑ आ॒शव॒: शवि॑ष्ठस्य द्रवि॒त्नव॑: ।

सु॒रथा॑सो अ॒भि प्रयो॒ वक्ष॒न्वयो॒ न तुग्र्यं॑ ॥१४

माम् । च॒त्वार॑: । आ॒शव॑: । शवि॑ष्ठस्य । द्र॒वि॒त्नव॑: ।

सु॒ऽरथा॑सः । अ॒भि । प्रय॑: । वक्ष॑न् । वय॑: । न । तुग्र्य॑म् ॥१४

माम् । चत्वारः । आशवः । शविष्ठस्य । द्रवित्नवः ।

सुऽरथासः । अभि । प्रयः । वक्षन् । वयः । न । तुग्र्यम् ॥१४

"मां "शविष्ठस्य अतिशयेनान्नवतः श्रुतर्वणो राज्ञः संबन्धिनः "चत्वारः "आशवः अश्वाः "द्रवित्नवः गमनशीलाः "सुरथासः शोभनरथा अश्वाः "प्रयः अन्नं शत्रूणां प्रति "अभि "वक्षन् अभिवहन्ति । "वयो' "न "तुग्र्यम्। भुज्युं यथाश्विभ्यां प्रेरिताश्वतस्रो नावः स्वगृहं प्रापयन् तद्वदिति ॥

स॒त्यमित्त्वा॑ महेनदि॒ परु॒ष्ण्यव॑ देदिशं ।

नेमा॑पो अश्व॒दात॑र॒: शवि॑ष्ठादस्ति॒ मर्त्य॑: ॥१५

स॒त्यम् । इत् । त्वा॒ । म॒हे॒ऽन॒दि॒ । परु॑ष्णि । अव॑ । दे॒दि॒श॒म् ।

न । ई॒म् । आ॒प॒: । अ॒श्व॒ऽदात॑रः । शवि॑ष्ठात् । अ॒स्ति॒ । मर्त्य॑: ॥१५

सत्यम् । इत् । त्वा । महेऽनदि । परुष्णि । अव । देदिशम् ।

न । ईम् । आपः । अश्वऽदातरः । शविष्ठात् । अस्ति । मर्त्यः ॥१५

हे "महेनदि "परुष्णि एतन्नामिके "त्वा त्वां "सत्यमित् सत्यमेव "अव "देदिशम् आदिशामि वदामि । नद्याकारेण संबोध्यापः संबोधयति । हे "आपः "ईम् अस्मात् "शविष्ठात् बलवत्तमाच्छ्रुतर्वणोऽधिकः कश्चित् "अश्वदातरः अश्वानां दातृतमः "मर्त्यः "न "अस्ति । परुष्ण्यास्तीरे राज्ञोऽश्वमेधप्रतिग्रहात्तां संबोध्य ब्रूते ॥ ॥ २३ ॥

---

**टिप्पणी**

८.७४.१ विशोविशो वो अतिथिं इति

विशोविशीयम् (https://sa.wikisource.org/s/2jw6)

**मण्डल ८**

# ऋग्वेदः सूक्तं ८.७५

ऋग्वेदः - मण्डल ८
← सूक्तं ८.७४ सूक्तं ८.७५ सूक्तं ८.७६ →
विरूप आङ्गिरसः।

दे. अग्निः। गायत्री।

---

युक्ष्वा हि देवहूतमाँ अश्वाँ अग्ने रथीरिव ।

नि होता पूर्व्यः सदः ॥१॥

उत नो देव देवाँ अच्छा वोचो विदुष्टरः ।

श्रद्विश्वा वार्या कृधि ॥२॥

त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत ।

ऋतावा यज्ञियो भुवः ॥३॥

अयमग्निः सहस्रिणो वाजस्य शतिनस्पतिः ।

मूर्धा कवी रयीणाम् ॥४॥

तं नेमिमृभवो यथा नमस्व सहूतिभिः ।

नेदीयो यज्ञमङ्गिरः ॥५॥

तस्मै नूनमभिद्यवे वाचा विरूप नित्यया ।

वृष्णे चोदस्व सुष्टुतिम् ॥६॥

कमु ष्विदस्य सेनयाग्नेरपाकचक्षसः ।

पणिं गोषु स्तरामहे ॥७॥

मा नो देवानां विशः प्रस्नातीरिवोस्राः ।

कृशं न हासुरघ्न्याः ॥८॥

मा नः समस्य दूढ्यः परिद्वेषसो अंहतिः ।

ऊर्मिर्न नावमा वधीत् ॥९॥

नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः ।

अमैरमित्रमर्दय ॥१०॥

कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् ।

उरुकृदुरु णस्कृधि ॥११॥

मा नो अस्मिन्महाधने परा वर्ग्भारभृद्यथा ।

संवर्गं सं रयिं जय ॥१२॥

अन्यमस्मद्भिया इयमग्ने सिषक्तु दुच्छुना ।

वर्धा नो अमवच्छवः ॥१३॥

यस्याजुषन्नमस्विनः शमीमदुर्मखस्य वा ।

तं घेदग्निर्वृधावति ॥१४॥

परस्या अधि संवतोऽवराँ अभ्या तर ।

यत्राहमस्मि ताँ अव ॥१५॥

विद्मा हि ते पुरा वयमग्ने पितुर्यथावसः ।

अधा ते सुम्नमीमहे ॥१६॥

**सायणभाष्यम्**

'युक्ष्वा हि' इति षोडशर्चं षष्ठं सूक्तमाङ्गिरसस्य विरूपस्यार्षं गायत्रमाग्नेयम् । तथा चानुक्रमणिका-– 'युक्ष्वा हि षोळश विरूपः' इति । दशरात्रे तृतीयेऽहनीदं सूक्तमाज्यशस्त्रम् । सूत्रितं च -– तृतीये युक्ष्वा हीत्याज्यम्' (आश्व. श्रौ. ७. १०) इति । प्रातरनुवाकेऽप्याग्नेये गायत्रे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च --युक्ष्वा हि प्रेष्ठं वः' ( आश्व. श्रौ. ४, १३) इति ॥

यु॒क्ष्वा हि दे॑व॒हूत॑माँ॒ अश्वाँ॑ अग्ने र॒थीरि॑व ।

नि होता॑ पू॒र्व्यः स॑दः ॥१

यु॒क्ष्व । हि । दे॒व॒ऽहूत॑मान् । अश्वा॑न् । अ॒ग्ने॒ । र॒थीःऽइ॑व ।

नि । होता॑ । पू॒र्व्यः । स॒दः॒ ॥१

युक्ष्व । हि । देवऽहूतमान् । अश्वान् । अग्ने । रथीःऽइव ।

नि । होता । पूर्व्यः । सदः ॥१

हे "अग्ने "देवहूतमान् देवानामाह्वातृतमान् "अश्वान् "युक्ष्व योजय रथे। “रथीरिव यथा रथी स्वाश्वानिष्टदेशगमनाय योजयति तद्वत् । तथा कृत्वा “होता त्वं पूर्व्यः मुख्यः सन् “नि “षदः उपविश च ॥

उ॒त नो॑ देव दे॒वाँ अच्छा॑ वोचो वि॒दुष्ट॑रः ।

श्रद्विश्वा॒ वार्या॑ कृधि ॥२

उ॒त । न॒ः । दे॒व॒ । दे॒वान् । अच्छ॑ । वो॒च॒ः । वि॒दुःऽत॑रः ।

श्रत् । विश्वा॑ । वार्या॑ । कृ॒धि॒ ॥२

उत । नः । देव । देवान् । अच्छ । वोचः । विदुःऽतरः ।

श्रत् । विश्वा । वार्या । कृधि ॥२

हे “देव अग्ने "उत अपि च “नः अस्मान् "देवान् "अच्छा "वोचः अभिब्रूयाः । सम्यगनुष्ठितवन्त इति । तथा “विदुष्टरः विद्वत्तमान् वोचः । तथा कृत्वा “विश्वा सर्वाणि “वार्या वरणीयानि धनानि देवसंबन्धीनि “श्रत् सत्यानि “कृधि कुर्वस्माकम् । अथवास्मदीयानि सर्वाणि वरणीयानि हवींषि श्रत् सत्यानि कुरु । देवान् प्रापयेत्यर्थः ॥

त्वं ह॒ यद्य॑विष्ठ्य॒ सह॑सः सूनवाहुत ।

ऋ॒तावा॑ य॒ज्ञियो॒ भुवः॑ ॥३

त्वम् । ह॒ । यत् । य॒वि॒ष्ठ्य॒ । सह॑सः । सू॒नो॒ इति॑ । आ॒ऽहु॒त॒ ।

ऋ॒तऽवा॑ । य॒ज्ञियः॑ । भुवः॑ ॥३

त्वम् । ह । यत् । यविष्ठ्य । सहसः । सूनो इति । आऽहुत ।

ऋतऽवा । यज्ञियः । भुवः ॥३

हे अग्ने "यविष्ठ्य युवतम "सहसः "सूनो बलस्य पुत्र "आहुत सर्वतो हुत आहूत वा "त्वं "यत् यदा "ह खलु "ऋतावा सत्यवान् "यज्ञियः यज्ञार्हश्च "भुवः भवसि तदा वार्याणि श्रत्कुर्विति संबन्धः ।।

अ॒यम॒ग्निः स॑ह॒स्रिणो॒ वाज॑स्य श॒तिन॒स्पतिः॑ ।

मू॒र्धा क॒वी र॑यी॒णां ॥४

अ॒यम् । अ॒ग्निः । स॒ह॒स्रिणः॑ । वाज॑स्य । श॒तिनः॑ । पतिः॑ ।

मू॒र्धा । क॒विः । र॒यी॒णाम् ॥४

अयम् । अग्निः । सहस्रिणः । वाजस्य । शतिनः । पतिः ।

मूर्धा । कविः । रयीणाम् ॥४

"अयमग्निः "शतिनः "सहस्रिणः चोक्तसंख्योपेतस्य "वाजस्य अन्नस्य "पतिः स्वामी "मूर्धा शिरोवदुन्नतः श्रेष्ठः "कविः मेधावी "रयीणां धनानामपि पतिरिति शेषः । तदुभयं प्रयच्छत्वित्यर्थः ॥

तं ने॒मिमृ॒भवो॑ य॒था न॑मस्व॒ सहू॑तिभिः ।

नेदी॑यो य॒ज्ञम॑ङ्गिरः ॥५

तम् । ने॒मिम् । ऋ॒भवः॑ । य॒था॒ । आ । न॒म॒स्व॒ । सहू॑तिऽभिः ।

नेदी॑यः । य॒ज्ञम् । अ॒ङ्गि॒रः॒ ॥५

तम् । नेमिम् । ऋभवः । यथा । आ । नमस्व । सहूतिऽभिः ।

नेदीयः । यज्ञम् । अङ्गिरः ॥५

हे "अङ्गिरः त्वं "सहूतिभिः समानाह्वानैरन्यैर्देवैः सह "नेदीयः अन्तिकतमं "यज्ञम् "आ "नमस्व' आनमय । "ऋभवः "नेमिं रथमिव ॥
॥ २४ ॥

तस्मैं नूनम॒भिद्यंवे वा॒चा विंरूप॒ नित्यंया ।

वृष्णें चोदस्व सुष्टु॒तिं ॥६

तस्मैं । नूनम् । अ॒भिऽद्यंवे । वा॒चा । वि॒ऽरू॒प॒ । नित्यंया ।

वृष्णें । चो॒द॒स्व॒ । सु॒ऽस्तु॒तिम् ॥६

तस्मै । नूनम् । अभिऽद्यवे । वाचा । विऽरूप । नित्यया ।

वृष्णे । चोदस्व । सुऽस्तुतिम् ॥६

हे “विरूप नानारूपैतन्नामक महर्षे त्वं “तस्मै प्रसिद्धाय “अभिद्यवे अभिगतदीप्तये “वृष्णे वर्षकायाग्नये “नित्यया उत्पत्तिरहितया “वाचा मन्त्ररूपया "सुष्टुतिं "नूनम् इदानीं “चोदस्व स्तुहीत्येवमृषिः स्वात्मानं ब्रवीति यजमानो वा होतारं विरूपम् ॥

कमुं ष्विदस्य॒ सेनंया॒ग्नेरपांकचक्षसः ।

प॒णिं गोषुं स्तरामहे ॥७

कम् । उ॒ुं इतिं । स्वि॒त् । अ॒स्य॒ । सेनंया । अ॒ग्नेः । अपांकऽचक्षसः ।

प॒णिम् । गोषुं । स्त॒रा॒म॒हे॒ ॥७

कम् । ऊं इति । स्वित् । अस्य । सेनया । अग्नेः । अपाकऽचक्षसः ।

पणिम् । गोषु । स्तरामहे ॥७

“अस्य “अग्नेः “अपाकचक्षसः अनल्पचक्षसोऽग्नेः "सेनया ज्वालारूपया “गोषु निमित्तेषु “कमु "ष्वित् कं खलु “पणिं “स्तरामहे । स्तरणं हिंसनम् । इदानीं बलिनमभिभवेमेत्यर्थः ॥

मा नों दे॒वानां॒ विशः॑ प्रस्ना॒तीरिंवो॒स्राः ।

कृ॒शं न हांसु॒रघ्न्याः॑ ॥८

मा । न॒ः । दे॒वानां॑म् । विशः॑ । प्र॒स्ना॒तीःऽइंव । उ॒स्राः ।

कृ॒शम् । न । हा॒सु॒ः । अघ्न्याः॑ ॥८

मा । नः । देवानाम् । विशः । प्रस्नातीःऽइव । उस्राः ।

कृशम् । न । हासुः । अघ्न्याः ॥८

“देवानां सर्वेषां “विशः प्रजाभूतान् परिचारकान् “नः अस्मान् "मा हासीत् अग्निर्मा परित्यजतु । “प्रस्नातीः “उस्राः “इव पयः क्षरन्तीर्गाव इव । ता यथा न मुञ्चन्ति । उभयमपि न परित्यजत्वित्यर्थः । किमिव । “कृशम् अल्पं स्ववत्सम् “अघ्न्याः गावो यथा “न “हासुः न परित्यजन्ति तद्वत् ॥

मा नः॑ सम॒स्य दू॒ढ्यः१॒॑ परि॑द्वेषसो अंह॒तिः ।

ऊ॒र्मिर्न ना॒व॒मा व॑धीत् ॥९

मा । न॒ः । स॒म॒स्य॒ । दु॒ःऽध्यः॑ । परि॑ऽद्वेषसः । अं॒ह॒तिः ।

ऊ॒र्मिः । न । नाव॑म् । आ । व॒धी॒त् ॥९

मा । नः । समस्य । दुःऽध्यः । परिऽद्वेषसः । अंहतिः ।

ऊर्मिः । न । नावम् । आ । वधीत् ॥९

“समस्य सर्वस्य “परिद्वेषसः परितो द्विषतः “दूढ्यः पापबुद्धेः "अंहतिः हननं “मा “आ “वधीत् मा हिंस्यात् । “नावम् "ऊर्मिः समुद्रतरङ्ग इव । स यथा तां पीडयति तद्वन्मा वधीदित्यर्थः । अत्र ‘मा नः सर्वस्य दुर्धियः' (निरु. ५. २३) इत्यादि निरुक्तं द्रष्टव्यम् ।।

नम॑स्ते अग्न॒ ओज॑से गृ॒णंति॑ देव कृ॒ष्टयः॑ ।

अमै॑र॒मित्र॑मर्दय ॥१०

नमः॑ । ते॒ । अ॒ग्ने॒ । ओज॑से । गृ॒णन्ति॑ । दे॒व॒ । कृ॒ष्टयः॑ ।

अमैः॑ । अ॒मित्र॑म् । अ॒र्द॒य॒ ॥१०

नमः । ते । अग्ने । ओजसे । गृणन्ति । देव । कृष्टयः ।

अमैः । अमित्रम् । अर्दय ॥१०

हे “अग्ने “देव "ते तुभ्यं “नमः "गृणन्ति नमस्कारशब्दमुच्चारयन्ति । किमर्थम् । "ओजसे बलाय । के। "कृष्टयः मनुष्या यजमानाः । अतोऽहमपि गृणामीत्यर्थः । तथा “अमैः बलैः “अमित्रं शत्रुम् “अर्दय नाशय ॥ ॥ २५ ॥

ग्राम्येणाग्निना वैतानिकस्य संसर्गेऽग्नये संवर्गायेष्टिः कार्या । तत्र ‘कुवित्सु नः' इत्यनुवाक्या ‘ मा नो अस्मिन्' इति याज्या । सूत्रितं च -- कुवित्सु नो गविष्टये मा नो अस्मिन्महाधने' (आश्व. श्रौ. ३. १३) इति ॥

कु॒वित्सु नो॒ गवि॑ष्ट॒येऽग्ने॑ सं॒वेषि॑षो र॒यिं ।

उ॒रु॑कृदु॒रु ण॑स्कृधि ॥११

कु॒वित् । सु । न॒ः । गोऽइ॑ष्टये । अग्ने॑ । स॒म्ऽवेषि॑षः । र॒यिम् ।

उ॒रु॑ऽकृत् । उ॒रु । न॒ः । कृ॒धि॒ ॥११

कुवित् । सु । नः । गोऽइष्टये । अग्ने । सम्ऽवेषिषः । रयिम् ।

उरुऽकृत् । उरु । नः । कृधि ॥११

हे “अग्ने त्वं “नः अस्माकं “गविष्टये गवामेषणाय “कुवित् बहु “रयिं धनं “संवेषिषः संप्रापय । "उरुकृत् त्वं “नः अस्मान्” "उरु “कृधि कुरु ॥

मा नो॑ अ॒स्मिन्म॑हाध॒ने परा॑ वर्ग्भार॒भृद्य॑था ।

सं॒वर्गं॒ सं र॒यिं ज॑य ॥१२

मा । न॒ः । अ॒स्मिन् । म॒हा॒ऽध॒ने । परा॑ । व॒र्क् । भा॒र॒ऽभृत् । य॒था॒ ।

स॒म्ऽवर्ग॑म् । सम् । र॒यिम् । ज॒य॒ ॥१२

मा । नः । अस्मिन् । महाऽधने । परा । वर्क् । भारऽभृत् । यथा ।

सम्ऽवर्गम् । सम् । रयिम् । जय ॥१२

"नः अस्मान् “अस्मिन् “महाधने संग्रामे “मा “परा “वर्क् मा परित्याक्षीः । “भारभृद्यथा । भारवाही यथा भारमन्ते परित्यजति तद्वत् । “संवर्गं शत्रुभ्यः सहाच्छिद्यमानं “रयिं धनं “सं “जय अस्मदर्थम् ॥

अ॒न्यम॒स्मद्भि॒या इ॒यमग्ने॒ सिष॑क्तु दु॒च्छुना॑ ।

वर्धा॑ नो॒ अम॑व॒च्छव॑ः ॥१३

अ॒न्यम् । अ॒स्मत् । भि॒यै । इ॒यम् । अग्ने॑ । सिस॑क्तु । दु॒च्छुना॑ ।

वर्ध॑ । न॒ः । अम॑ऽवत् । शव॑ः ॥१३

अन्यम् । अस्मत् । भियै । इयम् । अग्ने । सिसक्तु । दुच्छुना ।

वर्ध । नः । अमऽवत् । शवः ॥१३

हे "अग्ने त्वदीया "इयं "दुच्छुना बाधकसंहतिः "अस्मत् "अन्यम् अस्तोतारं "भियै भयाय "सिषक्तु सेवताम् । त्वं च "नः अस्माकम् "अमवत् बलोपेतं "शवः वेगं "वर्ध वर्धय संग्रामे ।।

यस्याजु॑षन्नम॒स्विनः॑ शमी॒मदु॑र्मखस्य वा ।

तं घेद॒ग्निर्वृ॒धाव॑ति ॥१४

यस्य॑ । अजु॑षत् । न॒म॒स्विनः॑ । शमी॑म् । अदुः॑ऽमखस्य । वा॒ ।

तम् । घ॒ । इत् । अ॒ग्निः । वृ॒धा । अ॒व॒ति॒ ॥१४

यस्य । अजुषत् । नमस्विनः । शमीम् । अदुःऽमखस्य । वा ।

तम् । घ । इत् । अग्निः । वृधा । अवति ॥१४

"यस्य "नमस्विनः नमस्कारवतः "अदुर्मखस्य "वा अदुष्टयागस्य वा "शमीं कर्म "अजुषत् असेवत "तं "घेत् तमेव यजमानं संग्रामे "अग्निर्विधावति विशेषेण गच्छति । अतो नमोयुक्ता अदुर्मखाश्च भवामेति भावः ।।

पर॑स्या॒ अधि॑ सं॒वतोऽव॑राँ अ॒भ्या त॑र ।

यत्रा॒हमस्मि॒ ताँ अ॑व ॥१५

पर॑स्याः । अधि॑ । स॒म्ऽवतः॑ । अव॑रान् । अ॒भि । आ । त॒र॒ ।

यत्र॑ । अ॒हम् । अस्मि॑ । तान् । अ॒व॒ ॥१५

परस्याः । अधि । सम्ऽवतः । अवरान् । अभि । आ । तर ।

यत्र । अहम् । अस्मि । तान् । अव ॥१५

हे अग्ने "परस्याः अन्यस्याः "संवतः सेनायाः "अवरान् अन्यानस्मदीयान् "अभि अभिमुखम् "आ सर्वतः "तर तारय । वैरिसेना अस्मद्भटैः पराभावयेत्यर्थः । "यत्र येष्वस्मदीयपरिजनमध्ये "अहमस्मि स्वामी "तानव रक्ष ।।

वि॒द्मा हि ते॑ पु॒रा व॒यमग्ने॑ पि॒तुर्यथाव॑सः ।

अधा॑ ते सु॒म्नमी॑महे ॥१६

वि॒द्म । हि । ते॒ । पु॒रा । व॒यम् । अग्ने॑ । पि॒तुः । यथा॑ । अव॑सः ।

अध॑ । ते॒ । सु॒म्नम् । ई॒म॒हे॒ ॥१६

विद्म । हि । ते । पुरा । वयम् । अग्ने । पितुः । यथा । अवसः ।

अध । ते । सुम्नम् । ईमहे ॥१६

हे "अग्ने "पितुः पालकस्य "ते तव "अवसः अवो रक्षणं "पुरा "यथा तथेदानीमपीति "विद्म । "अधः तत् "ते तव "सुम्नं सुखम् "ईमहे याचामहे । अथवा पितुर्यथेति दृष्टान्तः । पितुः पालनं पुत्रो यथा वेत्ति तथेत्यर्थः ॥ ॥ २६ ॥

**मण्डल ८**

# ऋग्वेदः सूक्तं ८.७६



दे. इन्द्रः । गायत्री ।

इमं नु मायिनं हुव इन्द्रमीशानमोजसा ।

मरुत्वन्तं न वृञ्जसे ॥१॥

अयमिन्द्रो मरुत्सखा वि वृत्रस्याभिनच्छिरः ।

वज्रेण शतपर्वणा ॥२॥

वावृधानो मरुत्सखेन्द्रो वि वृत्रमैरयत् ।

सृजन्समुद्रिया अपः ॥३॥

अयं ह येन वा इदं स्वर्मरुत्वता जितम् ।

इन्द्रेण सोमपीतये ॥४॥

मरुत्वन्तमृजीषिणमोजस्वन्तं विरप्शिनम् ।

इन्द्रं गीर्भिर्हवामहे ॥५॥

इन्द्रं प्रत्नेन मन्मना मरुत्वन्तं हवामहे ।

अस्य सोमस्य पीतये ॥६॥

मरुत्वाँ इन्द्र मीढ्वः पिबा सोमं शतक्रतो ।

अस्मिन्यज्ञे पुरुष्टुत ॥७॥

तुभ्येदिन्द्र मरुत्वते सुताः सोमासो अद्रिवः ।

हृदा हूयन्त उक्थिनः ॥८॥

पिबेदिन्द्र मरुत्सखा सुतं सोमं दिविष्टिषु ।

वज्रं शिशान ओजसा ॥९॥

उत्तिष्ठन्नोजसा सह पीत्वी शिप्रे अवेपयः ।

सोममिन्द्र चमू सुतम् ॥१०॥

अनु त्वा रोदसी उभे क्रक्षमाणमकृपेताम् ।

इन्द्र यद्दस्युहाभवः ॥११॥

वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशम् ।

इन्द्रात्परि तन्वं ममे ॥१२॥

**सायणभाष्यम्**

'इमं नु मायिनम्' इति द्वादशर्चं सप्तमं सूक्तम् । कुरुसुतिर्नाम काण्व ऋषिः । गायत्री छन्दः । इन्द्रो देवता । तथा चानुक्रान्तम्- ' इमं नु द्वादश कुरुसुतिः काण्वः' इति । व्यूढे दशरात्रे चतुर्थेऽहनि मरुत्वतीय आद्यस्तृचः । सूत्रितं च--' इमं नु मायिनं हुवे त्यमु वः सत्रासाहम्' ( आश्व. श्रौ. ८. ८) इति ॥

इ॒मं नु मा॒यिनं॑ हुव॒ इन्द्र॒मीशा॑न॒मोज॑सा ।

म॒रुत्व॑न्तं॒ न वृ॒ञ्जसे॑ ॥१

इ॒मम् । नु । मा॒यिन॑म् । हु॒वे॒ । इन्द्र॑म् । ईशा॑नम् । ओज॑सा ।

म॒रुत्व॑न्तम् । न । वृ॒ञ्जसे॑ ॥१

इमम् । नु । मायिनम् । हुवे । इन्द्रम् । ईशानम् । ओजसा ।

मरुत्वन्तम् । न । वृञ्जसे ॥१

“इमं “मायिनं प्रज्ञावन्तम् “ओजसा स्वबलेन "ईशानं सर्वस्य स्वामिनं “मरुत्वन्तं “न । नेति संप्रत्यर्थे । मरुद्भिस्तद्वन्तमिदानीम् "इन्द्रं वृञ्जसे शत्रूणां छेदनाय "हुवे आह्वयामि ॥

अ॒यमिन्द्रो॑ म॒रुत्स॑खा॒ वि वृ॒त्रस्या॑भिन॒च्छिरः॑ ।

वज्रे॑ण श॒तप॑र्वणा ॥२

अ॒यम् । इन्द्रः॑ । म॒रुत्ऽस॑खा । वि । वृ॒त्रस्य॑ । अ॒भि॒न॒त् । शिरः॑ ।

वज्रे॑ण । श॒तऽप॑र्वणा ॥२

अयम् । इन्द्रः । मरुत्ऽसखा । वि । वृत्रस्य । अभिनत् । शिरः ।

वज्रेण । शतऽपर्वणा ॥२

"अयमिन्द्रो “मरुत्सखा मरुद्युक्तः "वृत्रस्य "वि “अभिनत् व्यच्छिनत् "शिरः “वज्रेण “शतपर्वणा शतसंधिना ।।

वा॒वृ॒धा॒नो म॒रुत्स॒खेन्द्रो॒ वि वृ॒त्रमै॑रयत् ।

सृ॒जन्स॑मु॒द्रिया॑ अ॒पः ॥३

व॒वृ॒धा॒नः । म॒रुत्ऽस॑खा । इन्द्रः॑ । वि । वृ॒त्रम् । ऐ॒र॒य॒त् ।

सृ॒जन् । स॒मु॒द्रियाः॑ । अ॒पः ॥३

ववृधानः । मरुत्ऽसखा । इन्द्रः । वि । वृत्रम् । ऐरयत् ।

सृजन् । समुद्रियाः । अपः ॥३

अयम् “इन्द्रः “वावृधानः वर्धमानः “मरुत्सखा मरुत्सहायः “वृत्रं मेघं “वि “ऐरयत् विदारितवान् । किं कुर्वन् । “समुद्रियाः । समुद्रमन्तरिक्षम् । तत्संबन्धिन्यः “अपः "सृजन् ।

षष्ठेऽहनि मरुत्वतीये ‘अयं ह येन ' इति मरुत्वन्निविद्धानीयः । सूत्रितं च – 'अयं ह येन वा इदमुप नो हरिभिः सुतम्' ( आश्व. श्रौ. ८. ८) इति ।।

अ॒यं ह॒ येन॒ वा इ॒दं स्व॑र्म॒रुत्व॑ता जि॒तम् ।

इन्द्रे॑ण॒ सोम॑पीतये ॥४

अ॒यम् । ह॒ । येन॑ । वै । इ॒दम् । स्वः॑ । म॒रुत्व॑ता । जि॒तम् ।

इन्द्रे॑ण । सोम॑ऽपीतये ॥४

अयम् । ह । येन । वै । इदम् । स्वः । मरुत्वता । जितम् ।

इन्द्रेण । सोमऽपीतये ॥४

"अयं "ह' खल्विन्द्रः "येन "वै येन खलु "मरुत्वता मरुद्भिर्युक्तेन "इन्द्रेण "इदं "स्वः स्वर्गाख्यं स्थानमिदं स्वः सर्वं कर्म वा यद्वेदं सर्वं जगत् "जितम् । किमर्थम् । "सोमपीतये सोमपानाय ।।

म॒रुत्व॑न्तमृजी॒षिण॒मोज॑स्वन्तं विर॒प्शिन॑म् ।

इन्द्रं॑ गी॒र्भिर्ह॑वामहे ॥५

म॒रुत्व॑न्तम् । ऋ॒जी॒षिण॑म् । ओज॑स्वन्तम् । वि॒ऽर॒प्शिन॑म् ।

इन्द्र॑म् । गी॒ःऽभिः । ह॒वा॒म॒हे॒ ॥५

मरुत्वन्तम् । ऋजीषिणम् । ओजस्वन्तम् । विऽरप्शिनम् ।

इन्द्रम् । गीःऽभिः । हवामहे ॥५

"मरुत्वन्तं मरुद्भिस्तद्वन्तम् "ऋजीषिणम् । अभिषुतशेष ऋजीषः । स च तृतीयसवने पुनः सूयते । तद्वन्तम् "ओजस्वन्तम् । ओजो नामाष्टमी दशा । शरीरवृद्ध्युपेतमित्यर्थः । "विरप्शिनम् । महन्नामैतत् । महान्तमेवंमहानुभावम् "इन्द्रं "गीर्भिः स्तुतिभिः "हवामहे आह्वयामः ॥

इन्द्रं॑ प्र॒त्नेन॒ मन्म॑ना म॒रुत्व॑न्तं हवामहे ।

अ॒स्य सोम॑स्य पी॒तये॑ ॥६

इन्द्र॑म् । प्र॒त्नेन॑ । मन्म॑ना । म॒रुत्व॑न्तम् । ह॒वा॒म॒हे॒ ।

अ॒स्य । सोम॑स्य । पी॒तये॑ ॥६

इन्द्रम् । प्रत्नेन । मन्मना । मरुत्वन्तम् । हवामहे ।

अस्य । सोमस्य । पीतये ॥६

"मरुत्वन्तम् "इन्द्रं "प्रत्नेन पुराणेन "मन्मना मननीयेन स्तोत्रेण "हवामहे "अस्य "सोमस्य "पीतये पानाय ॥ ॥ २७ ॥

पञ्चमेऽहनि मरुत्वतीये 'मरुत्वाँ इन्द्र मीढ्वः' इति तृचो निविद्धानीयः । सूत्रितं च- ' मरुत्वाँ इन्द्र मीढ्वस्तमिन्द्रं वाजयामसि' (आश्व. श्रौ. ८. ८) इति ॥

म॒रुत्वाँ॑ इन्द्र मीढ्व॒ः पिबा॒ सोमं॑ शतक्रतो ।

अ॒स्मिन्य॒ज्ञे पु॑रुष्टुत ॥७

म॒रुत्वा॑न् । इ॒न्द्र॒ । मी॒ढ्व॒ः । पिब॑ । सोम॑म् । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो ।

अ॒स्मिन् । य॒ज्ञे । पु॒रु॒ऽस्तु॒त॒ ॥७

मरुत्वान् । इन्द्र । मीढ्वः । पिब । सोमम् । शतक्रतो इति शतऽक्रतो ।

अस्मिन् । यज्ञे । पुरुऽस्तुत ॥७

हे "मीढ्वः फलस्य वृष्टेर्वा सेक्तः "शतक्रतो बहुकर्मन् "इन्द्र त्वं "मरुत्वान् "सोमं "पिब "अस्मिन् "यज्ञे हे "पुरुष्टुत बहुभिराहूत ॥

तुभ्येदि॑न्द्र म॒रुत्व॑ते सु॒ताः सोमा॑सो अद्रिवः ।

हृ॒दा हू॑यन्त उ॒क्थिन॑ः ॥८

तुभ्य॑ । इत् । इ॒न्द्र॒ । म॒रुत्व॑ते । सु॒ताः । सोमा॑सः । अ॒द्रि॒ऽव॒ः ।

हृ॒दा । हू॒य॒न्ते॒ । उ॒क्थिनः॑ ॥८

तुभ्य । इत् । इन्द्र । मरुत्वते । सुताः । सोमासः । अद्रिऽवः ।

हृदा । हूयन्ते । उक्थिनः ॥८

हे "अद्रिवः वज्रवन् "इन्द्र "मरुत्वते "तुभ्येत् तुभ्यमेव "सोमासः "सुताः अभिषुताः । ते च "उक्थिनः शस्त्रवन्तः "हृदा मनसा भक्त्या "हूयन्ते त्वदर्थम् ॥

पिबेदि॑न्द्र म॒रुत्स॑खा सु॒तं सोम॒ं दिवि॑ष्टिषु ।

वज्र॒ं शिशा॑न॒ ओज॑सा ॥९

पिब॑ । इत् । इ॒न्द्र॒ । म॒रुत्ऽस॑खा । सु॒तम् । सोम॑म् । दिवि॑ष्टिषु ।

वज्र॑म् । शिशा॑नः । ओज॑सा ॥९

पिब । इत् । इन्द्र । मरुत्ऽसखा । सुतम् । सोमम् । दिविष्टिषु ।

वज्रम् । शिशानः । ओजसा ॥९

हे “इन्द्र "मरुत्सखा त्वं “सुतम् अभिषुतं “सोमं “पिब । किमर्थम् । दिविष्टिषु अस्माकमह्नामभिगमनेषु “दिवः स्वर्गस्य वैषणेषु निमित्तेषु । पीत्वा च “ओजसा बलेन सोमपानजनितेन “वज्रं “शिशानः तीक्ष्णीकुर्वन् । शत्रूञ्जहीति भावः ॥

चतुर्विंशेऽहनि प्रातःसवने ब्राह्मणाच्छंसिशस्त्रे ‘उत्तिष्ठन्' इति तृचः षळहस्तोत्रियः । सूत्रितं च - उत्तिष्ठन्नोजसा सह भिन्धि विश्वा अप द्विष इति ब्राह्मणाच्छंसिनः ' (आश्व. श्रौ. ७. २) इति ॥

उ॒त्तिष्ठ॒न्नोज॑सा स॒ह पी॒त्वी शिप्रे॑ अवेपयः ।

सोम॑मिन्द्र च॒मू सु॒तम् ॥१०

उ॒त्ऽतिष्ठ॑न् । ओज॑सा । स॒ह । पी॒त्वी । शिप्रे॒ इति॑ । अ॒वे॒प॒यः॒ ।

सोम॑म् । इ॒न्द्र॒ । च॒मू इति॑ । सु॒तम् ॥१०

उत्ऽतिष्ठन् । ओजसा । सह । पीत्वी । शिप्रे इति । अवेपयः ।

सोमम् । इन्द्र । चमू इति । सुतम् ॥१०

हे “इन्द्र त्वं “पीत्वी पीत्वा “ओजसा बलेन “सह "उत्तिष्ठन् “शिप्रे हनू “अवेपयः अकम्पयः । मदावेशादिति भावः । किं पीत्वा । "चमू चम्वोरधिषवणफलकयोः “सुतं सोमम् ॥

अनु॑ त्वा॒ रोद॑सी उ॒भे क्रक्ष॑माणमकृपेताम् ।

इन्द्र॒ यद्द॑स्युहाभ॑वः ॥११

अनु॑ । त्वा॒ । रोद॑सी॒ इति॑ । उ॒भे इति॑ । क्रक्ष॑माणम् । अ॒कृ॒पे॒ता॒म् ।

इन्द्र॑ । यत् । द॒स्यु॒ऽहा । अभ॑वः ॥११

अनु । त्वा । रोदसी इति । उभे इति । क्रक्षमाणम् । अकृपेताम् ।

इन्द्र । यत् । दस्युऽहा । अभवः ॥११

हे “इन्द्र "क्रक्षमाणं शत्रून् विलिखन्तं “त्वा त्वाम् “उभे “रोदसी उभे अपि द्यावापृथिव्यौ “अनु “अकृपेताम् अनुकल्पयेताम् । “यत् यदा “दस्युहा “अभवः भवसि तदा ॥

वाचं॑मु॒ष्टाप॑दीमु॒हं नव॑स्रक्तिमृत॒स्पृश॑म् ।

इन्द्रा॒त्परिं त॒न्वं॑ ममे ॥१२

वाच॑म् । अ॒ष्टाऽप॑दीम् । अ॒हम् । नव॑ऽस्रक्तिम् । ऋ॒त॒ऽस्पृश॑म् ।

इन्द्रा॑त् । परिं । त॒न्व॑म् । म॒मे॒ ॥१२

वाचम् । अष्टाऽपदीम् । अहम् । नवऽस्रक्तिम् । ऋतऽस्पृशम् ।

इन्द्रात् । परि । तन्वम् । ममे ॥१२

“अष्टापदीम् । अष्टाभिर्दिग्भिर्विदिग्भिः साष्टापदी । "नवस्रक्तिम् उपरि स्थितेनादित्येन नवस्रक्तिम् । आसु दिक्षु व्याप्तमित्यर्थः । “ऋतस्पृशं यज्ञस्पृशं “वाचं स्तुतिम् “अहं परिपूर्णत् “इन्द्रात् “तन्वं तनुं न्यूनां सती “परि “ममे । अन्यूनेयत्तां करोमीत्यर्थः । कार्येस्न् न स्वरूपं स्तुत्या विषयीकर्तुमशक्यत्वादिति भावः ॥ ॥ २८ ॥

# ऋग्वेदः सूक्तं ८.७७



दे. इन्द्रः । गायत्री, १०-११ प्रगाथः ( बृहती, सतोबृहती )

---

जज्ञानो नु शतक्रतुर्वि पृच्छदिति मातरम् ।

क उग्राः के ह शृण्विरे ॥१॥

आदीं शवस्यब्रवीदौर्णवाभमहीशुवम् ।

ते पुत्र सन्तु निष्टुरः ॥२॥

समित्तान्वृत्रहाखिदत्खे अराँ इव खेदया ।

प्रवृद्धो दस्युहाभवत् ॥३॥

एकया प्रतिधापिबत्साकं सरांसि त्रिंशतम् ।

इन्द्रः सोमस्य काणुका ॥४॥

अभि गन्धर्वमतृणदबुध्नेषु रजस्स्वा ।

इन्द्रो ब्रह्मभ्य इद्वृधे ॥५॥

निराविध्यद्गिरिभ्य आ धारयत्पक्वमोदनम् ।

इन्द्रो बुन्दं स्वाततम् ॥६॥

शतब्रध्न इषुस्तव सहस्रपर्ण एक इत् ।

यमिन्द्र चकृषे युजम् ॥७॥

तेन स्तोतृभ्य आ भर नृभ्यो नारिभ्यो अत्तवे ।

सद्यो जात ऋभुष्ठिर ॥८॥

एता च्यौत्नानि ते कृता वर्षिष्ठानि परीणसा ।

हृदा वीड्वधारयः ॥९॥

विश्वेत्ता विष्णुराभरदुरुक्रमस्त्वेषितः ।

शतं महिषान्क्षीरपाकमोदनं वराहमिन्द्र एमुषम् ॥१०॥

तुविक्षं ते सुकृतं सूमयं धनुः साधुर्बुन्दो हिरण्ययः ।

उभा ते बाहू रण्या सुसंस्कृत ऋदूपे चिदृदूवृधा ॥११॥

**सायणभाष्यम्**

‘जज्ञानः' इत्येकादशर्चमष्टमं सूक्तं काण्वस्य कुरुसुतेरार्षम् । आद्या नव गायत्र्यो दशमी बृहत्येकादशी सतोबृहती । इन्द्रो देवता । तथा चानुक्रान्तं- जज्ञान एकादश प्रगाथान्तम्' इति । महाव्रते निष्केवल्ये 'जज्ञानो नु शतक्रतुः' इत्येषा । तथैव पञ्चमारण्यके सूत्रितं- जज्ञानो नु शतक्रतुरित्येका' (ऐ. आ. ५. २. ३) इति

ज॒ज्ञा॒नो नु श॒तक्र॑तु॒र्वि पृ॑च्छ॒दिति॑ मा॒तरँ॑ ।

क उ॒ग्राः के ह॑ शृण्विरे ॥१

ज॒ज्ञा॒नः । नु । श॒तऽक्र॑तुः । वि । पृ॒च्छ॒त् । इति॑ । मा॒तर॑म् ।

के । उ॒ग्राः । के । ह॒ । शृ॒ण्वि॒रे॒ ॥१

जज्ञानः । नु । शतऽक्रतुः । वि । पृच्छत् । इति । मातरम् ।

के । उग्राः । के । ह । शृण्विरे ॥१

अयमिन्द्रः "जज्ञानो “नु जायमान एव “शतक्रतुः बहुकर्मा “इति इत्थं “मातरं स्वजननीं विपृच्छति । किमिति । "क "उग्राः उद्गूर्णबला लोके । “के “ह “श्रृण्विरे श्रूयन्ते गुणैः । के विश्रुता इत्यर्थः ॥

आदीं शवस्यंब्रवीदौर्णवाभमंहीशुवं ।

ते पुंत्र संतु निष्टुरंः ॥२

आत् । ईम् । शवसी । अब्रवीत् । और्णऽवाभम् । अहीशुवंम् ।

ते । पुत्र । सन्तु । निःऽतुरंः ॥२

आत् । ईम् । शवसी । अब्रवीत् । और्णऽवाभम् । अहीशुवम् ।

ते । पुत्र । सन्तु । निःऽतुरः ॥२

इन्द्रेण पृष्टा “शवसी माता अनन्तरमेव एनमिन्द्रम् "अब्रवीत् । किमिति उच्यते । “और्णवाभमहीशुवम् एतन्नामानावसुरौ तिष्ठतः । तावुक्तावन्ये च तादृशा हे “पुत्र तव “निष्टुरः निस्तारणीयाः “सन्तु इति ॥

समित्तान्वृंत्रहाखिंदत्खे अराँ इंव खेदंया ।

प्रवृंद्धो दस्युहाभंवत् ॥३

सम् । इत् । तान् । वृत्रऽहा । अखिदत् । खे । अरान्ऽइंव । खेदंया ।

प्रऽवृंद्धः । दस्युऽहा । अभवत् ॥३

सम् । इत् । तान् । वृत्रऽहा । अखिदत् । खे । अरान्ऽइव । खेदया ।

प्रऽवृद्धः । दस्युऽहा । अभवत् ॥३

“तान् जनन्योक्तान् “वृत्रहा इन्द्रः “समित् सहैव "अखिदत्। खेदनं नाम आकर्षणम् । “खे रथचक्रस्य नाभौ "अरान् चक्राङ्गभूताञ्छङ्कून् “खेदया रज्ज्वा “इव । तया तान् यथा संखिदन्ति तद्वत् । तथा कृत्वा “दस्युहा शत्रुघातीन्द्रः “प्रवृद्धः अभवत् ॥

एकंया प्रतिधापिंबत्साकं सरांसि त्रिंशतं ।

इंद्रः सोमंस्य काणुका ॥४

एकंया । प्रतिऽधा । अपिबत् । साकम् । सरांसि । त्रिंशतंम् ।

इन्द्रंः । सोमंस्य । काणुका ॥४

एकया । प्रतिऽधा । अपिबत् । साकम् । सरांसि । त्रिंशतम् ।

इन्द्रः । सोमस्य । काणुका ॥४

अयम् “इन्द्रः “एकया एकेन “प्रतिधा प्रतिधानेन “साकम् एकधैव “त्रिंशतम् अपि । उक्थपात्राणीत्यर्थः । कीदृशानि । “सरांसि “सोमस्य पूर्णानि सोमरसेन पूर्णानि “काणुका कान्तानि क्रान्तानि वा सोमेन कृतानि वा सोमपूर्णानि "अपिबत् पीतवान् माध्यंदिनसवने । याज्ञिकप्रसिद्ध्यैवम् । नैरुक्तप्रसिद्ध्या तु कालाभिमानीन्द्रः । त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत् पूर्वपक्षस्य च सन्ति । तानेकरूपमनुभवतीति । एतत्सर्वम् ‘एकेन प्रतिधानेनापिबत्' (निरु. ५. ११) इत्यादिनिरुक्ते तद्व्याख्याने च स्पष्टमुक्तम् । तदत्र द्रष्टव्यम् ॥

अ॒भि गं॑ध॒र्वमं॑तृणदबु॒ध्नेषु॒ रज॒स्स्वा ।

इंद्रो॑ ब्र॒ह्मभ्य॒ इद्वृ॒धे ॥५

अ॒भि । ग॒न्ध॒र्वम् । अ॒तृ॒ण॒त् । अ॒बु॒ध्नेषु॑ । रजः॑ऽसु । आ ।

इन्द्रः॑ । ब्र॒ह्मऽभ्यः॑ । इत् । वृ॒धे ॥५

अभि । गन्धर्वम् । अतृणत् । अबुध्नेषु । रजःऽसु । आ ।

इन्द्रः । ब्रह्मऽभ्यः । इत् । वृधे ॥५

अयम् “इन्द्रः “गन्धर्वम् । गामुदकं धारयतीति गन्धर्वो मेघः । तम् “अभि “आ “अतृणत् सर्वतो हिंसितवान् । कुत्र । “अबुध्नेषु पदनिधानयोग्यस्थानरहितेषु “रजःसु लोकेषु । अन्तरिक्षप्रदेशेष्वित्यर्थः । किमर्थम् । “ब्रह्मभ्य “इत् ब्राह्मणेभ्य एव “वृधे वर्धनाय ॥ ॥ २९ ॥

निरा॑विध्यद्गि॒रिभ्य॒ आ धा॒रयं॑त्प॒क्वमो॑द॒नं ।

इंद्रो॑ बु॒दं स्वा॑ततं ॥६

निः । अ॒वि॒ध्य॒त् । गि॒रिऽभ्यः॑ । आ । धा॒रयं॑त् । प॒क्वम् । ओ॒द॒नम् ।

इन्द्रः॑ । बु॒न्दम् । सुऽआ॑ततम् ॥६

निः । अविध्यत् । गिरिऽभ्यः । आ । धारयत् । पक्वम् । ओदनम् ।

इन्द्रः । बुन्दम् । सुऽआततम् ॥६

अयम् “इन्द्रः “गिरिभ्यः मेघेभ्यः सकाशादुदकं निर्गमयितुं “निराविध्यत् संप्राहरत् तानेव मेघान् । किं कुर्वन् । “पक्वं परिपक्वम् "ओदनं कुर्वन् मनुष्याणामर्थाय । केन साधनेनेति तदुच्यते । “बुन्दम् इषुं "स्वाततं सुष्ठु सर्वतो विस्तृतमादायेति शेषः ॥

श॒तब्र॑ध्न॒ इषु॒स्तव॑ स॒हस्र॑पर्ण॒ एक॒ इत् ।

यमिं॑द्र चकृ॒षे युजं॑ ॥७

श॒तऽब्र॑ध्नः । इषुः॑ । तव॑ । स॒हस्र॑ऽपर्णः । एकः॑ । इत् ।

यम् । इ॒न्द्र॒ । च॒कृ॒षे । युज॑म् ॥७

शतऽब्रध्नः । इषुः । तव । सहस्रऽपर्णः । एकः । इत् ।

यम् । इन्द्र । चकृषे । युजम् ॥७

हे "इन्द्र "तव "इषुः शतब्रध्नः शताग्रः "सहस्रपर्णः सहस्रसंख्याकैः पत्रैः संवृतः शीघ्रगमनाय । अपरिमितगमनो वा । स च "एक "इत् एक एव । "यं च इषुं "युजं सहायं "चकृषे करोषि युद्धाय ।

तेन॑ स्तो॒तृभ्य॒ आ भ॑र॒ नृभ्यो॒ नारिं॑भ्यो॒ अत्त॑वे ।

स॒द्यो जा॒त ऋ॑भुष्ठिर ॥८

तेन॑ । स्तो॒तृऽभ्यः॑ । आ । भ॒र॒ । नृऽभ्यः॑ । नारिं॑ऽभ्यः । अत्त॑वे ।

स॒द्यः । जा॒तः । ऋ॒भु॒ऽस्थि॒र॒ ॥८

तेन । स्तोतृऽभ्यः । आ । भर । नृऽभ्यः । नारिऽभ्यः । अत्तवे ।

सद्यः । जातः । ऋभुऽस्थिर ॥८

"तेन इषुणा "स्तोतृभ्यः अस्मभ्यं "नृभ्यः मनुष्येभ्यः । पुत्रेभ्य इत्यर्थः। तथा "नारिभ्यः स्त्रीभ्यश्च "अत्तवे अदनाय पर्याप्तं धनम् "आ "भर आहर। "सद्यः तदानीमेव "जातः अस्माभिर्दत्तेन सोमेन प्रवृद्धः सन् हे "ऋभुष्ठिर । उरुः प्रभूतः स्थिरश्च संग्रामे स तथोक्तः । हे तादृशेन्द्र त्वमा भरेति समन्वयः ॥

ए॒ता च्यौ॒त्नानिं॑ ते कृ॒ता वर्षिं॑ष्ठानि॒ परीं॑णसा ।

हृ॒दा वी॒ड्व॑धारयः ॥९

ए॒ता । च्यौ॒त्नानिं॑ । ते॒ । कृ॒ता । वर्षिं॑ष्ठानि । परीं॑णसा ।

हृ॒दा । वी॒ळु । अ॒धा॒र॒य॒ः ॥९

एता । च्यौत्नानि । ते । कृता । वर्षिष्ठानि । परीणसा ।

हृदा । वीळु । अधारयः ॥९

हे इन्द्र “ते त्वया “एता एतानि पुरतः सर्वैर्दृश्यमानानि “वर्षिष्ठानि अतिशयेन प्रवृद्धानि “परीणसा परितो नतानि अत एव “च्यौत्नानि इति भावः । भूमेः कीलवद्धारणाय "कृता कृतानि । पर्वतास्त्वया कृता इत्यर्थः । या यानि 'हृदा बुद्ध्या "वीळु स्थिराणि “अधारयः । बुद्ध्या कर्तव्यानीति यान्यधारयः तानीमानीति ॥

विश्वेत्ता विष्णु॒राभ॑रदुरुक्र॒मस्त्वेषि॑तः ।

श॒तं म॑हि॒षान्क्षी॑रपा॒कमो॑द॒नं व॑रा॒हमिं॒द्र॑ एमु॒षं ॥१०

विश्वा॑ । इत् । ता । विष्णुः॑ । आ । अ॒भ॒र॒त् । उ॒रु॒ऽक्र॒मः । त्वाऽइ॑षितः ।

श॒तम् । म॒हि॒षान् । क्षी॒र॒ऽपा॒कम् । ओ॒द॒नम् । व॒रा॒हम् । इन्द्रः॑ । ए॒मु॒षम् ॥१०

विश्वा । इत् । ता । विष्णुः । आ । अभरत् । उरुऽक्रमः । त्वाऽइषितः ।

शतम् । महिषान् । क्षीरऽपाकम् । ओदनम् । वराहम् । इन्द्रः । एमुषम् ॥१०

अस्या ऋचो नैरुक्तैतिहासिकमतभेदेन द्विधा योजना । नैरुक्तपक्षे तावत् । हे इन्द्र “ता तानि यानि त्वया स्रष्टव्यान्युदकानि सन्ति तानि “विष्णुः व्यापनशील आदित्यः “आभरत् आभरति । लोकाय प्रयच्छतीत्यर्थः । कीदृशो विष्णुः । “उरुक्रमः बहुगतिः । किं स्वविरोधेन नेत्याह । “त्वेषितः त्वया प्रेरितः । न केवलमुदकान्येव अपि च “शतं “महिषान् शतसंख्याकान् पशून् । महिषशब्दो गवादेरप्युपलक्षकः । अथवा शतशब्दोऽपरिमितवचनो महिष इति महन्नाम । असंख्यातान् महतो यज्ञान् यजमानेभ्य आभरत् ददातीत्यर्थः । किंच “क्षीरपाकं क्षीरपक्वम् “ओदनं पायसम् । एतच्चरुपुरोडाशादेरुपलक्षकम् । तद्यजमानेभ्य आभरत् । अथवा सर्वार्थं वृष्टिप्रदानद्वारोदनं प्राहरत् । किंच “इन्द्रः “वराहं जलपूर्णं मेघं हन्तीति शेषः । कीदृशं तम् । “एमुषम् । आ इत्यस्य स्थाने छान्दस एकारः । आमुषमुदकस्य मोषकमित्यर्थः । निरुक्तपक्ष एवम् । ऐतिहासिकपक्षे चरकब्राह्मण इतिहास आम्नायते । विष्णुर्यज्ञः । स देवेभ्य आत्मानमन्तरधात् । तमन्यदेवता नाविदन्निन्द्रस्त्ववेत् । स इन्द्रमब्रवीत्को भवानिति । तमिन्द्रः प्रत्यब्रवीदहं दुर्गाणामसुराणां च हन्ता भवांस्तु क इति । सोऽब्रवीदहं दुर्गादाहर्ता त्वं तु यदि दुर्गाणामसुराणां हन्ता ततोऽयं वराहो वाममुष एकविंशत्याः पुरां पारेऽश्ममयीनां वसति तस्मिन्नसुराणां वसु वाममस्ति तमिमं जहीति । तस्येन्द्रस्ताः पुरो भित्त्वा हृदयमविध्यत्। अधि तत्र यदासीत्तद्विष्णुराहरदिति । सोऽयमितिहासः अस्येदु मातुः सवनेषु ( ऋ. सं. १. ६१. ७ ) ‘ विश्वेत्ता विष्णुः' इत्याभ्यां प्रतिपादितः । तयोर्मध्ये ‘अस्येदु मातुः' इत्यत्र विष्णुना हे इन्द्र त्वं दुर्गाणां हन्तेत्यात्मानं कथयसि तर्हि वाममुषं वराहमसुरं जहीत्युक्तार्थो ‘ विध्यद्वराहम्' इति पादेन प्रतिपादितः । इन्द्रेण च विष्णो त्वं दुर्गादाहर्तेति ब्रूषे मया पुराणि जितान्यसुरश्च घातितस्तस्य वामं वस्वानयेत्युक्तो विष्णुमूर्तिस्तस्य वराहासुरस्य धनं मुमोष । सोऽर्थः ‘मुषायद्विष्णुः पचतम्' इति पादेन सूचितः । स किं पुनर्मुषितवानिति तदत्रोच्यते ' विश्वेत्ता' इति । हे इन्द्र त्वेषितस्त्वया प्रेरितो विष्णुर्यज्ञरूपी त्वेषितस्त्वं दुर्गादाहर्ता किल तर्हि त्वं तस्य धनान्याहरेति त्वया प्रेरितः सन्नुरुक्रमो भूत्वा विश्वेत्ता यानि त्वयाहर्तव्यानीत्युक्तानि यानि च तत्र स्थितानि तानि सर्वाण्याभरत् आभरतु । कानि तानीति । शतं महिषानपरिमितान् प्रशस्तान् पदार्थान् तेषां वाहनरूपान् महिषान् वा क्षीरपाकमोदनं च पक्वमात्रमेवौदनं चाभरत् ।' विध्यद्वराहम्' इत्यत्रोक्तोऽर्थश्च चरमपादेनोच्यते । इन्द्रस्तु वराहं वराहारं स्वीकृतासुरसर्वस्वं वराहरूपिणं वैमुषमेमुषनामानमथवैमुषं धनानामामोषकं वराहमसुरं हृदयेऽविध्यदिति शेषः ॥

तु॒वि॒क्षं ते॒ सुकृ॑तं सू॒मयं॒ धनुः॑ सा॒धुर्बु॒न्दो हि॑र॒ण्ययः॑ ।

उ॒भा ते॒ बा॒हू रण्या॑ सुसं॑स्कृत ऋदू॒पे चि॑दृदू॒वृधा॑ ॥११

तु॒वि॒ऽक्षम् । ते॒ । सुऽकृ॑तम् । सु॒ऽमय॑म् । धनुः॑ । सा॒धुः । बु॒न्दः । हि॒र॒ण्ययः॑ ।

उ॒भा । ते॒ । बा॒हू इति॑ । रण्या॑ । सुऽसं॑स्कृता । ऋ॒दु॒ऽपे । चि॒त् । ऋ॒दु॒ऽवृधा॑ ॥११

तुविऽक्षम् । ते । सुऽकृतम् । सुऽमयम् । धनुः । साधुः । बुन्दः । हिरण्ययः ।

उभा । ते । बाहू इति । रण्या । सुऽसंस्कृता । ऋदुऽपे । चित् । ऋदुऽवृधा ॥११

'एषा निरुक्त एकमपि पदं (अ)विहाय यास्केन व्याख्याता । तदेव लिख्यते- तुविक्षं बहुविक्षेपं महाविक्षेपं वा ते सुकृतं सूमयं सुसुखं धनुः साधयिता ते बुन्दो हिरण्मयः । उभौ ते बाहू रण्यौ रमणीयौ सांग्राम्यौ वर्दूपे अर्दनपातिनौ गमनपातिनो मर्मण्यर्दनवेधिनौ गमनवेधिनौ वा ' (निरु. ६. ३३ ) इति ॥ ॥ ३० ॥

---

**टिप्पणी**

८.७७.१० -- वराहोपरि टिप्पणी (http://puranastudy.byethost14.com/pur_index26/varaah2.htm)

८.७७.१० एमुषम् --

श्रीवसिष्ठ उवाच । पूर्वमेव मया प्रोक्तं राम किं नावबुध्यसे । पूवापरविचारार्हा शेमुषी क्व गता तव ।। २ यदिदं हि शरीरादि जगत्स्थावरजङ्गमम् । आभासमात्रमेवेतदसत्स्वप्नमिवोत्थितम् - योगवासिष्ठः ४.४४.२ अत्र शेमुषी बुद्धिः श - अज्ञानस्य हारका बुद्धिरस्ति। एवमेव, पुराणेषु एं सरस्वतीबीजमस्ति। यः ज्ञानस्य हरणं करोति, तत् एमुषः अस्ति।

# ऋग्वेदः सूक्तं ८.७८


ऋग्वेदः - मण्डल ८

← सूक्तं ८.७७ | सूक्तं ८.७८ | सूक्तं ८.७९ →

कुरुसुतिः काण्वः


दे. इन्द्रः। गायत्री, १० बृहती ।

---

पुरोळाशं नो अन्धस इन्द्र सहस्रमा भर ।

शता च शूर गोनाम् ॥१॥

आ नो भर व्यञ्जनं गामश्वमभ्यञ्जनम् ।

सचा मना हिरण्यया ॥२॥

उत नः कर्णशोभना पुरूणि धृष्णवा भर ।

त्वं हि शृण्विषे वसो ॥३॥

नकीं वृधीक इन्द्र ते न सुषा न सुदा उत ।

नान्यस्त्वच्छूर वाघतः ॥४॥

नकीमिन्द्रो निकर्तवे न शक्रः परिशक्तवे ।

विश्वं शृणोति पश्यति ॥५॥

स मन्युं मर्त्यानामदब्धो नि चिकीषते ।

पुरा निदश्चिकीषते ॥६॥

क्रत्व इत्पूर्णमुदरं तुरस्यास्ति विधतः ।

वृत्रघ्नः सोमपाव्नः ॥७॥

त्वे वसूनि संगता विश्वा च सोम सौभगा ।

सुदात्वपरिह्वृता ॥८॥

त्वामिद्यवयुर्मम कामो गव्युर्हिरण्ययुः ।

त्वामश्वयुरेषते ॥९॥

तवेदिन्द्राहमाशसा हस्ते दात्रं चना ददे ।

दिनस्य वा मघवन्सम्भृतस्य वा पूर्धि यवस्य काशिना ॥१०॥

**सायणभाष्यम्**

' पुरोळाशं नः' इति दशर्चं नवमं सूक्तं काण्वस्य कुरुसुतेरार्षम् । आद्या नव गायत्र्यो दशमी बृहती । इन्द्रो देवता । तथा चानुक्रान्तं-' पुरोळाशं दश बृहत्यन्तम्' इति । सूक्तविनियोगो लैङ्गिकः । महाव्रते निष्केवल्ये गायत्रतृचाशीतावाद्यास्तिस्र ऋचः । तथा च सूत्रितं - ' पुरोळाशं नो अन्धस इति तिस्रः ' ( ऐ. आ. ५. २. ३ ) इति ॥

पु॒रो॒ळाशं॑ नो॒ अन्ध॑स॒ इन्द्र॑ स॒हस्र॒मा भ॑र ।

श॒ता च॑ शू॒र॒ गोना॑म् ॥१

पु॒रो॒ळाश॑म् । न॒: । अन्ध॑सः । इन्द्र॑ । स॒हस्र॑म् । आ । भ॒र॒ ।

श॒ता । च॒ । शू॒र॒ । गोना॑म् ॥१

पुरोळाशम् । नः । अन्धसः । इन्द्र । सहस्रम् । आ । भर ।

शता । च । शूर । गोनाम् ॥१

हे “शूर “इन्द्र “पुरोळाशं पुरो दीयमानमेतत्संज्ञकम् “अन्धसः अन्नं स्वीकृत्य “गोनां गवां “सहस्रं “शता शतानि “च “नः अस्मभ्यम् “आ “भर आहर। अथवा नोऽस्मभ्यं पुरतो दीयमानमन्धसोऽन्धो व्यञ्जनं सहस्रं सहस्रसंख्याकं गोसहस्रं चाहरेति योज्यम्

आ नो॑ भर॒ व्यञ्ज॑नं॒ गामश्व॑म॒भ्यञ्ज॑नम् ।

सचां म॒ना हिर॒ण्ययां ॥२

आ । न॒ः । भ॒र॒ । वि॒ऽअञ्जंनम् । गाम् । अश्वंम् । अ॒भि॒ऽअञ्जंनम् ।

सचां । म॒ना । हि॒र॒ण्ययां ॥२

आ । नः । भर । विऽअञ्जनम् । गाम् । अश्वम् । अभिऽअञ्जनम् ।

सचा । मना । हिरण्यया ॥२

हे इन्द्र त्वं "नः अस्मभ्यं "व्यञ्जनं "गामश्वमभ्यञ्जनं तैलं च "आ "भर। "मना मननीयानि "हिरण्यया हिरण्मयान्युपकरणानि "सचा सहाभरेति ॥

उ॒त नंः कर्ण॒शोभंना पु॒रूणिं धृष्ण॒वा भंर ।

त्वं हि शृंण्वि॒षे वंसो ॥३

उ॒त । न॒ः । क॒र्ण॒ऽशोभंना । पु॒रूणिं । धृ॒ष्णो॒ इतिं । आ । भ॒र॒ ।

त्वम् । हि । शृ॒ण्वि॒षे । व॒सो॒ इतिं ॥३

उत । नः । कर्णऽशोभना । पुरूणि । धृष्णो इति । आ । भर ।

त्वम् । हि । शृण्विषे । वसो इति ॥३

"उत अपि च "नः अस्मभ्यं "कर्णशोभना कर्णाभरणानि "पुरूणि बहूनि "आ "भर । हे "धृष्णो धर्षकेन्द्र "वसो वासयितरिन्द्र "त्वं "हि खलु "शृण्विषे श्रूयसे । किमिति । उदारोऽयमिन्द्र इति ॥

नकीं वृधी॒क इंन्द्र ते॒ न सु॒षा न सु॒दा उ॒त ।

नान्यस्त्वच्छूंर वा॒घतंः ॥४

नकींम् । वृ॒धी॒कः । इ॒न्द्र॒ । ते॒ । न । सु॒ऽसाः । न । सु॒ऽदाः । उ॒त ।

न । अ॒न्यः । त्वत् । शू॒र॒ । वा॒घतंः ॥४

नकीम् । वृधीकः । इन्द्र । ते । न । सुऽसाः । न । सुऽदाः । उत ।

न । अन्यः । त्वत् । शूर । वाघतः ॥४

हे “इन्द्र “ते त्वत्तोऽन्यः कश्चित् “वृधीकः वर्धयिता "नकीं नैव । तथा “सुषाः सुष्ठु संभक्ता संग्रामादौ त्वत्तोऽन्यः “न । “उत अपि च "सुदाः सुदाता “न । तथा हे “शूर “त्वत् त्वत्तोऽन्यः “वाघतः । ऋत्विग्नामैतत् । ऋत्विजो यजमानस्य नेता “नान्यः अस्ति त्वामृते ।।

नकी॒मिन्द्रो॒ निक॑र्तवे॒ न श॒क्रः परिं॑शक्तवे ।

विश्वं॑ शृणोति॒ पश्य॑ति ॥५

नकी॑म् । इन्द्रः॑ । निऽक॑र्तवे । न । श॒क्रः । परिं॑ऽशक्तवे ।

विश्व॑म् । शृ॒णो॒ति॒ । पश्य॑ति ॥५

नकीम् । इन्द्रः । निऽकर्तवे । न । शक्रः । परिऽशक्तवे ।

विश्वम् । शृणोति । पश्यति ॥५

अयम् “इन्द्रः “निकर्तवे निकर्तुं “नकीं नैव शक्यः । तथा “शक्रः शक्तोऽयं "परिशक्तवे” परिभावाय “न शक्यत इति । स तु “विश्वं “शृणोति “पश्यति च ॥ ॥ ३१ ॥ स मन्यु मनामदब्धो नि चिकीषते । पुरा निदर्थिकीषते ॥ ६ ॥

स म॒न्युं मर्त्या॑ना॒मद॑ब्धो॒ नि चिं॑कीषते ।

पु॒रा नि॒दश्चिं॑कीषते ॥६

सः । म॒न्युम् । मर्त्या॑नाम् । अद॑ब्धः । नि । चि॒की॒ष॒ते॒ ।

पु॒रा । नि॒दः । चि॒की॒ष॒ते॒ ॥६

सः । मन्युम् । मर्त्यानाम् । अदब्धः । नि । चिकीषते ।

पुरा । निदः । चिकीषते ॥६

“सः इन्द्रः “मन्युं क्रोधम् । केषाम् । “मर्त्यानाम् । “अदब्धः केनाप्यहिंसितः सन् “नि “चिकीषते निकरोति । किं मन्यु प्राप्यैव नेत्याह । “निदः निन्दायाः “पुरा पूर्वमेव “चिकीषते । यदा तं निन्दितुमिच्छति कश्चित्ततः पूर्वमेव तं निकरोतीत्यर्थः ॥

क्रत्व॒ इत्पू॒र्णमु॒दरं॑ तु॒रस्या॑स्ति विध॒तः ।

वृ॒त्र॒घ्नः सोम॑पाव्न॑ः ॥७

क्रत्वः॑ । इत् । पू॒र्णम् । उ॒दर॑म् । तु॒रस्य॑ । अ॒स्ति॒ । वि॒ध॒तः ।

वृ॒त्र॒ऽघ्नः । सो॒म॒ऽपाव्नः॑ ॥७

क्रत्वः । इत् । पूर्णम् । उदरम् । तुरस्य । अस्ति । विधतः ।

वृत्रऽघ्नः । सोमऽपाव्नः ॥७

"तुरस्य त्वरमाणस्य "वृत्रघ्नः वृत्रं हतवतः "सोमपाव्नः सोमपातुः "उदरं "क्रत्व "इत् कर्मणैव "पूर्णम् "अस्ति भवति । कस्य कर्मणेति उच्यते । "विधतः परिचरतो यजमानस्य । यतः परिचरणाभावे तस्य कुक्षिपूर्त्यभावोऽतस्तत्पूर्तये परिचरतेति शेषः ।।

त्वे वसू॑नि॒ संग॑ता॒ विश्वा॑ च सोम॒ सौभ॑गा ।

सु॒दात्वप॑रिह्वृता ॥८

त्वे इति॑ । वसू॑नि । सम्ऽग॑ता । विश्वा॑ । च॒ । सो॒म॒ । सौभ॑गा ।

सु॒ऽदातु॑ । अप॑रिऽह्वृता ॥८

त्वे इति । वसूनि । सम्ऽगता । विश्वा । च । सोम । सौभगा ।

सुऽदातु । अपरिऽह्वृता ॥८

हे इन्द्र "त्वे त्वयि "वसूनि धनान्यस्मदिष्टानि "संगता संगतानि । तथा हे "सोम सोमवन्निन्द्र त्वयि "विश्वा सर्वाणि "सौभगा सौभाग्यानि संगतानि । तथा "सुदातु सुदानानि "अपरिह्वृता अकुटिलानि । अतस्तानि कुर्विति भावः । यद्वा । इन्द्रः सोमं पीत्वा सोम इत्यभिहितः सोमश्रुतेः ॥

त्वामिद्य॑व॒युर्मम॒ कामो॑ ग॒व्युर्हि॑रण्य॒युः ।

त्वाम॑श्व॒युरेष॑ते ॥९

त्वाम् । इत् । य॒व॒ऽयुः । मम॑ । कामः॑ । ग॒व्युः । हि॒र॒ण्य॒ऽयुः ।

त्वाम् । अ॒श्व॒ऽयुः । आ । ई॒ष॒ते॒ ॥९

त्वाम् । इत् । यवऽयुः । मम । कामः । गव्युः । हिरण्यऽयुः ।

त्वाम् । अश्वऽयुः । आ । ईषते ॥९

"त्वामित् त्वामेव "एषते । किम् । "मम "कामः । स कीदृशः । "यवयुः यवेच्छुः सन्नेषते । तथा "गव्युः सन्नेषते । तथा "हिरण्ययुः च सन्नेषते । तथा "अश्वयुः च सन्नेषते । तं काममाप्तेच्छं कुर्विति भावः ॥

तवेदि॑न्द्रा॒हमा॒शसा॒ हस्ते॒ दात्रं॑ च॒ना द॑दे ।

दि॒नस्य॑ वा मघव॒न्सम्भृ॑तस्य वा पू॒र्धि यव॑स्य का॒शिना॑ ॥१०

तव॑ । इत् । इ॒न्द्र॒ । अ॒हम् । आ॒ऽशसा॑ । हस्ते॑ । दात्र॑म् । च॒न । आ । द॒दे॒ ।

दि॒नस्य॑ । वा॒ । म॒घ॒ऽव॒न् । सम्ऽभृ॑तस्य । वा॒ । पू॒र्धि । यव॑स्य । का॒शिना॑ ॥१०

तव । इत् । इन्द्र । अहम् । आऽशसा । हस्ते । दात्रम् । चन । आ । ददे ।

दिनस्य । वा । मघऽवन् । सम्ऽभृतस्य । वा । पूर्धि । यवस्य । काशिना ॥१०

हे "इन्द्र “तवेत् तवैव “आशसा आशंसनेन त्वमस्मदीयं क्षेत्रं यवसमृद्धं करोषीत्याशंसनेन “हस्ते “दात्रं "चन लवनसाधनं दात्रमपि “आ “ददे स्वीकरोमि । किमनेन प्रयासेन । “दिनस्य “वा पूर्वमेव छिन्नस्य वा यवस्य "संभृतस्य “वा पूर्वमेव छित्त्वा निष्कृतस्य राशीकृतस्य वा “यवस्य “काशिना मुष्टिना “पूर्धि पूरय । आशंसनं देहि च ॥ ॥ ३२ ॥

# ऋग्वेदः सूक्तं ८.७९



दे. सोमः। गायत्री, ९ अनुष्टुप्।

अयं कृत्नुरगृभीतो विश्वजिदुद्भिदित्सोमः ।

ऋषिर्विप्रः काव्येन ॥१॥

अभ्यूर्णोति यन्नग्नं भिषक्ति विश्वं यत्तुरम् ।

प्रेमन्धः ख्यन्निः श्रोणो भूत् ॥२॥

त्वं सोम तनूकृद्भ्यो द्वेषोभ्योऽन्यकृतेभ्यः ।

उरु यन्तासि वरूथम् ॥३॥

त्वं चित्ती तव दक्षैर्दिव आ पृथिव्या ऋजीषिन् ।

यावीरघस्य चिद्द्वेषः ॥४॥

अर्थिनो यन्ति चेदर्थं गच्छानिद्ददुषो रातिम् ।

ववृज्युस्तृष्यतः कामम् ॥५॥

विदद्यत्पूर्व्यं नष्टमुदीमृतायुमीरयत् ।

प्रेमायुस्तारीदतीर्णम् ॥६॥

सुशेवो नो मृळयाकुरदृप्तक्रतुरवातः ।

भवा नः सोम शं हृदे ॥७॥

मा नः सोम सं वीविजो मा वि बीभिषथा राजन् ।

मा नो हार्दि त्विषा वधीः ॥८॥

अव यत्स्वे सधस्थे देवानां दुर्मतीरीक्षे ।

राजन्नप द्विषः सेध मीढ्वो अप स्रिधः सेध ॥९॥

**सायणभाष्यम्**

' अयं कृत्नुः' इति नवर्चं दशमं सूक्तम् । अत्रेयमनुक्रमणिका - अयं कृत्नुर्नव कृत्नुर्भार्गवः सौम्यमन्त्यानुष्टुप् ' इति । भार्गवः कृत्नुर्ऋषिः । नवम्यनुष्टुप् । अष्टौ गायत्र्यः । सोमो देवता । विनियोगो लैङ्गिकः ॥

अ॒यं कृ॒त्नुरगृ॑भीतो विश्व॒जिदु॒द्भिदित्सोम॑ः ।

ऋषि॒र्विप्र॒ः काव्ये॑न ॥१

अ॒यम् । कृ॒त्नुः । अगृ॑भीतः । वि॒श्व॒ऽजित् । उ॒त्ऽभित् । इत् । सोम॑ः ।

ऋषि॑ः । विप्र॑ः । काव्ये॑न ॥१

अयम् । कृत्नुः । अगृभीतः । विश्वऽजित् । उत्ऽभित् । इत् । सोमः ।

ऋषिः । विप्रः । काव्येन ॥१

“अयं “सोमः “कृत्नुः कर्ता सर्वस्य “अगृभीतः अन्यैरगृहीतः “विश्वजित् सर्वस्य जेता “उद्भित् फलस्योद्भेदकः । अथवा विश्वजिदुद्भिदौ सोमयागौ। तयोर्निष्पादकत्वात्तद्रूपः । “ऋषिः ज्ञानवान् “विप्रः मेधावी विप्रवत् पूज्यो विशेषेण पूरको वा । एवंमहानुभावः सोमः "काव्येन स्तोत्रेण स्तुत्यो भवतीति शेषः ।।

अ॒भ्यू॑र्णोति॒ यन्न॒ग्नं भि॒षक्ति॒ विश्वं॒ यत्तु॒रम् ।

प्रेम॒न्धः ख्य॒न्निः श्रो॒णो भू॑त् ॥२

अ॒भि । ऊ॒र्णो॒ति॒ । यत् । न॒ग्नम् । भि॒षक्ति॑ । विश्व॑म् । यत् । तु॒रम् ।

प्र । ई॒म् । अ॒न्धः । ख्य॒त् । निः । श्रो॒णः । भू॒त् ॥२

अभि । ऊर्णोति । यत् । नग्नम् । भिषक्ति । विश्वम् । यत् । तुरम् ।

प्र । ईम् । अन्धः । ख्यत् । निः । श्रोणः । भूत् ॥२

अयं सोमः "यन्नग्नम् अस्ति तत् "अभ्यूर्णोति आच्छादयति । यन्नग्नमिव विफलं वर्तते तदाच्छादयति फलेन । अथवा वस्त्रं जनयन्नाच्छादयति । तथा "यत् "तुरम् आतुरं रुग्णं "विश्वं तत् "भिषक्ति भिषज्यति। यज्ञद्वारा स्वर्गसाधनेनौषधरूपेण च शरीरसिद्धिसाधनश्च । "अन्धः सन् अन्धोऽपि "प्र "ख्यत् पश्यति । "श्रोणः अपि पङ्गुरपि "निः "भूत् निर्भवति निर्गच्छति ॥

त्वं सो॑म तनू॒कृद्भ्यो॒ द्वेषो॑भ्यो॒ऽन्यकृ॑तेभ्यः ।

उ॒रु य॒न्तासि॒ वरू॑थम् ॥३

त्वम् । सो॒म॒ । त॒नू॒कृत्ऽभ्यः॑ । द्वेषः॑ऽभ्यः । अ॒न्यऽकृ॑तेभ्यः ।

उ॒रु । य॒न्ता । अ॒सि॒ । वरू॑थम् ॥३

त्वम् । सोम । तनूकृत्ऽभ्यः । द्वेषःऽभ्यः । अन्यऽकृतेभ्यः ।

उरु । यन्ता । असि । वरूथम् ॥३

हे सोम "त्वं "तनूकृद्यःकृ कृशीकुर्वद्भ्यः । अथवाङ्गानां विच्छेदकेभ्यः "अन्यकृतेभ्यः "द्वेषोभ्यः शत्रुकृतेभ्योऽप्रियेभ्यः । कृत्याभ्य इत्यर्थः । "वरूथं वरकं रक्षणम् "उरु "यन्तासि भवसि स्तोतृणाम्। 'अन्यकृतानि हि रक्षांसि ' इति ब्राह्मणम् ॥

त्वं चि॒त्ती तव॒ दक्षै॑र्दि॒व आ पृ॑थि॒व्या ऋ॑जीषिन् ।

यावी॑र॒घस्य॑ चि॒द्द्वेषः॑ ॥४

त्वम् । चि॒त्ती । तव॑ । दक्षैः॑ । दि॒वः । आ । पृ॒थि॒व्याः । ऋ॒जी॒षि॒न् ।

यावीः॑ । अ॒घस्य॑ । चि॒त् । द्वेषः॑ ॥४

त्वम् । चित्ती । तव । दक्षैः । दिवः । आ । पृथिव्याः । ऋजीषिन् ।

यावीः । अघस्य । चित् । द्वेषः ॥४

हे "ऋजीषिन् तृतीयसवनगतेनर्जीषेण तद्वन् सोम "त्वं "तव "चित्ती चित्त्या प्रज्ञया "दक्षैः बलैश्च "दिव "आ दिवश्च । आ इति चार्थे । "पृथिव्याः आ पृथिव्याश्च सकाशात् "अघस्य "चित् अस्माकमाहन्तुरपि "द्वेषः शत्रोः कृत्यां "यावीः पृथक्कुरु ॥

अ॒र्थिनो॑ यन्ति॒ चेदर्थं॒ गच्छा॒निद्द॒दुषो॑ रा॒तिम् ।

व॒वृ॒ज्युस्तृष्य॑त॒ः काम॑म् ॥५

अ॒र्थिन॑ः । यन्ति॑ । च॒ । इत् । अर्थ॑म् । गच्छा॑न् । इत् । द॒दुष॑ः । रा॒तिम् ।

व॒वृ॒ज्युः । तृष्य॑तः । काम॑म् ॥५

अर्थिनः । यन्ति । च । इत् । अर्थम् । गच्छान् । इत् । ददुषः । रातिम् ।

ववृज्युः । तृष्यतः । कामम् ॥५

"अर्थिनः धनानि कामयमानाः "यन्ति "चेत् यन्ति च "अर्थं प्रति । गत्वा च "ददुषः दातुः "रातिं दानं "गच्छानित् गच्छन्ति च । गतेषु मध्ये यं हे सोम त्वमनुगृह्णासि तस्य “तृष्यतः भिक्षमाणस्य "कामं "ववृज्युः । पुनः कामानावर्जयन्ति । तावत्पर्यन्तं पूरयन्तीत्यर्थः ॥ ॥ ३३ ॥

वि॒दद्यत्पू॒र्व्यं न॒ष्टमुदी॑मृता॒युमी॑रयत् ।

प्रेमायु॑स्तारी॒दती॑र्णम् ॥६

वि॒दत् । यत् । पू॒र्व्यम् । न॒ष्टम् । उत् । ई॒म् । ऋ॒त॒ऽयुम् । ई॒र॒य॒त् ।

प्र । ई॒म् । आयु॑ः । ता॒री॒त् । अती॑र्णम् ॥६

विदत् । यत् । पूर्व्यम् । नष्टम् । उत् । ईम् । ऋतऽयुम् । ईरयत् ।

प्र । ईम् । आयुः । तारीत् । अतीर्णम् ॥६

"यत् यदा "पूर्व्यं पुराणं "नष्टं स्वकीयं धनं "विदत् लभते नष्टधनः "ईम् एनम् "ऋतायुं नष्टधनलाभार्थं यज्ञकामम् "उत् "ईरयत् प्रेरयति । धनं साधयतीत्यर्थः ॥

सु॒शेवो॑ नो मृळ॒याकु॒रदृ॑प्तक्रतुरवा॒तः ।

भवा॑ नः सोम॒ शं हृ॒दे ॥७

सु॒ऽशेव॑ः । न॒ः । मृ॒ळ॒याकु॑ः । अदृ॑प्तऽक्रतुः । अ॒वा॒तः ।

भव॑ । न॒ः । सो॒म॒ । शम् । हृ॒दे ॥७

सुऽशेवः । नः । मृळयाकुः । अदृप्तऽक्रतुः । अवातः ।

भव । नः । सोम । शम् । हृदे ॥७

हे "सोम पीतस्त्वं "नः अस्माकं "हृदे हृदये वर्तमानः "सुशेवः सुसुखः "मृळयाकुः सुखयिता "अदृप्तक्रतुः अप्रमत्तप्रज्ञः "अवातः अगमनश्च [ तव हृदये पीताय हृदय ? ] सं (?"शं) भव । अपरो नः पूरणः ।।

मा नः॑ सोम॒ सं वी॑विजो॒ मा वि बी॑भिषथा राजन् ।

मा नो॒ हार्दि॑ त्वि॒षा व॑धीः ॥८

मा । न॒ः । सो॒म॒ । सम् । वी॒वि॒जः॒ । मा । वि । बी॒भि॒ष॒थाः॒ । रा॒ज॒न् ।

मा । न॒ः । हार्दि॑ । त्वि॒षा । व॒धीः॒ ॥८

मा । नः । सोम । सम् । वीविजः । मा । वि । बीभिषथाः । राजन् ।

मा । नः । हार्दि । त्विषा । वधीः ॥८

हे "सोम पीतस्त्वं "नः अस्मान् "मा "सं "वीविजः । चलिताङ्गान् मा कार्षीः । हे "राजन् सोम अस्मान् "मा "वि "बीभिषथाः भीतान् मा कुरु । "नः अस्माकं हार्दि हृदयं "त्विषा दीप्त्या "मा "वधीः ॥

अव॒ यत्स्वे स॒धस्थे॑ दे॒वानां॑ दुर्म॒तीरीक्षे॑ ।

राज॒न्नप॒ द्विषः॑ सेध॒ मीढ्वो॒ अप॒ स्रिधः॑ सेध ॥९

अव॑ । यत् । स्वे । स॒धऽस्थे॑ । दे॒वाना॑म् । दुः॒ऽम॒तीः । ईक्षे॑ ।

राज॑न् । अप॑ । द्विषः॑ । से॒ध॒ । मीढ्वः॑ । अप॑ । स्रिधः॑ । से॒ध॒ ॥९

अव । यत् । स्वे । सधऽस्थे । देवानाम् । दुःऽमतीः । ईक्षे ।

राजन् । अप । द्विषः । सेध । मीढ्वः । अप । स्रिधः । सेध ॥९

"स्वे "सधस्थे स्वकीये सहस्थाने गृहे "देवानां "दुर्मतीः दुर्मतयो न प्रविशन्त्विति । "यत् यदा "अव ईक्षे अहं त्वं वेक्षसे तदा हे "राजन् "द्विषः अस्मद्वेष्टॄन "अप "सेध। हे "मीड्वः सोमरसस्य सेक्तः "स्रिधः हिंसकान् "अप "सेध । हिन्धीत्यर्थः ॥ ॥ ३४ ॥

# ऋग्वेदः सूक्तं ८.८०

ऋग्वेदः - मण्डल ८
← सूक्तं ८.७९ सूक्तं ८.८० सूक्तं ८.८१ →
एकद्यूर्नौधसः।

दे. इन्द्रः, १० देवाः । गायत्री, १० त्रिष्टुप्।

नह्यन्यं बळाकरं मर्डितारं शतक्रतो ।

त्वं न इन्द्र मृळय ॥१॥

यो नः शश्वत्पुराविथामृध्रो वाजसातये ।

स त्वं न इन्द्र मृळय ॥२॥

किमङ्ग रध्रचोदनः सुन्वानस्यावितेदसि ।

कुवित्स्विन्द्र णः शकः ॥३॥

इन्द्र प्र णो रथमव पश्चाच्चित्सन्तमद्रिवः ।

पुरस्तादेनं मे कृधि ॥४॥

हन्तो नु किमाससे प्रथमं नो रथं कृधि ।

उपमं वाजयु श्रवः ॥५॥

अवा नो वाजयुं रथं सुकरं ते किमित्परि ।

अस्मान्सु जिग्युषस्कृधि ॥६॥

इन्द्र दृह्यस्व पूरसि भद्रा त एति निष्कृतम् ।

इयं धीरृत्वियावती ॥७॥

मा सीमवद्य आ भागुर्वी काष्ठा हितं धनम् ।

अपावृक्ता अरत्नयः ॥८॥

तुरीयं नाम यज्ञियं यदा करस्तदुश्मसि ।

आदित्पतिर्न ओहसे ॥९॥

अवीवृधद्वो अमृता अमन्दीदेकद्यूर्देवा उत याश्च देवीः ।

तस्मा उ राधः कृणुत प्रशस्तं प्रातर्मक्षू धियावसुर्जगम्यात् ॥१०॥

**सायणभाष्यम्**

'नह्यन्यम्' इति दशर्चमेकादशं सूक्तम् । अत्रेयमनुक्रमणिका--' न ह्यन्यं दशैकद्यूर्नौधसो गायत्रेऽन्त्या दैवी त्रिष्टुप्' इति । एकद्यूर्नाम नोधसः पुत्र ऋषिः । अन्त्या त्रिष्टुप् । सा च देवदेवत्या शिष्टा गायत्र्य ऐन्द्र्यः । द्वितीये पर्याये मैत्रावरुणशस्त्र आदितोऽष्टर्चः । सूत्रितं च - ' नह्यन्यं बळाकरमित्यष्टौ ' (आश्व. श्रौ. ६. ४) इति । महाव्रते निष्केवल्ये गायत्रतृचाशीतावाद्या विनियुक्ता । तथा च पञ्चमारण्यके शौनकः -' नह्यन्यं बळाकरमित्येतां प्रत्यवदधाति' (ऐ. आ. ५, २. ३) इति ॥

न॒ह्य१॒॑न्यं ब॒ळाक॑रं मर्डि॒तारँ॑ शतक्रतो ।

त्वं न॑ इन्द्र मृळय ॥१

न॒हि । अ॒न्यम् । ब॒ळा । अक॑रम् । म॒र्डि॒तार॑म् । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो ।

त्वम् । न॒ः । इ॒न्द्र॒ । मृ॒ळ॒य॒ ॥१

नहि । अन्यम् । बळा । अकरम् । मर्डितारम् । शतक्रतो इति शतऽक्रतो ।

त्वम् । नः । इन्द्र । मृळय ॥१

हे शतक्रतो त्वत्तः "अन्यं “मर्डितारं सुखयितारं "बळा बट् सत्यं “न “अकरं न करोमि । तस्माद्धे “इन्द्र “त्वं “नः अस्मान् “मृळय ॥

यो न॒ः शश्व॑त्पु॒रावि॒थामृ॑ध्रो॒ वाज॑सातये ।

स त्वं नं इन्द्र मृळय ॥२

यः । न॒ः । शश्वं॑त् । पु॒रा । आविं॑थ । अमृं॑ध्रः । वाजं॑ऽसातये ।

सः । त्वम् । न॒ः । इ॒न्द्र॒ । मृ॒ळ॒य॒ ॥२

यः । नः । शश्वत् । पुरा । आविथ । अमृध्रः । वाजऽसातये ।

सः । त्वम् । नः । इन्द्र । मृळय ॥२

"यः "अमृधः अहिंसकः "नः अस्मान् "वाजसातये अन्नलाभाय "पुरा पूर्वम् "आविथ रक्षितवान् । हे "इन्द्र "स "त्वं "नः अस्मान् "शश्वत् सदा "मृळय सुखय ॥

किम॒ङ्ग रं॑ध्र॒चोदं॑नः सुन्वा॒नस्यां॑वि॒तेदं॑सि ।

कु॒वित्स्विं॑न्द्र ण॒ः शकं॑ः ॥३

किम् । अ॒ङ्ग । र॒ध्र॒ऽचोदं॑नः । सु॒न्वा॒नस्यं॑ । अ॒वि॒ता । इत् । अ॒सि॒ ।

कु॒वित् । सु । इ॒न्द्र॒ । न॒ः । शकः॑ ॥३

किम् । अङ्ग । रध्रऽचोदनः । सुन्वानस्य । अविता । इत् । असि ।

कुवित् । सु । इन्द्र । नः । शकः ॥३

हे "इन्द्र त्वं "रध्रचोदनः । रध्रं राधकं चोदयतीति रध्रचोदनः । तादृशस्त्वं "सुन्वानस्य "अवितेदसि रक्षक एव भवसि । अतः "नः अस्माकं "कुवित् बहु "सु सुष्ठु "शकः अशकः शक्तो भव। बहु धनं कुर्वित्वर्थः । अस्मान् वा बहु कुर्विति ।।

इन्द्र॒ प्र णो॒ रथं॑मव प॒श्चाच्चि॒त्सन्तं॑मद्रिवः ।

पु॒रस्तां॑देनं मे कृधि ॥४

इन्द्रं॑ । प्र । न॒ः । रथं॑म् । अ॒व॒ । प॒श्चात् । चि॒त् । सन्तं॑म् । अ॒द्रि॒ऽव॒ः ।

पु॒रस्तां॑त् । ए॒न॒म् । मे॒ । कृ॒धि॒ ॥४

इन्द्र । प्र । नः । रथम् । अव । पश्चात् । चित् । सन्तम् । अद्रिऽवः ।

पुरस्तात् । एनम् । मे । कृधि ॥४

हे “इन्द्र “नः “रथं “प्र “अव प्ररक्ष । कीदृशं रथम् । “पश्चाच्चित्सन्तम् । चिदप्यर्थे । अस्मत्समानरथानां पश्चाद्भूतमपि “एनं "मे रथं हे "अद्रिवः वज्रवन्निन्द्र “पुरस्तात् वर्तमानं “कृधि कुरु ॥

हन्तो॒ नु किमा॑ससे प्रथ॒मं नो॒ रथं॑ कृधि ।

उ॒प॒मं वा॑ज॒यु श्रव॑ः ॥५

हन्तो॒ इति॑ । नु । किम् । आ॒स॒से॒ । प्र॒थ॒मम् । न॒ः । रथ॑म् । कृ॒धि॒ ।

उ॒प॒ऽमम् । वा॒ज॒ऽयु । श्रव॑ः ॥५

हन्तो इति । नु । किम् । आससे । प्रथमम् । नः । रथम् । कृधि ।

उपऽमम् । वाजऽयु । श्रवः ॥५

हन्तेत्येतदादि मुख्यकृदामन्त्रितेन समानम् । “हन्त इन्द्र "नु इदानीं “किं त्वं तूष्णीम् “आससे । तत्र किं करोमीति चेदुच्यते । "नः “रथं "प्रथमं सर्वेषां मुख्यं “कृधि कुरु । “वाजयु अस्माकममिच्छत् “श्रवः अन्नं हविर्लक्षणम् “उपमम् । अन्तिकनामैतत् । तवान्तिकभूतं वर्तत इति शेषः । यस्मादेवं तस्माद्रथमस्मदीयं प्रथमं कृधीति ॥ ॥ ३५ ॥

अवा॑ नो वाज॒युं रथं॑ सु॒करं॑ ते॒ किमित्परि॑ ।

अ॒स्मान्सु जि॒ग्युष॑स्कृधि ॥६

अव॑ । न॒ः । वा॒ज॒ऽयुम् । रथ॑म् । सु॒ऽकर॑म् । ते॒ । किम् । इत् । परि॑ ।

अ॒स्मान् । सु । जि॒ग्युष॑ः । कृ॒धि॒ ॥६

अव । नः । वाजऽयुम् । रथम् । सुऽकरम् । ते । किम् । इत् । परि ।

अस्मान् । सु । जिग्युषः । कृधि ॥६

हे इन्द्र “नः “वाजयुम् अन्नेच्छुं “रथम् “अव रक्ष संग्रामे । “ते तव "किमित् किमपि सर्वकर्तव्यजातं "परि परितः “सुकरं सुखेन कर्तव्यम्। तव कर्तुमशक्यं न किंचिदस्ति । यस्मादेवं तस्मात् “सु "जिग्युषः सुष्ठु जेतॄन् कुरु संग्रामे ॥

इन्द्र॒ दृह्य॑स्व॒ पूर॑सि भ॒द्रा त॑ एति निष्कृ॒तम् ।

इ॒यं धीरृ॒त्विया॑वती ॥७

इन्द्र॑ । दृह्य॑स्व । पूः । अ॒सि॒ । भ॒द्रा । ते॒ । ए॒ति॒ । निः॒ऽकृ॒तम् ।

इ॒यम् । धीः । ऋ॒त्वियं॑ऽवती ॥७

इन्द्र । दृह्यस्व । पूः । असि । भद्रा । ते । एति । निःऽकृतम् ।

इयम् । धीः । ऋत्वियऽवती ॥७

हे “इन्द्र त्वं “दृह्यस्व दृढो भव संग्रामे । त्वं “पूरसि पुरमसि । यथा पुरमविचलितं तद्वत्त्वमसि । अथवा। अस्मदीये यज्ञे दृढो भव । त्वं पुनरन्ययज्ञजिगमिषुर्मा भूः । त्वं पूः पूरकः कामानामसि । किमत्र विद्यत इति चेदुच्यते । “निष्कृतं निष्कर्तारं “ते त्वां “भद्रा कल्याणी “इयं “धीः स्तुतिः क्रिया वा “ऋत्वियावती । ऋतुशब्दः कालोपलक्षकः । स्वकालोपेता सती “एति गच्छति । यद्वा । ते निष्कृतं स्थानमेति ॥

मा सीं॑मव॒द्य आ भा॑गु॒र्वी काष्ठा॑ हि॒तं धनं॑म् ।

अ॒पावृं॑क्ता अर॒त्नयंः ॥८

मा । सी॒म् । अ॒व॒द्ये । आ । भा॒क् । उ॒र्वी । काष्ठा॑ । हि॒तम् । धनं॑म् ।

अ॒प॒ऽआवृं॑क्ताः । अ॒र॒त्नयः॑ ॥८

मा । सीम् । अवद्ये । आ । भाक् । उर्वी । काष्ठा । हितम् । धनम् ।

अपऽआवृक्ताः । अरत्नयः ॥८

“मा अस्मान् “सीं सर्वतः “अवद्यः निन्दा “आ "भाक् माभजतु । प्राप्नोतु न कुतश्चित् । पापरहितान् कुर्वित्यर्थः। किंच "उर्वी “काष्ठा बह्वन्तरालमाज्यन्तः । ‘आज्यन्तोऽपि काष्ठोच्यते क्रान्त्वा स्थिता भवति' (निरु. २. १५) इति यास्कः । तत्र “हितं निहितं शत्रुसंबन्धि “धनम् अस्माकं भवत्वित्यर्थः । “अरत्नयः अरममाणाः शत्रवः "अपावृक्ताः सन्त्विति शेषः ॥

तु॒रीयं॒ नामं॑ य॒ज्ञियं॑ य॒दा कर॒स्तदुं॑श्मसि ।

आदित्पति॑र्न ओहसे ॥९

तु॒रीयं॑म् । नामं॑ । य॒ज्ञियं॑म् । य॒दा । करः॑ । तत् । उ॒श्म॒सि॒ ।

आत् । इत् । पतिः॑ । न॒ः । ओ॒ह॒से॒ ॥९

तुरीयम् । नाम । यज्ञियम् । यदा । करः । तत् । उश्मसि ।

आत् । इत् । पतिः । नः । ओहसे ॥९

हे इन्द्र त्वं “यज्ञियं यज्ञसंबन्धि “तुरीयं चतुर्थं “नाम "यदा “करः करोषि “तदुश्मसि कामयामहे । “आदित् अनन्तरमेव नामकामानन्तरमेव “पतिः पालकस्त्वं “नः अस्मान् “ओहसे वहसि प्रापयसि । नक्षत्रनाम गुह्यं नाम प्रकाशं नामेति त्रीणि नामानि सोमयाजीति तुरीयं नाम तच्च यज्ञियम् ।।

अवींवृधद्वो अमृता अमंन्दीदेकद्यूर्देवा उत याश्चं देवीः ।

तस्मां उ राधः कृणुत प्रशस्तं प्रातर्मक्षू धियावंसुर्जगम्यात् ॥१०

अवींवृधत् । वः । अमृताः । अमंन्दीत् । एकऽद्यूः । देवाः । उत । याः । च । देवीः ।

तस्मैं । ऊं इतिं । राधः । कृणुत । प्रऽशस्तम् । प्रातः । मक्षु । धियाऽवंसुः । जगम्यात् ॥१०

अवीवृधत् । वः । अमृताः । अमन्दीत् । एकऽद्यूः । देवाः । उत । याः । च । देवीः ।

तस्मै । ऊं इति । राधः । कृणुत । प्रऽशस्तम् । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥१०

इयं वैश्वदेवी । हे “देवाः हे “अमृताः अमरणाः “वः युष्मानयम् “अवीवृधत् वर्धयति स्तुत्या “अमन्दीत् तर्पयति सोमेन “एकद्यूः ऋषिरहम् । “उत अपि च हे “देवीः देव्यो देवपत्न्यः “याश्च यूयं स्थ युष्मानप्यवीवृधदमन्दीच्च । “तस्मै “राधः धनं “प्रशस्तं प्रवृद्धं “कृणुत कुरुन । “उ इति पूरण एवकारार्थो वा । “प्रातः प्रातरेव “मक्षु क्षिप्रं “धियावसुः कर्मधन इन्द्रः “जगम्यात् आगच्छतु । इन्द्रस्य देवस्वामित्वादाधिक्यद्योतनाय पुनरभिधानम् ॥ ।। ३६ ।। ।। ८ ।।

**टिप्पणी**

८.८०.४-६

रथोपरि पौराणिकसंदर्भाः (http://vedastudy.tripod.com/pur_index25/pva9.htm)

रथोपरि टिप्पणी (http://vedastudy.tripod.com/pur_index25/ratha.htm)

रथोपरि शोधलेखः (https://5da2e8952caa4.site123.me/)

# ऋग्वेदः सूक्तं ८.८१

**ऋग्वेदः - मण्डल ८**

← सूक्तं ८.८० | सूक्तं ८.८१ | सूक्तं ८.८२ →

कुसीदी काण्वः।

दे. इन्द्रः । गायत्री ।

---

आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय ।

महाहस्ती दक्षिणेन ॥१॥

विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् ।

तुविमात्रमवोभिः ॥२॥

नहि त्वा शूर देवा न मर्तासो दित्सन्तम् ।

भीमं न गां वारयन्ते ॥३॥

एतो न्विन्द्रं स्तवामेशानं वस्वः स्वराजम् ।

न राधसा मर्धिषन्नः ॥४॥

प्र स्तोषदुप गासिषच्छ्रवत्साम गीयमानम् ।

अभि राधसा जुगुरत् ॥५॥

आ नो भर दक्षिणेनाभि सव्येन प्र मृश ।

इन्द्र मा नो वसोर्निर्भाक् ॥६॥

उप क्रमस्वा भर धृषता धृष्णो जनानाम् ।

अदाशूष्टरस्य वेदः ॥७॥

इन्द्र य उ नु ते अस्ति वाजो विप्रेभिः सनित्वः ।

अस्माभिः सु तं सनुहि ॥८॥

सद्योजुवस्ते वाजा अस्मभ्यं विश्वश्चन्द्राः ।

वशैश्च मक्षू जरन्ते ॥९॥

**सायणभाष्यम्**

नवमेऽनुवाके त्रयोदश सूक्तानि । तत्र 'आ तू न इन्द्र' इति नवर्चं प्रथमं सूक्तं कण्वपुत्रस्य कुसीदिन आर्षं गायत्रमैन्द्रम् । तथा चानुक्रम्यते--- आ तू नो नव कुसीदी काण्वः' इति । महाव्रते निष्केवल्ये गायत्रतृचाशीतावेतदादिके द्वे सूक्ते । तथैव पञ्चमारण्यके सूत्रितं च शौनकेन - 'आ तू न इन्द्र क्षुमन्तमिति सूक्ते सूददोहाः' (ऐ. आ. ५. २. ३) इति । द्वितीये पर्याये मैत्रावणशस्त्र आद्यस्तृचः स्तोत्रियः । सूत्रितं च--- आ तू न इन्द्र क्षुमन्तमा प्र द्रव परावतः ' ( आश्व. श्रौ. ६. ४ ) इति ।

आ तू नं इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय ।

महाहस्ती दक्षिणेन ॥१

आ । तु । नः । इन्द्र । क्षुऽमन्तम् । चित्रम् । ग्राभम् । सम् । गृभाय ।

महाऽहस्ती । दक्षिणेन ॥१

आ । तु । नः । इन्द्र । क्षुऽमन्तम् । चित्रम् । ग्राभम् । सम् । गृभाय ।

महाऽहस्ती । दक्षिणेन ॥१

हे "इन्द्र "महाहस्ती महाहस्तवान् त्वं "तु तदानीमेव "नः अस्मभ्यं दातुं "क्षुमन्तं शब्दवन्तम् । स्तुत्यमित्यर्थः । "चित्रं चायनीयं "ग्राभं ग्राहकं ग्रहणार्हं वा धनं "दक्षिणेन हस्तेन "आ "सं "गृभाय आभिमुख्येन संगृहाण ॥

विद्मा हि त्वां तुविकूर्मिं तुविदेष्णं तुवीमघम् ।

तुविमात्रमवोभिः ॥२

वि॒द्म । हि । त्वा॒ । तु॒वि॒ऽकू॒र्मिम् । तु॒विऽदे॑ष्णम् । तु॒विऽम॑घम् ।

तु॒वि॒ऽमा॒त्रम् । अवः॑ऽभिः ॥२

विद्म । हि । त्वा । तुविऽकूर्मिम् । तुविऽदेष्णम् । तुविऽमघम् ।

तुविऽमात्रम् । अवःऽभिः ॥२

हे इन्द्र “त्वा त्वां “विद्म “हि जानीमः खलु । कीदृशमिति । "तुविकूर्मिं बहुकर्माणं तुविदेष्णं बहुप्रदेयं "तुविमघं बहुधनं "तुविमात्रं बहुप्रमाणम् "अवोभिः युक्तम् ।।

न॒हि त्वा॑ शूर दे॒वा न मर्ता॑सो॒ दित्स॑न्तम् ।

भी॒मं न गां वा॒रय॑न्ते ॥३

न॒हि । त्वा॒ । शू॒र॒ । दे॒वाः । न । मर्ता॑सः । दित्स॑न्तम् ।

भी॒मम् । न । गाम् । वा॒रय॑न्ते ॥३

नहि । त्वा । शूर । देवाः । न । मर्तासः । दित्सन्तम् ।

भीमम् । न । गाम् । वारयन्ते ॥३

हे “शूर इन्द्र “त्वा त्वां “दित्सन्तं दातुमिच्छन्तं “देवाः “नहि “वारयन्ते न निवारयन्ति । तथा “मर्तासः मर्त्या अपि “न वारयन्ते । “भीमं “न “गां भयजनकं वृषभं यवसे प्रवृत्तमिव । तं यथा वारयितुं न शक्नुवन्ति तद्वत् ॥

प्रथमे पर्यायेऽच्छावाकशस्त्रे 'एतो न्विन्द्रम्' इति तृचः । तथा च सूत्रितम् - 'एतो न्विन्द्रं स्तवामेशानं मा नो अस्मिन्मघवन्' (आश्व. श्रौ. ६. ४) इति ।

एतो॒ न्विन्द्रं॒ स्तवा॒मेशा॑नं॒ वस्वः॑ स्व॒राज॑म् ।

न राध॑सा मर्धिषन्नः ॥४

आ । इ॒त॒ । ऊं॒ इति॑ । नु । इन्द्र॑म् । स्तवा॑म । ईशा॑नम् । वस्वः॑ । स्व॒ऽराज॑म् ।

न । राध॑सा । म॒र्धि॒ष॒त् । नः॒ ॥४

आ । इत । ऊं इति । नु । इन्द्रम् । स्तवाम । ईशानम् । वस्वः । स्वऽराजम् ।

न । राधसा । मर्धिषत् । नः ॥४

हे अस्मदीया जनाः “एतो आगच्छतैव “नु क्षिप्रम्। किं कर्तुम् । “स्तवाम “इन्द्रम् । कीदृशं तम् । “वस्वः वसुनः धनस्य “ईशानं स्वामिनं "स्वराजं स्वयमेव राजमानं स्वर्गे राजमानं वा । “नः अस्मान् इन्द्रेणानुगृहीतान् “राधसा धनेनान्यो धनी “न “मर्धिषत् न बाधताम् । आढ्यानामस्मत्समानानामप्याढ्यत्वाय स्तवामेत्यर्थः ॥

प्र स्तोंषद॒प॑ गासिष॒च्छ्रव॒त्साम॑ गी॒यमा॑नम् ।

अ॒भि राध॑सा जुगुरत् ॥५

प्र । स्तो॒ष॒त् । उप॑ । गा॒सि॒ष॒त् । श्रव॑त् । साम॑ । गी॒यमा॑नम् ।

अ॒भि । राध॑सा । जु॒गु॒र॒त् ॥५

प्र । स्तोषत् । उप । गासिषत् । श्रवत् । साम । गीयमानम् ।

अभि । राधसा । जुगुरत् ॥५

पूर्वमन्त्रे स्तवामेत्युक्तम् । तदेव स्तोत्रमिन्द्रः “प्र “स्तोषत् । प्रस्तुत्वा च “गासिषत् उपगानं च करोतु । तदर्थं “गीयमानं “साम स्तोत्रं “श्रवत् शृणोतु । “राधसा धनेन च युक्तोऽस्मान “अभि "जुगुरत् अभिगृणातु स्वीकुर्विति ॥ ॥ ३७ ॥ (ग-पुस्तकेऽस्य मन्त्रस्य भाष्यमेवं विद्यते-सोता इन्द्रं प्रस्तोतु। उपगासिषदुपगानं च करोतु । गीयमानं साम श्रवत् शृणोतु । राधसा धनेन प्रसाधनेन वा युक्तोऽस्मानभिजुगुरदभिगृणातु स्वीकुर्विति ।)

आ नों भर॒ दक्षिं॑णेना॒भि स॒व्येन॒ प्र मृ॑श ।

इन्द्र॒ मा नो॒ वसो॒र्निर्भा॑क् ॥६

आ । न॒ः । भ॒र॒ । दक्षिं॑णेन । अ॒भि । स॒व्येन॑ । प्र । मृ॒श॒ ।

इन्द्रं॑ । मा । न॒ः । वसोः॑ । निः । भा॒क् ॥६

आ । नः । भर । दक्षिणेन । अभि । सव्येन । प्र । मृश ।

इन्द्र । मा । नः । वसोः । निः । भाक् ॥६

हे “इन्द्र “नः अस्मभ्यम् “आ “भर । आहृत्य “दक्षिणेन “सव्येन च हस्तेनोभाभ्यां हस्ताभ्याम् “अभि “प्र “मृश । प्रयच्छेत्यर्थः। “नः अस्मान् “वसोः धनात् “मा “निर्भाक् मा निर्भाक्षीः ॥

द्वितीये पर्यायेऽच्छावाकशस्त्रे ‘उप क्रमस्व' इति तृचः । सूत्रितं च--- उप क्रमस्वा भर धृषता तदस्मै नव्यम्' (आश्व. श्रौ. ६. ४) इति ॥ उप॑ क्रम॒स्वा भ॑र धृष॒ता धृ॑ष्णो॒ जना॑नाम् ।

अदा॑शूष्टरस्य॒ वेद॑ः ॥७

उप॑ । क्र॒म॒स्व॒ । आ । भ॒र॒ । धृ॒ष॒ता । धृ॒ष्णो॒ इति॑ । जना॑नाम् ।

अदा॑शूः॒ऽतरस्य । वेद॑ः ॥७

उप । क्रमस्व । आ । भर । धृषता । धृष्णो इति । जनानाम् ।

अदाशूःऽतरस्य । वेदः ॥७

हे इन्द्र त्वम् "उप “क्रमस्व धनं प्रत्युपगच्छ । प्रवृत्तो भव वा दातुम् । हे “धृष्णो धर्षक शत्रूणां “धृषता धृष्टेन चेतसा युक्तः सन् “आ “भर आहर च । कस्य धनमाहरेति उच्यते । “जनानां मध्ये “अदाशूष्टरस्य अत्यन्तमदातृतमस्य “वेदः धनम् ॥

इन्द्र॒ य उ॒ नु ते॒ अस्ति॒ वाजो॒ विप्रे॑भि॒ः सनि॑त्वः ।

अ॒स्माभि॒ः सु तं स॑नुहि ॥८

इन्द्र॑ । यः । ऊ॒ं इति॑ । नु । ते॒ । अस्ति॑ । वाज॑ः । विप्रे॑भिः । सनि॑त्वः ।

अ॒स्माभि॑ः । सु । तम् । स॒नु॒हि॒ ॥८

इन्द्र । यः । ऊं इति । नु । ते । अस्ति । वाजः । विप्रेभिः । सनित्वः ।

अस्माभिः । सु । तम् । सनुहि ॥८

हे "इन्द्र “यः “वाजः अन्नं “विप्रेभिः मेधाविभिः “सनित्वः संभजनीयः “ते तव "अस्ति “तं वाजम् “अस्माभिः याचितः सन् अस्मभ्यं वा “सु सुष्ठु “सनुहि देहि ॥

स॒द्यो॒जुव॑स्ते॒ वाजा॑ अ॒स्मभ्यं॑ वि॒श्वश्च॑न्द्राः ।

वशै॑श्च म॒क्षू जर॑न्ते ॥९

स॒द्यः॒ऽजुव॑ः । ते॒ । वाजा॑ः । अ॒स्मभ्य॑म् । वि॒श्वऽच॑न्द्राः ।

वशै॑ः । च॒ । म॒क्षु । ज॒र॒न्ते॒ ॥९

सद्यःऽजुवः । ते । वाजाः । अस्मभ्यम् । विश्वऽचन्द्राः ।

वशैः । च । मक्षु । जरन्ते ॥९

हे इन्द्र “ते तव "वाजाः “अस्मभ्यं “सद्योजुवः शीघ्रं गन्तारो भवन्तु । कीदृशास्ते । “विश्वचन्द्राः सर्वहिरण्योपेता बहूनामाह्लादका वा । अस्मदीयाश्च जनाः “वशैः कामैरनेकैर्युक्ताः “मक्षु शीघ्रं “जरन्ते स्तुवन्ति ॥ ॥ ३८ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाश ऋक्संहिताभाष्ये षष्ठाष्टके पञ्चमोऽध्यायः ॥

---

**टिप्पणी**

८.८१.१ आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं संगृभाय इति

वैदिकनिघण्टु २.७ मध्ये क्षु, क्षुमत् शब्दयोः वर्गीकरणं अन्नवर्गे कृतमस्ति। धातुव्याख्याने क्षु धातु शब्दे अस्ति। क्षुमत् शब्दस्य सायणभाष्यस्य अयमेवाधारः अस्ति। नारदपुराणे २.२२.७८ (https://sa.wikisource.org/s/4we) एकान्तरोपवासिने क्षौमवस्त्रस्य दानस्य निर्देशमस्ति। क्षुमत् शब्दः इक्षुमत्शब्दस्य परोक्षरूपमस्ति, अयमपि संभवमस्ति।

ऋग्वेदः ९.१०६.३ मध्ये ग्राभं गृभ्णीत सानसिं इति उल्लेखमस्ति। अस्य सायणभाष्ये ग्राभं शब्दस्य अर्थं ग्राहं गृहीतव्यं धनुः कृतमस्ति। चित्रं ग्राभं अर्धचेतनं चित्तं भवितुं शक्यते। अस्य नियन्त्रणस्य उपायं महाहस्ती अस्ति, इति उल्लेखमस्ति। हस्ती स्वशुण्डेन अपसः कर्षणं कर्तुं शक्यते, यथा सूर्यः स्वकिरणेभ्यः।

द्र. आकूपारम् (https://sa.wikisource.org/s/1zam)

# ऋग्वेदः सूक्तं ८.८२



कुसीदी काण्वः ।

दे. इन्द्रः । गायत्री।

---

आ प्र द्रव परावतोऽर्वावतश्च वृत्रहन् ।

मध्वः प्रति प्रभर्मणि ॥१॥

तीव्राः सोमास आ गहि सुतासो मादयिष्णवः ।

पिबा दधृग्यथोचिषे ॥२॥

इषा मन्दस्वादु तेऽरं वराय मन्यवे ।

भुवत्त इन्द्र शं हृदे ॥३॥

आ त्वशत्रवा गहि न्युक्थानि च हूयसे ।

उपमे रोचने दिवः ॥४॥

तुभ्यायमद्रिभिः सुतो गोभिः श्रीतो मदाय कम् ।

प्र सोम इन्द्र हूयते ॥५॥

इन्द्र श्रुधि सु मे हवमस्मे सुतस्य गोमतः ।

वि पीतिं तृप्तिमश्नुहि ॥६॥

य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः ।

पिबेदस्य त्वमीशिषे ॥७॥

यो अप्सु चन्द्रमा इव सोमश्चमूषु ददृशे ।

पिबेदस्य त्वमीशिषे ॥८॥

यं ते श्येनः पदाभरत्तिरो रजांस्यस्पृतम् ।

पिबेदस्य त्वमीशिषे ॥९॥

**सायणभाष्यम्**

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।

निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

‘आ प्र द्रव' इति नवर्चं द्वितीयं सूक्तम् । तथा चानुक्रम्यते- ‘ आ प्र द्रव ' इति । ‘ऋषिश्चान्यस्मात् ' इति परिभाषया काण्वः कुसीद्यृषिः । प्राग्वत्सप्रीयपरिभाषया गायत्री छन्दः । अनादेशपरिभाषयेन्द्रो देवता । महाव्रते निष्केवल्ये सूक्तविनियोग उक्तः । द्वितीये रात्रिपर्याये मैत्रावरुणशस्त्रे ‘आ प्र द्रव ' इति तृचोऽनुरूपः । सूत्रितं च- ‘ आ प्र द्रव परावतो नह्यन्यं बळाकरमित्यष्टौ ' ( आश्व. श्रौ. ६. ४ ) इति ।

आ प्र द्रंव परा॒वतोंऽर्वा॒वतं॑श्च वृत्रहन् ।

मध्व॒ः प्रति॒ प्रभं॑र्मणि ॥१

आ । प्र । द्र॒व॒ । प॒रा॒ऽवतः॑ । अ॒र्वा॒ऽवतः॑ । च॒ । वृ॒त्र॒ऽह॒न् ।

मध्वः॑ । प्रतिं । प्रऽभं॑र्मणि ॥१

आ । प्र । द्रव । पराऽवतः । अर्वाऽवतः । च । वृत्रऽहन् ।

मध्वः । प्रति । प्रऽभर्मणि ॥१

हे “वृत्रहन् अपामावरकस्य वृत्रासुरस्य हन्तर्हे इन्द्र “प्रभर्मणि । प्रकृष्टानि भर्माणि भरणानि पशुग्रहादिसंपादनानि यस्मिन् स प्रभर्मा यज्ञः । यद्वा । प्रकृष्टाः कर्मणि कुशला भर्माणो देवानां हविष्प्रदानेन पोषका ऋत्विजो यस्मिन्निति स तथोक्तः । एतादृशे यज्ञे "मध्वः मदकरान् सोमान् “प्रति "परावतः विप्रकृष्टात् दूरस्थाद्देशादपि “अर्वावतश्च समीपस्थाद्देशादपि आभिमुख्येन “प्र “द्रव त्वं त्वरयागच्छ । मध्व इति ‘वा छन्दसि' इति पूर्वसवर्णदीर्घाभावः ।।

ती॒व्राः सोमा॑स॒ आ ग॑हि सु॒तासो॑ मादयि॒ष्णव॑ः ।

पिबा॑ द॒धृग्यथो॑चि॒षे ॥२

ती॒व्राः । सोमा॑सः । आ । ग॒हि॒ । सु॒तासः॑ । मा॒द॒यि॒ष्णवः॑ ।

पिब॑ । द॒धृक् । यथा॑ । ओ॒चि॒षे ॥२

तीव्राः । सोमासः । आ । गहि । सुतासः । मादयिष्णवः ।

पिब । दधृक् । यथा । ओचिषे ॥२

हे इन्द्र “तीव्राः तीव्रमदाः । क्षिप्रं मदकारिण इत्यर्थः । “मादयिष्णवः मादनशीला मादनकारिणो वेमे “सोमासः सोमाः “सुतासः त्वदर्थमभिषुताः । तस्मात् “आ “गहि अस्मदीयं यज्ञं प्रत्यागच्छ । आगत्य च तान् “पिब । सोमपाने कारणमाह । त्वं “यथा “दधृक् धृष्टस्तत्प्रीतौ प्रगल्भः संस्तान् “ऊचिषे समवैषि सेवसे । ततस्तान यथाकामं पिबेत्यर्थः । दधृगिति ‘ञिधृषा प्रागल्भ्ये' इत्यस्मात् ‘ ऋत्विग्दधृक् ' इत्यादिना क्विन्प्रत्ययान्तो निपात्यते । ऊचिषे ।' उच समवाये । छान्दसे लिटि रूपम् ॥

इ॒षा म॑न्द॒स्वादु॒ तेऽर॒ं वरा॑य म॒न्यवे॑ ।

भुव॑त्त इन्द्र॒ शं हृ॒दे ॥३

इ॒षा । म॒न्द॒स्व॒ । आत् । ऊ॒ इति॑ । ते॒ । अर॑म् । वरा॑य । म॒न्यवे॑ ।

भुव॑त् । ते॒ । इ॒न्द्र॒ । शम् । हृ॒दे ॥३

इषा । मन्दस्व । आत् । ऊं इति । ते । अरम् । वराय । मन्यवे ।

भुवत् । ते । इन्द्र । शम् । हृदे ॥३

हे "इन्द्र “इषा सोमलक्षणेनान्नेन “मन्दस्व मोदस्व हृष्टो भव । “उ इत्यवधारणे । “आत् अनन्तरमेव “ते तव “वराय शत्रुनिवारकाय “मन्यवे क्रोधाय स सोमः "अरम् अलं पर्याप्तो भवतु । क्रोधशमने समर्थो भवतु । यदा सोमं पिबति तदा मन्युं त्यजतीत्यर्थः । किंच “ते तव “हृदे हृदये स सोमः “शं शंकरः सुखकरः “भुवत् भवतु ॥

तृतीये पर्याये ‘आ त्वशत्रो' इत्यनुरूपस्तृचः । सूत्रितं च- ‘ आ त्वेता नि दीदता स्वशत्रवा गहि' ( आश्व. श्रौ. ६. ४ ) इति ॥

आ त्वंशत्र॒वा गंहि॒ न्यु१॒॑क्थानिं च हूयसे ।

उ॒प॒मे रोंच॒ने दि॒वः ॥४

आ । तु । अ॒श॒त्रो॒ इतिं । आ । ग॒हि॒ । नि । उ॒क्थानिं । च॒ । हू॒य॒से॒ ।

उ॒प॒ऽमे । रो॒च॒ने । दि॒वः ॥४

आ । तु । अशत्रो इति । आ । गहि । नि । उक्थानि । च । हूयसे ।

उपऽमे । रोचने । दिवः ॥४

हे “अशत्रो सपत्नरहित । अस्य बहुविधबलत्वाद्रणाभिमुखं गन्तारः शत्रवो न सन्तीत्यर्थः । तादृशेन्द्र “तु क्षिप्रम् “आ “गहि आयाहि अस्मद्यज्ञं प्रत्यागच्छ । यतः "दिवः स्वतेजसा दीप्यमानात् द्युलोकात् । तत्रस्थैर्देवैरित्यर्थः । “रोचने अग्निभिर्दीप्यमाने लोके च “उपमे समीपे । स्तोतारः स्तोत्रशस्त्रात्मकं शब्दं कुर्वन्त्यत्रेत्युपमो यज्ञः । तस्मिन्नस्मदीये यज्ञे “च “उक्थानि त्रिवृत्पञ्चदशादिलक्षणानि स्तोत्राणि प्रति “नि "हूयसे त्वं स्तोतव्यतया नितरामाहूयसे । यस्मादेवं तस्मादागच्छेति समन्वयः ॥

तुभ्या॒यमद्रिंभिः सु॒तो गोभिं॑ः श्री॒तो मदां॑य॒ कम् ।

प्र सोमं इन्द्र हूयते ॥५

तुभ्यं । अ॒यम् । अद्रिंऽभिः । सु॒तः । गोभिः॑ । श्री॒तः । मदां॑य । कम् ।

प्र । सोमः॑ । इ॒न्द्र॒ । हू॒य॒ते॒ ॥५

तुभ्य । अयम् । अद्रिऽभिः । सुतः । गोभिः । श्रीतः । मदाय । कम् ।

प्र । सोमः । इन्द्र । हूयते ॥५

हे “इन्द्र “अद्रिभिः अभिषवसाधनैर्ग्राविभिः “अयं “सोमः तुभ्यं त्वदर्थं "सुतः अभिषुतः । ततो दशापवित्रेण पूत्वा “गोभिः गोविकारैः क्षीरादिभिः “श्रीतः सोऽस्माभिः परावत एव संस्कृतः सोमस्तव "मदाय मदार्थं "कं सुखेन “प्र “हूयते अग्नौ स्वाहा क्रियते । तस्मादागत्य सोमं पिब ॥ ॥१॥

इन्द्रं श्रु॒धि सु मे॒ हवंम॒स्मे सु॒तस्य॒ गोमंतः ।

वि पी॒तिं तृ॒प्तिमंश्नुहि ॥६

इन्द्रं । श्रु॒धि । सु । मे॒ । हवंम् । अ॒स्मे इतिं । सु॒तस्यं । गोऽमंतः ।

वि । पी॒तिम् । तृ॒प्तिम् । अ॒श्नु॒हि॒ ॥६

इन्द्र । श्रुधि । सु । मे । हवम् । अस्मे इति । सुतस्य । गोऽमतः ।

वि । पीतिम् । तृप्तिम् । अश्नुहि ॥६

हे “इन्द्र “मे मदीयं “हवं त्वद्विषयमाह्वानं “सु सुष्ठु “श्रुधि शृणु । तथा “अस्मे अस्माभिः “सुतस्य अभिषुतस्य “गोमतः गव्यक्षीरवतः । क्षीरेण मिश्रितस्येत्यर्थः । तादृशस्य सोमस्य “पीतिं पानं “वि “अश्नुहि विविधं प्राप्नुहि । तत्पानेन विविधां “तृप्तिं च गच्छ । 'अशू व्याप्तौ' । व्यत्ययेन परस्मैपदम् ॥

तृतीये पर्याय एवाच्छावाकशस्त्रे ‘य इन्द्र चमसेषु' इति तृचः । सूत्रितं च--- य इन्द्र चमसेष्वा सोमः प्र वः सताम् ' ( आश्व. श्रौ. ६. ४) इति ॥

य इ॑न्द्र चम॒सेष्वा सोम॑श्च॒मूषु॑ ते सु॒तः ।

पिबेद॑स्य॒ त्वमी॑शिषे ॥७

यः । इ॒न्द्र॒ । च॒म॒सेषु॑ । आ । सोमः॑ । च॒मूषु॑ । ते॒ । सु॒तः ।

पिब॑ । इत् । अ॒स्य॒ । त्वम् । ई॒शि॒षे॒ ॥७

यः । इन्द्र । चमसेषु । आ । सोमः । चमूषु । ते । सुतः ।

पिब । इत् । अस्य । त्वम् । ईशिषे ॥७

हे “इन्द्र “ते त्वदर्थं “सुतः अभिषुतः “यः “सोमः “चमसेषु एतन्नामकेषु पात्रेषु तथा “चमूषु । चमन्ति यजन्त्यत्रेति चम्वो ग्रहाः । तेषु च “आ सर्वतः अस्ति “अस्य तमेतं सोमं “पिबेत् । इदवधारणे । पिबैव । कथमस्य सोमपानयोग्यता तत्राह । हे इन्द्र “त्वमीशिषे तस्य त्वमेवेश्वरो भवसि खलु । यत एवं ततः पिबेति समन्वयः । 'ईश ऐश्वर्ये '। लटि ‘ईशः से (पा. सू. ७. २. ७७ ) इतीडागमः ॥

यो अ॒प्सु च॒न्द्रमा॑ इव॒ सोम॑श्च॒मूषु॒ दद॑ृशे ।

पिबेद॑स्य॒ त्वमी॑शिषे ॥८

यः । अ॒प्ऽसु । च॒न्द्रमाः॑ऽइव । सोमः॑ । च॒मूषु॑ । दद॑ृशे ।

पिब॑ । इत् । अ॒स्य॒ । त्वम् । ई॒शि॒षे॒ ॥८

यः । अप्ऽसु । चन्द्रमाःऽइव । सोमः । चमूषु । ददृशे ।

पिब । इत् । अस्य । त्वम् । ईशिषे ॥८

हे इन्द्र "यः गृहीतः “सोमः “चमूषु ग्रहेषु “ददृशे अन्तर्दृश्यते । तत्र दृष्टान्तः । “चन्द्रमाइव यथा चन्द्रमाः “अप्सु अन्तरिक्षे निर्मलतया दृश्यते तद्वत् । यद्वा । अप्सूदकेषु चन्द्रमाः प्रतिबिम्बतया नानाविधो दृश्यते तथाष्टग्रहेष्वनेकरूपः सन् दृश्यते तमेतं सोमं पिबैव यतस्त्वमेवेशिषे खलु ॥

यं तें श्ये॒नः प॒दाभ॑रत्ति॒रो रजा॒ांस्यस्पृ॑तम् ।

पिबेद॑स्य॒ त्वमी॑शिषे ॥९

यम् । ते॒ । श्ये॒नः । प॒दा । आ । अभ॑रत् । ति॒रः । रजाँ॑सि । अस्पृ॑तम् ।

पिब॑ । इत् । अ॒स्य॒ । त्वम् । ई॒शि॒षे॒ ॥९

यम् । ते । श्येनः । पदा । आ । अभरत् । तिरः । रजांसि । अस्पृतम् ।

पिब । इत् । अस्य । त्वम् । ईशिषे ॥९

हे इन्द्र “श्येनः शंसनीयः पक्षी । पक्षिरूपधारिणी गायत्रीत्यर्थः । स पक्षी “रजांसि अन्तरिक्षादिलोकस्थितान् सोमपालान् गन्धर्वान् “तिरः तिरः कुर्वन् “अस्पृतं शत्रुभिरस्पृष्टं सन्तं “यं सोमं “ते त्वदर्थं "पदा पद्भ्याम् “आभरत् । पदेति सवनद्वयाभिप्रायम् । सवनद्वय आहृतं सोमं त्वं पिब । गायत्री पक्षिरूपं धारयित्वा पद्यां सोममाहरदित्यत्रार्थे यजुर्ब्राह्मणं--' पद्यां अ द्वे सवने समगृह्णान्मुखेनैकं तस्माद्द्वे सवने शुक्रवती प्रातःसवनं च माध्यंदिनं च ' (तै. सं. ६. १. ६. ४ ) इति । तं पिबैव । त्वमेव तस्येश्वरो भवसि ॥ ॥ २ ॥

**मण्डल ८**

# ऋग्वेदः सूक्तं ८.८३


ऋग्वेदः - मण्डल ८

← सूक्तं ८.८२ सूक्तं ८.८३ सूक्तं ८.८४ →


कुसीदी काण्वः।

दे. विश्वे देवाः। गायत्री।

---

देवानामिदवो महत्तदा वृणीमहे वयम् ।

वृष्णामस्मभ्यमूतये ॥१॥

ते नः सन्तु युजः सदा वरुणो मित्रो अर्यमा ।

वृधासश्च प्रचेतसः ॥२॥

अति नो विष्पिता पुरु नौभिरपो न पर्षथ ।

यूयमृतस्य रथ्यः ॥३॥

वामं नो अस्त्वर्यमन्वामं वरुण शंस्यम् ।

वामं ह्यावृणीमहे ॥४॥

वामस्य हि प्रचेतस ईशानाशो रिशादसः ।

नेमादित्या अघस्य यत् ॥५॥

वयमिद्वः सुदानवः क्षियन्तो यान्तो अध्वन्ना ।

देवा वृधाय हूमहे ॥६॥

अधि न इन्द्रैषां विष्णो सजात्यानाम् ।

इता मरुतो अश्विना ॥७॥

प्र भ्रातृत्वं सुदानवोऽध द्विता समान्या ।

मातुर्गर्भे भरामहे ॥८॥

यूयं हि ष्ठा सुदानव इन्द्रज्येष्ठा अभिद्यवः ।

अधा चिद्व उत ब्रुवे ॥९॥

**सायणभाष्यम्**

'देवानाम्' इति नवर्चं तृतीयं सूक्तं काण्वस्य कुसीदिन आर्षं गायत्रं वैश्वदेवम् । तथा चानुक्रम्यते - ' देवानां वैश्वदेवम् ' इति । दशरात्रेऽष्टमेऽहनि वैश्वदेवशस्त्र इदं सूक्तं वैश्वदेवनिविद्धानम् । सूत्रितं च -- देवानामिदव इति वैश्वदेवम् ' ( आश्व. श्रौ. ८. १०) इति ।

दे॒वाना॒मिदवो॑ म॒हत्तदा वृ॑णीमहे व॒यम् ।

वृष्णा॑म॒स्मभ्य॑मू॒तये॑ ॥१

दे॒वाना॑म् । इत् । अवः॑ । म॒हत् । तत् । आ । वृ॒णी॒म॒हे॒ । व॒यम् ।

वृष्णा॑म् । अ॒स्मभ्य॑म् । ऊ॒तये॑ ॥१

देवानाम् । इत् । अवः । महत् । तत् । आ । वृणीमहे । वयम् ।

वृष्णाम् । अस्मभ्यम् । ऊतये ॥१

हे देवाः "देवानां स्वतेजसा सर्वतो दीप्यमानानाम् । "इत् एवार्थे । युष्माकमेव "महत् व्याप्तं महनीयं वा “अवः पालनं यद्विद्यते तत् "वृष्णां कामानां वर्षितॄणां युष्माकं स्वभूतं "तत् रक्षणं यजमानाः "वयम् "आ "वृणीमहे समन्तात्संभजामहे । किमर्थम् । "अस्मभ्यमूतये । पूर्वमस्मभ्यमस्मदर्थमिति साधारण्येनोक्त्वा तद्विशिनष्टि ऊतय इति । अस्माकं पालनायेति ॥

ते नः॑ः सन्तु॒ युज॒ः सदा॒ वरु॑णो मि॒त्रो अ॑र्य॒मा ।

वृ॒धास॑श्च॒ प्रचे॑तसः ॥२

ते । न॒ः । स॒न्तु॒ । युजः॑ । सदा॑ । वरु॑णः । मि॒त्रः । अ॒र्य॒मा ।

वृ॒धासः॑ । च॒ । प्रऽचे॑तसः ॥२

ते । नः । सन्तु । युजः । सदा । वरुणः । मित्रः । अर्यमा ।

वृधासः । च । प्रऽचेतसः ॥२

“ते देवाः "वरुणः शत्रूणां निवारकः "मित्रः सर्वेषां मित्रभूतः "अर्यमा[१] सततं गच्छन् एतन्नामकास्ते त्रयो देवाः "सदा सर्वदा सर्वेषु कालेषु "नः अस्माकं "युजः सहायाः "सन्तु भवन्तु । अग्निहोत्रादिकर्मणि इन्द्रादिदेवाः सहागमनादियज्ञपरिसमापनान्तेषु साहाय्यं कुर्वन्त्वित्यर्थः । ततः “प्रचेतसः प्रकृष्टज्ञानाः । यद्वा । चेतः स्तोत्रम् । शोभनस्तुतयः। ते देवाः "वृधासः वर्धकाः “च अस्माकं धनादिदानेन वर्धयितारश्च सन्तु ॥

अति॑ नो वि॒ष्पि॒ता पु॒रु नौ॒भिर॒पो न प॑र्षथ ।

यू॒यमृ॒तस्य॑ रथ्यः ॥३

अति॑ । न॒ः । वि॒ष्पि॒ता । पु॒रु । नौ॒भिः । अ॒पः । न । प॒र्ष॒थ॒ ।

यू॒यम् । ऋ॒तस्य॑ । र॒थ्य॒ः ॥३

अति । नः । विष्पिता । पुरु । नौभिः । अपः । न । पर्षथ ।

यूयम् । ऋतस्य । रथ्यः ॥३

“ऋतस्य सत्यस्य यज्ञस्य वा हे "रथ्यः नेतारो देवाः। यद्वा । ऋतस्येति संबन्धि--- त्वात्कर्ताक्षिप्यते । यज्ञस्य साधका हे रथ्यो रथवन्तो देवाः “विष्पिता विष्पितानि विप्राप्तानि विततानि “पुरु । सुपो लुक् । पुरूणि बहूनि शत्रुबलानि कर्माणि वा “नः अस्मान् “अति “पर्षथ पारं समाप्तिं रक्षणैर्गमयत । तत्र दृष्टान्तः। "नौभिरपो “न । यथा नाविकोऽप उदकानि नौभिर्जनास्तीरं प्रति प्रापयति तद्वत् ॥

वा॒मं नो॑ अस्त्वर्यमन्वा॒मं व॑रुण॒ शंस्य॑म् ।

वा॒मं ह्या॑वृणी॒महे॑ ॥४

वा॒मम् । न॒ः । अ॒स्तु॒ । अ॒र्य॒म॒न् । वा॒मम् । व॒रु॒ण॒ । शंस्य॑म् ।

वा॒मम् । हि । आ॒ऽवृ॒णी॒महे॑ ॥४

वामम् । नः । अस्तु । अर्यमन् । वामम् । वरुण । शंस्यम् ।

वामम् । हि । आऽवृणीमहे ॥४

हे "अर्यमन् देव “वामं वननीयं संभजनीयं धनं "नः अस्माकम् "अस्तु भवतु । हे "वरुण “शंस्यं सर्वं शंसनीयं स्तुत्य “वामं धनमस्माकमस्तु । कुतः । हिशब्दो हेतौ । यस्मात्कारणाद्वयं “वामं धनं युष्मान् "आवृणीमहे याचामह इत्यर्थः ।

वा॒मस्य॒ हि प्र॑चेतस॒ ईशा॑नाशो रिशादसः ।

नेमा॑दित्या अ॒घस्य॒ यत् ॥५

वा॒मस्य॑ । हि । प्र॒ऽचे॒त॒सः॒ । ईशा॑नासः । रि॒शा॒द॒सः॒ ।

न । ई॒म् । आ॒दि॒त्याः॒ । अ॒घस्य॑ । यत् ॥५

वामस्य । हि । प्रऽचेतसः । ईशानासः । रिशादसः ।

न । ईम् । आदित्याः । अघस्य । यत् ॥५

हे "प्रचेतसः प्रकृष्टज्ञानाः शोभनस्तुतयो वा हे "रिशादसः रिशतां हिंसतां शत्रूणामसितारः क्षेप्तारो देवा यूयं “वामस्य वननीयस्य धनस्य “ईशानासः ईशानाः। हिरवधारणे । ईशाना एव स्वामिन एव भवथ । तस्माद्युष्मान् याचामह इत्यर्थः । ईशानाः । ईश ऐश्वर्यं । अनुदात्तेत् । ‘ तास्यनुदात्तेत् ' इति स्वरेणाद्युदात्तता भवति । न संबुद्धिः । ततो हे "आदित्याः अदितेः पुत्रा देवाः “ईम् एनं याचमानं मां तद्धनं "न प्राप्नोतु "यत् धनम् "अघस्य पापस्य संबन्धि विद्यते ॥ ॥३॥

व॒यमिद्वः॑ सुदानवः क्षि॒यन्तो॒ यान्तो॒ अध्व॒न्ना ।

देवा॑ वृ॒धाय॑ हूमहे ॥६

व॒यम् । इत् । वः॒ । सु॒ऽदा॒न॒वः॒ । क्षि॒यन्तः॑ । यान्तः॑ । अध्व॑न् । आ ।

देवाः॑ । वृ॒धाय॑ । हू॒म॒हे॒ ॥६

वयम् । इत् । वः । सुऽदानवः । क्षियन्तः । यान्तः । अध्वन् । आ ।

देवाः । वृधाय । हूमहे ॥६

हे "सुदानवः शोभनदाना हे "देवाः "क्षियन्तः गृहेष्वग्निहोत्रार्थं निवसन्तः "अध्वन् । सुपो लुक्। अध्वनि समिदाहरणार्थं "यान्तः गच्छन्तोऽपि “वयं “वः "इत् युष्मानेव "वृधाय हविर्भिर्वर्धनाय "हूमहे आह्वयामः । यद्वा । वयं गृहेषु गृहान्निर्गमनकाले मार्गेषु च वृधायास्माकं धनादिभिर्वर्धनायाह्वयामः ।।

अधि॑ न इन्द्रैषां॒ विष्णो॑ सजा॒त्या॑नाम् ।

इ॒ता मरु॑तो॒ अश्वि॑ना ॥७

अधि॑ । नः॒ । इ॒न्द्र॒ । ए॒षा॒म् । विष्णो॒ इति॑ । स॒ऽजा॒त्या॑नाम् ।

इ॒त । मरु॑तः । अश्वि॑ना ॥७

अधि । नः । इन्द्र । एषाम् । विष्णो इति । सऽजात्यानाम् ।

इत । मरुतः । अश्विना ॥७

हे “इन्द्र "विष्णो "मरुतः हे "अश्विना अश्विनौ हे इन्द्रादयो देवाः "सजात्यानाम् । समानायां जातौ भवाः सजात्या भ्रातृमित्रादयः । तेषाम् "एषां मध्ये "नः अस्मान् "अधि “इत यूयं स्तुत्यतयाधिगच्छत ॥

प्र भ्रा॑तृ॒त्वं सु॑दान॒वोऽध॑ द्वि॒ता स॑मा॒न्या ।

मा॒तुर्गर्भे॑ भरामहे ॥८

प्र । भ्रा॒तृ॒ऽत्वम् । सु॒ऽदा॒न॒वः॒ । अध॑ । द्वि॒ता । स॒मा॒न्या ।

मा॒तुः । गर्भे॑ । भ॒रा॒म॒हे॒ ॥८

प्र । भ्रातृऽत्वम् । सुऽदानवः । अध । द्विता । समान्या ।

मातुः । गर्भे । भरामहे ॥८

हे "सुदानवः शोभनदाना आदित्याः “अध अथ अस्मत्प्रत्यागमनानन्तरं वयं "समान्या सामान्येन । सुपो ड्यादेशः । पूर्वं सर्वेषां देवानां सांहत्येन ततः "द्विता द्विधा द्विप्रकारेण च "मातुः अदितेः "गर्भे संजातं यद्युष्माकं “भ्रातृत्वं विद्यते तदिदानीं वयं “प्र “भरामहे । प्रभरणमुच्चारणं प्रकाशनं वा । उच्चारयामः प्रकाशयामो वा । सर्वेषां देवानां द्वंद्वशो जननं तैत्तिरीयके स्पष्टमभिहितम् -- ‘ अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्' (तै. सं. ६. ५. ६) इत्युपक्रम्य ‘तस्यै पूषा चार्यमा चाजायेताम् ' इत्यादिना । ।

यू॒यं हि ष्ठा सु॑दानव॒ इन्द्र॑ज्येष्ठा अ॒भिद्य॑वः ।

अधा॑ चिद्व उ॒त ब्रु॑वे ॥९

यू॒यम् । हि । स्थ । सु॒ऽदा॒न॒वः॒ । इन्द्र॑ऽज्येष्ठाः । अ॒भिऽद्य॑वः ।

अध॑ । चि॒त् । वः॒ । उ॒त । ब्रु॒वे॒ ॥९

यूयम् । हि । स्थ । सुऽदानवः । इन्द्रऽज्येष्ठाः । अभिऽद्यवः ।

अध । चित् । वः । उत । ब्रुवे ॥९

पूर्वोऽर्धर्चः सिद्धः । हे "सुदानवः शोभनदाना देवाः "इन्द्रज्येष्ठाः । इन्द्रो ज्येष्ठो मुख्यो येषां ते तथोक्ताः । सर्वे देवा इन्द्रनेतृका इत्यर्थः । तादृशाः "अभिद्यवः अभिगतदीप्तयः "यूयं "हि "स्थ अस्मद्यज्ञे भवथ खलु । हि प्रसिद्धौ । "अध "चित् अथानन्तरमेव "वः युष्मान् अहं "ब्रुवे स्तौमि । "उत अपि च पुनःपुनः स्तौमीत्यर्थः ॥ ॥ ४ ॥

**मण्डल ८**

# ऋग्वेदः सूक्तं ८.८४

ऋग्वेदः - मण्डल ८
← सूक्तं ८.८३ सूक्तं ८.८४ सूक्तं ८.८५ →
उशना काव्यः।

दे. अग्निः। गायत्री।

---

प्रेष्ठं वो अतिथिं स्तुषे मित्रमिव प्रियम् ।

अग्निं रथं न वेद्यम् ॥१॥

कविमिव प्रचेतसं यं देवासो अध द्विता ।

नि मर्त्येष्वादधुः ॥२॥

त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः ।

रक्षा तोकमुत त्मना ॥३॥

कया ते अग्ने अङ्गिर ऊर्जो नपादुपस्तुतिम् ।

वराय देव मन्यवे ॥४॥

दाशेम कस्य मनसा यज्ञस्य सहसो यहो ।

कदु वोच इदं नमः ॥५॥

अधा त्वं हि नस्करो विश्वा अस्मभ्यं सुक्षितीः ।

वाजद्रविणसो गिरः ॥६॥

कस्य नूनं परीणसो धियो जिन्वसि दम्पते ।

गोषाता यस्य ते गिरः ॥७॥

तं मर्जयन्त सुक्रतुं पुरोयावानमाजिषु ।

स्वेषु क्षयेषु वाजिनम् ॥८॥

क्षेति क्षेमेभिः साधुभिर्नकिर्यं घ्नन्ति हन्ति यः ।

अग्ने सुवीर एधते ॥९॥

**सायणभाष्यम्**

'प्रेष्ठं वः' इति नवर्चं चतुर्थं सूक्तं कवेः पुत्रस्योशनस आर्षं गायत्रमाग्नेयम् । तथानुक्रम्यते' प्रेष्ठमुशना काव्य आग्नेयम्' इति । प्रातरनुवाक आग्नेये क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च--- युवा हि प्रेष्ठं वः' ( आश्व. श्रौ. ४. १३ (https://sa.wikisource.org/s/1auy) ) इति । आभिप्लविकेषूक्थ्येषु मैत्रावरुणे ' प्रेष्ठं वः' इति तृचो वैकल्पिकः स्तोत्रियः । सूत्रितं च--' प्रेष्ठं वो अतिथिं श्रेष्ठं यविष्ठ भारत' (आश्व. श्रौ. ७. ८ (https://sa.wikisource.org/s/1byi) ) इति ॥

प्रेष्ठं॑ वो॒ अति॑थिं स्तु॒षे मि॒त्रमि॑व प्रि॒यं ।

अ॒ग्निं रथं॒ न वेद्यं॑ ॥१

प्रेष्ठं॑म् । वः॒ । अति॑थिम् । स्तु॒षे । मि॒त्रम्ऽइ॑व । प्रि॒यम् ।

अ॒ग्निम् । रथ॑म् । न । वेद्यं॑म् ॥१

प्रेष्ठम् । वः । अतिथिम् । स्तुषे । मित्रम्ऽइव । प्रियम् ।

अग्निम् । रथम् । न । वेद्यम् ॥१

हे यजमानाः "प्रेष्ठं युष्माकं धनदानेन प्रियतमम् "अतिथिं युष्माभिरतिथिवत्पूज्यम् । यद्वा । ' अत सातत्यगमने '। 'ऋतन्यञ्जि°' इत्यादिना अतेरिथिन् । सततं देवानां हविः प्रदातुं गच्छन्तम् । "मित्रमिव सखायमिव "प्रियं स्तोतुः प्रीणनकरं रथं "न रथमिव "वेद्यम् । वेदो धनम् । धनहितं लाभहेतुम् । यथा रथी रथेन धनं लभते तद्वत्स्तोतारोऽनेन धनं लभन्ते । तादृशं धनलाभकारणम् "अग्निं "वः युष्मत्कर्मसिद्ध्यर्थं "स्तुषे काव्य उशनाः स्तौमि ॥ ।

क॒विमि॑व॒ प्रचे॑तसं॒ यं दे॒वासो॒ अध॑ द्वि॒ता ।

नि मर्त्येष्वादधुः ॥२

कविम्ऽइव । प्रऽचेतसम् । यम् । देवासः । अध । द्विता ।

नि । मर्त्येषु । आऽदधुः ॥२

कविम्ऽइव । प्रऽचेतसम् । यम् । देवासः । अध । द्विता ।

नि । मर्त्येषु । आऽदधुः ॥२

"अध अपि च "देवासः देवा इन्द्रादयः "यम् अग्निं "मर्त्येषु मनुष्येषु "द्विता द्विधा "नि “आदधुः गार्हपत्याहवनीयात्मकत्वेन द्विधा निहितवन्तः । तत्र दृष्टान्तः। "कविमिव "प्रचेतसम् । प्रकृष्टज्ञानं कविं क्रान्तकर्माणं पुरुषं यथा द्विधा कार्यद्वयेऽन्यो नियोजयति तद्वत् । यद्वा । दिवि पृथिव्यां च निहितवन्तः । भूमौ तु हविराहरणार्थं दिवि तु हविष्प्रदानार्थमिति द्वैधं विधानं कृतवन्त इत्यर्थः ॥

त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः ।

रक्षा तोकमुत त्मना ॥३

त्वम् । यविष्ठ । दाशुषः । नॄन् । पाहि । शृणुधि । गिरः ।

रक्ष । तोकम् । उत । त्मना ॥३

त्वम् । यविष्ठ । दाशुषः । नॄन् । पाहि । शृणुधि । गिरः ।

रक्ष । तोकम् । उत । त्मना ॥३

हे "यविष्ठ युवतम । यद्वा । यौतेस्तृजन्तस्येष्टनि रूपम् । देवानां हविषां मिश्रयितृतमाग्ने “त्वं “दाशुषः हविर्दत्तवतः "नॄन् कर्मणां नेतॄन् यजमानान् "पाहि धनादिदानेन रक्ष । नॄँः पाहीत्यत्र संहितायां नॄन्पे' (पा. सू. ८. ३. १० ) इति नकारस्य रुत्वम् । अत्रानुनासिकः' ( पा. सू. ८. ३. २ ) इति पूर्वस्यानुनासिकः । किंच "गिरः त्वद्विषयाः स्तुतीः "शृणुधि अवहितः सञ्छृणु । ‘श्रु श्रवणे'। ‘श्रुशृणुपॄ' इत्यादिना हेर्ध्यादेशः । "उत अपि च “त्मना आत्मनैव स्वयमेव “तोकम् अस्मदीयं तनयं पुत्रं "रक्ष पालय । त्मनेति सर्वत्र संबध्यते । आत्मना स्वयमेव रक्ष । त्वदन्यं पालयितारं न विन्दामः । त्वमेवास्मदीयं स्तोत्रं शृणु ॥

कया ते अग्ने अंगिर ऊर्जो नपादुपस्तुतिं ।

वराय देव मन्यवे ॥४

कया । ते । अग्ने । अङ्गिरः । ऊर्जः । नपात् । उपऽस्तुतिम् ।

वराय । देव । मन्यवे ॥४

कया । ते । अग्ने । अङ्गिरः । ऊर्जः । नपात् । उपऽस्तुतिम् ।

वराय । देव । मन्यवे ॥४

हे "अङ्गिरः अङ्गिरसां वरिष्ठ । यद्वा । अङ्गति सर्वत्र गच्छतीत्यङ्गिराः । तादृश हे “ऊर्जो “नपात् । नपादित्यपत्यनाम । अन्नस्य पुत्र । हविर्भिर्वर्धमानत्वात् । यद्वा । नपादिति नप्ता । हविर्लक्षणस्यान्नस्य नप्तः । ‘अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः' इति । वृष्टेरोषधय ओषधीभ्योऽग्निरित्यन्नस्य नप्ता । हे “देव द्योतमान "अग्ने “वराय सर्वैर्वरणीयाय “मन्यवे शत्रूनतिमन्यमानाय "ते तुभ्यं “कया कीदृश्या वाचा “उपस्तुतिम् उपस्तोत्रमहं भरेयम् । त्वं महान् खल्वहमल्पः । तदर्थं स्तुतिं कुर्यामित्यृषिरग्निं प्रति वदति ॥ ।

दाशे॑म॒ कस्य॒ मन॑सा य॒ज्ञस्य॑ सहसो यहो ।

कद्उ॑ वोच इ॒दं नमः॑ ॥५

दाशे॑म । कस्य॑ । मन॑सा । य॒ज्ञस्य॑ । स॒ह॒सः॒ । य॒हो॒ इति॑ ।

कत् । ऊं॒ इति॑ । वो॒चे॒ । इ॒दम् । नमः॑ ॥५

दाशेम । कस्य । मनसा । यज्ञस्य । सहसः । यहो इति ।

कत् । ऊं इति । वोचे । इदम् । नमः ॥५

ऋषिरग्निं प्रति ब्रूते । हे सहसो "यहो । यहुरित्यपत्यनाम । बलेन निष्पाद्यमानत्वाद्बलस्य पुत्र हे अग्ने "कस्य कीदृशस्य "यज्ञस्य यज्ञवतो यजनीयदेववतो यजमानस्य “मनसा युक्ताः सन्तो हवींषि तुभ्यं वयं "दाशेम प्रयच्छेम । पूजायां बहुवचनम् । किंच तुभ्यम् "इदं "नमः हविर्नमस्कारं वा “कत् कदा “वोचे अहं वदामि । “उ इति प्रश्ने । ऋषिः कदा यक्ष्यामि कदा स्तोष्यामीत्यग्निं पृच्छति । वोचे । वच्यादेशस्य लुङ्यात्मनेपद उत्तमैकवचने रूपम् ॥ ॥ ५ ॥

अधा॒ त्वं हि न॒स्करो॒ विश्वा॑ अ॒स्मभ्यं॑ सुक्षि॒तीः ।

वाज॑द्रविणसो॒ गिरः॑ ॥६

अध॑ । त्वम् । हि । नः॒ । करः॑ । विश्वाः॑ । अ॒स्मभ्य॑म् । सु॒ऽक्षि॒तीः ।

वाज॑ऽद्रविणसः । गिरः॑ ॥६

अध । त्वम् । हि । नः । करः । विश्वाः । अस्मभ्यम् । सुऽक्षितीः ।

वाजऽद्रविणसः । गिरः ॥६

हे अग्ने "अध अनन्तरं “त्वम् । हिरवधारणे । त्वमेव "अस्मभ्यं "करः कुरु । देहीत्यर्थः । करोतेः । लेट्यडागमः । किमित्यपेक्षायामाह । "नः अस्मदीयाः “गिरः त्वद्विषयाः “विश्वाः सर्वाः स्तुतीरेवं कुरु यथा सुक्षितीः । क्षियन्ति निवसन्त्यत्रेति क्षितयो गृहाः। शोभननिवासाः । यद्वा । क्षितयो मनुष्याः । कल्याणपुत्रपौत्रादियुक्ताः । तथा “वाजद्रविणसः अन्नयुक्तधनवतीः । अथवा वाजो दीप्तिः। सर्वतो दीप्तधनाश्च कुरु । त्वमस्माभिः स्तुतः सन् गृहपुत्रान्नधनादीनि देहीत्यर्थः ॥

कस्यं नू॒नं परीं॑णसो॒ धियों॑ जिन्वसि दंपते ।

गोषां॑ता॒ यस्यं॑ ते॒ गिरः॑ ॥७

कस्यं॑ । नू॒नम् । परीं॑णसः । धियः॑ । जि॒न्व॒सि॒ । द॒म्ऽप॒ते॒ ।

गोऽसां॑ता । यस्यं॑ । ते॒ । गिरः॑ ॥७

कस्य । नूनम् । परीणसः । धियः । जिन्वसि । दम्ऽपते ।

गोऽसाता । यस्य । ते । गिरः ॥७

हे "दंपते यदा गार्हपत्ये वर्तसे तदा जायापतिस्वरूपोऽसि । तस्माद्दंपतिशब्देनाग्निरभिधीयते । तथाविध हे अग्ने "नूनम् इदानीं "कस्य कीदृशस्य जनस्य “परीणसः बहूनि “धियः कर्माणि “जिन्वसि प्रीणयसि । "यस्य “ते तव संबन्धिन्यः “गिरः स्तुतयः "गोसाता गोसातौ गवां लाभे भवन्ति खलु । तस्मात्त्वं कुत्र तिष्ठसि । अस्माकमिदानीं गवेच्छा प्रवर्तते । यद्वा । हे अग्ने त्वमिदानीं कस्य कर्माणि प्रीणयसि । न कस्यापीत्यर्थः । अस्माकमेव कर्माणि प्रीणयेति भावः ॥

अग्निमन्थने ' तं मर्जयन्त सुक्रतुम्' इत्येषा । सूत्रितं च -- तं मर्जयन्त सुक्रतुं यज्ञेन यज्ञमयजन्त देवाः' (आश्व. श्रौ. २. १६ ) इति । ।

तं म॑र्जयंत सु॒क्रतुं॑ पु॒रो॒यावा॑नमा॒जिषु॑ ।

स्वेषु॒ क्षयें॑षु वा॒जिनं॑ ॥८

तम् । म॒र्ज॒य॒न्त॒ । सु॒ऽक्रतुं॑म् । पु॒रः॒ऽयावा॑नम् । आ॒जिषु॑ ।

स्वेषु॑ । क्षयें॑षु । वा॒जिनं॑म् ॥८

तम् । मर्जयन्त । सुऽक्रतुम् । पुरःऽयावानम् । आजिषु ।

स्वेषु । क्षयेषु । वाजिनम् ॥८

“सुक्रतुं शोभनप्रज्ञं सुकर्माणं वा "आजिषु संग्रामेषु “पुरोयावानं शत्रुहननार्थं पुरत एव गन्तारं “वाजिनं बलवन्तं तादृशमग्निं यजमानाः "स्वेषु आत्मीयेषु "क्षयेषु गृहेषु “मर्जयन्त निर्मथितमग्निमलंकुर्वन्ति । परिचरन्तीति यावत् ॥

क्षेति॒ क्षेमे॑भिः सा॒धुभि॒र्नकि॒र्यं घ्नंति॒ हंति॒ यः ।

अग्ने॑ सु॒वीर॑ एधते ॥९

क्षेति॑ । क्षेमे॑भिः । सा॒धुऽभिः॑ । नकिः॑ । यम् । घ्नन्ति॑ । हन्ति॑ । यः ।

अग्ने॑ । सु॒ऽवीरः॑ । ए॒ध॒ते॒ ॥९

क्षेति । क्षेमेभिः । साधुऽभिः । नकिः । यम् । घ्नन्ति । हन्ति । यः ।

अग्ने । सुऽवीरः । एधते ॥९

हे "अग्ने यो मनुष्यः "साधुभिः साधयद्भिः "क्षेमेभिः पालनैः सह "क्षेति स्वगृहे निवसति । तथा "यं जनं "नकिः न केचन "घ्नन्ति न हिंसन्ति । "यः एव "हन्ति शत्रून् स्वयमेव हन्ति । स मनुष्यस्तव स्तोता खलु । अन्यथा तस्यैतावन्न घटते । ततः स स्तोता "सुवीरः शोभनपुत्रादियुक्तः सन् "एधते आत्मीयगृहेषु धनादिभिर्वर्धते ॥ ॥ ६ ॥

---

**टिप्पणी**

उशना उपरि आरम्भिक टिप्पणी (https://sites.google.com/view/puranic-subject-index/uluuka-ushaa/ushanaa)

८.८४.१ प्रेष्ठं वो अतिथिं इति

औशनम् (https://sa.wikisource.org/s/2hoq)

ऐतरेयब्राह्मणानुसारेण सोमयागे एका एतिरस्ति, अन्या प्रेतिः। प्रेतिः ऊर्जायाः ऊर्ध्वगमनमस्ति। अग्नेः प्रवृतिः प्रेतिप्रकारा अस्ति, किन्तु यावत् अग्नेः शोधनं न भवति, यावत् स्थूलत्वस्य नाशं न भवति, तावत् देवलोके अग्निः प्रीतियोग्या न भवति। अत्र ऋचि कथनमस्ति - प्रेष्ठं, सर्वश्रेष्ठा प्रेति। प्रेष्ठस्य प्राप्तिः केन प्रकारेण संभवमस्ति। आतिथ्येन। प्रवर्ग्यइष्ट्यां, यत्र उष्णीषबद्धः क्रीतसोमः प्रतिष्ठितः भवति, तत्र द्वादश अथवा षट्प्रवर्ग्येष्ट्यानन्तरमेव सोमः शोधनयोग्यः भवति। प्रवर्ग्येष्टीनां किं प्रयोजनमस्ति। प्रयोजनं अग्नये प्रेष्ठत्वप्रदानं अस्ति।

सविता भूत्वा प्रथमेऽहन्प्र वृज्यते । तेन कामाँ एति । यद्द्वितीयेऽहन्प्रवृज्यते । अग्निर्भूत्वा देवानेति । यत्तृतीयेऽहन्प्रवृज्यते । वायुर्भूत्वा प्राणानेति । यच्चतुर्थेऽहन्प्रवृज्यते । आदित्यो भूत्वा रश्मीनेति । यत्पञ्चमे हन्प्रवृज्यते । चन्द्रमा भूत्वा नक्षत्राण्येति १ यत्षष्ठेऽहन्प्रवृज्यते । ऋतुर्भूत्वा संवत्सरमेति । यत्सप्तमेऽहन्प्रवृज्यते । धाता भूत्वा शक्वरीमेति । यदष्टमेऽहन्प्रवृज्यते । बृहस्पतिर्भूत्वा गायत्रीमेति । यन्नवमेऽहन्प्रवृज्यते । मित्रो भूत्वा त्रिवृत इमाँ लोकानेति । यद्दशमेऽहन्प्रवृज्यते । वरुणो भूत्वा विराजमेति २ यदेकादशेऽहन्प्रवृज्यते । इन्द्रो भूत्वा

त्रिष्टुभमेति । यद्द्वादशेऽहन्प्रवृज्यते । सोमो भूत्वा सुत्यामेति । - तैआ ५.१२.१ (https://sa.wikisource.org/s/h48)

**मण्डल ८**

# ऋग्वेदः सूक्तं ८.८५

ऋग्वेदः - मण्डल ८
← सूक्तं ८.८४ सूक्तं ८.८५ सूक्तं ८.८६ →
कृष्ण आङ्गिरसः।

दे. अश्विनौ । गायत्री।

---

आ मे हवं नासत्याश्विना गच्छतं युवम् ।

मध्वः सोमस्य पीतये ॥१॥

इमं मे स्तोममश्विनेमं मे शृणुतं हवम् ।

मध्वः सोमस्य पीतये ॥२॥

अयं वां कृष्णो अश्विना हवते वाजिनीवसू ।

मध्वः सोमस्य पीतये ॥३॥

शृणुतं जरितुर्हवं कृष्णस्य स्तुवतो नरा ।

मध्वः सोमस्य पीतये ॥४॥

छर्दिर्यन्तमदाभ्यं विप्राय स्तुवते नरा ।

मध्वः सोमस्य पीतये ॥५॥

गच्छतं दाशुषो गृहमित्था स्तुवतो अश्विना ।

मध्वः सोमस्य पीतये ॥६॥

युञ्जाथां रासभं रथे वीड्वङ्गे वृषण्वसू ।

मध्वः सोमस्य पीतये ॥७॥

त्रिवन्धुरेण त्रिवृता रथेना यातमश्विना ।

मध्वः सोमस्य पीतये ॥८॥

नू मे गिरो नासत्याश्विना प्रावतं युवम् ।

मध्वः सोमस्य पीतये ॥९॥

**सायणभाष्यम्**

'आ मे हवम्' इति नवर्चं पञ्चमं सूक्तम् । कृष्णो नामाङ्गिरस ऋषिः । गायत्री छन्दः । एतदादीनि त्रीणि सूक्तान्यश्विदेवत्यानि । तथा चानुक्रान्तम्- ' आ मे कृष्ण आश्विनं हि ' इति । प्रातरनुवाक आश्विने क्रतौ गायत्रे छन्दस्याश्विनशस्त्रे चेदं सूक्तम् । सूत्रितं च--' उदीराथामा में हवम्' ( आश्व. श्रौ. ४. १५) इति ॥

आ मे॒ हवं॑ नास॒त्याश्वि॑ना॒ गच्छ॑तं यु॒वं ।

मध्व॒ः सोम॑स्य पी॒तये॑ ॥१

आ । मे॒ । हव॑म् । ना॒स॒त्या॒ । अश्वि॑ना । गच्छ॑तम् । यु॒वम् ।

मध्वः॑ । सोम॑स्य । पी॒तये॑ ॥१

आ । मे । हवम् । नासत्या । अश्विना । गच्छतम् । युवम् ।

मध्वः । सोमस्य । पीतये ॥१

हे "नासत्या । असत्यमनयोर्नास्तीति नासत्यौ । तादृशौ हे "अश्विना अश्विनौ "युवं युवां "मे मदीयं हवम् आह्वानं श्रुत्वा । यद्वा । हवम् । हूयतेऽत्रेति हवो यज्ञः । केवलस्याधिकरणेऽप् छान्दसः । मदीयं यज्ञं प्रति "मध्वः मदकरस्य "सोमस्य "पीतये पानाय तदर्थम् "आ "गच्छतम् ॥

इ॒मं मे॒ स्तोम॑मश्विने॒मं मे॑ शृणुत॒ं हवं॑ ।

मध्व॒ः सोम॑स्य पी॒तये॑ ॥२

इ॒मम् । मे॒ । स्तोम॑म् । अ॒श्वि॒ना॒ । इ॒मम् । मे॒ । शृ॒णु॒त॒म् । हव॑म् ।

मध्वः॑ । सोम॑स्य । पी॒तये॑ ॥२

इमम् । मे । स्तोमम् । अश्विना । इमम् । मे । शृणुतम् । हवम् ।

मध्वः । सोमस्य । पीतये ॥२

हे “अश्विना अश्विनौ “मे मदीयम् “इमं “स्तोमं स्तोत्रं किंच “मे मदीयम् “इमम् इदमागमनविषयं “हवम् आह्वानं च “शृणुतम् ॥ ।

अ॒यं वां॒ कृष्णो॑ अश्विना॒ हव॑ते वाजिनीवसू ।

मध्वः॒ सोम॑स्य पी॒तये॑ ॥३

अ॒यम् । वा॒म् । कृष्णः॑ । अ॒श्वि॒ना॒ । हव॑ते । वा॒जि॒नी॒व॒सू॒ इति॑ वाजिनीऽवसू ।

मध्वः॑ । सोम॑स्य । पी॒तये॑ ॥३

अयम् । वाम् । कृष्णः । अश्विना । हवते । वाजिनीवसू इति वाजिनीऽवसू ।

मध्वः । सोमस्य । पीतये ॥३

हे “वाजिनीवसू अन्नयुक्तधनौ । अत्रेनिरनुवादार्थः । यद्वा । वाजो वजनं क्रिया। तद्वती वाजिनी । तद्युक्तधनवन्तौ हे “अश्विना अश्विनौ “अयं “कृष्णः नाम मन्त्रद्रष्टा ऋषिः “वां युवां “हवते स्तुतिभिराह्वयति । किमर्थम् । “मध्वः “सोमस्य “पीतये इति ॥

शृ॒णु॒तं ज॑रि॒तुर्हवं॒ कृष्ण॑स्य स्तुव॒तो न॑रा ।

मध्वः॒ सोम॑स्य पी॒तये॑ ॥४

शृ॒णु॒तम् । ज॒रि॒तुः । हव॑म् । कृष्ण॑स्य । स्तु॒व॒तः । न॒रा॒ ।

मध्वः॑ । सोम॑स्य । पी॒तये॑ ॥४

शृणुतम् । जरितुः । हवम् । कृष्णस्य । स्तुवतः । नरा ।

मध्वः । सोमस्य । पीतये ॥४

हे "नरा नरौ सर्वस्य नेतारावश्विनौ “जरितुः । तच्छीलार्थे तृन् । व्यत्ययेनान्तोदात्तत्वम् । जरितुः स्तवनशीलस्य संप्रति “स्तुवतः स्तोत्रं कुर्वतः “कृष्णस्य एतन्नामकस्यर्षेः संबन्धि “हवं युष्मद्विषयमाह्वानं “शृणुतम् । यद्वा । जरितुरन्यदेवानां स्तोतुः स्तुवत इदानीं युवयोः स्तोत्रकारिणस्तस्य हवं शृणुतम् । शिष्टं गतम् ॥

उप । नः । हरिऽभिः । सुतम् ॥३२

“वृत्रहन्तमः अतिशयेन वृत्रस्य हन्ता “शतक्रतुः नानाविधकर्मा “यः “इन्द्रः “द्विता द्विधा “विदे वृत्रवधादावुग्रकर्मा जगद्रक्षणकाले शान्तकर्मेति द्विप्रकारेण सर्वैर्ज्ञायते । “विद ज्ञाने'। कर्मणि विहितस्य तप्रत्ययस्य लोपस्त आत्मनेपदेषु' इति तलोपः । स त्वं “हरिभिः सह "सुतं सोममुपयाहि ॥

त्वं हि वृ॑त्रहन्नेषां पा॒ता सोमा॑ना॒मसि॑ ।

उप॑ नो॒ हरि॑भिः सु॒तम् ॥३३

त्वम् । हि । वृ॒त्र॒ऽह॒न् । ए॒षा॒म् । पा॒ता । सोमा॑नाम् । असि॑ ।

उप॑ । न॒ः । हरि॑ऽभिः । सु॒तम् ॥३३

त्वम् । हि । वृत्रऽहन् । एषाम् । पाता । सोमानाम् । असि ।

उप । नः । हरिऽभिः । सुतम् ॥३३

हे “वृत्रहन् वृत्रस्य पापस्य वा हन्तरिन्द्र । हिशब्दो हेत्वर्थे। यस्मात् “त्वम् “एषाम् अस्मदीयानां “सोमानां “पाता पानकर्ता “असि भवसि । एषाम् इति इदमोऽन्वादेशे अशोदेशोऽनुदात्तश्च । अतस्त्वम् अश्वैः सह सोमं पातुमुपयाहि आगच्छ ॥

व्यूळ्हस्य दशरात्रस्य नवमेऽहनि वैश्वदेवे अभिप्लवतृचस्य ‘इन्द्र इषे ददातु नस्ते नो रत्नानि धत्तन' इति द्वे ऋचावार्भव्यौ । सूत्रितं च- इन्द्र इषे ददातु नस्ते नो रत्नानि धत्तनेत्येका द्वे व (आश्व. श्रौ. ८. ११ ) इति ॥

इन्द्र॑ इ॒षे द॑दातु न ऋभु॒क्षण॑मृ॒भुं र॒यिम् ।

वा॒जी द॑दातु वा॒जिन॑म् ॥३४

इन्द्रः॑ । इ॒षे । द॒दा॒तु॒ । न॒ः । ऋ॒भु॒क्षण॑म् । ऋ॒भुम् । र॒यिम् ।

वा॒जी । द॒दा॒तु॒ । वा॒जिन॑म् ॥३४

इन्द्रः । इषे । ददातु । नः । ऋभुक्षणम् । ऋभुम् । रयिम् ।

वाजी । ददातु । वाजिनम् ॥३४

“इन्द्रः एवास्माभिः स्तुत इष्टः सन् "ऋभुक्षणम् । ‘वा षपूर्वस्य' इति दीर्घाभावः । यागादिकर्मकरणेन महान्तं सर्वेषां भ्रातॄणां श्रेष्ठं वा । अथवा तृतीयसवने प्रजापतिसवित्रोर्मध्ये सोमपातृत्वात् महान्तम् । “रयिं दातारम् “ऋभुं सोमपानेनामर्त्यत्वं प्राप्तं तादृशमेतन्नामकं देवं “नः अस्मभ्यम् “इषे अन्नार्थं “ददातु प्रयच्छतु । तथा “वाजी बलवानिन्द्रः “वाजिनं बलवन्तमन्नवन्तं वा वाजनामानं कनीयांसं भ्रातरं च अस्माकमन्नलाभाय “ददातु ॥ ॥ २७ ॥ ॥ ९ ॥

# ऋग्वेदः सूक्तं ८.९४

ऋग्वेदः - मण्डल ८
← सूक्तं ८.९३ सूक्तं ८.९४ सूक्तं ८.९५ →
बिन्दुः पूतदक्षो वा अङ्गिरसः।

दे. मरुतः। गायत्री।

---

गौर्धयति मरुतां श्रवस्युर्माता मघोनाम् ।

युक्ता वह्नी रथानाम् ॥१॥

यस्या देवा उपस्थे व्रता विश्वे धारयन्ते ।

सूर्यामासा दृशे कम् ॥२॥

तत्सु नो विश्वे अर्य आ सदा गृणन्ति कारवः ।

मरुतः सोमपीतये ॥३॥

अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः ।

उत स्वराजो अश्विना ॥४॥

पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः ।

त्रिषधस्थस्य जावतः ॥५॥

उतो न्वस्य जोषमाँ इन्द्रः सुतस्य गोमतः ।

प्रातर्होतेव मत्सति ॥६॥

कदत्विषन्त सूरयस्तिर आप इव स्रिधः ।

अर्षन्ति पूतदक्षसः ॥७॥

कद्वो अद्य महानां देवानामवो वृणे ।

त्मना च दस्मवर्चसाम् ॥८॥

आ ये विश्वा पार्थिवानि पप्रथन्रोचना दिवः ।

मरुतः सोमपीतये ॥९॥

त्यान्नु पूतदक्षसो दिवो वो मरुतो हुवे ।

अस्य सोमस्य पीतये ॥१०॥

त्यान्नु ये वि रोदसी तस्तभुर्मरुतो हुवे ।

अस्य सोमस्य पीतये ॥११॥

त्यं नु मारुतं गणं गिरिष्ठां वृषणं हुवे ।

अस्य सोमस्य पीतये ॥१२॥

**सायणभाष्यम्**

दशमेऽनुवाके दश सूक्तानि । तत्र 'गौर्धयति' इति द्वादशर्चमाद्यं सूक्तमाङ्गिरसस्य बिन्दुनाम्नः पूतदक्षनाम्नो वार्षं गायत्रं मरुद्देवताकम् । तथा चानुक्रम्यते- ' गौर्धयति द्वादश बिन्दुः पूतदक्षो वा मारुतम्' इति । सूक्तविनियोगो लैङ्गिकः । प्रातःसवने सोमातिरिक्त एकं शस्त्रमुपजायते । तत्राद्यस्तृचोऽनुरूपः । सूत्रितं च - 'अस्ति सोमो अयं सुतो गौर्धयति मरुतामिति स्तोत्रियानुरूपौ' (आश्व. श्रौ. ६. ७) इति ॥

गौर्ध॑यति म॒रुतां॑ श्रव॒स्युर्मा॒ता म॒घोना॑म् ।

यु॒क्ता वह्नी॒ रथा॑नाम् ॥१

गौः । ध॒य॒ति॒ । म॒रुता॑म् । श्र॒व॒स्युः । मा॒ता । म॒घोना॑म् ।

यु॒क्ता । वह्निः॑ । रथा॑नाम् ॥१

गौः । धयति । मरुताम् । श्रवस्युः । माता । मघोनाम् ।

युक्ता । वह्निः । रथानाम् ॥१

"मघोनां धनवतां "मरुतां "माता निर्मात्री "गौः पृश्निरूपा । 'पृश्नियै वै पयसो मरुतो जाताः' इति श्रुतेः। यद्वा । गौर्माध्यमिकी वाक् । तत्रैव मध्यमस्थाने मरुतामपि वर्तनात्तेषां तत्पुत्रत्वमुपचर्यते। “धयति सोमं पिबति पाययति वा स्वपुत्रान् मरुतः । किमिच्छन्ती। “श्रवस्युः अन्नं कामयमाना । कीदृशी। "रथानां मारुतानां "वह्निः पृषतीभिर्वडवाभिर्वोढ्री संयोजयित्री सा "युक्ता सर्वत्र समन्तात् पूज्या भवति ॥

यस्यां दे॒वा उ॒पस्थे॑ व्र॒ता विश्वे॑ धा॒रयं॑न्ते ।

सूर्या॒मासा॑ दृ॒शे कम् ॥२

यस्याः॑ । दे॒वाः । उ॒पऽस्थे॑ । व्र॒ता । विश्वे॑ । धा॒रयं॑न्ते ।

सूर्या॒मासा॑ । दृ॒शे । कम् ॥२

यस्याः । देवाः । उपऽस्थे । व्रता । विश्वे । धारयन्ते ।

सूर्यामासा । दृशे । कम् ॥२

गौः सर्वदेवमयीत्याह । "यस्याः मरुतां मातुर्गोः "उपस्थे वर्तमानाः "विश्वे सर्वे “देवाः “व्रता व्रतानि स्वस्वकर्माणि “धारयन्ते बिभ्रति । इयमेवास्माकं स्वपयोमिश्रितस्य सोमस्य दात्रीति सर्वे तत्समीपे तिष्ठन्तीत्यर्थः। किंच "सूर्यामासा । माति स्वकलाभिस्तिथीनिति माश्चन्द्रमाः ।। ‘ देवताद्वन्द्वे च ' इत्युभयपदप्रकृतिस्वरत्वम् । सूर्याचन्द्रमसौ “दृशे दर्शनाय सर्वलोकप्रकाशनाय च यस्या गोः समीपे "कं सुखेन वर्तमानौ भवतः । सेयं गौः सोमं धयतीति पूर्वेण समन्वयः ॥

तत्सु नो॒ विश्वे॑ अ॒र्य आ सदा॑ गृणन्ति का॒रव॑ः ।

म॒रुत॒ः सोम॑पीतये ॥३

तत् । सु । न॒ः । विश्वे॑ । अ॒र्यः । आ । सदा॑ । गृ॒ण॒न्ति॒ । का॒रवः॑ ।

म॒रुतः॑ । सोम॑ऽपीतये ॥३

तत् । सु । नः । विश्वे । अर्यः । आ । सदा । गृणन्ति । कारवः ।

मरुतः । सोमऽपीतये ॥३

"अर्यः स्तोत्रकरणार्थमितस्ततो गन्तारः "नः अस्मदीयाः विश्वे सर्वे "कारवः स्तोतारः “तत् मरुतां बलं "सदा सर्वदा "आ "गृणन्ति । आभिमुख्येन स्तुतिभिः स्तुवन्ति । किमर्थम् । "सोमपीतये अस्माभिर्दीयमानं सोमं पातुम् । "मरुतः एतन्नामका देवा अस्माभिराह्वातव्याः खलु । ततः पुरस्तात्तद्बलं स्तुवन्तीत्यर्थः।।

पूर्वाभिहित एव शस्त्रे 'अस्ति सोमः' इति स्तोत्रियस्तृचः । सूत्रं तु पूर्वेण सहोदाहृतम् ॥

अस्ति॒ सोमो॑ अ॒यं सु॒तः पिब॑न्त्यस्य म॒रुत॑ः ।

उ॒त स्व॒राजो॑ अ॒श्विना॑ ॥४

अस्ति॑ । सोम॑ः । अ॒यम् । सु॒तः । पिब॑न्ति । अ॒स्य॒ । म॒रुत॑ः ।

उ॒त । स्व॒ऽराज॑ः । अ॒श्विना॑ ॥४

अस्ति । सोमः । अयम् । सुतः । पिबन्ति । अस्य । मरुतः ।

उत । स्वऽराजः । अश्विना ॥४

“अयं पुरोवर्ती “सोमः “सुतः मरुदर्थमस्माभिरभिषुतः “अस्ति विद्यते । तस्मात् “अस्य । अन्वादेशे । एनं सुतं सोमं “स्वराजः स्वयं दीप्यमानाः । स्वतेजसा नान्यदीयेनेत्यर्थः । तादृशाः “मरुतः “पिबन्ति । "उत अपि च “अश्विना अश्विनौ च सोमं पिबतः ॥

पिब॑न्ति मि॒त्रो अ॑र्य॒मा तना॑ पू॒तस्य॒ वरु॑णः ।

त्रि॒ष॒ध॒स्थस्य॒ जाव॑तः ॥५

पिब॑न्ति । मि॒त्रः । अ॒र्य॒मा । तना॑ । पू॒तस्य॑ । वरु॑णः ।

त्रि॒ऽस॒ध॒स्थस्य॑ । जाऽव॑तः ॥५

पिबन्ति । मित्रः । अर्यमा । तना । पूतस्य । वरुणः ।

त्रिऽसधस्थस्य । जाऽवतः ॥५

न केवलं मरुत एव सोमपातारः किंत्वेतेऽपीत्याह । “मित्रः सर्वेषां स्वस्वकर्मणि प्रवर्तकत्वात् सखिभूतः “अर्यमा च “वरुणः दुःखादीनां शत्रूणां वा वरिता निवारकः । एतन्नामकास्त्रयो देवाः “तना। ततमूर्णास्तुकेनेति तनं दशापवित्रम् । ‘सुपां सुलुक् ' इति तृतीयाया आलादेशः । तनाद्युदात्तः । तना “पूतस्य शोधितं “त्रिसधस्थस्य । सह तिष्ठन्यत्रेति सधस्थं स्थानम् । द्रोणकलशाधवनीयपूतभृदात्मनि त्रीणि स्थानानि यस्य तं तथोक्तं तादृशं “जावतः स्तुत्यजनवन्तमिमं सोमं “पिबन्ति । द्वितीयार्थे षष्ठ्यः ॥

उ॒तो न्व॑स्य॒ जोष॒माँ इन्द्र॑ः सु॒तस्य॒ गोम॑तः ।

प्रा॒तर्होते॑व मत्सति ॥६

उ॒तो इति॑ । नु । अ॒स्य॒ । जोष॑म् । आ । इन्द्रः॑ । सु॒तस्य॑ । गोऽम॑तः ।

प्रा॒तः । होता॑ऽइव । म॒त्स॒ति॒ ॥६

उतो इति । नु । अस्य । जोषम् । आ । इन्द्रः । सुतस्य । गोऽमतः ।

प्रातः । होताऽइव । मत्सति ॥६

“उतो अपि च “इन्द्रः “सुतस्य अस्माभिरभिषुतस्य “गोमतः गव्यैर्मिश्रणवतः “अस्य । अन्वादेशः । पूर्ववद्दशापवित्रेण पूतस्य सोमस्य “जोषं पानरूपां सेवां “प्रातः प्रातःसवने "नु क्षिप्रम् “आ “मत्सति । मदि स्तुत्यादिषु । आभिमुख्येन स्तौति । यद्वा । सोमसेवां कामयते । तत्र दृष्टान्तः । "होतेव । यथा होता प्रातःसवने देवानभिष्टौति देवान् स्तोतुं वाभिवाञ्छति ॥ ॥ २८ ॥

कद॑त्विषन्त सू॒रय॑स्ति॒र आप॑ इव॒ स्रिध॑ः ।

अर्ष॑न्ति पू॒तद॑क्षसः ॥७

कत् । अ॒त्वि॒ष॒न्त॒ । सू॒रयः॑ । ति॒रः । आपः॑ऽइव । स्रिधः॑ ।

अर्ष॑न्ति । पू॒तऽद॑क्षसः ॥७

कत् । अत्विषन्त । सूरयः । तिरः । आपःऽइव । स्रिधः ।

अर्षन्ति । पूतऽदक्षसः ॥७

ऋषिर्मरुतो बहुवारं स्तुत्वेदानीमात्मानं वितर्कयति । “सूरयः प्राज्ञाः “आपइव उदकानीव “तिरः यथोदकानि तिर्यग्गच्छन्ति तद्वत्तिरश्चीनगतयः सन्तः “कत् कदा “अत्विषन्त । त्विष दीप्तौ । अन्तरिक्षे कदा दीप्यन्ते । किंच “स्रिग्धः शत्रूणां शोषका हन्तारस्त इमे मरुतः “पूतदक्षसः शुद्धबलाः सन्तः कदा वा “अर्षन्ति । अस्मदीयं यज्ञं प्रत्यागच्छन्ति ॥

कद्वो॑ अ॒द्य म॒हानां॑ दे॒वाना॒मवो॑ वृणे ।

त्मना॑ च द॒स्मव॑र्चसाम् ॥८

कत् । वः॒ । अ॒द्य । म॒हाना॑म् । दे॒वाना॑म् । अवः॑ । वृ॒णे॒ ।

त्मना॑ । च॒ । द॒स्मऽव॑र्चसाम् ॥८

कत् । वः । अद्य । महानाम् । देवानाम् । अवः । वृणे ।

त्मना । च । दस्मऽवर्चसाम् ॥८

हे मरुतः “महानां मंहनीयानां महतां वा “त्मना “च आत्मनैवालंकरणैर्विनापि “दस्मवर्चसां दर्शनीयतेजस्कानामत एव "देवानां द्योतमानानां “वः युष्माकम् “अवः पालनं “कत् कदाहं “वृणे संभजे । वृङ् संभक्तौ' । क्रैयादिकः ॥

आ ये विश्वा॒ पार्थि॑वानि प॒प्रथ॑न्रोच॒ना दि॒वः ।

म॒रुत॒ः सोम॑पीतये ॥९

आ । ये । विश्वा॑ । पार्थि॑वानि । प॒प्रथ॑न् । रो॒च॒ना । दि॒वः ।

म॒रुतः॑ । सोम॑ऽपीतये ॥९

आ । ये । विश्वा । पार्थिवानि । पप्रथन् । रोचना । दिवः ।

मरुतः । सोमऽपीतये ॥९

“ये मरुतः “विश्वा विश्वानि “पार्थिवानि पृथिव्यां भवानि भूतजातानि “दिवः द्युलोकस्य “रोचना रोचमानानि ज्योतींषि च “आ “पप्रथन् सर्वत्र विस्तारितान्यकार्षुः । ‘प्रथ प्रख्याने'। ण्यन्तस्य चङि अत्स्मृदृत्वरप्रथम्रदस्तृस्पशाम् ' ( पा. सू. ७. ४. ९५ ) इत्यभ्यासस्यादादेशः । ' चङन्यन्यतरस्याम् ' इति स्वरेण मध्योदात्तः । तादृशान् "मरुतः देवान् "सोमपीतये सोमपानायाहमाह्वयामि ॥

त्यान्नु पू॒तद॑क्षसो दि॒वो वो॑ मरुतो हुवे ।

अ॒स्य सोम॑स्य पी॒तये॑ ॥१०

त्यान् । नु । पू॒तऽद॑क्षसः । दि॒वः । व॒ः । म॒रु॒त॒ः । हु॒वे॒ ।

अ॒स्य । सोम॑स्य । पी॒तये॑ ॥१०

त्यान् । नु । पूतऽदक्षसः । दिवः । वः । मरुतः । हुवे ।

अस्य । सोमस्य । पीतये ॥१०

हे “मरुतः मितराविण एतन्नामका देवाः "पूतदक्षसः परिशुद्धबलान् “दिवः स्वतेजसा दीप्यमानान् । यद्वा । दिवो द्युलोकस्थितान् । "त्यान् तान् प्रसिद्धान् "वः युष्मान् "नु क्षिप्रं "हुवे आह्वयामि । किमर्थम् । "अस्य अस्मदीयस्य "सोमस्य "पीतये पानाय ॥

त्यान्नु ये वि रोद॑सी तस्त॒भुर्म॒रुतो॑ हुवे ।

अ॒स्य सोम॑स्य पी॒तये॑ ॥११

त्यान् । नु । ये । वि । रोदंसी॒ इतिं । त॒स्त॒भुः । म॒रुतः॑ । हु॒वे॒ ।

अ॒स्य । सोमं॑स्य । पी॒तयें ॥११

त्यान् । नु । ये । वि । रोदसी इति । तस्तभुः । मरुतः । हुवे ।

अस्य । सोमस्य । पीतये ॥११

"ये "मरुतः "रोदसी द्यावापृथिव्यौ "वि "तस्तभुः स्वबलेनैवात्यर्थं स्तब्धे चक्रुः । ते रोदसी स्वाधीने अकार्षुरित्यर्थः। “त्यान् तान् सर्वतः प्रसिद्धान् "नु क्षिप्रमहं "हुवे आह्वयामि । किमर्थम् । "अस्य इत्यादि ।

त्यं नु मारुंतं ग॒णं गिंरि॒ष्ठां वृषंणं हुवे ।

अ॒स्य सोमं॑स्य पी॒तयें ॥१२

त्यम् । नु । मारुंतम् । ग॒णम् । गि॒रि॒ऽस्थाम् । वृषंणम् । हु॒वे॒ ।

अ॒स्य । सोमं॑स्य । पी॒तयें ॥१२

त्यम् । नु । मारुतम् । गणम् । गिरिऽस्थाम् । वृषणम् । हुवे ।

अस्य । सोमस्य । पीतये ॥१२

“त्यं तं सर्वत्र विश्रुतं "गिरिष्ठां गिरिषु मेघेषु पर्वतेषु वा तिष्ठन्तं "वृषणम् उदकानां कामानां वा वर्षितारं "मारुतं मरुत्संबन्धिनं "गणं संघं "हुवे बिन्दुरहमाह्वयामि । किं प्रयोजनम् । "अस्य अस्मदीयस्य "सोमस्य "पीतये पानाय ॥ ॥ २९ ॥

# ऋग्वेदः सूक्तं ८.९५

ऋग्वेदः - मण्डल ८
← सूक्तं ८.९४ सूक्तं ८.९५ सूक्तं ८.९६ →
तिरश्चिराङ्गिरसः।

दे. इन्द्रः। अनुष्टुप्।

आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।

अभि त्वा समनूषतेन्द्र वत्सं न मातरः ॥१॥

आ त्वा शुक्रा अचुच्यवुः सुतास इन्द्र गिर्वणः ।

पिबा त्वस्यान्धस इन्द्र विश्वासु ते हितम् ॥२॥

पिबा सोमं मदाय कमिन्द्र श्येनाभृतं सुतम् ।

त्वं हि शश्वतीनां पती राजा विशामसि ॥३॥

श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।

सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥४॥

इन्द्र यस्ते नवीयसीं गिरं मन्द्रामजीजनत् ।

चिकित्विन्मनसं धियं प्रत्नामृतस्य पिप्युषीम् ॥५॥

तमु ष्टवाम यं गिर इन्द्रमुक्थानि वावृधुः ।

पुरूण्यस्य पौंस्या सिषासन्तो वनामहे ॥६॥

एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना ।

शुद्धैरुक्थैर्वावृध्वांसं शुद्ध आशीर्वान्ममत्तु ॥७॥

इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः ।

शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्यः ॥८॥

इन्द्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे ।

शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषाससि ॥९॥

**सायणभाष्यम्**

'आ त्वा' इति नवर्चं द्वितीयं सूक्तमानुष्टुभमैन्द्रम् । तिरश्चीर्नामाङ्गिरस ऋषिः । तथा चानुक्रम्यते- ' आ त्वा नव तिरश्चीरानुष्टुभम्' इति । आभिप्लविकेषूक्थ्येषु तृतीयसवनेऽच्छावाकस्य ' आ त्वा गिरः' इति तृचो वैकल्पिकोऽनुरूपः । सूत्र्यते हि – गायन्ति त्वा गायत्रिण आ त्वा गिरो रथीरिव' (आश्व. श्रौ. ७. ८) इति ॥

आ त्वा॒ गिरो॑ र॒थीरि॒वास्थुः॑ सु॒तेषु॑ गिर्वणः ।

अ॒भि त्वा॒ सम॑नूष॒तेन्द्र॑ व॒त्सं न मा॒तरः॑ ॥१

आ । त्वा॒ । गिरः॑ । र॒थीःऽइ॑व । अस्थुः॑ । सु॒तेषु॑ । गि॒र्व॒णः॒ ।

अ॒भि । त्वा॒ । सम् । अ॒नू॒ष॒त॒ । इन्द्र॑ । व॒त्सम् । न । मा॒तरः॑ ॥१

आ । त्वा । गिरः । रथीःऽइव । अस्थुः । सुतेषु । गिर्वणः ।

अभि । त्वा । सम् । अनूषत । इन्द्र । वत्सम् । न । मातरः ॥१

हे "गिर्वणः गीर्भिर्वननीयेन्द्र "सुतेषु सोमेष्वभिषुतेषु सत्सु "गिरः अस्माकं स्तुतिलक्षणा वाचः “त्वा त्वाम् "आ “अस्थुः आभिमुख्येन शीघ्रं तिष्ठन्ति । तत्र दृष्टान्तः । "रथीरिव । यथा रथवान् रथेन गच्छन् वीरः प्राप्यं देशं क्षिप्रं गच्छति तद्वदस्माभिरभिगन्तव्यं त्वां स्तुतयोऽभिगच्छन्ति । किंच हे "इन्द्र अस्मदीया गिरः “त्वा त्वामभिलक्ष्य "समनूषत सम्यक् शब्दायन्ते । स्तुवन्तीत्यर्थः । 'नू स्तवने' । कुटादिः । तस्य लुङि रूपम् । तत्र दृष्टान्तः । "वत्सं "न “मातरः । यथा मातरो गावो वत्समभिलक्ष्य हम्भारवादिशब्दं कुर्वन्ति तद्वत् ॥

आ त्वा॑ शु॒क्रा अ॑चुच्यवुः सु॒तास॑ इन्द्र गिर्वणः ।

पिबा॒ त्व१॒॑स्यान्ध॑स॒ इन्द्र॒ विश्वा॑सु ते हि॒तम् ॥२

आ । त्वा॒ । शु॒क्राः । अ॒चु॒च्य॒वुः॒ । सु॒तासः॑ । इ॒न्द्र॒ । गि॒र्व॒णः॒ ।

पिब॑ । तु । अ॒स्य । अन्ध॑सः । इन्द्र॑ । विश्वा॑सु । ते॒ । हि॒तम् ॥२

आ । त्वा । शुक्राः । अचुच्यवुः । सुतासः । इन्द्र । गिर्वणः ।

पिब । तु । अस्य । अन्धसः । इन्द्र । विश्वासु । ते । हितम् ॥२

हे “गिर्वणः गीर्भिर्वननीय हे “इन्द्र “शुक्राः ग्रहेषु पात्रेषु च दीप्यमानाः "सुतासः अस्माभिः अभिषुताः सोमाः “त्वा त्वाम् “आ “अचुच्यवुः आगच्छन्तु । ' च्युङ् प्लुङ् गती'। लिङि ‘बहुलं छन्दसि ' इति शपः श्लुः । ततस्त्वमस्माभिर्दीयमानस्य "अन्धसः सोमस्य भवदीयं भाग "तु क्षिप्रं “पिब । तदेवोपपादयति । हे "इन्द्र "विश्वासु सर्वासु दिक्षु "ते त्वदर्थं सोमपुरोडाशादिहविः “हितं निहितं भवति ॥

पिबा॒ सोम॒ं मदा॑य॒ कमिन्द्र॑ श्ये॒नाभृ॑तं सु॒तम् ।

त्वं हि शश्व॑तीना॒ं पती॒ राजा॑ वि॒शामसि॑ ॥३

पिब॑ । सोम॑म् । मदा॑य । कम् । इन्द्र॑ । श्ये॒नऽआ॑भृतम् । सु॒तम् ।

त्वम् । हि । शश्व॑तीनाम् । पतिः॑ । राजा॑ । वि॒शाम् । असि॑ ॥३

पिब । सोमम् । मदाय । कम् । इन्द्र । श्येनऽआभृतम् । सुतम् ।

त्वम् । हि । शश्वतीनाम् । पतिः । राजा । विशाम् । असि ॥३

हे “इन्द्र त्वं "श्येनाभृतम् । 'हृग्रहोर्भश्छन्दसि ' इति हकारस्य भकारः । द्युलोकात् श्येनरूपया गायत्र्याहृतं "सुतम् अभिषुतं "सोमं "मदाय हर्षाय “पिब । "कम् इति पूरणः सुखार्थो वा । सुखेन सोमं पिब । हिशब्दो हेतौ । “हि यस्मात् "त्वं "शश्वतीनां बह्वीनां "विशां मरुद्गणानां सर्वेषां देवगणानां च “पतिः पालयिता स्वामी "असि भवसि तथा "राजा स्वतेजसा दीप्यमानश्चासि । अतस्त्वं पूर्वं सोमं पिबेति ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवनेऽच्छावाकस्य ‘श्रुधी हवं तिरश्च्या' इति वैकल्पिकः स्तोत्रियः । सूत्रितं च – श्रुधी हवं तिरश्च्या आश्रुत्कर्ण श्रुधी हवम् ' ( आश्व. श्रौ. ७. ८) इति ।।

श्रु॒धी हवं॑ तिर॒श्च्या इन्द्र॒ यस्त्वा॑ सप॒र्यति॑ ।

सु॒वीर्य॑स्य॒ गोम॑तो रा॒यस्पू॑र्धि म॒हाँ अ॑सि ॥४

श्रु॒धि । हव॑म् । ति॒र॒श्च्याः । इन्द्र॑ । यः । त्वा॒ । स॒प॒र्यति॑ ।

सुऽवीर्य॑स्य । गोऽम॑तः । रा॒यः । पू॒र्धि॒ । म॒हान् । अ॒सि॒ ॥४

श्रुधि । हवम् । तिरश्च्याः । इन्द्र । यः । त्वा । सपर्यति ।

सुऽवीर्यस्य । गोऽमतः । रायः । पूर्धि । महान् । असि ॥४

हे “इन्द्र “यस्त्वा त्वां “सपर्यति । सपरशब्दः कण्ड्वादिः । हविर्भिः परिचरति तादृशस्य “तिरश्च्याः एतन्नामकस्यर्षेः मम "हवं स्तुतिभिस्त्वद्विषयमाह्वानं “श्रुधि शृणु । श्रुत्वा च हे इन्द्र त्वं “सुवीर्यस्य शोभनवीर्योपेतस्य । यद्वा । वीरे पुत्रे भवं वीर्यम् । सुपुत्रवतः । “गोमतः गवादिपशुमतः “रायः धनस्य दानेन “पूर्धि अस्मान् पूरय । एतत्सामर्थ्यं कुत इत्यत आह । त्वं “महान् गुणाधिको देवानां श्रेष्ठश्च “असि भवसि खलु ॥

इन्द्र॒ यस्ते॒ नवी॑यसी॒ं गिरं॑ म॒न्द्रामजी॑जनत् ।

चि॒कि॒त्विन्म॑नसं॒ धियं॑ प्र॒त्नामृ॒तस्य॑ पि॒प्युषी॑म् ॥५

इन्द्र॑ । यः । ते॒ । नवी॑यसीम् । गिर॑म् । म॒न्द्राम् । अजी॑जनत् ।

चि॒कि॒त्वित्ऽम॑नसम् । धिय॑म् । प्र॒त्नाम् । ऋ॒तस्य॑ । पि॒प्युषी॑म् ॥५

इन्द्र । यः । ते । नवीयसीम् । गिरम् । मन्द्राम् । अजीजनत् ।

चिकित्वित्ऽमनसम् । धियम् । प्रत्नाम् । ऋतस्य । पिप्युषीम् ॥५

हे "इन्द्र “यः यजमानः "नवीयसीं नवतरां पुनःपुनः क्रियमाणतया “मन्द्रां मदकरीं “गिरं स्तुतिलक्षणां वाचं “ते त्वदर्थम् "अजीजनत् उदपीपदत् । अकार्षीदित्यर्थः। तस्मै स्तोत्रे त्वं "प्रत्नां पुरातनम् “ऋतस्य सत्यस्य संबन्धि । यद्वा । तृतीयार्थे षष्ठी । सत्येन "पिप्युषीं प्रवृद्धम् । लिङ्यङोश्च' इति प्यायतेः पीभावः । तादृशं चिकित्विन्मनसम्। कित ज्ञाने' । क्वसौ रूपम् । अकारस्येकारश्छान्दसः । चिकित्वांसि ज्ञातानि सर्वेषां हृदयानि ययेति । अमायया क्रियमाणं यत्तव रक्षणं सर्वेषां हृदयं प्रज्ञापयतीति तदतीन्द्रियार्थदर्शकं “धियं त्वदीयं रक्षणाख्यं तस्मै कुरु ॥ ॥ ३० ॥

तमु॑ ष्टवाम॒ यं गिर॒ इन्द्र॑मु॒क्थानि॑ वावृ॒धुः ।

पु॒रूण्य॑स्य॒ पौंस्या॒ सिषा॑सन्तो वनामहे ॥६

तम् । ऊं॒ इति॑ । स्त॒वा॒म॒ । यम् । गिरः॑ । इन्द्र॑म् । उ॒क्थानि॑ । व॒वृ॒धुः ।

पु॒रूणि॑ । अ॒स्य॒ । पौंस्या॑ । सिसा॑सन्तः । व॒ना॒म॒हे॒ ॥६

तम् । ऊं इति । स्तवाम । यम् । गिरः । इन्द्रम् । उक्थानि । ववृधुः ।

पुरूणि । अस्य । पौंस्या । सिसासन्तः । वनामहे ॥६

ऋषयः परस्परमाहुः । “तं पूर्वोक्तलक्षणम् । "उ इत्यवधारणे । तमेवेन्द्रं “स्तवाम स्तुतिभिः स्तुमः। “यम् “इन्द्रं “गिरः अस्माकं स्तुतयः “उक्थानि शस्त्राणि च “वावृधुः प्रावर्धयन् तं स्तुमः । ततो वयम् “अस्य इन्द्रस्य “पुरूणि बहूनि “पौंस्या वीर्याणि “सिषासन्तः । 'षण संभक्तौ'। सनीडभावपक्ष आत्वे कृते 'सनोतेरनः' इति सांहितिकं षत्वम् । तानि वीर्याणि संभक्तुमिच्छन्तः सन्तः “वनामहे । तमिन्द्रं स्तुतिभिः संभजामहे ॥

एतो॒ न्विन्द्रं॒ स्तवा॑म शु॒द्धं शु॒द्धेन॒ साम्ना॑ ।

शु॒द्धैरु॒क्थैर्वा॑वृ॒ध्वांसँ॑ शु॒द्ध आ॒शीर्वा॑न्ममत्तु ॥७

एतो॒ इति॑ । नु । इन्द्र॑म् । स्त॒वा॒म॒ । शु॒द्धम् । शु॒द्धेन॑ । साम्ना॑ ।

शु॒द्धैः । उ॒क्थैः । व॒वृ॒ध्वांस॑म् । शु॒द्धः । आ॒शीःऽवा॑न् । म॒म॒त्तु॒ ॥७

एतो इति । नु । इन्द्रम् । स्तवाम । शुद्धम् । शुद्धेन । साम्ना ।

शुद्धैः । उक्थैः । ववृध्वांसम् । शुद्धः । आशीःऽवान् । ममत्तु ॥७

अत्रेतिहासमाचक्षते । पुरा किलेन्द्रो वृत्रादिकानसुरान् हत्वा ब्रह्महत्यादिदोषेणात्मानमपरिशुद्धमित्यमन्यत । ततस्तद्दोषपरिहारायेन्द्र ऋषीनवोचत् । अपूतं मां युष्मदीयेन साम्ना शुद्धं कुरुतेति । ततस्ते च शुद्ध्युत्पादकेन साम्ना शस्त्रैश्च परिशुद्धमकार्षुः । पश्चात्पूतायेन्द्राय' यागादिकर्माणि सोमादीनि हवींषि प्रादुरिति । एषोऽर्थः शाट्यायनकब्राह्मणे प्रतिपादितः- ' इन्द्रो वासुरान्हत्वापूत इवामेध्योऽमन्यत । सोऽकामयत शुद्धमेव मा सन्तं शुद्धेन साम्ना स्तुयुरिति । स ऋषीनब्रवीत् स्तुत मेति । ततः ऋषयः सामापश्यन् । तेनास्तुवन्नेतो न्विन्द्रमिति । ततो वा इन्द्रः पूतः शुद्धो मेध्योऽभवत्' इति । तथा चास्या ऋचोऽयमर्थः । ऋषयः परस्परं ब्रुवन्ति । “नु क्षिप्रम् “एतो आगच्छतैव । आगत्य च “शुद्धेन शुद्ध्युत्पादकेन "साम्ना तथा “शुद्धैः शुद्धिहेतुभिः उक्थैः शस्त्रैश्च “इन्द्रं “शुद्धम् अपापिनं कृत्वा “स्तवाम स्तुयाम । ततः सामशस्त्रैश्च वावृध्वांसं पापरहित्येन वर्धमानं तमिममिन्द्रं “शुद्धः दशापवित्रेण “आशीर्वान् आश्रयणवान् गव्यादिभिः । ' छन्दसीरः ' इति मतुपो वत्वम् । तादृशः सोमः ममत्तु इन्द्रं मादयतु । माद्यतेश्छान्दसः श्लुः ॥

इन्द्र॑ शु॒द्धो न॒ आ ग॑हि शु॒द्धः शु॒द्धाभि॑रू॒तिभि॑ः ।

शु॒द्धो र॒यिं नि धा॑रय शु॒द्धो म॑मद्धि सो॒म्यः ॥८

इन्द्र॑ । शु॒द्धः । न॒ः । आ । ग॒हि॒ । शु॒द्धः । शु॒द्धाभि॑ः । ऊ॒तिऽभि॑ः ।

शु॒द्धः । र॒यिम् । नि । धा॒र॒य॒ । शु॒द्धः । म॒म॒द्धि॒ । सो॒म्यः ॥८

इन्द्र । शुद्धः । नः । आ । गहि । शुद्धः । शुद्धाभिः । ऊतिऽभिः ।

शुद्धः । रयिम् । नि । धारय । शुद्धः । ममद्धि । सोम्यः ॥८

हे “इन्द्र “शुद्धः अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं “नः अस्मान् “आ “गहि आगच्छ । "शुद्धाभिरूतिभिः । ऊतयो मरुतः । अवन्ति सर्वत्र गच्छन्तीति वा । तेऽपि सामभिः शस्त्रैः परिपूताः । तैर्मरुद्भिः सह “शुद्धः पापरहितस्त्वमा गहि । आगत्य च “शुद्धः त्वं “रयिं धनमस्मासु “नि “धारय नितरां स्थापय । किंच “शुद्धः त्वं “सोम्यः सोमार्हो भूत्वा “ममद्धि सोमेन माद्य । ‘मदी हर्षे' । लोटि ‘बहुलं छन्दसि' इति शपः श्लुः ॥

इन्द्रं॑ शु॒द्धो हि नो॑ र॒यिं शु॒द्धो रत्ना॑नि दा॒शुषे॑ ।

शु॒द्धो वृ॒त्राणि॑ जिघ्नसे शु॒द्धो वाजं॑ सिषाससि ॥९

इन्द्रं॑ । शु॒द्धः । हि । न॒ः । र॒यिम् । शु॒द्धः । रत्ना॑नि । दा॒शुषे॑ ।

शु॒द्धः । वृ॒त्राणि॑ । जि॒घ्न॒से॒ । शु॒द्धः । वाज॑म् । सि॒सा॒स॒सि॒ ॥९

इन्द्र । शुद्धः । हि । नः । रयिम् । शुद्धः । रत्नानि । दाशुषे ।

शुद्धः । वृत्राणि । जिघ्नसे । शुद्धः । वाजम् । सिसाससि ॥९

हे “इन्द्र “शुद्धः । हिरवधारणे । शुद्ध एव त्वं “रयिं धनं "नः अस्मभ्यं प्रयच्छ । तथा “शुद्धः त्वं “दाशुषे हविर्दत्तवते यजमानाय "रत्नानि रमणीयानि धनादीनि च देहि । ततः “शुद्धः पापरहितस्त्वं “वृत्राणि अपामावरकान् कर्मविघ्नकारिणः शत्रून् पापानि वा "जिघ्नसे हंसि । ततः “शुद्धः शत्रुहननदोषपरिहारायास्मदीयैः सामभिः शस्त्रैः परिशुद्धस्त्वं “वाजम् अन्नमस्मभ्यं “सिषाससि प्रदातुमिच्छसि । यदा यदा शत्रूनहं हन्यां तदा तदा शुद्ध्युत्पादकैः सामभिः शस्त्रैश्च यूयं मां परिशुद्धं कुरुतेत्यस्मभ्यमन्नं दातुमिच्छसीत्यर्थः ॥ ॥ ३१ ॥

---

**टिप्पणी**

८.९५.५ श्रुधी हवं तिरश्च्या इति

तैरश्च्यम् (https://sa.wikisource.org/s/1z9j)

# ऋग्वेदः सूक्तं ८.९६

ऋग्वेदः - मण्डल ८
← सूक्तं ८.९५ सूक्तं ८.९६ सूक्तं ८.९७ →
तिरश्चीराङ्गिरसो, द्युतानो वा मारुतः।

दे. इन्द्रः, १४ इन्द्रामरुतः, १५ इन्द्राबृहस्पती। त्रिष्टुप्, ४ विराट्, २१ पुरस्ताज्ज्योतिः।

---

अस्मा उषास आतिरन्त याममिन्द्राय नक्तमूर्म्याः सुवाचः ।

अस्मा आपो मातरः सप्त तस्थुर्नृभ्यस्तराय सिन्धवः सुपाराः ॥१॥

अतिविद्धा विथुरेणा चिदस्त्रा त्रिः सप्त सानु संहिता गिरीणाम् ।

न तद्देवो न मर्त्यस्तुतुर्याद्यानि प्रवृद्धो वृषभश्चकार ॥२॥

इन्द्रस्य वज्र आयसो निमिश्ल इन्द्रस्य बाह्वोर्भूयिष्ठमोजः ।

शीर्षन्निन्द्रस्य क्रतवो निरेक आसन्नेषन्त श्रुत्या उपाके ॥३॥

मन्ये त्वा यज्ञियं यज्ञियानां मन्ये त्वा च्यवनमच्युतानाम् ।

मन्ये त्वा सत्वनामिन्द्र केतुं मन्ये त्वा वृषभं चर्षणीनाम् ॥४॥

आ यद्वज्रं बाह्वोरिन्द्र धत्से मदच्युतमहये हन्तवा उ ।

प्र पर्वता अनवन्त प्र गावः प्र ब्रह्माणो अभिनक्षन्त इन्द्रम् ॥५॥

तमु ष्टवाम य इमा जजान विश्वा जातान्यवराण्यस्मात् ।

इन्द्रेण मित्रं दिधिषेम गीर्भिरुपो नमोभिर्वृषभं विशेम ॥६॥

वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः ।

मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥७॥

त्रिः षष्टिस्त्वा मरुतो वावृधाना उस्रा इव राशयो यज्ञियासः ।

उप त्वेमः कृधि नो भागधेयं शुष्मं त एना हविषा विधेम ॥८॥

तिग्ममायुधं मरुतामनीकं कस्त इन्द्र प्रति वज्रं दधर्ष ।

अनायुधासो असुरा अदेवाश्चक्रेण ताँ अप वप ऋजीषिन् ॥९॥

मह उग्राय तवसे सुवृक्तिं प्रेरय शिवतमाय पश्वः ।

गिर्वाहसे गिर इन्द्राय पूर्वीर्धेहि तन्वे कुविदङ्ग वेदत् ॥१०॥

उक्थवाहसे विभ्वे मनीषां द्रुणा न पारमीरया नदीनाम् ।

नि स्पृश धिया तन्वि श्रुतस्य जुष्टतरस्य कुविदङ्ग वेदत् ॥११॥

तद्विविड्ढि यत्त इन्द्रो जुजोषत्स्तुहि सुष्टुतिं नमसा विवास ।

उप भूष जरितर्मा रुवण्यः श्रावया वाचं कुविदङ्ग वेदत् ॥१२॥

अव द्रप्सो अंशुमतीमतिष्ठदियानः कृष्णो दशभिः सहस्रैः ।

आवत्तमिन्द्रः शच्या धमन्तमप स्नेहितीर्नृमणा अधत्त ॥१३॥

द्रप्समपश्यं विषुणे चरन्तमुपह्वरे नद्यो अंशुमत्याः ।

नभो न कृष्णमवतस्थिवांसमिष्यामि वो वृषणो युध्यताजौ ॥१४॥

अध द्रप्सो अंशुमत्या उपस्थेऽधारयत्तन्वं तित्विषाणः ।

विशो अदेवीरभ्याचरन्तीर्बृहस्पतिना युजेन्द्रः ससाहे ॥१५॥

त्वं ह त्यत्सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।

गूळ्हे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥१६॥

त्वं ह त्यदप्रतिमानमोजो वज्रेण वज्रिन्धृषितो जघन्थ ।

त्वं शुष्णस्यावातिरो वधत्रैस्त्वं गा इन्द्र शच्येदविन्दः ॥१७॥

त्वं ह त्यद्वृषभ चर्षणीनां घनो वृत्राणां तविषो बभूथ ।

त्वं सिन्धूँरसृजस्तस्तभानान्त्वमपो अजयो दासपत्नीः ॥१८॥

स सुक्रतू रणिता यः सुतेष्वनुत्तमन्युर्यो अहेव रेवान् ।

य एक इन्नर्यपांसि कर्ता स वृत्रहा प्रतीदन्यमाहुः ॥१९॥

स वृत्रहेन्द्रश्चर्षणीधृत्तं सुष्टुत्या हव्यं हुवेम ।

स प्राविता मघवा नोऽधिवक्ता स वाजस्य श्रवस्यस्य दाता ॥२०॥

स वृत्रहेन्द्र ऋभुक्षाः सद्यो जज्ञानो हव्यो बभूव ।

कृण्वन्नपांसि नर्या पुरूणि सोमो न पीतो हव्यः सखिभ्यः ॥२१॥

**सायणभाष्यम्**

‘ अस्मै ' इत्येकविंशत्यृचं तृतीयं सूक्तम् । अत्रानुक्रम्यते- अस्मै सैका द्युतानो वा मारुतस्त्रैष्टुभं चतुर्थी विराळिष्यामीति मारुतः पादः परैन्द्राबार्हस्पत्या' इति । द्युतानाख्यो मरुतां पुत्र ऋषिस्तिरश्चीर्नामाङ्गिरसो वा । चतुर्थी विराट् । शिष्टास्त्रिष्टुभः । इन्द्रो देवता । इष्यामि वो मरुतः' इति पादो मरुद्देवत्यः। ‘अध द्रप्सः' इत्येषा त्विन्द्राबृहस्पतिदेवताका । सूक्तविनियोगो लिङ्गादवगन्तव्यः ॥

अ॒स्मा उ॒षास॒ आति॑रन्त॒ याम॒मिन्द्रा॑य॒ नक्त॒मूर्म्याः॑ सु॒वाचः॑ ।

अ॒स्मा आपो॑ मा॒तरः॑ स॒प्त त॑स्थु॒र्नृभ्य॒स्तरा॑य॒ सिन्ध॑वः सुपा॒राः ॥१

अ॒स्मै । उ॒षसः॑ । आ । अ॒ति॒र॒न्त॒ । याम॑म् । इन्द्रा॑य । नक्त॑म् । ऊर्म्याः॑ । सु॒ऽवाचः॑ ।

अ॒स्मै । आपः॑ । मा॒तरः॑ । स॒प्त । त॒स्थुः॒ । नृऽभ्यः॑ । तरा॑य । सिन्ध॑वः । सु॒ऽपा॒राः ॥१

अस्मै । उषसः । आ । अतिरन्त । यामम् । इन्द्राय । नक्तम् । ऊर्म्याः । सुऽवाचः ।

अस्मै । आपः । मातरः । सप्त । तस्थुः । नृऽभ्यः । तराय । सिन्धवः । सुऽपाराः ॥१

इन्द्रसामर्थ्याद्भीताः “उषसः उषःकालाः “अस्मै पूर्वोक्तगुणोपेताय “इन्द्राय "यामं स्वस्वगमनम्। “आतिरन्त । तिरतिर्वर्धनकम । समन्तादवर्धयन्त । यथा पूर्वमुद्यन्ति तथेदानीमप्यस्मा उद्गता अभवन् । तथा “ऊर्म्याः । रात्रिनामैतत् । 'ऋ गतिप्रापणयोः'। “अर्तेरू च' (उ. सू. ४. ४८४) इति मिप्रत्ययः । भवे छन्दसि ' इति यत् । सर्वैरभिगन्तव्याः । रात्रौ हि सर्वे स्वनिवासं गच्छन्ति । स्वनिलयप्राप्तिहेतुभूता रात्रयः। “नक्तम् अपररात्रिकाले “सुवाचः शोभनवाचो भवन्ति । तस्मिन् काले हि सर्वे वेदाध्ययनादीनि कुर्वन्ति । तस्मात् कल्याणवाचोऽभवन् । इन्द्रेऽनुशासति वेदाद्यनुमाने निरता अभवन् । तथा “आपः । ‘ अप्लृ व्याप्तौ । सर्वतो व्याप्ताः “मातरः जगतां निर्मात्र्यः “सप्त सप्तसंख्याकाः “सिन्धवः स्यन्दमाना गङ्गाद्या नद्यः । यद्वा । सप्त सर्पणशीलाः सिन्धवः सरितः । तासामावरकस्याहेर्हननोत्पादकत्वात् “अस्मै इन्द्राय “नृभ्यस्तराय मनुष्याणां सुखेन तरणार्थं "सुपाराः शोभनपाराः सुखेन तर्तुं योग्या अभवन्नित्यर्थः ॥

अतिंविद्धा विथुरेणां चिदस्त्रा त्रिः सप्त सानु संहिंता गिरीणाम् ।

न तद्देवो न मर्त्यस्तुतुर्याद्यानि प्रवृंद्धो वृषभश्चकार ॥२

अतिंऽविद्धा । विथुरेणं । चित् । अस्त्रां । त्रिः । सप्त । सानुं । सम्ऽहिंता । गिरीणाम् ।

न । तत् । देवः । न । मर्त्यः । तुतुर्यात् । यानिं । प्रऽवृंद्धः । वृषभः । चकारं ॥२

अतिऽविद्धा । विथुरेण । चित् । अस्त्रा । त्रिः । सप्त । सानु । सम्ऽहिता । गिरीणाम् ।

न । तत् । देवः । न । मर्त्यः । तुतुर्यात् । यानि । प्रऽवृद्धः । वृषभः । चकार ॥२

"विथुरेण । वर्णव्यत्ययः । "चित् अप्यर्थे । विधुरेणासहायेनापि “अस्त्रा। असु क्षेपणे ' । ताच्छीलिकस्तृन् । शत्रुक्षेपणशीलेनेन्द्रेण । यद्वा । अस्त्रास्त्रेण वज्रेण । “त्रिः “सप्त एकविंशतिसंख्यानि "संहिता संहितान्येकत्र संघीभूतानि “गिरीणां सप्तानां पर्वतानां “सानु सानूनि “अतिविद्धा अतिविद्धानि । अतीत्य ताडितानि । तेन मुक्तो वज्रपातस्तानि भित्त्वागमदित्यर्थः । अत्र तैत्तिरीयकं ब्राह्मणं - दर्भपिञ्जूलमुद्धत्य सप्त गिरीन् भित्वा तमहन्' (तै. सं. ६. २. ४. ३) इत्यादि । तस्येन्द्रस्य “तत् तानि सानुभेदनादीनि कर्माणि “देवः इन्द्राद्व्यतिरिक्तो देवः “मर्त्यः मनुष्यो वा “न "तुतुर्यात् न तरेत्। तथा कर्तुं न शक्नोतीत्यर्थः ॥ ‘तॄ प्लवनतरणयोः । लिङि छान्दसः शपः श्लुः। ‘बहुलं छन्दसि' इत्युत्वम् । यद्वा ।' तुर त्वरणे'। जौहोत्यादिकः । “प्रवृद्धः सोमपानेन बलेन व प्रवृद्धः “वृषभः कामानामुदकानां वा वर्षक इन्द्रः “यानि कर्माणि “चकार कृतवान् तानि देवो मनुष्यो वा न तथा कर्तुं शक्नोतीत्यर्थः ॥

इन्द्रंस्य वज्रं आयसो निमिंश्ल इन्द्रंस्य बाह्वोर्भूयिंष्ठमोजः ।

शीर्षन्निन्द्रंस्य क्रतंवो निरेक आसन्नेषंन्त श्रुत्यां उपाके ॥३

इन्द्रंस्य । वज्रः । आयसः । निऽमिंश्लः । इन्द्रंस्य । बाह्वोः । भूयिंष्ठम् । ओजः ।

शीर्षन् । इन्द्रंस्य । क्रतंवः । निरेके । आसन् । आ । ईषन्त । श्रुत्यैं । उपाके ॥३

इन्द्रस्य । वज्रः । आयसः । निऽमिश्लः । इन्द्रस्य । बाह्वोः । भूयिष्ठम् । ओजः ।

शीर्षन् । इन्द्रस्य । क्रतवः । निरेके । आसन् । आ । ईषन्त । श्रुत्यै । उपाके ॥३

उक्तगुणस्य “इन्द्रस्य “वज्र “आयसः अयसा निर्मितः । अयोमय इत्यर्थः। स वज्रः इन्द्रेण स्वहस्ते “निमिश्लः संमिश्रः अत्यन्तं संबद्धः कृतः । अत एव “इन्द्रस्य “बाह्वोः भुजयोः “भूयिष्ठं बहुतमम् "ओजः वीर्यमस्ति । तथा “निरेके। निपूर्वाद्रिच्यतेर्वा निस्पूर्वादितेर्वेति संदेहादनवग्रहः । निर्गमने यदा युद्धार्थमिन्द्रो निर्गच्छति तदानीम् “इन्द्रस्य “शीर्षन् शिरसि “क्रतवः कर्माणि शिरस्त्राणनिधानादीनि । यद्वा । शिर इति गलप्रभृत्यूर्ध्वमङ्गमुच्यते । तत्रत्याभ्यामक्षिभ्यां दर्शनप्रेरणादीनि कर्माणि भवन्ति । तथा “आसन् । आस्यस्यासन्नादेशः । आस्ये च यानि कर्माणि युद्धार्थं वाजिनो गजान् संनाहयतेत्यादीनि भवन्ति । किंच “श्रुत्यै संग्रामाय निर्गच्छतोऽनुशासित इन्द्रस्य वाक्यश्रवणार्थं सर्वं उपजीविनो भृत्याः “उपाके अन्तिके “एषन्त । अयमिन्द्रोऽस्मान् कुत्र कुत्र कार्ये नियोक्ष्यतीत्येतेन मनसा तदन्तिके समन्तादागच्छन्ति । ईष गतिहिंसादर्शनेषु' । भौवादिकः ॥

मन्यें त्वा य॒ज्ञियं॑ य॒ज्ञियां॑नां॒ मन्यें त्वा॒ च्यव॑न॒मच्यु॑तानाम् ।

मन्यें त्वा॒ सत्व॑नामिन्द्र के॒तुं मन्यें त्वा वृष॒भं च॑र्षणी॒नाम् ॥४

मन्यें । त्वा॒ । य॒ज्ञिय॑म् । य॒ज्ञिया॑नाम् । मन्यें । त्वा॒ । च्यव॑नम् । अच्यु॑तानाम् ।

मन्यें । त्वा॒ । सत्व॑नाम् । इ॒न्द्र॒ । के॒तुम् । मन्यें । त्वा॒ । वृ॒ष॒भम् । च॒र्ष॒णी॒नाम् ॥४

मन्ये । त्वा । यज्ञियम् । यज्ञियानाम् । मन्ये । त्वा । च्यवनम् । अच्युतानाम् ।

मन्ये । त्वा । सत्वनाम् । इन्द्र । केतुम् । मन्ये । त्वा । वृषभम् । चर्षणीनाम् ॥४

एतदादयः प्रत्यक्षाः । हे इन्द्र “त्वा त्वां “यज्ञियानां यज्ञार्हाणां देवानामपि “यज्ञियं पुरस्तादेव यज्ञार्हमिति “मन्ये अवबुध्ये। तथा “त्वा त्वाम् “अच्युतानां च्युतिरहितानामपि पर्वतानां “च्यवनं च्यावयितारं वज्रेण विभेदकमिति “मन्ये जानामि । यद्वा । अच्युतानां बलेन च्यावयितुमशक्यानां बलिनां वीराणामपि स्वबलेन विद्रावयितारमिति' जाने । किंच हे "इन्द्र “सत्वनाम्। 'षण संभक्तौ'। क्वनिप् । संभजमानानां भटानां “केतुम् उच्छ्रितमिति “मन्ये । यद्वा । सत्वनां स्तुतिभिः हविर्भिर्वा संभक्तॄणां यष्टॄणां केतुमात्मनः प्रज्ञापकं तेषां पूजनीयमिति वा मन्ये । तथा “त्वा त्वां “चर्षणीनां मनुष्याणां “वृषभम् अभिमतफलवर्षकमिति “मन्ये जानामि ॥

आ यद्वज्रं॑ बा॒ह्वोरिं॑न्द्र॒ धत्सें मद॒च्यु॒तमहं॑ये॒ हन्त॒वा उं ।

प्र पर्वं॑ता॒ अनं॑वन्त॒ प्र गाव॒ः प्र ब्र॒ह्माणों अभि॒नक्षं॑न्त॒ इन्द्रं॑म् ॥५

आ । यत् । वज्रं॑म् । बा॒ह्वोः । इ॒न्द्र॒ । धत्सें । म॒द॒ऽच्युतं॑म् । अहं॑ये । हन्त॒वै । उ॒ं इतिं ।

प्र । पर्वं॑ताः । अनं॑वन्त । प्र । गावः॑ । प्र । ब्र॒ह्माणः॑ । अ॒भि॒ऽनक्षं॑न्तः । इन्द्रं॑म् ॥५

आ । यत् । वज्रम् । बाह्वोः । इन्द्र । धत्से । मदऽच्युतम् । अहये । हन्तवै । ऊं इति ।

प्र । पर्वताः । अनवन्त । प्र । गावः । प्र । ब्रह्माणः । अभिऽनक्षन्तः । इन्द्रम् ॥५

हे “इन्द्र “बाह्वोः “वज्रम् आयुधम् । कीदृशम् । “मदच्युतं शत्रूणां मदस्य च्यावयितारं “यत् यदा “आ “धत्से आदधासि । किमर्थम् । “अहये अहिनामानमसुरं मेघं वा “हन्तवै । "उ इत्यवधारणे । हन्तुमेव । किंच यदा वेन्द्रेणाहिनामकेऽसुरे हते सति “पर्वताः जगदापूरका मेघाः “प्र “अनवन्त । ‘नु शब्दे । प्रकर्षेणाशब्दयन् । यदा वा “गावः तत्स्थान्युदकानि च प्रकर्षेण ध्वनिमकुर्वन् । उदकान्यध्वनयन्नित्यत्र याजुषो निगमः- ‘ यददः संप्रयतीरहावनदता हते तस्मादा नद्यो नाम स्थ' (तै. सं. ५. ६. १. २; अ. सं. ३. १३. १ ) इति । तुरीयः पादः परोक्षः । तदानीम् “अभिनक्षन्तः अभित इन्द्रं स्तुतिभिर्हविर्भिर्गच्छन्तः “ब्रह्माणः ब्राह्मणाः “इन्द्रं पर्यचरन् । यद्वा । ब्रह्माणः । ‘ बृह वृद्धौ'। प्रवृद्धाः पर्वतादय इन्द्रमस्तुवन्निति ॥ ॥ ३२ ॥

तमुं ष्टवाम॒ य इ॒मा ज॒जान॒ विश्वां जा॒तान्यव॑राण्यस्मात् ।

इन्द्रे॑ण मि॒त्रं दि॑धिषेम गी॒र्भिरुपो॒ नमो॑भिर्वृष॒भं वि॑शेम ॥६

तम् । ऊं॒ इति॑ । स्त॒वा॒म॒ । यः । इ॒मा । ज॒जान॑ । विश्वा॑ । जा॒तानि॑ । अव॑राणि । अ॒स्मा॒त् ।

इन्द्रे॑ण । मि॒त्रम् । दि॒धि॒षे॒म॒ । गीः॒ऽभिः । उपो॒ इति॑ । नमः॑ऽभिः । वृ॒ष॒भम् । वि॒शे॒म॒ ॥६

तम् । ऊं इति । स्तवाम । यः । इमा । जजान । विश्वा । जातानि । अवराणि । अस्मात् ।

इन्द्रेण । मित्रम् । दिधिषेम । गीःऽभिः । उपो इति । नमःऽभिः[१] । वृषभम् । विशेम ॥६

परस्परं स्तोतार आहुः । “तमु तमेवेन्द्रं वयं संहत्य "स्तवाम स्तोत्रं करवाम । “यः इन्द्रः “इमा इमानि भूतानि “जजान जनयामास । तस्मात् “अस्मात् इन्द्रादेव “विश्वा विश्वानि सर्वाणि वस्तुजातानि सर्वाणि जगन्ति वा “अवराणि अवरकालीनानि पश्चाद्भवानि भवन्ति । तेनानेन “इन्द्रेण वयं “गीर्भिः स्तुतिभिः “मित्रम् । लुप्तभावप्रत्ययेन निर्देशः । मैत्रीं “दिधिषेम धारयेम । ‘धिष धारणे इति धातुं केचिद्वदन्ति । यद्वा । मित्रम् । छान्दसमेकवचनम् । वयमिन्द्रेण सह मित्राणि सुहृदो भवामेति गीर्भिरिन्द्रं शब्दयेम । ’ धिष शब्दे । जौहोत्यादिकः । अत्र व्यत्ययेन द्विविकरणता श्लुश्च शश्च। ततः “नमोभिः क्रियमाणैर्नमस्कारैर्दीयमानैर्हविर्भिर्वा “वृषभं कामानां वर्षकमिन्द्रम् “उपो "विशेम अस्मदभिमुखमेव कुर्याम ॥

वृ॒त्रस्य॑ त्वा श्व॒सथा॒दीष॑माणा॒ विश्वे॑ दे॒वा अ॑जहु॒र्ये सखा॑यः ।

म॒रुद्भि॑रिन्द्र स॒ख्यं ते॑ अ॒स्त्वथे॒मा विश्वा॒ः पृत॑ना जयासि ॥७

वृ॒त्रस्य॑ । त्वा॒ । श्व॒सथा॑त् । ईष॑माणाः । विश्वे॑ । दे॒वाः । अ॒ज॒हु॒ः । ये । सखा॑यः ।

म॒रुत्ऽभिः॑ । इ॒न्द्र॒ । स॒ख्यम् । ते॒ । अ॒स्तु॒ । अथ॑ । इ॒माः । विश्वाः॑ । पृत॑नाः । ज॒या॒सि॒ ॥७

वृत्रस्य । त्वा । श्वसथात् । ईषमाणाः । विश्वे । देवाः । अजहुः । ये । सखायः ।

मरुत्ऽभिः । इन्द्र । सख्यम् । ते । अस्तु । अथ । इमाः । विश्वाः । पृतनाः । जयासि ॥७

हे इन्द्र तव "ये "विश्वे “देवाः प्राक् “सखायः संग्रामे सखित्वं कुर्यामेति' मित्राण्यभवन ते सर्वे देवाः "वृत्रस्य वृत्रासुरस्य “श्वसथात् । श्वसेरौणादिकोऽथप्रत्ययः । सर्वानागच्छतो दृष्ट्वा तेषां भीत्युत्पादनाय वृत्रासुरः श्वासमकार्षीत् । श्वासाद्भीताः सन्तः अत एव “ईषमाणाः सर्वतः पलायमानाः “त्वा त्वाम् “अजहुः संग्रामे त्यक्तवन्तः । एवं सति हे “इन्द्र “मरुद्भिः सह "सख्यं सखिभावः “ते तव “अस्तु । ये मरुतस्त्वां न परित्यजन्ति तैः सहेति । “अथ अनन्तरम् “इमाः “विश्वाः “पृतनाः शत्रुसेनाः "जयासि स्वबलेनाभिभवसि । अनेन वृत्रं घ्नन्तमिन्द्रमाह । अत्र ‘इन्द्रो वै वृत्रं हनिष्यन्' (ऐ. ब्रा. ३. २०) इत्यादि ब्राह्मणमनुसंधेयम् ॥

त्रिः ष॒ष्टिस्त्वा॑ म॒रुतो॑ वावृधा॒ना उ॒स्रा इ॑व रा॒शयो॑ य॒ज्ञिया॑सः ।

उप॒ त्वेम॑ः कृ॒धि नो॑ भाग॒धेयं॒ शुष्मं॑ त ए॒ना ह॒विषा॑ विधेम ॥८

त्रिः । ष॒ष्टिः । त्वा॒ । म॒रुतः॑ । व॒वृ॒धा॒नाः । उ॒स्राःऽइ॑व । रा॒शयः॑ । य॒ज्ञिया॑सः ।

उप॑ । त्वा॒ । आ । इ॒म॒ः । कृ॒धि । न॒ः । भा॒ग॒ऽधेय॑म् । शुष्म॑म् । ते॒ । ए॒ना । ह॒विषा॑ । वि॒धे॒म॒ ॥८

त्रिः । षष्टिः । त्वा । मरुतः । ववृधानाः । उस्राःऽइव । राशयः । यज्ञियासः ।

उप । त्वा । आ । इमः । कृधि । नः । भागऽधेयम् । शुष्मम् । ते । एना । हविषा । विधेम ॥८

प्रसङ्गादेतावन्तो मरुतः सहाया अभवन्नित्याह। हे इन्द्र “त्रिः त्रयः । जसः 'सुपां सुलुक्' इति सुः । षष्टित्र्युत्तरसंख्याका मरुतः । ते च तैत्तिरीयके 'ईदृङ्चान्यादृङ्च' (तै. सं. ४. ६.५. ५) इत्यादिना नवसु गणेषु सप्त सप्त प्रतिपादिताः। तत्रादितः पञ्च गणाः संहितायामाम्नायन्ते । स्वतवांश्च प्रघासी च सांतपनश्च गृहमेधी च क्रीडी च शाकी चोज्जेषी ' ( वा. सं. १७. ८५) इति खैलिकः षष्ठो गणः । ततो 'धुनिश्च ध्वान्तश्च' (तै. आ. ४. २४) इत्याद्यास्त्रयोऽरण्येऽनुवाक्याः । इत्थं त्रयःषष्टिसंख्याकाः “उस्राइव “राशयः गाव इव संघीभूतास्ते त्वां “वावृधानाः स्वबलेन वर्धितवन्तः । ते “मरुतः “यज्ञियासः यज्ञार्हा अभवन् । तं मरुत्सहायमिन्द्रं “त्वा त्वां वयम् “एमः उपगच्छामः । ततस्त्वं “नः अस्मभ्यं “भागधेयं भजनीयं धनं “कृधि कुरु । पश्चाद्वयमपि “एना एनेन सोमलक्षणेन “हविषा “ते तुभ्यं “शुष्मं शत्रूणां शोषकं बलं “विधेम । 'विध विधाने'। विदध्म । कुर्म इत्यर्थः ॥

ति॒ग्ममायु॑धं म॒रुता॒मनी॑कं॒ कस्त॑ इन्द्र॒ प्रति॒ वज्रं॑ दधर्ष ।

अ॒ना॒यु॒धासो॒ असु॑रा अदे॒वाश्च॒क्रेण॒ ताँ अप॑ वप ऋजीषिन् ॥९

ति॒ग्मम् । आयु॑धम् । म॒रुता॑म् । अनी॑कम् । कः । ते॒ । इ॒न्द्र॒ । प्रति॑ । वज्र॑म् । द॒ध॒र्ष॒ ।

अ॒ना॒यु॒धासः॑ । असु॑राः । अ॒दे॒वाः । च॒क्रेण॑ । तान् । अप॑ । व॒प॒ । ऋ॒जी॒षि॒न् ॥९

तिग्मम् । आयुधम् । मरुताम् । अनीकम् । कः । ते । इन्द्र । प्रति । वज्रम् । दधर्ष ।

अनायुधासः । असुराः । अदेवाः । चक्रेण । तान् । अप । वप । ऋजीषिन् ॥९

हे "इन्द्र “ते तव स्वभूतं “तिग्मं तीक्ष्णम् “आयुधम् । आयुध्यतेऽनेनेत्यायुधं धनुः । तत्र “मरुतां त्रयःषष्टिसंख्याकानां त्वत्सहायानाम् “अनीकं संघं च त्वदीयं “वज्रं च "कः को वा देवो मनुष्यो वा “प्रति “दधर्ष प्रतिकूलमभिभवति । अभिभावुको नास्तीत्यर्थः । ' धृष प्रसहने । आ धृषाद्वा' इति विभाषितणिच् । तदभावे लिटि रूपम् । अत एव “अनायुधासः धनुराद्यायुधवर्जिताः “अदेवाः देववर्जिता देवद्विषो ये “असुराः सन्ति हे “ऋजीषिन् । अपार्जितोऽभिषुतः सोम ऋजीषः । तद्वन्निन्द्र “तान् असुरान् “चक्रेण चक्रसमानवीर्येण चक्ररूपेण वज्रेण वा “अप “वप अपगतान् कुरु । अपनुदेत्यर्थः ॥

म॒ह उ॒ग्राय॑ त॒वसे॑ सुवृ॒क्तिं प्रेर॑य शि॒वत॑माय प॒श्वः ।

गिर्वा॑हसे॒ गिर॒ इन्द्रा॑य पू॒र्वीर्धे॒हि त॒न्वे॑ कु॒विद॒ङ्ग वेद॑त् ॥१०

म॒हे । उ॒ग्राय॑ । त॒वसे॑ । सु॒ऽवृ॒क्तिम् । प्र । ई॒र॒य॒ । शि॒वऽत॑माय । प॒श्वः ।

गिर्वा॑हसे । गिरः॑ । इन्द्रा॑य । पू॒र्वीः । धे॒हि । त॒न्वे॑ । कु॒वित् । अ॒ङ्ग । वेद॑त् ॥१०

महे । उग्राय । तवसे । सुऽवृक्तिम् । प्र । ईरय । शिवऽतमाय । पश्वः ।

गिर्वाहसे । गिरः । इन्द्राय । पूर्वीः । धेहि । तन्वे । कुवित् । अङ्ग । वेदत् ॥१०

हे स्तोतः “महे महते गुणैः "उग्राय बलेनोद्गूर्णाय “तवसे । तु इति धातुर्वृद्ध्यर्थः । प्रवृद्धाय “शिवतमाय कल्याणतमायेन्द्राय "सुवृक्तिं शोभनां स्तुतिं "प्रेरय चोदय । कुरु। किमर्थम् ।"पश्वः पशोः। द्विपाच्चतुष्पाच्च । पशोर्ममास्मदीयाय गवे वा । यद्वा पशोरतीन्द्रियार्थं द्रष्टुर्मम धनादिकं दातुं गवे सुखादिकं प्रदातुमिन्द्राय स्तुतिं प्रेरय । एतदेवाह । हे स्तोतः “गिर्वाहसे गीर्भिः स्तुतिभिरुह्यमानाय “इन्द्राय "पूर्वीः बह्वीः “गिरः स्तुतीः “धेहि कुरु । ततः स इन्द्रः “तन्वे । तनोति कुलमिति तनूस्तनयः । तस्मै पुत्राय स्वशरीरयात्मने वा “कुवित् । बहुनामैतत् । बहु धनम् “अङ्ग क्षिप्रं “वेदत् लम्भयतु ददातु ।' विद्लृ लाभे ' । लेट्यडागमः । कुविच्छब्दयोगादनिघातः ॥ ॥ ३३ ॥

उ॒क्थवा॑हसे वि॒भ्वे॑ मनी॒षां द्रु॒णा॒ न पा॒रमी॑रया न॒दीना॑म् ।

नि स्पृ॑श धि॒या त॒न्वि॑ श्रु॒तस्य॒ जुष्ट॑तरस्य कु॒विद॒ङ्ग वेद॑त् ॥११

उ॒क्थऽवा॑हसे । वि॒ऽभ्वे॑ । म॒नी॒षाम् । द्रु॒णा॑ । न । पा॒रम् । ई॒र॒य॒ । न॒दीना॑म् ।

नि । स्पृ॒श॒ । धि॒या । त॒न्वि॑ । श्रु॒तस्य॑ । जुष्ट॑ऽतरस्य । कु॒वित् । अ॒ङ्ग । वेद॑त् ॥११

उक्थऽवाहसे । विऽभ्वे । मनीषाम् । द्रुणा । न । पारम् । ईरय । नदीनाम् ।

नि । स्पृश । धिया । तन्वि । श्रुतस्य । जुष्टऽतरस्य । कुवित् । अङ्ग । वेदत् ॥११

हे स्तोतः “उक्थवाहसे उक्थैः स्तोत्रशस्त्रादिभिरुह्यमानाय अत एव “विभ्वे महते यद्वा शत्रूणामभिभवित्र इन्द्रायेन्द्रार्थं “मनीषां मनस ईषां स्तुतिम् “ईरय प्रेरय । तत्र दृष्टान्तः । “द्रुणा “न यथा नाविकः “नदीनां नदमानानां सरितां “पारं तीरं प्रति पथिकं द्रुणा नावा प्रापयति तद्वदिन्द्रं प्रति स्तुतिं गमयेति । किंच “नि “स्पृश नितरां धनं स्पर्शय गमय “तन्वि आत्मनि पुत्रे वा । कीदृशम् । “श्रुतस्य सर्वत्र विश्रुतस्य प्रसिद्धस्य “जुष्टतरस्य अत्यर्थं प्रीणयितुरिन्द्रस्य स्वभूतम् । धनं “धिया त्वदीयया स्तुत्या कर्मणा वात्मानं गमय । ततस्त्वयाभिष्टुत इन्द्रः “कुवित् बहु धनं क्षिप्रं “वेदत् लम्भयतु ददातु ॥

तद्वि॑विड्ढि॒ यत्त॒ इन्द्रो॒ जुजो॑षत्स्तु॒हि सु॑ष्टु॒तिं नम॒सा वि॑वास ।

उप॑ भूष जरित॒र्मा रु॑वण्यः श्रा॒वया॒ वाचं॑ कु॒विद॒ङ्ग वेद॑त् ॥१२

तत् । वि॒वि॒ड्ढि॒ । यत् । ते॒ । इन्द्रः॑ । जुजो॑षत् । स्तु॒हि । सु॒ऽस्तु॒तिम् । नम॑सा । आ । वि॒वा॒स॒ ।

उप॑ । भू॒ष॒ । ज॒रि॒तः॒ । मा । रु॒व॒ण्यः॒ । श्र॒वय॑ । वाच॑म् । कु॒वित् । अ॒ङ्ग । वेद॑त् ॥१२

तत् । विविड्ढि । यत् । ते । इन्द्रः । जुजोषत् । स्तुहि । सुऽस्तुतिम् । नमसा । आ । विवास ।

उप । भूष । जरितः । मा । रुवण्यः । श्रवय । वाचम् । कुवित् । अङ्ग । वेदत् ॥१२

हे ऋत्विक् “तत् सोमादिहविः स्तोत्रं वा “विविड्ढि व्यापय । तानीन्द्रार्थं कुर्वित्यर्थः । “ते तव स्वभूतं “यत् हविः स्तोत्रं वा "इन्द्रः "जुजोषत् स्वीकुर्यात् तस्कुरु । ‘जुषी प्रीतिसेवनयोः । लेटि शपः श्लुः । अडागमः । छान्दसत्वात् ' नाभ्यस्तस्य' इति गुणप्रतिषेधाभावः । हे स्तोतः “सुष्टुतिं सुस्तुतिम् । शोभना स्तुतिर्यस्य स तथोक्तः । तादृशमिन्द्रं “स्तुहि । तथा “नमसा स्तोत्रेण हविषा वा “आ “विवास इन्द्रमाभिमुख्येन परिचर । विवासतिः परिचरणकर्मा । लोटि रूपम् । हे “जरितः स्तोतः “उप “भूष।'भूष अलंकारे'। अलंकृतो भव। “मा रुवण्यः धनाभावात् मा ध्वनयः । मा रोदीरित्यर्थः। धनागमने कारणमाह। हे स्तोतः “वाचं स्तुतिमिन्द्रं “श्रावय ज्ञापय । ततस्त्वया स्तुत इन्द्रस्तुभ्यं “कुवित् बहु धनं क्षिप्रं प्रयच्छतु ॥

पृष्ठ्यषडहगतेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिशस्त्रे ‘अव द्रप्सः' इति तृचः । सूत्रितं च -- ' अव द्रप्सो अंशुमती (https://puranastudy.page.tl/Amsha%20Amshu.htm) मतिष्ठदिति तिस्रोऽच्छा म इन्द्रमिति नित्यमैकाहिकम्' (आश्व. श्रौ. ८.३.३३ (https://sa.wikisource.org/s/1auj) ) इति ॥

अव॑ द्र॒प्सो अं॑शु॒मती॑मतिष्ठदिया॒नः कृ॒ष्णो द॒शभि॑ः स॒हस्रै॑ः ।

आव॒त्तमिन्द्र॒ः शच्या॒ धम॑न्त॒मप॒ स्नेहि॑तीर्नृ॒मणा॑ अधत्त ॥१३

अव॑ । द्र॒प्सः । अं॒शु॒ऽमती॑म् । अ॒ति॒ष्ठ॒त् । इ॒या॒नः । कृ॒ष्णः । द॒शऽभिः॑ । स॒हस्रैः॑ ।

आव॑त् । तम् । इन्द्रः॑ । शच्या॑ । धम॑न्तम् । अप॑ । स्नेहि॑तीः । नृ॒ऽमनाः॑ । अ॒धु॒त्त॒ ॥१३

अव । द्रप्सः । अंशुऽमतीम् । अतिष्ठत् । इयानः । कृष्णः । दशऽभिः । सहस्रैः ।

आवत् । तम् । इन्द्रः । शच्या । धमन्तम् । अप । स्नेहितीः । नृऽमनाः । अधत्त ॥१३

अत्रेतिहासमाचक्षते किल । कृष्णो नामासुरो दशसहस्रसंख्यैरसुरैः परिवृतः सन्नंशुमतीनामधेयाया नद्यास्तीरेऽतिष्ठत् । तत्र तं कृष्णमुदकमध्ये स्थितमिन्द्रो बृहस्पतिना सहागच्छत् । आगत्य तं कृष्णं तस्यानुचरांश्च बृहस्पतिसहायो जघानेति । केचिदन्यथा वदन्ति । तेषां कथा हेतुः । द्रप्स इत्युदककणोऽभिधीयते स तु सोमो ‘द्रप्सश्चस्कन्द ' (ऋ. सं. १०. १७. ११ ) इत्यादिषु सोमपरत्वेनोक्तत्वात् । एतत्पदमाश्रित्याहुः- ' अपक्रय तु देवेभ्यः सोमो वृत्रभयार्दितः ॥ नदीमंशुमतीं नामाभ्यतिष्ठत् कुरून प्रति । तं बृहस्पतिनैकेन सोऽभ्ययाद्वृत्रहा सह ॥ योत्स्यमानः सुसंहृष्टैर्मरुद्भिर्विविधायुधैः। दृष्ट्वा तानायतः सोमः स्वबलेन व्यवस्थितः ॥ मन्वानो वृत्रमायान्तं जिघांसुमरिसेनया । व्यवस्थितं धनुष्मन्तं तमुवाच बृहस्पतिः ॥ मरुत्पतिरयं सोम प्रेहि देवान् पुनर्विभो । सोऽब्रवीन्नेति तं शक्रः स्वर्ग एव बलाद्बली । इयाय देवानादाय तं पपुर्विधिवत्सुराः ॥ जघ्नुः पीत्वा च दैत्यानां समरे नवतीर्नव । तदव द्रप्स इत्यस्मिन् तृचे सर्वं निगद्यते' (बृहद्दे. ६. १०९- (https://sa.wikisource.org/s/2i2j) ११५ ) । एतदनार्षत्वेनानादरणीयं भवति । एषोऽर्थः क्रमेणर्क्षु वक्ष्यते । तथा चास्या ऋचोऽयमर्थः । “द्रप्सः । द्रुतं सरति गच्छतीति द्रप्सः । पृषोदरादिः । द्रुतं गच्छन् "दशभिः “सहसैः दशसहस्रसंख्यैरसुरैः “इयानः “कृष्णः एतन्नामकोऽसुरः "अंशुमतीं (https://puranastudy.page.tl/Amsha_Amshu.htm) नाम नदीम् “अव “अतिष्ठत् अवतिष्ठते । ततः “शच्या कर्मणा प्रज्ञानेन वा “धमन्तम् उदकस्यान्तरुच्छ्वसन्तं यद्वा जगद्भीतिकरं शब्दं कुर्वन्तं “तं कृष्णमसुरम् “इन्द्रः मरुद्भिः सह “आवत् प्राप्नोत् । पश्चात्तं कृष्णमसुरं तस्यानुचरांश्च हतवानिति वदति । “नृमणाः नृषु मनो यस्य सः । यद्वा । कर्मनेतृष्वृत्विक्ष्वेकविधं मनो यस्य स तथोक्तः । तादृशः सन् “स्नेहितीः । स्नेहतिर्वधकर्मसु पठितः । सर्वस्य हिंसित्रीस्तस्य सेनाः “अप “अधत्त । अपधानं हननम् । अवधीदित्यर्थः

। ‘ अप स्नीहितिं नृमणा अधद्राः' (सा. सं. १. १.४.४.१ (https://sa.wikisource.org/s/3g5) ) इति छन्दोगाः पठन्ति । तस्यानुचरान् हत्वा तं द्रुतं गच्छन्तमसुरमपाधत्त । हतवान् ॥

द्र॒प्सम॑पश्यं॒ विषु॑णे॒ चर॑न्तमुपह्व॒रे न॒द्यो॑ अंशु॒मत्या॑ः ।

नभो॒ न कृ॒ष्णम॑वतस्थि॒वांस॒मिष्या॑मि वो वृषणो॒ युध्य॑ता॒जौ ॥१४

द्र॒प्सम् । अ॒प॒श्य॒म् । विषु॑णे । चर॑न्तम् । उ॒प॒ऽह्व॒रे । न॒द्यः॑ । अं॒शु॒ऽमत्याः॑ ।

नभः॑ । न । कृ॒ष्णम् । अ॒व॒त॒स्थि॒ऽवांस॑म् । इष्या॑मि । व॒ः । वृ॒ष॒ण॒ः । युध्य॑त । आ॒जौ ॥१४

द्रप्सम् । अपश्यम् । विषुणे । चरन्तम् । उपऽह्वरे । नद्यः । अंशुऽमत्याः ।

नभः । न । कृष्णम् । अवतस्थिऽवांसम् । इष्यामि । वः । वृषणः । युध्यत । आजौ ॥१४

तुरीयपादो मारुतः । मरुतः प्रति यद्वाक्यमिन्द्र उवाच तदत्र कीर्त्यते । हे मरुतः “द्रप्सं द्रुतगामिनं कृष्णमहम् “अपश्यम् अदर्शम् । कुत्र वर्तमानम् । “विषुणे विष्वगञ्चने सर्वतो विस्तृते देशे । यद्वा । विषुणो विषमः । विषमे परैरदृश्ये गुहारूपे देशे। “चरन्तं परितो गच्छन्तम् । किंच “अंशुमत्याः एतन्नामिकायाः “नद्यः नद्याः “उपह्वरे अत्यन्तं गूढे स्थाने “नभो “न नभसि यथादित्यो दीप्यते तद्वत्तत्र दीप्यमानम् “अवतस्थिवांसम् उदकस्यान्तरवस्थितं “कृष्णम् एतन्नामकमसुरमपश्यम् । तस्मिन् दृष्टे सति हे “वृषणः कामानामुदकानां वा सेक्तारो मरुतः “वः युष्मान् युद्धार्थम् “इष्यामि अहमिच्छामि । ततो यूयं तमिमं कृष्णम् "आजौ । अजन्ति गच्छन्त्यत्र योद्धार आयुधानि प्रक्षेपयन्तीति वाजिः संग्रामः । तस्मिन् "युध्यत संहरत । वाक्यभेदादनिघातः । केचित् इष्यामि वो मरुतः इति पठन्ति । तत्र हे मरुतः वो युष्मानिच्छामीत्यर्थो भवति ॥

अध॑ द्र॒प्सो अं॑शु॒मत्या॑ उ॒पस्थेऽधा॑रयत्त॒न्वं॑ तित्विषा॒णः ।

विशो॒ अदे॑वीर॒भ्या॒३॒॑चर॑न्ती॒र्बृह॒स्पति॑ना यु॒जेन्द्र॑ः ससाहे ॥१५

अध॑ । द्र॒प्सः । अं॒शु॒ऽमत्याः॑ । उ॒प॒ऽस्थे॑ । अधा॑रयत् । त॒न्व॑म् । ति॒त्वि॒षा॒णः ।

विशः॑ । अदे॑वीः । अ॒भि । आ॒ऽचर॑न्तीः । बृह॒स्पति॑ना । यु॒जा । इन्द्रः॑ । स॒स॒हे॒ ॥१५

अध । द्रप्सः । अंशुऽमत्याः । उपऽस्थे । अधारयत् । तन्वम् । तित्विषाणः ।

विशः । अदेवीः । अभि । आऽचरन्तीः । बृहस्पतिना । युजा । इन्द्रः । ससहे ॥१५

“अध अथ “द्रप्सः द्रुतगामी कृष्णः “अंशुमत्याः नद्याः “उपस्थे समीपे “तित्विषाणः दीप्यमानः सन् “तन्वम् आत्मीयं शरीरम् “अधारयत् । परैरहिंस्यत्वेन बिभर्ति । यद्वा । बलप्राप्त्यर्थं स्वशरीरमाहारादिभिरपोषयत् । तत्र “इन्द्रः गत्वा “बृहस्पतिना एतन्नामकेन देवेन “युजा सहायेन “अदेवीः अद्योतमानाः । कृष्णरूपा इत्यर्थः । यद्वा । पापयुक्तत्वादस्तुत्याः । “आचरन्तीः आगच्छन्तीः “विशः असुरसेनाः "अभि "ससहे जघान । तमवधीदित्यर्थः प्रसङ्गादवगम्यते ॥ ॥ ३४ ॥ ।।

त्वं ह॒ त्यत्स॒प्तभ्यो॒ जाय॑मानोऽश॒त्रुभ्यो॑ अभव॒ः शत्रु॑रिन्द्र ।

गू॒ळ्हे द्यावा॑पृथि॒वी अन्व॑विन्दो विभु॒मद्भ्यो॒ भुव॑नेभ्यो॒ रणं॑ धाः ॥१६

त्वम् । ह॒ । त्यत् । स॒प्तऽभ्यः॑ । जाय॑मानः । अ॒श॒त्रुऽभ्यः॑ । अ॒भ॒व॒ः । शत्रुः॑ । इ॒न्द्र॒ ।

गू॒ळ्हे इति॑ । द्यावा॑पृथि॒वी इति॑ । अनु॑ । अ॒वि॒न्द॒ः । वि॒भु॒मत्ऽभ्यः॑ । भुव॑नेभ्यः । रण॑म् । धा॒ः ॥१६

त्वम् । ह । त्यत् । सप्तऽभ्यः । जायमानः । अशत्रुऽभ्यः । अभवः । शत्रुः । इन्द्र ।

गूळ्हे इति । द्यावापृथिवी इति । अनु । अविन्दः । विभुमत्ऽभ्यः । भुवनेभ्यः । रणम् । धाः ॥१६

हे “इन्द्र “त्वं खलु “त्यत् तत् कर्म कृतवानसि। किं तत् उच्यते । "जायमानः त्वं प्रादुर्भवन्नेव । “अशत्रुभ्यः स्तुरहितेभ्यः “सप्तभ्यः कृष्णवृत्रनमुचिशम्बरादिसप्तभ्यो बलवद्भ्यः शत्रुभ्यः तदर्थं “शत्रुः “अभवः । यद्वा । सप्तभ्यः । ससैवाङ्गिरसः । सप्तभ्योङ्गिरोभ्यो गवानयनार्थं प्रादुर्भवन्नेवाशत्रुभ्यो बलवद्भ्यः पणिभ्यः शत्रुरभवः । किंच हे इन्द्र त्वं “गूळ्हे तमसा गूढे संवृते “द्यावापृथिवी द्यावापृथिव्यौ सूर्यात्मना ते प्रकाश्यानुक्रमेण "अविन्दः अलभथाः । तथा “विभुमद्भ्यः महत्त्वयुक्तेभ्यः "भुवनेभ्यः लोकेभ्यः "रणं रमणं “धाः धारयसि । विदधासीत्यर्थः ॥

त्वं ह॒ त्यद॑प्रतिमा॒नमोजो॒ वज्रे॑ण वज्रिन्धृषि॒तो ज॑घन्थ ।

त्वं शुष्ण॒स्यावा॑तिरो॒ वध॑त्रै॒स्त्वं गा इ॑न्द्र॒ शच्येद॑विन्दः ॥१७

त्वम् । ह॒ । त्यत् । अ॒प्र॒ति॒ऽमा॒नम् । ओजः॑ । वज्रे॑ण । व॒ज्रि॒न् । धृ॒षि॒तः । ज॒घ॒न्थ॒ ।

त्वम् । शुष्ण॑स्य । अव॑ । अ॒ति॒र॒ः । वध॑त्रैः । त्वम् । गाः । इ॒न्द्र॒ । शच्या॑ । इत् । अ॒वि॒न्द॒ः ॥१७

त्वम् । ह । त्यत् । अप्रतिऽमानम् । ओजः । वज्रेण । वज्रिन् । धृषितः । जघन्थ ।

त्वम् । शुष्णस्य । अव । अतिरः । वधत्रैः । त्वम् । गाः । इन्द्र । शच्या । इत् । अविन्दः ॥१७

हे इन्द्र त्वं “ह “त्वं खलु “त्यत् एतत् कर्माकार्षीः। किं तत् अभिधीयते । हे “वज्रिन् वज्रवन्निन्द्र “धृषितः धृष्टः संग्रामेषु शत्रुहनने कुशलः सन्। यद्वा। धृष्टो धीरः सन् "अप्रतिमानम् । प्रतिमानमुपमा। निरुपमम्। अस्य सदृशमन्यदीयं वीर्यं नास्तीत्यर्थः। तादृशं “शुष्णस्य “ओजः बलं “वज्रेण आयुधेन “जघन्थ हतवानसि। 'अभ्यासाच्च' इति इन्तेर्घत्वम् । पूर्वं शुष्णस्य बलं विनाश्येदानीं शुष्णमपि हतवानित्याह । “त्वं “वधत्रैः हननसाधनैरायुधैः “शुष्णस्य । 'क्रियाग्रहणं कर्तव्यम्' इति संप्रदानसंज्ञा। चतुर्थ्यर्थे बहुलम्' इति षष्ठी। शुष्णम् “अवातिरः । कुत्साय राजर्षयेऽवाङ्मुखं कृत्वावधीः । तथा च निगमः-- कुत्साय शुष्णमशुषं नि बर्हीः' (ऋ. सं. ४. १६. १२) इति । तथा हे “इन्द्र “त्वं “शच्या स्वकीयया प्रज्ञया कर्मणा वा “गाः शत्रून् हत्वा तेषां गाः “अविन्दः अलभथाः । यद्वा । अङ्गिरसां गाः पणीन् संप्रहृत्य लब्धवानसि ॥

त्वं ह॒ त्यद्वृ॑षभ चर्षणी॒नां घ॒नो वृ॒त्राणां॑ तवि॒षो ब॑भूथ ।

त्वं सिन्धूँ॑रसृजस्तस्तभा॒नान्त्वम॒पो अ॑जयो दा॒सप॑त्नीः ॥१८

त्वम् । ह॒ । त्यत् । वृ॒ष॒भ॒ । च॒र्ष॒णी॒नाम् । घ॒नः । वृ॒त्राणा॑म् । त॒वि॒षः । ब॒भू॒थ॒ ।

त्वम् । सिन्धू॑न् । अ॒सृ॒जः॒ । त॒स्त॒भा॒नान् । त्वम् । अ॒पः । अ॒ज॒यः॒ । दा॒सऽप॑त्नीः ॥१८

त्वम् । ह । त्यत् । वृषभ । चर्षणीनाम् । घनः । वृत्राणाम् । तविषः । बभूथ ।

त्वम् । सिन्धून् । असृजः । तस्तभानान् । त्वम् । अपः । अजयः । दासऽपत्नीः ॥१८

“त्वं खलु तत् कर्म कृतवानसि । किं तत् । हे “वृषभ कामानां वर्षितरिन्द्र “चर्षणीनां यष्टॄणां मनुष्याणां भावितानां “वृत्राणाम् उपद्रवाणां “घनः हन्ता । अमूर्त्यर्थेऽपि छन्दोविषयत्वान्निपातनम् । तादृशस्त्वं “तविषः प्रवृद्धो बलवान् वा “बभूथ बभूविथ । बभूथा ततन्थ° ' इतीडभावो निपात्यते । ततः “त्वं “तस्तभानान् असुरैर्विरुध्यमानाः “सिन्धून् सप्त गङ्गाद्याः नदीः सरणाय “असृजः। पश्चात् “त्वं “दासपत्नीः । दासा उपक्षपयितारः शत्रवः । ते पतयः स्वामिनो यासां ताः । ‘ नित्यं सपत्न्यादिषु' (पा. सू. ४. १. ३५) इत्यत्र ‘दासाञ्च' इत्युपसंख्यानात् ङीप् । असुरस्वामिकाः “अपः “अजयः जितवानसि । तानसुराञ्जित्वोदकानि च प्रासृज इत्यर्थः ॥

स सु॒क्रतू॒ रणि॑ता॒ यः सु॒तेष्वनु॑त्तमन्यु॒र्यो अहे॑व रे॒वान् ।

य एक॒ इन्नर्यपाँसि॒ कर्ता॒ स वृ॑त्र॒हा प्रतीद॒न्यमा॑हुः ॥१९

सः । सु॒ऽक्रतुः॑ । रणि॑ता । यः । सु॒तेषु॑ । अनु॑त्तऽमन्युः । यः । अहा॑ऽइव । रे॒वान् ।

यः । एकः॑ । इत् । नरि॑ । अपाँ॑सि । कर्ता॑ । सः । वृ॒त्र॒ऽहा । प्रति॑ । इत् । अ॒न्यम् । आ॒हुः॒ ॥१९

सः । सुऽक्रतुः । रणिता । यः । सुतेषु । अनुत्तऽमन्युः । यः । अहाऽइव । रेवान् ।

यः । एकः । इत् । नरि । अपांसि । कर्ता । सः । वृत्रऽहा । प्रति । इत् । अन्यम् । आहुः ॥१९

अथ परोक्षकृताः । “सः इन्द्रः “सुक्रतुः शोभनप्रज्ञः शोभनकर्मा भवति “यः “सुतेषु अभिषुतेषु सोमेषु “रणिता तत्पानार्थं रमणशीलः किंच “अनुत्तमन्युः परैरनुन्नक्रोधः शत्रुभिर्नोत्तुमशक्यः तादृशः “यः इन्द्रः “रेवान धनवान् । तत्र दृष्टान्तः । “अहेव । यथा अहानि दिवसा धनवन्तः। दिवसेषु हि धनानि प्रादुर्भवन्ति न रात्रिषु । तद्वत् । तथा “यः इन्द्रः “एक “इत् असहाय एव “नरि कर्मनेतरि मनुष्ये "अपांसि कर्माणि “कर्ता कर्तुशीलो भवति । ताच्छीलिकस्तृन् । अत एव षष्ठीप्रतिषेधः । “सः पूर्वोक्तगुणोपेत इन्द्रः “वृत्रहा । अपामावरकस्यासुरस्य उपद्रवस्य वा हन्तृत्वाद्वृत्रहेति सर्वैः श्रूयते । तमेवेन्द्रम् “अन्यं “प्रति । “इत् अवधारणे । अन्यं प्रत्येव “आहुः । इन्द्रः सर्वमन्यं शत्रुसंघं प्रति भवति । अभिभवत्येवेति वदन्ति ॥

स वृ॑त्र॒हेन्द्र॑श्चर्षणी॒धृत्तं सु॑ष्टु॒त्या हव्यं॑ हुवेम ।

स प्रा॑वि॒ता म॒घवा॑ नोऽधिव॒क्ता स वाज॑स्य श्रव॒स्य॑स्य दा॒ता ॥२०

सः । वृ॒त्र॒ऽहा । इन्द्रः॑ । च॒र्ष॒णि॒ऽधृत् । तम् । सु॒ऽस्तु॒त्या । हव्य॑म् । हु॒वे॒म॒ ।

सः । प्र॒ऽअ॒वि॒ता । म॒घऽवा॑ । नः॒ । अ॒धि॒ऽव॒क्ता । सः । वाज॑स्य । श्र॒व॒स्य॑स्य । दा॒ता ॥२०

सः । वृत्रऽहा । इन्द्रः । चर्षणिऽधृत् । तम् । सुऽस्तुत्या । हव्यम् । हुवेम ।

सः । प्रऽअविता । मघऽवा । नः । अधिऽवक्ता । सः । वाजस्य । श्रवस्यस्य । दाता ॥२०

"वृत्रहा वृत्रस्य हन्ता “सः “इन्द्रः “चर्षणीधृत् मनुष्याणां धनादिदानेन पोषको भवति । “तम् इन्द्रं वयं “सुष्टुत्या शोभनया स्तुत्या “हुवेम अस्मद्यज्ञेष्वाह्वयामः । किमर्थं यूयमाह्वयथेति चेत् कारणं ब्रूमः । “सः इन्द्रः “प्राविता प्रकर्षेणास्माकं रक्षिता भवति । किंच “मघवा धनवानिन्द्रः “नः अस्माकम् “अधिवक्ता अधिकं वक्ता बहुमानेन वक्ता भवति । यद्वा । धनदानेनास्मानधिकं वक्तुमर्हति । अर्हे कृत्यतृचश्च' (पा. सू. ३. ३. १६९ ) इति तृच् । किंच “सः एवेन्द्रः “श्रवस्यस्य श्रवसः कीर्तेर्निमित्तस्य “वाजस्य अन्नस्य । यद्वा । श्रवसोऽन्नस्य हिताय वाजस्य बलस्य । “दाता भवति खलु । तस्मादेवंगुणमिन्द्रं वयमाह्वयामः ॥

स वृ॑त्र॒हेन्द्र॑ ऋभु॒क्षाः स॒द्यो ज॑ज्ञा॒नो हव्यो॑ बभूव ।

कृ॒ण्वन्नपां॑सि॒ नर्या॑ पु॒रूणि॒ सोमो॒ न पी॒तो हव्यः॒ सखि॑भ्यः ॥२१

सः । वृ॒त्र॒ऽहा । इन्द्रः॑ । ऋ॒भु॒क्षाः । स॒द्यः । ज॒ज्ञा॒नः । हव्यः॑ । ब॒भू॒व॒ ।

कृ॒ण्वन् । अपां॑सि । नर्या॑ । पु॒रूणि॑ । सोमः॑ । न । पी॒तः । हव्यः॑ । सखि॑ऽभ्यः ॥२१

सः । वृत्रऽहा । इन्द्रः । ऋभुक्षाः । सद्यः । जज्ञानः । हव्यः । बभूव ।

कृण्वन् । अपांसि । नर्या । पुरूणि । सोमः । न । पीतः । हव्यः । सखिऽभ्यः ॥२१

“ऋभुक्षाः महान् । यद्वा । ऋभुशब्देनर्भ्वादयस्त्रयो गृह्यन्ते । ऋभुभिः सह क्षियति निवसतीति तादृशः। “वृत्रहा "सः “इन्द्रः “सद्यः तदानीमेव “जज्ञानः प्रादुर्भवन् “हव्यः सर्वैः स्तोतृभिः यष्टृभिराह्वातव्यो "बभूव । किंच “नर्या नर्याणि । नरा मनुष्याः कर्मनेतारः । तेभ्यो हितानि “पुरूणि बहूनि “अपांसि कर्माणि “कृण्वन् कुर्वन् “सखिभ्यः हविष्प्रदानेनोपकारकत्वान्मित्रेभ्य ऋत्विग्भ्यः “हव्यः आह्वातव्यो हवनयोग्यो वाभूत् । तत्र दृष्टान्तः। “सोमो “न यथा “पीतः सोमो यष्टृभ्यः स्वर्गादिफलानि कुर्वन् देवैराह्वातव्यो भवति तद्वत् ॥ ॥ ३५ ॥

---

**टिप्पणी**

**मण्डल ८**



1. *तु. नमश्च त उप च यज्ञस्य शिवे संतिष्ठस्व स्विष्टे मे संतिष्ठस्वेति स यदतिरेचयति तन्नमस्कारेण शमयत्यथ यदूनं करोत्युप चेति तेन तदन्यूनं भवति - माश.* ११.२.३.९ (https://sa.wikisource.org/s/h7g) *। प्रत्नं वै बृहद् उप रथन्तरम् - जै.ब्रा.* ३.१२ (https://sa.wikisource.org/s/ef3) *, यदूर्ध्वमिव गीयते तद् बृहतो रूपम् । यत् तिर्यग् इव तद् रथन्तरस्य। जै* ३, १८५ (https://sa.wikisource.org/s/eek) *।*

# ऋग्वेदः सूक्तं ८.९७

ऋग्वेदः - मण्डल ८
← सूक्तं ८.९६ सूक्तं ८.९७ सूक्तं ८.९८ →
रेभः काश्यपः

दे. इन्द्रः। बृहती, १०, १३ अतिजगती, ११-१२ उपरिष्टाद्बृहती, १४ त्रिष्टुप्, १५ जगती

तु. अथर्ववेदः २०.५४, २०.५५

---

या इन्द्र भुज आभरः स्वर्वाँ असुरेभ्यः ।

स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः ॥१॥

यमिन्द्र दधिषे त्वमश्वं गां भागमव्ययम् ।

यजमाने सुन्वति दक्षिणावति तस्मिन्तं धेहि मा पणौ ॥२॥

य इन्द्र सस्त्यव्रतोऽनुष्वापमदेवयुः ।

स्वैः ष एवैर्मुमुरत्पोष्यं रयिं सनुतर्धेहि तं ततः ॥३॥

यच्छक्रासि परावति यदर्वावति वृत्रहन् ।

अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ आ विवासति ॥४॥

यद्वासि रोचने दिवः समुद्रस्याधि विष्टपि ।

यत्पार्थिवे सदने वृत्रहन्तम यदन्तरिक्ष आ गहि ॥५॥

